Hiranyakeshi
Brahmakarma samu...
ब्रह्म कर्म समुच्चय
Sanskrit
Printed on paper
1849 sakabda
Folio: 11+416
10.5" x 4.8"
Complete



# ॥ अथ हिरण्यकेशीयब्रह्मकर्मसमुच्चयः ॥

( विषयाः ३८८. )

मूल्यं ३॥ सार्धरूप्यकत्रयम् ।







यं ब्रह्म वेदांतविदो वदंति
परं प्रधानं पुरुषं तथान्ये ।
विश्वोद्गतेः कारणमीश्वरं वा
तस्मै नमो विघ्नविनाशनाय ॥

मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणै-
र्युक्तामिंदुकलानिबद्धमुकुटां तत्त्वार्थवर्णात्मिकां ।
गायत्रीं वरदाभयांकुशकशाशुभ्रं कपालं गुणं
शंखं चक्रमथारविन्दयुगुलं हस्तैर्वहंतीं भजे ॥

नमः सवित्रे जगदेकचक्षुषे
जगत्प्रसूतिस्थितिनाशहेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे
विरिंचिनारायणशंकरात्मने ॥

# ॥ विद्वदभ्यर्थनम् ॥

मध्विव मधुकरवृत्त्या ग्रंथतरुभ्यः प्रयोगकुसुमानि ॥ संगृह्य हारमेनं संगुंप्य गलेऽर्पये द्विजाग्र्याणाम् ॥ १ ॥

श्रीगणेशाय नमः ॥ किंचित्प्रास्ताविकं ग्रंथनिर्माणाद्युपबृंहितं ॥ करोम्यत्र तदुद्देशसुस्पष्टप्रतिपत्तये ॥ १ ॥ वेदाः प्रमाणमिति वाग्यदि निर्व्यलीका विश्वोद्भवस्थितिलया यदि वेदमूलाः ॥ ते ब्राह्मणैकनिलया यदि यांति पोषं तानंतरेण शिरसोऽवनतिः क मेऽस्तु ॥ २ ॥ ग्रंथैर्भारतमंडलं तिलकितं मन्वत्रिमुख्यैः पुरा सत्याषाढमुखैस्तदध्वनिरतैः क्षुण्णा स्मृतिर्यत्कृता ॥ श्रौतस्मार्तकृतैकतानमनसो धर्मप्रदीपायितान्पूज्यान्वैदिकयाज्ञिकान्क नु नमस्कारोंऽतरा मे पतेत् ॥ ३ ॥ अलमतिशयवागाडंबरेण श्रियेऽल्पं प्रकृतमनुसरामि प्रार्थ्य विद्वद्विजाग्र्यान् ॥ मम नवकृतिरेषा कोविदानंददात्री भवतु शिशुविलासे किं न वृद्धा रमंते ॥ ४ ॥ ग्रंथेषु सत्स्वपि नवग्रथनप्रयासे या साहसेन समभून्मनसः प्रवृत्तिः ॥ साऽल्पाननेन महतः कवलस्य जग्धितुल्येति सत्यमतएव कृतः प्रणामः ॥ ५ ॥ कपोलकल्पितं नात्र मयाण्वपि समुच्चितं ॥ संस्काररत्नमालां च भट्टीं माहेश्वरीमपि ॥ ॥ ६ ॥ तथा शंकरभट्टीं च व्रतोद्यापनकौमुदीं ॥ प्रतापनारसिंहं च सिंधुमंत्येष्टिपद्धतिं ॥ ७ ॥ आलोच्य वैदिकादीनां याज्ञिकानां च साह्यतः ॥ कुर्वे हिरण्यकेशीयब्रह्मकर्मसमुच्चयं ॥ ८ ॥ निबंधेस्मिन्नित्याह्निकविविधसंस्कारनिकरप्रकीर्णांत्येष्टीतिप्रकरणचतुष्केऽप्यभिनवाः ॥ प्रयोगा निर्दिष्टा न वचनचयो विस्तरभिया स मूलग्रंथेभ्यो निपुणमवसेयो बुधवरैः ॥९॥ आद्ये खंडेऽगुंफि विप्राह्निकाद्यं द्वैतीयीकेऽलेखि संस्कारकांडं ॥ इष्टापूर्ताद्यं तृतीये निबद्धं तुर्येऽत्येष्टिर्दंडिनां पद्धतिश्च ॥ १० ॥ चतुर्ष्वपि तदंतरा समुपयुक्तशांत्यादयो व्रतानि पृथगेव पुंस्त्र्यधिकृतानि चोद्यापनैः ॥ अयूयुजमनेकधा पितृनिवापकांडं क्रमात्तदस्तु विबुधोत्सवाय सततोपयुक्तं यतः ॥११॥ उपरि नूतनपुस्तकसंस्थितं विषयदिक्कथनं कृतमत्र यत् ॥ न सकलं विषयक्रमदर्शने सपदि तत्सकलं स्फुटतामियात् ॥१२॥ येऽधीतमंत्रविभवा अपि याज्ञिकेषु प्रायोऽनुपस्थितिवशात्समये स्खलंति ॥ तेषामुपस्थितिकृतेऽभिनवोऽपि कोशो मंत्राद्यवर्णमनुलक्ष्य मया व्यधायि ॥१३॥ पूर्वे ग्रंथा यद्यपि समस्तकार्यक्षमाः प्रभूततराः ॥ नहि लभ्यास्ते कथमपि नैःस्व्यादतिगौरवेण सर्वेषां ॥१४॥ अतोऽयं प्रारंभोऽलसजडसुनिष्किंचनकृते तपःस्वाध्यायाद्यैः सुनिशितधियोऽर्थे न विदुषः ॥ न पारंपर्येण प्रवचनकृतः केवलमयं विहंतुं स्वाज्ञानं मम निरपवादः परिकरः ॥ १५ ॥ यावद्बुद्धिबलं विचार्य कलिता ग्रंथे प्रयोगा मया ये दौर्लभ्यपदंगताश्च सततं यल्लब्धये याज्ञिकाः ॥ याचित्वा परतोऽनवाप्य समये क्लिश्नंति रात्रंदिवं तत्क्लेशानपमार्ष्टुमादरवतामायासहानाय च ॥ १६ ॥ बाबूशास्त्रीजोशीनाम्नोभययाज्ञिकप्रवीणेन ॥ पुस्तकशोधनकाले निरपेक्षधिया व्यधायि साहाय्यम् ॥ १७ ॥ मोरेश्वरभट्टखरेनाम्ना निजपुस्तकप्रदानेन ॥ बापटइत्युपनामकविदुषापि च रामकृष्णभट्टेन ॥ १८ ॥ मां विष्णुभट्टआख्वेप्रभृतिभिरपि भूर्यकारि साहाय्यम् ॥ तन्नामस्मृतितोऽण्वप्यन्यत्प्रत्यर्पणं न पर्याप्तम् ॥ १९ ॥ एवं कृतेपि बहुधांकनशोधनोत्था भूयासुरप्रतिहताः सहजा हि दोषाः ॥ तान्ज्ञापयंतु कृपया ह्यनसूयवो मां संमार्जयेय पुनरंकनमाकलय्य ॥ २० ॥ इति मुहुरप्यतिविनयात्संप्रार्थ्य ब्राह्मणानलं कुरुते ॥ पणशीकराह्वलक्ष्मणतनुजन्मा

वासुदेवशर्माऽत्र ॥ १ ॥

# ब्रह्मार्पणम् ।

ब्राह्माचारैकलभ्यं फलमिति निगमोद्घोषितो डिंडिमश्चेत् ।
आचारो वेदशास्त्रस्मृतिविविधपुराणादिजन्मेत्यृतं चेत् ॥
वेदादीनां द्विजौघादितरदनुगुणं नैव सद्भाजनं चेत् ।
तं मुक्त्वा ग्रंथमेनं क्व नु तदसदृशेऽपात्रभूतेऽर्पयेय ॥ १ ॥
अतो हिरण्यकेशीयब्रह्मकर्मसमुच्चयम् ।
कृत्वा हिरण्यकेशिभ्यो निर्मातार्पयदादरात् ॥ २ ॥

## ॥ रुद्रपीठमहायंत्रम् ॥

प्राची ( देवप्रतीची )




उत्तरा ( देवदक्षिणा )

दक्षिणा ( देवोत्तरा )

पश्चिमा ( देवपूर्वा )

## ॥ ग्रहदेवतामंडलम् ॥



पूर्वा.
इंद्रं
ईशानं
अग्निं
शुक्रं
इंद्रं
इंद्राणीं
उमां सोमं. अपः
अथवाप्रकारांतरं
ग्रहस्थापनक्रमः
रुद्रं
सवितारं
अग्निं
यमं.
द
उ.
प. कुबे.
सोमं.
मात्स्यक्रमः
वास्तो. क्षेत्रपा. अश्वि. आका. वायुं. दुर्गां. गण.
यमं. शनिं. प्रजाप.
वायुं.
निर्ऋतिं.
वरुणं
पश्चिमा.

# ॥ प्रासादवास्तुमंडलंचतुःषष्टिपदम् ॥

पू.

ईशानायनमः ६१ | इंद्रायनमः ५४ | अग्नयेनमः ५५

चरक्यैनमः ४६ | स्कंदायनमः ५० | विदार्यैनमः ४७

२ पर्जन्यायनमः | ३ जयंतायनमः | ४ कुलिशायुधायनमः | ५ सूर्यायनमः | ६ सत्यायनमः | ७ भृशायनमः | ८ आकाशाय० | ९ वायवेनमः

१० पूष्णेनमः

११ वितथायनमः

१२ गृहक्षतायनमः

१३ यमायनमः

१४ गंधर्वायनमः

१५ भृंगराजायनमः

१६ मृगायनमः | १७ पितृभ्योनमः

१८ दौवारिकायनमः | १९ सुग्रीवायनमः | २० पुष्पदंतायनमः | २१ वरुणायनमः | २२ असुरायनमः | २३ शोषायनमः

३७ अर्यम्णेनमः | ३८ सावित्रायनमः | ३९ सवित्रेनमः

३६ विवस्वतेनमः | ४० विबुधाधिपनमः | जयायनमः | ४३ पृथ्वीधरायनमः




उ. सोमायन० ६० | पिलिपिच्छायनमः ५३ | अर्यम्णेनमः ५१ | यमायनमः ५६ द.

पापराक्षस्यैनमः ४९ | जृंभकायनमः ५२ | पूतनायैनमः ४८

वायवेनमः ५९ | वरुणायनमः ५८ | निर्ऋतयेनमः ५७

प.

# ॥ सप्तशतीमहायंत्रम् ॥

पूर्वा (देवी पश्चिमा)

वं बटुकाय० ८४

ऐशानी (देवीनिर्ऋतिः)

आग्नेयी (देवीवायव्या)




उत्तरा (देवीदक्षिणा) ८३

दक्षिणा (देव्युत्तरा)

ह्रीं शेषाय० ७१

चं चक्राय० ८१

ॐ गं गणपतयेनमः ८२

पश्चिमा (देवीप्राक्)

वायव्या (देव्याग्नेयी)

नैर्ऋतिः (देवीशानी)

# ॥ गृहवास्तुमंडलमेकाशीतिपदम् ॥

पू.

- ६१ ईशानायनमः
- ५४ इंद्रायनमः
- ५५ अग्नयेनमः
- ४६ चरक्यैनमः
- ५० स्कंदायनमः
- ४७ विदार्यैनमः

| शिखिनेनमः १ | पर्जन्याय नमः २ | ३ जयंतायनमः | ४ कुलिशायुधायनमः | ५ सूर्यायनमः | ६ सत्यायनमः | ७ भृशायनमः | आकाशाय नमः ८ | वायवे नमः ९ |
|---|---|---|---|---|---|---|---|---|
| दितयेनमः ३२ | आपाय नमः ३३ | | | | | | सावित्रायनमः ३४ | १० पूष्णेनमः |
| ३१ अदितयेनमः | | आपवत्सायनमः ४४ | | ३७ अर्यम्णेनमः | | सवित्रेनमः ३८ | | ११ वितथायनमः |
| ३० सर्पायनमः | | | | | | | | १२ गृहक्षतायनमः |
| २९ सोमायनमः | | ४३ पृथ्वीधरायनमः | | ब्रह्मणेनमः ४५ | | ३९ विवस्वतेनमः | | १३ यमायनमः |
| २८ भल्लाटायनमः | | | | | | | | १४ गंधर्वायनमः |
| २७ मुख्यायनमः | | राजयक्ष्मणेनमः ४२ | | ४१ मित्रायनमः | | विबुधाधिपायनमः ४० | | १५ भृंगराजायनमः |
| अहयेनमः २६ | रुद्रायनमः ३६ | | | | | | जयायनमः ३५ | मृगायनमः १६ |
| रोगाय नमः २५ | पापाय नमः २४ | २३ शोषायनमः | २२ असुरायनमः | २१ वरुणायनमः | २० पुष्पदंतायनमः | १९ सुग्रीवायनमः | दौवारिकाय नमः १८ | पितृभ्योनमः १७ |

- उ. ६० सोमायनमः
- ५३ पिलिपिच्छायनमः
- द. ५१ अर्यम्णेनमः
- ५६ यमायनमः
- ४९ पापराक्षस्यैनमः
- ५२ जृंभकायनमः
- ४८ पूतनायैनमः
- ५९ वायवेनमः
- ५८ वरुणायनमः
- ५७ निर्ऋतयेनमः

प.

# हिरण्यकेशीयब्रह्मकर्मसमुच्चयस्थविषयानुक्रमणिका ।

## रंगरंजितान्यन्यानिचमंडलानि ।



| विषयः | पत्रं. |
|---|---|

## आह्निकप्रकरणम् ।

इति हिरण्यकेशीयब्रह्मकर्मसमुच्चये आह्निकप्रकरणम् ॥

---

## संस्कारप्रकरणम् ॥

इति व्रतोद्यापनादिमिश्रप्रकरणम्

---

## और्ध्वदेहिकाद्यंतिमप्रकरणम् ।

# हिरण्यकेशीयब्रह्मकर्मसमुच्चयस्थमंत्रानुवाकादिकोशः ।

# अथाह्निकप्रकरणंप्रथमम् ।

## ॥ १ ॥ मंगलमुपोद्घातश्च ॥

ॐनमःश्रीवेदपुरुषाय ॥ यदोंतत्सद्ब्रह्मप्रणयमिलदर्धांगयुवतेःशिवस्यांकेखेलत्प्रणवसदृशास्याकृतिमहः ॥ निराकारंनारंदध दपिशरीरंश्रुतिशिरोनुतंवारंवारंदिशतुशमपारंप्रणमताम् ॥ १ ॥ नत्वामार्तंडमग्निंगजवदनगिरौब्रह्मविष्णवीशमुख्यान्देवान्म न्वत्रिमुख्यानपिनिखिलमुनीन्धर्मधामप्रदीपान् ॥ सत्याषाढादिवृंदंगुरुमथपितरौतैत्तिरीयद्विजानामर्थेग्रंथंविधास्येतदृषिवरप रिक्षुण्णमार्गेणनूत्नम् ॥ २ ॥ संस्काररत्नमालायामाहेश्वर्याश्चसिंधुतः ॥ प्रतापनारसिंहाच्चसंगृह्यविषयान्क्रमात् ॥ ३ ॥ कुर्वे हिरण्यकेशीयब्रह्मकर्मसमुच्चयम् ॥ पुंदोषाच्च्यूनमधिकंक्षंतुमर्हंतिसाधवः ॥ ४ ॥ निबंधेऽस्मिन्नित्याह्निकविविधसंस्कारनिकरप्र कीर्णात्येष्टीतिप्रकरणचतुष्केप्यभिनवाः ॥ प्रयोगानिर्दिष्टानवचनचयोविस्तरभियासमूलग्रंथेभ्योनिपुणमवसेयोबुधजनैः ॥५॥

## ॥ २ ॥ परिभाषा ॥

श्रीः ॥ अथवक्ष्यमाणसंस्कारशांतिकपौष्टिकसर्वकर्मणांपरिभाषाधीनत्वादादौसंक्षेपतःपरिभाषार्थःकारिकाभिर्निबध्यते ॥ स्नातः कुर्वीतोपवीतीसर्वंकर्मपवित्रवान् ॥ श्रद्धयाकर्मकुर्वीतधौतवस्त्रधरोभवेत् ॥१॥ अव्यग्रोऽलंकृतोमौनीदंभासूयाविवर्जितः ॥ आपद्युक्तोपिशुद्धःसन्नेवकर्मसमाचरेत् ॥ २ ॥ जपहोमादिषुनरमन्यंनाकारणात्स्पृशेत् ॥ अबुद्धिपूर्वसंस्पर्शश्चेत्तदावार्युपस्पृ

शेत् ॥ ३ ॥ बुद्धिपूर्वकसंस्पर्शेप्राणायामत्रयंचरेत् ॥ संस्पर्शेप्रतिलोमानांस्नानमेवविधीयते ॥ ४ ॥ खल्वाटत्वादिदोषेणवि
शिखश्चेन्नरोभवेत् ॥ कौशींतदाधारयीतब्रह्मग्रंथियुतांशिखां ॥ ५ ॥ कार्येयंसप्तभिर्दर्भैर्धार्याश्रोत्रेतुदक्षिणे ॥ कुर्यात्तिलकवा
न्कर्मवस्त्रद्वययुतस्तथा ॥ ६ ॥ नैवनग्नोनचद्वीपेनांतरालेकदाचन ॥ श्रुतिस्मृत्युदितंकर्मनकुर्यादशुचिःक्वचित् ॥ ७ ॥ परि
तोवेष्टितोदेशोऽद्भिर्यःसद्वीपमुच्यते ॥ अनावृतस्तुयोदेशःसोंऽतरालंप्रकीर्तितं ॥ ८ ॥ दानंप्रतिग्रहोहोमोभोजनंबलिरेवच ॥
सांगुष्ठेनसदाकार्यमसुरेभ्योऽन्यथाभवेत् ॥ ९ ॥ अप्रौढपादःकुर्वीतकृतास्वायामएवच ॥ त्रिमात्रःप्रणवोवाच्यःकर्मारंभेचसर्वदा
॥ १० ॥ उपोषितःकर्मकुर्याद्विध्यनुज्ञेविनासदा ॥ पेषणादिकयंत्राणांशब्दोयावत्प्रवर्तते ॥ ११ ॥ पतितांत्यजचांडालादीनांयाव
च्छब्दकः ॥ तावत्कर्मनकर्तव्यंतथासंध्याद्वयेपिच ॥ १२ ॥ संकीर्त्यमासपक्षादीन्निमित्तानितथैवच ॥ इदंकर्मकरिष्येऽहमिति
संकल्पमाचरेत् ॥ १३ ॥ यावंतिकर्मसंबद्धान्यृक्षाणिस्युस्तुतावतां ॥ वारादीनामपितथायुक्तंसर्वत्रकीर्तनं ॥ १४ ॥ केनचि
त्तुनवीनेनप्रोक्तमेतत्तुयुक्तितः ॥ कर्मण्यनियतैर्घस्रैःसाध्येसाधारणोक्तितः ॥ १५ ॥ वारादीनांसमुल्लेखोनिर्वाह्योऽस्मिंस्तुकल्पके ॥
प्रायोगिकास्त्वेकभादेरेवकुर्वंतिकीर्तनं ॥ १६ ॥ अनुल्लंघ्यस्वशास्त्रोक्तविधिंकर्मसमारभेत् ॥ कर्मान्यथाकृतंज्ञात्वातावदेवपुन
श्चरेत् ॥ १७ ॥ प्रधानस्याक्रियायांतुसांगंतत्पुनराचरेत् ॥ तदंगाकरणेप्रायश्चित्तमेवनकर्मतत् ॥ १८ ॥ प्राचीदिशामनुक्तौ
स्यादथवैशान्युदक्स्मृता ॥ अनुक्तौप्रह्वतादीनांकर्तुरासीनताभवेत् ॥ १९ ॥ कर्त्रंगानामनुक्तौतुदक्षिणांगंप्रकीर्तितं ॥ चक्षुरादि
षुनैतत्स्यादितिनारायणःसुधीः ॥ २० ॥ कर्दंगस्पर्शनेवामोहस्तोऽन्यस्पर्शनेऽन्यकः ॥ नाभ्यधोंगान्यसंतिस्युर्नाभ्यूर्ध्वंस्युस्तुसं
तिवै ॥ २१ ॥ नाभौत्वन्यतरोहस्तइतिज्ञेयंविचक्षणैः ॥ कररोगोयदितदोभयत्रोभावपिस्मृतौ ॥ २२ ॥ अवैधंनाभ्यधःस्पर्शं

॥ १ ॥

कर्मकालेनचाचरेत् ॥ रक्तपूयोरेतआदिस्पर्शेस्नानंप्रकीर्तितं ॥ २३ ॥ प्राक्संस्थंकर्मदेवानामुदग्दिगपवर्गकं ॥ उदग्दिक्संस्थमथवाप्राचीदिगपवर्गकं ॥ २४ ॥ दक्षिणाशापवर्गंतुप्रत्यग्दिक्संस्थमेवहि ॥ पित्र्यंकर्मप्रकर्तव्यंस्पष्टंयदिवचोभवेत् ॥ २५ ॥ अंगोपस्पर्शनेवस्त्रदशासंस्पर्शनेतथा ॥ छेदनेभेदनेचैवनिरासेखननेतथा ॥ २६ ॥ पैतृकेराक्षसेरौद्रेनैर्ऋतेचाभिचारिके ॥ एतेषुवैनिमित्तेषुजलोपस्पर्शनंभवेत् ॥२७॥ अधोवायुसमुत्सर्गेप्रहासेऽनृतभाषणे ॥ मार्जारमूषकस्पर्शआक्रंदेक्रोधसंभवे ॥ २८ ॥ निमित्तेष्वेषुसर्वेषुकर्मकुर्वन्नपःस्पृशेत् ॥ यत्त्वोत्वाख्वोःस्नानमुक्तंतद्वन्यविषयंभवेत् ॥ २९ ॥ इतिकेचिद्बुधाःप्राहुरन्येत्वित्थंसमूचिरे ॥ पुच्छान्यदेशसंस्पर्शउदकस्पर्शनंभवेत् ॥ ३० ॥ स्नानंतुपुच्छस्पर्शेस्यात्कर्मकालेचभोजने ॥ अबुद्धिस्पर्शविषयेवार्युपस्पर्शनंभवेत् ॥३१॥ बुद्धिपूर्वेतुस्नानंस्यादितिप्राहुःपरेबुधाः ॥ सौम्याख्यदिशिकर्तव्योनिरासोदेवकर्मसु ॥ ३२ ॥ पितृकर्मसुयाम्याख्यदिश्येषपरिकीर्तितः ॥ दैवेकर्मणिसामंतेप्रादक्षिण्यंप्रकीर्तितं ॥ ३३ ॥ पित्र्येऽप्येवंबुधैर्ज्ञेयंनेदंस्यात्परिषेचने ॥ अप्रादक्षिण्यमेवस्यात्तत्रसूत्रकृदुक्तितः ॥ ३४ ॥ निवीतितामानुषेस्याद्दैवेयज्ञोपवीतिता ॥ प्राचीनावीतितातुस्यात्पित्र्येस्पष्टंवचोयदि ॥३५॥ स्मृत्युक्तांगेषुविज्ञेयेउभेस्मृत्युक्तरीतितः ॥ अप्रादक्षिण्यापसव्येसूत्रोक्तनियमोऽत्रवा ॥ ३६ ॥ हवनंभोजनंदानंश्राद्धदेवार्चनादिच ॥ बहिर्जानुनकार्यंस्यात्तद्वदाचमनंस्मृतं ॥ ३७ ॥ विहारःपृष्ठतोनैवप्रकर्तव्यःकदाचन ॥ पात्राण्याज्यंहविर्वह्निरेतेष्वंतःक्रमात्परं ॥३८॥ कर्तारस्तुबहिर्भूताएवैष्वंतस्तुहोमकृत् ॥ बहिर्भूतस्ततोब्रह्मान्येभ्योंऽतर्भूतईरितः॥३९॥ सर्वेष्वेतेषुपद्व्यंतस्ततोऽप्यंतःपतिर्भवेत् ॥ एतत्सर्वत्रविज्ञेयंविशेषविधिनाविना ॥४०॥ अविज्ञातस्वरामंत्राःप्रयोक्तव्याःप्रयोक्तृभिः ॥ एकश्रुत्यैवसर्वत्रजयंतस्वामिभाषणात् ॥ ४१ ॥ ऋषिंचदेवतांछंदोविनियोगंमनोस्तथा ॥ विज्ञायैवक्रियाःकार्याया

ज्ञवल्क्यमुनिस्मृतेः ॥ ४२ ॥ ऋषिश्छंदोदेवतेतिछंदश्चर्षिश्चदेवता ॥ ऋषिश्चदेवताछंदइत्येवंस्यात्त्रिधाक्रमः ॥ ४३ ॥ सौत्रा मंत्रावेदविद्भिर्वामदेवर्षयःस्मृताः॥लिंगोदितोभवेद्देवोऽस्पष्टेदेवेऽनलःस्मृतः॥४४॥ सौत्रेष्वृष्यादिविज्ञानंनेत्युक्तंपारिजातके॥ वैतानिकेमखेश्राद्धेब्रह्मयज्ञेतथैवच ॥ ४५॥ ऋष्याद्यवगतेर्नैवापेक्षास्तीतिपुरातनाः ॥ श्रौतेश्राद्धेचमंत्रादौप्रणवोपिनहीष्यते ॥ ४६ ॥ अन्येत्वेतस्यवचसोनिर्मूलत्वादिहापिच ॥ स्याद्दृष्यादिस्मृतिस्तारोच्चारणंचेतिवैजगुः ॥ ४७ ॥ मंत्रांतस्यत्वक्षरस्य पाठकालेहिकर्मणः ॥ सर्वत्रोपक्रमःकार्यःसूत्रकारस्यवाक्यतः ॥४८॥ स्वाहाकारोहिमंत्रांतेनित्योऽगर्ह्येप्रकीर्तितः ॥ पित्र्यमं त्रेपिनोयत्रस्वधाकारनिदर्शनं॥स्वाहांतएवतत्रस्यादितिभाष्यकृतेरितं ॥ ४९ ॥ मंत्रादौमंत्रमध्येवास्वाहाशब्दोऽस्तिचेत्तदा ॥ नांतेप्रयोक्तव्यइतिप्रोक्तवानाश्वलायनः ॥ ५० ॥ भवेदव्यवधानेनदेवतापदतःपुरा ॥ स्वाहाकारस्यपाठश्चेत्तदानांतेभवेदयं ॥५१॥ नचेद्भवेत्पाठइत्थंतदांतेपिभवेत्सतु ॥ स्वाहाधिमितिमंत्रेऽस्मिन्नर्थेह्यस्तिनिदर्शनं ॥ ५२ ॥ इदमेवानुसर्तव्यमतएवम नीषिभिः ॥ मंत्रांतेयावह्निजायासातुमंत्रस्वरूपिणी ॥५३॥ तदंतेन्यांप्रयुंजीतसाहोमांगतयामता ॥ शक्तिसंगमतंत्रोक्तादेत स्माद्वाक्यतःपुनः ॥५४॥ स्वाहाशब्दंप्रयुंजीततंत्रस्यप्रबलत्वतः ॥ विशेषोऽयंतंत्रयुक्तेवैदिकेहोमकर्मणि ॥ ५५ ॥ जुहोतिवि धिसंबद्धमंत्रेष्वेषविधिःस्मृतः ॥ स्वाहांतोनाममंत्रःस्यादमंत्रास्वाहुतिष्वथो ॥५६॥ कर्मशिष्टोदकंकर्मसमाप्तौतुपरित्यजेत् ॥ नत्वन्यत्रोपयुंजीताचमनक्षालनादिषु ॥ ५७ ॥ मंत्रमुच्चारयेन्मंत्रप्रतिपाद्यंतुशेषिणं ॥ संस्तुवंस्तन्मनाभूत्वास्यादेतदनुमंत्रणं ॥ ५८ ॥ आभिमुख्येक्षणाधिक्यादेतदेवाभिमंत्रणं ॥ संनिधौतिष्ठन्नासीनोवाकुर्वन्छेषिचिंतनं ॥५९॥ नतिमुद्रायुतोमंत्रंपठे दियमुपस्थितिः ॥ तिष्ठताश्रवणंचेत्स्याद्यत्रसानियतातदा ॥ ६० ॥ अभिमर्शोमंत्रपाठःसंस्पर्शसमकालिकः ॥ चतुःस्वरोच्चार

णात्माजपतीतिविधौजपः ॥६१॥ अभिमर्शानुमंत्राभिमंत्रोपस्थितिकर्मणां॥ प्रसाधितंजपत्वंहिव्याख्याकृद्भिरतस्त्वयं ॥६२॥
चतुःस्वरत्वधर्मस्तुमंत्रेष्वेतेष्वपिस्मृतः ॥ ततोऽन्यत्रतुमंत्राणांनियतैकश्रुतिर्भवेत् ॥ ६३ ॥ कात्यायनमतादत्रापिस्युर्वास्वरसं
युताः ॥ सर्वत्रैवन्यूंखसाम्नोश्चत्वारोनियताःस्वराः ॥ ६४ ॥ संवादप्रैषभिन्नानांमंत्राणांस्यादुपांशुता ॥ ६५ ॥ आश्रावणंप्रव
रणंप्रत्याश्रावणमेवच ॥ श्रौतएतान्यपिज्ञेयान्युच्चैरेवविचक्षणैः ॥ ६६ ॥ कुर्यादुपनयादीनिविवाहांतानिलौकिके ॥ प्रायश्चि
त्ताख्यकर्माणिकाम्यकर्माणिवैतथा ॥६७॥ औपासनेलौकिकेवाकर्तव्यानिसदाबुधैः ॥ उपाकर्मोत्सर्जनेतुकुर्याच्छिष्ययुतोयदि
॥ ६८ ॥ लौकिकाग्नौतदाकुर्यादशिष्यश्चेत्स्ववह्निके ॥ गृह्यानलेप्रकर्तव्योहोमःपारायणीयकः ॥ ६९ ॥ पारायणस्यकर्ताचे
दृत्विग्लोकानलेतदा ॥ अवशिष्टंगृह्यकर्मकार्यमौपासनानले ॥ ७० ॥ औपासनाग्निसाध्येषुप्रजासंस्कारकर्मसु ॥ मुख्यकर्तुर
भावेनयदिकर्त्रंतरंभवेत् ॥ ७१ ॥ लौकिकाग्नौतदाकर्मनतुगृह्येकदाचन ॥ सर्वाधानीभवेद्विप्रश्चेत्तदातत्रलुप्यते ॥ ७२ ॥
स्थालीपाकःपार्वणाख्यऔपासनहुतिस्तथा ॥ मासिश्राद्धादिलोकाग्नावितिकेचिद्बुधाजगुः ॥ ७३ ॥ मासिश्राद्धंदक्षिणाग्नावष्ट
कादीनिलौकिके ॥ वैजयंतीकृदाहेतिप्राहुरन्येपिकेचन ॥ ७४ ॥ प्रजासंस्कारकर्माणिस्युर्लोकानलएवतु ॥ शास्त्रांतरप्रोक्तचि
त्तहोमाःसंधानहेतवः ॥ ७५ ॥ नष्टस्यकर्मणोयस्मात्तस्मात्स्युर्गृह्यएवते ॥ स्वतंत्रत्वाल्लौकिकाग्नावेवशास्त्रांतरेरितं ॥ ७६ ॥
ग्रहयज्ञादिकंकार्यंनतुगृह्यानलेचरेत् ॥ गृह्यांतरोक्तंलोकाग्नौगृह्याग्नावथवाचरेत् ॥ ७७ ॥ पुनरग्न्याहितौसर्वाधानिनोमथिता
नले ॥ आनीतेश्रोत्रियागाराद्वाग्नौब्रह्मौदनक्रिया ॥७८॥ विवाहेयदिनिर्मथ्यस्तदात्रस्यात्तुमंथनं ॥ यदिद्वितीयःपक्षःस्यात्स्वी
कार्योऽत्रसएवतु ॥ ७९ ॥ एवंरूपाव्यवस्थातुव्याख्याकृद्भिःप्रदर्शिता॥ बहुशुष्केंधनेचाग्नौसुसमिद्धेविधूमके॥ ८० ॥सांगारे

लेलिहानेचहोतव्यंनान्यथाक्वचित् ॥ आज्यहोमेसूत्रकृतादर्व्येवविहितायतः ॥ ८१ ॥ अतस्तत्रभवेत्सैवनस्रुवेणहुतिर्भवेत् ॥ साधनंक्षीरदध्यादिहोमेदर्वीस्रुवेथवा ॥ ८२ ॥ सूत्रकृद्विहितेहोमेद्रव्यस्यकठिनस्यतु ॥ दर्वीहस्तोऽथवाज्ञेयःशांत्यादौकरएवतु ॥ ८३ ॥ होमेशिष्टैराद्दतोऽस्तियतोऽतोत्रसएवहि ॥ हस्तएवाचार्यवाक्यादौपासनहुतौभवेत् ॥ ८४ ॥ होमद्रव्येत्वनादिष्टेसर्वत्राज्यंप्रकीर्तितं ॥ ८५ ॥ कंठोक्तासमिधांस्याच्चेद्यत्रप्रादेशमात्रता ॥ तत्रैवसास्यादन्यत्रत्वैच्छिकीयंसमीरिता ॥ ८६ ॥ ओषध्यःसक्तवःपुष्पंकाष्ठंमूलंफलंतृणं ॥ एतद्धस्तेनहोतव्यंनान्यत्किंचिदचोदनात् ॥ ८७ ॥ अनादेशेदक्षिणागौर्हेमवापूर्णपात्रकं ॥ देवकार्येनैवदेयंरजतंत्वश्रुजंहितत् ॥ ८८ ॥ पात्रंपादोपसंस्पृष्टंप्रक्षाल्यंसर्वथाबुधैः ॥ हुतंयन्मांसधौतेनतन्नभुंक्तेहिदेवता ॥ ८९ ॥ पात्राणांशोधनंनातःकार्यंकेवलहस्ततः ॥ किंतुदर्भैस्तृणैर्वापिपर्णैर्वावाससापिवा ॥ ९० ॥ सर्वेषुधर्मकार्येषुपत्नीदक्षिणतोभवेत् ॥ अभिषेकेविप्रपादक्षालनेवामतःस्मृता ॥ ९१ ॥ प्रभुःप्रथमकल्पस्ययोऽनुकल्पेनवर्तते ॥ सनाप्नोतिफलंतस्यपरत्रेतिश्रुतिःस्मृतिः ॥ ९२ ॥ बह्वल्पंवास्वगृह्योक्तंयस्ययावत्प्रचोदितं ॥ तस्यतावतिशास्त्रार्थेकृतेसर्वंकृतंभवेत् ॥ ९३ ॥ यन्नाम्नातंस्वशाखायांपारक्यमविरोधियत् ॥ आकांक्षितंशेषभूतमनुष्ठेयंविचक्षणैः ॥ ९४ ॥ तत्कृतौफलवैशिष्ट्यंनदोषस्त्वकृतौभवेत् ॥ सामयाचारिकाधर्मादेशजातिकुलोद्भवाः ॥ ९५ ॥ ग्रामाचाराःपरिग्राह्यायेचशास्त्राविरोधिनः ॥ युगधर्माःपरिग्राह्याःसर्वत्रैवयथोचितं ॥ ९६ ॥ इतिसंस्काररत्नमालोक्तासंक्षेपेणपरिभाषा ॥ ॥ अथ 'आचारःप्रथमोधर्मः' इतिस्मरणात्सएवपूर्वंसंगृह्यते

## ॥ ३ ॥ प्रातःस्मरणम् ॥

श्रीः ॥ प्रातरारभ्यास्वापमावश्यकाहरहःकर्तव्येषुप्रथमंप्रातःस्मरणमुच्यते ॥ तत्रस्मरणीयमाहव्यासः ॥ महर्षिर्भगवान्व्यासः

कृत्वेमांसंहितांपुरा ॥ श्लोकैश्चतुर्भिर्धर्मात्मापुत्रमध्यापयच्छुकम् ॥ १ ॥ मातापितृसहस्राणिपुत्रदारशतानिच ॥ संसारेष्वनु
भूतानियांतियास्यंतिचापरे ॥ २ ॥ हर्षस्थानसहस्राणिभयस्थानशतानिच ॥ दिवसेदिवसेमूढमाविशंतिनपंडितम् ॥ ३ ॥
ऊर्ध्वबाहुर्विरौम्येषनचकश्चिच्छृणोतिमे ॥ धर्मादर्थश्चकामश्चसकिमर्थंनसेव्यते ॥४॥ नजातुकामान्नभयान्नलोभाद्धर्मंत्यजेज्जी
वितस्यापिहेतोः ॥ धर्मोनित्यःसुखदुःखेत्वनित्येजीवोनित्योहेतुरस्यत्वनित्यः ॥ ५ ॥ इमांभारतसावित्रींप्रातरुत्थाययःपठेत् ॥
सभारतफलंप्राप्यपरंब्रह्माधिगच्छति ॥ ६ ॥ ॥ अन्यच्च ॥ योगोशतंकनकशृंगमयंददातिविप्रायवेदविदुषेचबहुश्रुताय ॥
पुण्यांचभारतकथांशृणुयाच्चनित्यंतुल्यंफलंभवतितस्यचतस्यचैव ॥ १ ॥ ॥ अथसूर्यस्य ॥ प्रातःस्मरामिखलुतत्सवितुर्वरे
ण्यंरूपंहिमंडलमृचोऽथतनुर्यजूंषि ॥ सामानियस्यकिरणाःप्रभवादिहेतुंब्रह्माहरात्मकमलक्ष्यमचिंत्यरूपम् ॥ १ ॥ प्रातर्नमामि
तरणिंतनुवाङ्मनोभिर्ब्रह्मेंद्रपूर्वकसुरैर्नुतमर्चितंच ॥ वृष्टिप्रमोचनविनिग्रहहेतुभूतंत्रैलोक्यपालनपरंत्रिगुणात्मकंच ॥ २ ॥
प्रातर्भजामिसवितारमनंतशक्तिंपापौघशत्रुभयरोगहरंपरंच ॥ तंसर्वलोककलनात्मककालमूर्तिंगोकंठबंधनविमोचनमादिदेवम्
॥ ३ ॥ श्लोकत्रयमिदंभानोःप्रातःप्रातःपठेत्तुयः ॥ ससर्वव्याधिनिर्मुक्तःपरंसुखमवाप्नुयात् ॥ ४ ॥ ॥ गणपतेः ॥ प्रातःस्म
रामिगणनाथमनाथबंधुंसिंदूरपूरपरिशोभितगंडयुग्मम् ॥ उद्दंडविघ्नपरिखंडनचंडदंडमाखंडलादिसुरनायकवृंदवंद्यम् ॥ १ ॥
प्रातर्नमामिचतुराननवंद्यमानमिच्छानुकूलमखिलंचवरंददानम्॥तंतुंदिलंद्विरसनप्रिययज्ञसूत्रंपुत्रंविलासचतुरंशिवयोःशिवाय
॥ २ ॥ प्रातर्भजाम्यभयदंखलुभक्तशोकदावानलंगणविभुंवरकुंजरास्यम् ॥ अज्ञानकाननविनाशनहव्यवाहमुत्साहवर्धनमहं
सुतमीश्वरस्य ॥ ३ ॥ श्लोकत्रयमिदंपुण्यंसदासाम्राज्यदायकम् ॥ प्रातरुत्थायसततंयःपठेत्प्रयतःपुमान् ॥ ४ ॥ ॥ देव्याः ॥

॥ ४ ॥ ॥ ३ ॥ ॥ ४ ॥

प्रातःस्मरामिशरदिंदुकरोज्ज्वलाभांसद्रत्नवत्सकलकुंडलहारशोभाम् ॥ दिव्यायुधोर्जितसुनीलसहस्रहस्तांरक्तोत्पलाभचरणांभ
वतींपरेशाम् ॥ १ ॥ प्रातर्नमामिमहिषासुरचंडमुंडशुंभासुरप्रमुखदैत्यविनाशदक्षाम् ॥ ब्रह्मेंद्ररुद्रमुनिमोहनशीललीलांचंडींस
मस्तसुरमूर्तिमनेकरूपाम् ॥२॥ प्रातर्भजामिभजतामखिलार्थदात्रींधात्रींसमस्तजगतांदुरितापहंत्रीम् ॥ संसारबंधनविमोचन
हेतुभूतांमायांपरांसमधिगम्यपरस्यविष्णोः ॥३॥ श्लोकत्रयमिदंदेव्याश्चंडिकायाःपठेन्नरः ॥ सर्वान्कामानवाप्नोतिविष्णुलोके
महीयते ॥ ४ ॥ ॥ शिवस्य ॥ प्रातःस्मरामिभवभीतिहरंसुरेशंगंगाधरंवृषभवाहनमंबिकेशम् ॥ खट्वांगशूलवरदाभयहस्त
मीशंसंसाररोगहरमौषधमद्वितीयम् ॥१॥ प्रातर्नमामिगिरिशंगिरिजार्धदेहंसर्गस्थितिप्रलयकारणमादिदेवम् ॥ विश्वेश्वरंविजि
तविश्वमनोभिरामंसंसाररोगहरमौषधमद्वितीयम् ॥२॥ प्रातर्भजामिशिवमेकमनंतमाद्यंवेदांतवेद्यमनघंपुरुषंमहांतं ॥ नामा
दिभेदरहितंषडभावशून्यंसंसाररोगहरमौषधमद्वितीयम् ॥ ३ ॥ प्रातःसमुत्थायशिवंविचिंत्यश्लोकत्रयंयेऽनुदिनंपठंति॥ तेदुः
खजातंबहुजन्मसंचितंहित्वापदंयांतितदेवशंभोः ॥ ४ ॥ ॥ विष्णोः ॥ प्रातःस्मरामिभवभीतिमहार्तिशांत्यैनारायणंगरुड
वाहनमब्जनाभम् ॥ ग्राहाभिभूतवरवारणमुक्तिहेतुंचक्रायुधंतरुणवारिजपत्रनेत्रम् ॥ १ ॥ प्रातर्नमामिमनसावचसाचमूर्ध्नापा
दारविंदयुगुलंपरमस्यपुंसः ॥ नारायणस्यनरकार्णवतारणस्यपारायणप्रवणविप्रपरायणस्य ॥ २ ॥ प्रातर्भजामिभजतामभयं
करंतंप्राक्सर्वजन्मकृतपापभयापहत्यै ॥ योग्राहवक्त्रपतितांघ्रिगजेंद्रघोरशोकप्रणाशमकरोद्धृतशंखचक्रः ॥ ३ ॥ श्लोकत्रयमि
दंविष्णोःप्रातःप्रातःपठेत्तुयः ॥ लोकत्रयगुरुस्तस्मैदद्यादात्मपदंहरिः ॥४॥ ॥ रामचंद्रस्य ॥ प्रातःस्मरामिरघुनाथमुखारविंदं
मंदस्मितंमृदुलभाषिविशालभालम् ॥ कर्णावलंबिचलकुंडलशोभिगंडंकर्णांतदीर्घनयनंनयनाभिरामम् ॥ १ ॥ प्रातर्भजामिरघु

नाथकरारविंदंरक्षोगणायभयदंवरदंद्विजेभ्यः ॥ यद्राजसंसदिविभज्यमहेशचापंसीताकरग्रहणमंगलमापसद्यः ॥ २ ॥ प्रातर्न
मामिरघुनाथपदारविंदंवज्रांकुशादिशुभरेखिसुखावहंमे ॥ योगींद्रमानसमधुव्रतसेव्यमानंशापापहंसपदिगौतमधर्मपत्न्याः॥३॥
प्रातर्वदामिवचसारघुनाथनामवाग्दोषहारिसकलंशमलंनिहंति ॥ यत्पार्वतीस्वपतिनासहमोक्षकामाप्रीत्यासहस्रहरिनामसमंज
जाप ॥ ४ ॥ प्रातःश्रयेश्रुतिनुतांरघुनाथमूर्तिंनीलांबुदोत्पलसितेतररत्ननीलाम् ॥ आमुक्तमौक्तिकविशेषविभूषणाढ्यांध्येयांस
मस्तमुनिभिर्जनमुक्तिहेतुम् ॥ ५ ॥ यःश्लोकपंचकमिदंप्रयतःपठेतनित्यंप्रभातसमयेपुरुषःप्रबुद्धः ॥ श्रीरामकिंकरजनेषुसएव
मुख्योभूत्वाप्रयातिहरिलोकमनन्यलभ्यम् ॥ ६ ॥ ॥ अन्यच्च ॥ ब्रह्मामुरारिस्त्रिपुरांतकारीभानुःशशीभूमिसुतोबुधश्च ॥
गुरुश्चशुक्रःशनिराहुकेतवःकुर्वंतुसर्वेममसुप्रभातम् ॥ १ ॥ भृगुर्वसिष्ठःक्रतुरंगिराश्चमनुःपुलस्त्यःपुलहश्चगौतमः ॥ रैभ्योमरी
चिश्च्यवनश्चदक्षःकुर्वंतुसर्वेममसुप्रभातम् ॥ २ ॥ सनत्कुमारःसनकःसनंदनःसनातनोप्यासुरिपिंगलौच ॥ सप्तस्वराःसप्तरसा
तलानिकुर्वंतुसर्वेममसुप्रभातम् ॥ ३ ॥ सप्तार्णवाःसप्तकुलाचलाश्चसप्तर्षयोद्वीपवनानिसप्त ॥ भूरादिकृत्वाभुवनानिसप्तकुर्वंतु
सर्वेममसुप्रभातम् ॥ ४ ॥ पृथ्वीसगंधासरसास्तथापःस्पर्शीचवायुर्ज्वलनःसतेजाः ॥ नभःसशब्दंमहतासहैवकुर्वंतुसर्वेममसु
प्रभातम् ॥ ५ ॥ इत्थंप्रभातेपरमंपवित्रंपठेत्स्मरेद्वाशृणुयाच्चतद्वत् ॥ दुःस्वप्ननाशस्त्विहसुप्रभातंभवेच्चनित्यंभगवत्प्रसादात्
॥ ६ ॥ वैन्यंपृथुंहैहयमर्जुनंचशाकुंतलेयंभरतंनलंच ॥ रामंचयोवैस्मरतिप्रभातेतस्यार्थलाभोविजयश्चहस्ते ॥ ७ ॥ बलिर्विभी
षणोभीष्मःप्रह्लादोनारदोध्रुवः ॥ षडेतेवैष्णवाःप्रोक्ताःस्मरणंपापनाशनं ॥ ८ ॥ अश्वत्थामाबलिर्व्यासोहनूमांश्चविभीषणः ॥
कृपःपरशुरामश्चसप्तैतेचिरजीविनः ॥ ९ ॥ सप्तैतान्संस्मरेन्नित्यंमार्कंडेयमथाष्टमं ॥ जीवेद्वर्षशतंसाग्रमपमृत्युविवर्जितः

॥ १० ॥ अहल्याद्रौपदीसीतातारामंदोदरीतथा ॥ पंचकंनास्मरेन्नित्यंमहापातकनाशनम् ॥ ११ ॥ कर्कोटकस्यनागस्यदमयंत्यानलस्यच ॥ ऋतुपर्णस्यराजर्षेःकीर्तनंकलिनाशनम् ॥ १२ ॥ धर्मोविवर्धतियुधिष्ठिरकीर्तनेनपापंप्रणश्यतिवृकोदरकीर्तनेन ॥ शत्रुर्विनश्यतिधनंजयकीर्तनेनमाद्रीसुतौकथयतांनभवंतिरोगाः ॥ १३ ॥ पुण्यश्लोकोनलोराजापुण्यश्लोकोयुधिष्ठिरः ॥ पुण्यश्लोकाचवैदेहीपुण्यश्लोकोजनार्दनः ॥ १४ ॥ दर्शनादभ्रसरसोजननात्कमलालये ॥ काश्यांतुमरणान्मुक्तिःस्मरणादरुणाचलात् ॥ १५ ॥ अहंकाश्यांगमिष्यामितत्रैवनिवसाम्यहं ॥ इतिब्रुवाणःसततंकाशीवासफलंलभेत् ॥ १६ ॥ प्रह्लादनारदपराशरपुंडरीकव्यासांबरीषशुकशौनकभीष्मदाल्भ्यान् ॥ रुक्मांगदार्जुनवसिष्ठविभीषणादीन्पुण्यानिमान्परमभागवतान्स्मरामि ॥ १७ ॥ अहोभाग्यमहोभाग्यंनंदगोपव्रजौकसाम् ॥ यन्मित्रंपरमानंदंपूर्णंब्रह्मसनातनम् ॥ १८ ॥ अयोध्यामथुरामायाकाशीकांचीअवंतिका ॥ पुरीद्वारावतीचैवसप्तैतामोक्षदायिकाः ॥ १९ ॥ अर्जुनःफाल्गुनोजिष्णुःकिरीटीश्वेतवाहनः ॥ बीभत्सुर्विजयःकृष्णःसव्यसाचीधनंजयः ॥ २० ॥ उत्तिष्ठोत्तिष्ठगोविंदउत्तिष्ठगरुडध्वज ॥ उत्तिष्ठकमलाकांतत्रैलोक्यंमंगलंकुरु ॥ २१ ॥ समुद्रवसनेदेविपर्वतस्तनमंडले ॥ विष्णुपत्निनमस्तुभ्यंपादस्पर्शंक्षमस्वमे ॥ २२ ॥ पलायध्वंपलायध्वंरेरेदानवराक्षसाः ॥ धर्मसंस्थापनार्थायरथारूढःस्वयंहरिः ॥ २३ ॥ वाराणस्यांभैरवोदेवःसंसारभयनाशनः ॥ अनेकजन्मजंपापंस्मरणेनविनश्यति ॥ २४ ॥ वाराणस्यांदक्षिणेभागेकुक्कुटोनामवैद्विजः ॥ तस्यस्मरणमात्रेणदुःस्वप्नःसुखदोभवेत् ॥ २५ ॥ वाराणस्यामुत्तरेभागेसुमंतोनामवैद्विजः ॥ तस्यस्मरणमात्रेणनिर्धनोधनवान्भवेत् ॥ २६ ॥ काशिकाशीतिकाशीतित्रिवारंयःपठेन्नरः ॥ सोपिदेशांतरेवासीकाशीवासफलंलभेत् ॥ २७ ॥ अशीवरुणयोर्मध्येपंचक्रोशीमहत्फलम् ॥ अमरामृतिमिच्छंतिइतरेषांतुकाकथा ॥ २८ ॥

विश्वेशंमाधवंधुंढिंदंडपाणिंचभैरवम् ॥ वंदेकाशींगुहांगंगांभवानींमणिकर्णिकाम् ॥२९॥ कराग्रेवसतेलक्ष्मीःकरमूलेसरस्वती ॥ करमध्येतुगोविंदःप्रभातेकरदर्शनम् ॥ ३० ॥ इतिप्रातःस्मरणंसमाप्तं ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ४ ॥ मूत्रपुरीषोत्सर्गविधिः ॥

श्रीः ॥ ततःप्रातःसमुत्थायकुर्याद्विण्मूत्रमेवच ॥ नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकंभुवः ॥ इतिवचनात्प्रातःस्मरणोत्तरंग्रामाद्बहिर्नैर्ऋत्यामिषुक्षेपात्ययेशुद्धमृत्तिकांससिकतांजलपात्रंचादाय कीटादिरहितस्थलंगत्वामृज्जलपात्रेनिधायायज्ञियैरनार्द्रैस्तृणैर्भूमिमाच्छाद्यप्रावृतशिराःपृष्ठतःकंठलंबितयज्ञोपवीतोयद्येकवस्त्रश्चेद्दक्षिणकर्णेनिहितयज्ञोपवीतोमौनीघ्राणास्येपिधाय दिवोदङ्मुखोरात्रौदक्षिणामुखोमूत्रपुरीषेउत्सृज्यलोष्ठादिनागुदंपरिमृज्यगृहीतशिश्नउत्थाय पूर्वगृहीतमृज्जलपात्रेगृहीत्वार्द्रामलकमात्रमृज्जलैर्द्विवारंलिंगशौचंकृत्वार्धप्रसृतितदर्धार्धैर्मृज्जलैस्त्रिवारमपानंसंशोध्य पुनर्जलैरेवलिंगगुदेप्रक्षाल्यशुद्धमृत्तिकयैकवारंहस्तंप्रक्षाल्य शुद्धभूमिमागत्यान्यमृज्जलैर्दशवारंवामकरंप्रक्षाल्य ततःकरद्वयंसप्तवारंतावद्भिरेवमृज्जलैःप्रक्षाल्यवामदक्षिणपादौप्रत्येकंत्रिःप्रक्षाल्यान्यजलेनद्वादशगंडूषान्वामभागेकृत्वाजलपात्रंत्रिःपर्युक्ष्यजलबिंदून्जलेनिक्षिप्योपवीतीद्विराचामेत् ॥ मूत्रमात्रोत्सर्गेतुपूर्ववदेकवारंलिंगंप्रक्षाल्यवामकरंत्रिःप्रक्षाल्यकरद्वयंद्विःप्रक्षाल्यैकैकयामृदापादौप्रक्षाल्यगंडूषचतुष्टयंविधायाचामेत् ॥ उक्तशौचाकरणेप्रायश्चित्तंस्मृतिरत्नावल्यां॥गायत्र्यष्टशतंचैवप्राणायामत्रयंतथा इति ॥ जपेदितिशेषः॥इतिमूत्रपुरीषो०॥

## ॥ ५ ॥ दंतधावनविधिः ॥

श्रीः ॥ मुखेपर्युषितेनित्यंभवत्यप्रयतोनरः ॥ तदार्द्रकाष्ठंशुष्कंवाभक्षयेद्दंतधावने ॥ उत्थायनेत्रेप्रक्षाल्यशुचिर्भूत्वासमाहितः ॥

परिजप्यचमंत्रेणभक्षयेद्दंतधावनं ॥ शुचिर्भूत्वाविण्मूत्रोत्सर्गेणशुचिर्भूत्वेत्यर्थः ॥ प्रतिपत्षष्ठ्यष्टमीनवम्येकादशीचतुर्दशीपंच दशीसंक्रांतिव्यतीपातव्रतोपवासश्राद्धदिनार्कभौमशुक्रमंददिननिषिद्धदिनातिरिक्तदिनेषुब्राह्मणोद्वादशांगुलप्रमाणेनदशांगुल प्रमाणेनवाकनिष्ठांगुलिवत्स्थूलेनतिंतिण्यादिविहितवृक्षोद्भवेनचूर्णीकृताग्रेणप्रक्षालितेनशुष्केणार्द्रेणवा ॥ आयुर्बलंयशोवर्चः प्रजापशुवसूनिच ॥ ब्रह्मप्रज्ञांचमेधांचत्वंनोदेहिवनस्पते ॥ इतिमंत्रेणाभिमंत्रितेनकाष्ठेन–मुखदुर्गंधिनाशायदंतानांचविशु द्धये ॥ ष्ठीवनायचगात्राणांकुर्वेहंदंतधावनं ॥ इतिमंत्रमुक्त्वादंतान्संशोध्यरजतादिनिर्मितयाजिह्वोल्लेखिन्यापर्णादिनावाजि ह्वामुल्लिख्यद्वादशगंडूषांश्चकृत्वा ॐकारंगायत्रींचस्मृत्वाशिखांबध्नीयात् ॥ इतिदंतधावनम् ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ६ ॥ स्नानविधिः ॥

श्रीः ॥ कर्ताप्रातरुत्थानादिदंतधावनांतंनित्यविधिंनिर्वर्त्यस्नानसामग्रींगृहीत्वाजलसमीपंगत्वोद्धृतजलेनमुखंपाणीपादौचप्रक्षा ल्योदकंस्पृष्ट्वामलापकर्षणस्नानंकृत्वाबद्धशिरादर्भपाणिःप्राङ्मुखआचम्यप्राणानायम्यदेशकालावुत्कीर्त्य ममकायिकवाचिक मानसिकादिसकलपापक्षयपूर्वकंकर्माधिकारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंप्रातःस्नानमहंकरिष्येइतिसंकल्प्य ॥ ॐ आपोहिष्ठा मयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमा मवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ आपोवाइदंसर्वंविश्वाभूतान्यापःप्राणावाआपःपशवआपोन्नमापोमृतमापः सम्राडापोविराडापःस्वराडापश्छंदांस्यापोज्योतींष्यापोयजूंष्यापःसत्यमापःसर्वादेवताआपोभूर्भुवःसुवरापओम् ॥ स्नानं कृत्वा ॥ इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्णिया ॥ असिक्नियामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥

अघमर्षणं ॥ ऋतंचसत्यंचाभीद्धात्तपसोध्यजायत ॥ ततोरात्रिरजायतततःसमुद्रोअर्णवः ॥ समुद्रादर्णवादधिसंवत्सरोअजा
यत ॥ अहोरात्राणिविदधद्विश्वस्यमिषतोवशी ॥ सूर्याचंद्रमसौधातायथापूर्वमकल्पयत् ॥ दिवंचपृथिवींचांतरिक्षमथोसुवः ॥
॥ १ ॥ इतित्रिरावृत्त्याअघमर्षणंकुर्यात् ॥ (अथअर्घ्यमंत्राः ॥ नमःकमलनाभायनमस्तेजलशायिने ॥ नमस्तेकेशवानंत
गृहाणार्घ्यंनमोस्तुते ॥ १ ॥ एहिसूर्यसहस्रांशोतेजोराशेजगत्पते ॥ अनुकंपयमांभक्त्यागृहाणार्घ्यंनमोस्तुते ॥ २ ॥ ब्रह्मक
मंडलूद्भूतेगंगेत्रिपथगामिनि ॥ त्रैलोक्यवंदितेदेविगृहाणार्घ्यंनमोस्तुते ॥ ३ ॥ तपनस्यसुतेदेवियमुनेचमहानदि ॥ शुद्धानां
शुद्धयेदेविगृहाणार्घ्यंनमोस्तुते ॥ ४ ॥ किरणाधूतपापाचपुण्यतोयासरस्वती ॥ गंगाचयमुनाचैवगृह्णंत्वर्घ्यंसरिद्वराः ॥ ५ ॥
पापोहंपापकर्माहंपापात्मापापसंभवः ॥ त्राहिमांकृपयागंगेसर्वपापहराभव ॥ ६ ॥ इमान्यर्घ्याणिकाम्यानीतिज्ञेयं) पुनश्चस्नानं
कृत्वा ॥ ॐप्रजापतेरक्ष्यश्वयत्तत्परापतत्तदश्वोऽभवद्यदश्वयत्तदश्वस्याश्वत्वंतद्देवाअश्वमेधेनैवप्रत्यदधुरेषवैप्रजापतिꣳसर्वंकरो
तियोश्वमेधेनयजतेसर्वएवभवतिसर्वस्यवाएषाप्रायश्चित्तिः सर्वस्यभेषजꣳसर्वंवाएतेनपाप्मानंदेवाअतरन्नपिवाएतेनब्रह्महत्याम
तरन्सर्वंपाप्मानं १ तरतितरतिब्रह्महत्यांयोश्वमेधेनयजतेयउचैनमेवंवेदोत्तरंवैतत्प्रजापतेरक्ष्यश्वयत्तस्मादश्वस्योत्तरतोवद्यंति
दक्षिणतोन्येषांपशूनांवैतसः कठोभवत्यप्सुयोनिर्वाअश्वोप्सुजोवैतसःस्वएवैनंयोनौप्रतिष्ठापयतिचतुष्टोमःस्तोमोभवतिसरड्वा
अश्वस्यसक्थ्यावृहत्तद्देवाश्चतुष्टोमेनैवप्रत्यदधुर्यच्चतुष्टोमःस्तोमोभवत्यश्वस्यसर्वत्वाय॥१२॥ततःस्नानांगतर्पणंकुर्यात् ॥ अद्यपू
र्वोच्चरितएवंगुणविशेषणविशिष्टायांशुभपुण्यतिथौममआत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंस्नानांगंदेवर्षिपितृतर्पणंकरि
ष्ये॥ अत्रप्रत्येकमेकैकोंजलिः ॥ ब्रह्मादयोयेदेवाःतान्देवांस्तर्पयामि॥ भूर्देवांस्तर्पयामि ॥ भुवर्देवांस्तर्पयामि ॥ सुवर्देवांस्तर्पया

मि ॥ भूर्भुवःसुवर्देवांस्तर्पयामि ॥ निवीती ॥ प्रत्येकंद्वेद्वेअंजली ॥ विश्वामित्रादयोयेऋषयः तानृषींस्तर्पयामि ॥ भूर्ऋषीं स्तर्पयामि ॥ भुवर्ऋषींस्तर्पयामि ॥ सुवर्ऋषींस्तर्पयामि ॥ भूर्भुवःसुवर्ऋषींस्तर्पयामि ॥ प्राचीनावीती ॥ प्रत्येकमंजलित्रयं ॥ वैशंपायनादयोयेपितरः ॥ तान्पितॄंस्तर्पयामि ॥ भूःपितॄंस्तर्पयामि ॥ भुवःपितॄंस्तर्पयामि ॥ सुवःपितॄंस्तर्पयामि ॥ भूर्भुवः सुवःपितॄंस्तर्पयामि ॥ इतितर्पयेत् ॥ ततः ॥ येकेचास्मत्कुलेजाताअपुत्रागोत्रिणोमृताः ॥ तेगृह्णंतुमयादत्तंवस्त्रनिष्पीडनोदकं ॥ इतिपरिधानीयंवस्त्रंनिष्पीड्य ॥ यज्ञोपवीती ॥ यन्मयादूषितंतोयंशारीरमलसंभवात् ॥ तद्दोषपरिहारार्थंयक्ष्माणंतर्पयाम्यहं ॥ इतियक्ष्मतर्पणंकृत्वा ॥ ज्ञानतोज्ञानतोवापियन्मयादुष्कृतंकृतं ॥ तत्क्षमस्वाखिलंदेविजगन्मातर्नमोस्तुते ॥ इतिनदींक्षमाप्यशुष्कंवस्त्रंपरिदध्यात् ॥ सविस्तरःस्नानविधिरग्रेउत्सर्जनप्रयोगेद्रष्टव्यः ॥ इतिनित्यस्नानविधिःसमाप्तः ॥ ॥ छ ॥

## ॥ ७ ॥ वस्त्रधारणविधिः ॥

श्रीः ॥ स्नानोत्तरंदेहेस्वयमेवशुष्केसतिकेशजलेवस्तुतेशुष्कंवस्त्रंत्रिरवधूयउदक्प्राग्वाविस्तार्यपरिदध्यात् ॥ परिहितमार्द्रवस्त्रं नाभेरूर्ध्वमेवोत्तारयेत् ॥ दक्षिणतःप्रत्यग्वाविस्तारणेतद्वस्त्रंनपरिधेयं ॥ यदितदेवपरिधेयंस्यात्तदाप्रक्षाल्यैवपरिधेयं ॥ ततस्तादृगेवोत्तरीयंधारयेत् ॥ शुष्काभावेआर्द्रमेवसप्तवारमवधूयपरिधेयं ॥ उत्तरीयवस्त्रालाभेतृतीयमुपवीतंधार्यं ॥ तस्यापिसर्वथाऽभावेअधरीयवस्त्रोत्तरीयभागएवोत्तरीयवस्त्रंभवति ॥ इतिवस्त्रधारणविधिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ८ ॥ गंगाष्टकप्रारंभः ॥

श्रीः ॥ मातःशैलसुतासपत्निवसुधाशृंगारहारावलिस्वर्गारोहणवैजयंतिभवतींभागीरथिप्रार्थये ॥ त्वत्तीरेवसतस्त्वदंबुपिबतस्त्व

द्वीचिषुप्रेंखतस्त्वन्नामस्मरतस्त्वदर्पितदृशःस्यान्मेशरीरव्ययः ॥ १ ॥ त्वत्तीरेतरुकोटरांतरगतोगंगेविहंगोवरंत्वन्नीरेनरकांतकारिणिवरंमत्स्योथवाकच्छपः ॥ नैवान्यत्रमदांधसिंधुरघटासंघट्टघंटारणत्कारस्तत्रसमस्तवैरिवनितालब्धस्तुतिर्भूपतिः ॥ २ ॥ उक्षापक्षीतुरगउरगःकोपिवावारणोवावारीणःस्यांजननमरणक्लेशदुःखासहिष्णुः ॥ नत्वन्यत्रप्रविरलरणत्किंकिणिक्वाणमिश्रंवारस्त्रीभिश्चमरमरुतावीजितोभूमिपालः ॥३॥ काकैर्निष्कुषितंश्वभिःकवलितंगोमायुभिर्लुंठितंस्रोतोभिश्चलितंतटांबुलुलितंवीचीभिरांदोलितं॥दिव्यस्त्रीकरचारुचामरमरुत्संवीज्यमानःकदाद्रक्ष्येहंपरमेश्वरित्रिपथगेभागीरथिस्वंवपुः ॥४॥ अभिनवबिसवल्लीपादपद्मस्यविष्णोर्मदनमथनमौलेर्मालतीपुष्पमाला ॥ जयतिजयपताकाकाप्यसौमोक्षलक्ष्म्याःक्षपितकलिकलंकाजाह्नवीनःपुनातु ॥५॥ एतत्तालतमालसालसरलव्यालोलवल्लीलताच्छन्नंसूर्यकरप्रतापरहितंशंखेंदुकुंदोज्ज्वलं ॥ गंधर्वामरसिद्धकिन्नरवधूतुंगस्तनास्फालितंस्नानायप्रतिवासरंभवतुमेगांगंजलंनिर्मलं ॥ ६ ॥ गांगंवारिमनोहारिमुरारिचरणच्युतं ॥ त्रिपुरारिशिरश्चारिपापहारिपुनातुमां ॥ ७ ॥ पापापहारिदुरितारितरंगधारिशैलप्रचारिगिरिराजगुहाविदारि ॥ झंकारकारिहरिपादरजोपहारिगांगंपुनातुसततंशुभकारिवारि ॥ ८ ॥ (भगवतितवतीरेनीरमात्राशनोहंविगतविषयतृष्णःकृष्णमाराधयामि ॥ सकलकलुषभंगेस्वर्गसोपानसंगेतरलतरतरंगेदेविगंगेप्रसीद ॥ ९ ॥ ) गंगाष्टकंपठतियःप्रयतःप्रभातेवाल्मीकिनाविरचितंशुभदंमनुष्यः ॥ प्रक्षाल्यगात्रकलिकल्मषपंकमाशुमोक्षंलभेत्पततिनैवनरोभवाब्धौ ॥ १० ॥ ( विष्णुपादाब्जसंभूतेगंगेत्रिपथगामिनि ॥ धर्मद्रवेतिविख्यातेपापंमेहरजाह्नवि ॥ ११ ॥ ) इतिश्रीवाल्मीकिनाविरचितंगंगाष्टकंसंपूर्णम् ॥

## ॥ ९ ॥ आसनकल्पनम् ॥

श्रीः ॥ आसनान्याहव्यासः ॥ कौशेयंकंबलंचैवअजिनंपट्टमेवच ॥ दारुजंताडपत्रंवाआसनंपरिकल्पयेत् ॥ कृष्णाजिनेज्ञान सिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि ॥ कुशासनेव्याधिनाशःसर्वेष्टश्चित्रकंबलः ॥ निषिद्धान्याह ॥ वंशासनेतुदारिद्र्यंपाषाणेव्याधिरे वच ॥ धरण्यांतुभवेद्दुःखंदौर्भाग्यंछिद्रदारुजे ॥ तृणेधनयशोहानिःपल्लवेचित्तविभ्रमः ॥ इति ॥ प्रचेताः ॥ गोशकृन्मृन्मयं भिन्नंतथापालाशपिप्पलं ॥ लोहवद्धंसदैवार्कंवर्जयेदासनंबुधः ॥ स्मृत्यंतरे ॥ मृगचर्मप्रयत्नेनवर्जयेत्पुत्रवान्गृही ॥ इति ॥

## ॥ १० ॥ भस्मनिर्माणधारणादिविधिः ॥

श्रीः॥गोपीनाथपद्धतौयथा-कपिलायागोमयंगगनेपतद्गृहीत्वाधरामसंस्पृशन्नेवसद्योजातमित्यानीयवामदेवायनमोज्येष्ठायेतिमं त्रेणधरायामसंस्थापयन्नेवपात्रेसंशोष्यअघोरेभ्योथघोरेभ्यइतिविनिर्दह्यतत्पुरुषायेतितद्भस्मसमुद्धृत्य ईशानःसर्वविद्यानामिति विशोध्यत्र्यंबकंयजामहइत्यादायआपोहिष्ठेतितिस्रिभिर्जलंतत्रानीय॥ अग्निरितिभस्मवायुरितिभस्मजलमितिभस्मस्थलमितिभस्म सर्वᳫंहवाइदंभस्मतस्माद्ब्रह्मतदेतत्पाशुपतंपशुपाशविमोक्षायोम्॥इत्येतैरेकादशवारमभिमंत्र्य ॐसद्योजातायनमःनंइतिभालेत र्जनीमध्यमानामाभिःमध्यमानामाकनिष्ठिकाभिर्वाभ्रूप्रांतपर्यंतंविलिप्य ॐवामदेवायनमःमंइतिदक्षिणांसेविलिप्य ॐअघोराय नमःशिंइतिवामस्कंधे ॐतत्पुरुषायनमःवांइत्युदरे ॐईशानायनमःयंइतिहृदये ॐनमःशिवायेतिमंत्रेणमूर्ध्निविलिप्यहस्तौप्रक्षा लयेत्॥ पंचाक्षरेणमंत्रेणैववासर्वत्रललाटहृदयनाभिकंठांसद्वयबाहुद्वयकूर्परद्वयप्रकोष्ठद्वयपृष्ठशिरःसुलेपयेत् ॥ एवमशक्तौसद्यो जातादिपंचभिर्मंत्रैरभिमंत्रयेत् ॥ श्रौताग्निमानौपासनाग्निमान्वाभवतिचेत्तदातदग्निजमेवभस्मगृहीत्वासद्योजातादिभिर्धार्यं ॥

## ॥ ११ ॥ विभूतिधारणम् ॥

श्रीः ॥ भस्महस्तेआदाय ॥ ॐ ईशानःसर्वविद्यानामीश्वरःसर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवों ॥ शिरसि ॥ ॐ तत्पुरुषायविद्महेमहादेवायधीमहि ॥ तन्नोरुद्रःप्रचोदयात् ॥ मुखे ॥ ॐ अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यःसर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः ॥ हृदये ॥ ॐ वामदेवायनमोज्येष्ठायनमःश्रेष्ठायनमोरुद्रायनमःकालायनमःकल विकरणायनमोबलविकरणायनमोबलायनमोबलप्रमथनायनमःसर्वभूतदमनायनमोमनोन्मनायनमः ॥ गुह्ये ॐ सद्योजा तंप्रपद्यामिसद्योजातायवैनमोनमः ॥ भवेभवेनातिभवेभवस्वमांभवोद्भवायनमः ॥ पादयोः ॥ अग्निरितिभस्म ॥ वायुरिति भस्म ॥ जलमितिभस्म ॥ स्थलमितिभस्म ॥ व्योमेतिभस्म ॥ सर्वंहवाइदंभस्म ॥ मानस्तोकेतनयेमानआयुषिमानोगोषुमानो अश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतोनमसाविधेमते ॥ इतिसर्वांगेभस्मविलिप्यआचामेत् ॥ इति ॥ ॥

## ॥ १२ ॥ पवित्रप्रमाणंकुशग्रहणविधिश्च ॥

श्रीः ॥ समित्पुष्पकुशादीनिब्राह्मणःस्वयमाहरेत् ॥ शूद्रानीतैःक्रयक्रीतैःकर्मकुर्वन्पतत्यधः ॥ इति ॥ तत्रदशविधादर्भायथा ॥ कुशाःकाशायवादूर्वाउशीराश्चसकुंदकाः ॥ गोधूमाव्रीहयोमुंजादशदर्भाःसबल्वजाः ॥ कुशाभावेतुकाशाःस्युःकाशाःकुशसमाः स्मृताः ॥ कुशाभावेगृहीतव्याअन्येदर्भायथोचितम् ॥ कुशग्रहणकालः ॥ मासेनभस्यमावास्यातस्यांदर्भोच्चयोमतः ॥ अयात यामास्तेदर्भाविनियोज्याःपुनःपुनः ॥ कुशच्छेदनविधिमाहकौशिकः ॥ शुचिर्भूत्वाशुचौदेशेस्थित्वापूर्वोत्तरामुखः ॥ ॐकारेणै वमंत्रेणकुशान्स्पृष्ट्वाद्विजोत्तमः ॥ मंत्रस्तु ॥ ॐ विरिंचिनासहोत्पन्नपरमेष्ठीनिसर्गज ॥ नुदस्वसर्वपापानिकुशस्वस्तिकरोभव ॥

इमंमंत्रंसमुच्चार्यस्थित्वापूर्वोत्तरामुखः॥ हुंफट्कारेणदर्भांस्तुसकृच्छित्त्वासमुद्धरेत् ॥ ॥पवित्रलक्षणंतु॥ अनंतर्गर्भितंसाग्रंकौशं हिदलमेवच ॥ प्रादेशमात्रंविज्ञेयंपवित्रंयत्रकुत्रचित् ॥ चतुर्भिर्दर्भपिंजूलैर्ब्राह्मणस्यपवित्रकम् ॥ एकैकन्यूनमुद्दिष्टंवर्णेवर्णेय थाक्रमम् ॥ सर्वेषांवाभवेद्द्वाभ्यांपवित्रंग्रंथितंनवाइति॥ अन्यान्यपिपवित्राणिकुशदूर्वामयानिच ॥ हेमात्मकपवित्रस्यकलांनार्हं तिषोडशीम् ॥ हैमेनसर्वदासर्वंकुर्यादेवाविचारयन् ॥ रौप्यंदक्षप्रदेशिन्यांबिभृयाद्दीक्षितोद्विजः ॥ इदमनामिकायांधारयेत् ॥ काम्याद्यन्यपवित्राण्यन्यत्रालोचनीयानि ॥ ॥ इतिकुशग्रहणविधिःपवित्रलक्षणंच ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १३ ॥ मालालक्षणंसंस्कारश्च ॥

श्रीः ॥ अंगुलीगणनादेकंरेखयाष्टगुणंभवेत् ॥ कुशग्रंथ्याकोटिगुणंरुद्राक्षैःस्यादनंतकम् ॥ अक्षगणनाप्युक्ताप्रजापतिना ॥ अष्टोत्तरशतंकुर्याच्चतुःपंचाशदेवतु ॥ सप्तविंशतिकंवापिततोनैकाधिकावरा ॥ रक्तवर्णैरमिश्रैश्चकीटरंध्रविवर्जितैः ॥ अक्षसूत्रं प्रकर्तव्यंगोपुच्छवलयाकृति ॥ वक्रंवक्रेणसंयोज्यपुच्छंपुच्छेनयोजयेत् ॥ मेरुरूर्ध्वमुखःकार्यःप्रत्येकंनागपाशकं ॥ पश्चात्तेनज पंकुर्याद्भवेदुक्तफलंप्रिये ॥ एकैकंमणिमंगुष्ठेनाकर्षन्प्रजपेन्मनुम् ॥ मेरौतुलंघितेदेविनमंत्रफलभाग्भवेत् ॥ प्रमादात्पतिते सूत्रेजपेदष्टोत्तरंशतं ॥ पादयोःपतितेतस्मिन्प्रक्षाल्यद्विगुणंजपेत् ॥ इतिसूत्रमाला ॥ एतच्चगायत्रीजपातिरिक्तजपेज्ञेयम् ॥ ॥ ॥ अथसंस्कारः ॥ कुशोदकसहितैःपंचगव्यैर्मालांप्रक्षाल्य ॐ ह्रीं अंआंइंईंउंऊंऋंॠंऌंॡंएंऐंओंऔंअंअः कंखंगंघंङं चंछंजंझंञं टंठंडंढंणं तंथंदंधंनं पंफंबंभंमं यंरंलंवंशंषंसंहंळंक्षं एतानिपंचाशन्मातृकाक्षराणिअश्वत्थपत्रस्थापितमालायांविन्यस्य ॐ सद्यो जातं० ॐ वामदेवाय० ॐ अघोरेभ्यो० ॐ तत्पुरुषाय० ॐ ईशानःसर्वविद्यानां० इतिपंचमंत्रान्जपित्वा सद्योजातेतिमंत्रे

णमालांपंचगव्येनप्रोक्ष्य शीतलजलेनप्रक्षाल्य वामदेवेतिचंदनेनावघृष्य अघोरेतिमालांधूपयित्वा तत्पुरुषेतिचंदनकस्तूर्या दिनालेपयित्वा ईशानइतिमंत्रेणप्रतिमणिशतवारंदशवारंवाभिमंत्र्य अघोरइतिमंत्रेणमेरुंशतवारमभिमंत्रयेत् ॥ ततएतैरेवपं चभिर्मंत्रैर्मालांपंचोपचारैःपूजयेत् ॥ एवंजपमालासंस्कृताभवति ॥ धारणनियमस्त्वित्थम् ॥ रुद्राक्षान्कंठदेशेदशनपरिमिता न्मस्तकेद्वेचविंशेषट्षट्कर्णप्रदेशेकरयुगलकृतेद्वादशद्वादशैव ॥ बाह्वोरिंदोःकलाभिर्नयनयुगकृतेएकमेकंशिखायांवक्षस्यष्टा धिकंयःकलयतिशतकंसस्वयंनीलकंठः ॥ ३ ॥ ॥ इतिमालासंस्कारः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १४ ॥ पुरुषसूक्तप्रारंभः ॥

श्रीः ॥ ॐसहस्रशीर्षापुरुषः ॥ सहस्राक्षःसहस्रपात् ॥ सभूमिंविश्वतोवृत्वा ॥ अत्यतिष्ठद्दशांगुलं ॥ पुरुषएवेदंसर्वं ॥ यद्भूतंयच्चभ व्यं ॥ उतामृतत्वस्येशानः ॥ यदन्नेनातिरोहति ॥ एतावानस्यमहिमा ॥ अतोज्यायांश्चपूरुषः ॥ पादोस्यविश्वाभूतानि ॥ त्रिपाद स्यामृतंदिवि ॥ त्रिपादूर्ध्वउदैत्पुरुषः ॥ पादोस्येहाभवात्पुनः ॥ ततोविष्वङ्व्यक्रामत् ॥ साशनानशनेअभि ॥ तस्माद्विराडजा यत ॥ विराजोअधिपूरुषः ॥ सजातोअत्यरिच्यत ॥ पश्चाद्भूमिमथोपुरः ॥ यत्पुरुषेणहविषा ॥ देवायज्ञमतन्वत ॥ वसंतो अस्यासीदाज्यं ॥ ग्रीष्मइध्मःशरद्धविः ॥ सप्तास्यासन्परिधयः ॥ त्रिःसप्तसमिधःकृताः ॥ देवायद्यज्ञंतन्वानाः ॥ अबध्नन्पुरु षंपशुं ॥ तंयज्ञंबर्हिषिप्रौक्षन् ॥ पुरुषंजातमग्रतः ॥ तेनदेवाअयजंत ॥ साध्याऋषयश्चये ॥ तस्माद्यज्ञात्सर्वहुतः ॥ संभृतंपृष दाज्यं ॥ पशूंस्तांश्चक्रेवायव्यान् ॥ आरण्यान्ग्राम्याश्चये ॥ तस्माद्यज्ञात्सर्वहुतः ॥ ऋचःसामानिजज्ञिरे ॥ छंदांसिज ज्ञिरेतस्मात् ॥ यजुस्तस्मादजायत ॥ तस्मादश्वाअजायंत ॥ येकेचोभयादतः ॥ गावोहजज्ञिरेतस्मात् ॥ तस्माज्जाताअजा

वयंः ॥ यत्पुरुषंव्यंदधुः ॥ कतिधाव्यंकल्पयन् ॥ मुखंकिमस्यकौबाहू ॥ कावूरूपादावुच्येते ॥ ब्राह्मणोस्यमुखमासीत् ॥ बाहूराजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यः ॥ पद्भ्यांशूद्रोअजायत ॥ चंद्रमामनसोजातः ॥ चक्षोःसूर्योअजायत ॥ मुखादिंद्रश्चाग्निश्च ॥ प्राणाद्वायुरजायत ॥ नाभ्याआसीदंतरिक्षं ॥ शीर्ष्णोद्यौःसमवर्तत ॥ पद्भ्यांभूमिर्दिशःश्रोत्रात् ॥ तथालोकांअकल्पयन् ॥ वेदाहमेतंपुरुषंमहांतं ॥ आदित्यवर्णंतमसस्तुपारे ॥ सर्वाणिरूपाणिविचित्यधीरः ॥ नामानिकृत्वाभिवदन्यदास्ते ॥ धातापुरस्ताद्यमुदाजहार ॥ शक्रःप्रविद्वान्प्रदिशश्चतस्रः ॥ तमेवंविद्वानमृतइहभवति ॥ नान्यःपंथाअयनायविद्यते ॥ यज्ञेनयज्ञमयजंतदेवाः ॥ तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानःसचंते ॥ यत्रपूर्वेसाध्याःसंतिदेवाः ॥ इतिपुरुषसूक्तं ॥

## ॥ १५ ॥ आचमनप्रकारः ॥



श्रीः ॥ धर्मसूत्रे ॥ आसीनस्त्रिराचामेद्धृदयंगमाभिरद्भिस्त्रिरोष्ठौपरिमृजेद्द्विरित्येकेसकृदुपस्पृशेद्द्विरित्येकेदक्षिणेनपाणिनासव्यमभ्युक्ष्यपादौशिरश्चेंद्रियाण्युपस्पृशेच्चक्षुषीनासिकेश्रोत्रेचेति ॥ गौतमोपि ॥ शुचौदेशआसीनोदक्षिणबाहुंजान्वंतराकृत्वायज्ञोपवीत्यामणिबंधात्पाणिंप्रक्षाल्यवाग्यतोहृदयंस्पृशंस्त्रिश्चतुर्वापआचामेत्पादौचाभ्युक्षेत्खानिचोपस्पृशेदिति ॥ याज्ञवल्क्योपि ॥ अंतर्जानुशुचौदेशउपविष्टउदङ्मुखः ॥ प्राग्वाब्राह्मेणतीर्थेनद्विजोनित्यमुपस्पृशेत् ॥ उपस्पर्शआचमनं ॥ भरद्वाजः ॥ आयतंपर्वतःकृत्वागोकर्णाकृतिवत्करं ॥ संहतांगुलिनातोयंगृहीत्वापाणिनाद्विजः ॥ मुक्तांगुष्ठकनिष्ठेनशेषेणाचमनंचरेत् ॥ माषमज्जनमात्रास्तुसंगृह्यत्रिःपिबेदपः ॥ आचमनेमंत्रविशेषमाहभारद्वाजः ॥ देव्याःपादैस्त्रिभिःपीत्वाखानिपश्चादुपस्पृशेत् ॥

देव्यागायत्र्याः ॥ अत्रिणातु ॥ आपोहिष्ठादिभिर्मंत्रैस्त्रिभिस्त्रिःप्राशनंचरेदित्युक्तं ॥ षट्त्रिंशन्मते ॥ होमेभोजनकालेचसंध्ययो रुभयोरपि ॥ आचांतःपुनराचामेज्जपहोमार्चनादिषु ॥ इत्याचमनप्रकारः ॥

## ॥ १६ ॥ संध्यासंबंधिनिर्णयः ॥

श्रीः ॥ प्रातःसंध्याकालः ॥ उत्तमातारकोपेतामध्यमालुप्ततारका ॥ अधमासूर्यसहिताप्रातःसंध्यात्रिधामता ॥ तथा ॥ संध्या कालःप्रागुदयाद्विप्रस्यद्विमुहूर्तकःइति॥ एतद्ब्रह्माह्निककर्तृपरमितिमहेशाशयः ॥ मध्याह्नसंध्यास्मृतिसंग्रहे ॥ मध्याह्नस्नानादू र्ध्वंचकालस्त्वव्यवधानतः॥ तत्रमध्याह्नसंध्यास्यादूर्ध्वंगौणःस्मृतोबुधैः ॥ सायंसंध्या ॥ उत्तमासूर्यसहितामध्यमालुप्तभास्करा ॥ अधमातारकोपेतासायंसंध्यात्रिधामता ॥ गौणकालस्तु ॥ उदयास्तमयादूर्ध्वंयावत्स्याद्घटिकात्रयं ॥ तावत्संध्यामुपासीतप्राय श्चित्तंततःपरं ॥ संध्यास्थानं ॥ गृहेत्वेकगुणासंध्यागोष्ठेदशगुणास्मृता ॥ शतसाहस्त्रिकानद्यामनंताविष्णुसंनिधौ ॥ बहिःसं ध्यादशगुणागर्तप्रस्रवणेषुच ॥ खातेतीर्थेशतगुणाद्यनंताजाह्नवीजले॥ अथप्रयोगः॥ प्राक्कूलेषुततःस्थित्वादर्भेषुसुसमाहितः ॥ प्राणायामत्रयंकृत्वाध्यायेत्संध्यामितिश्रुतिः ॥ आचमनप्रकारःपूर्वमुक्तः ॥ ॥ प्राणायामलक्षणं ॥ प्रणवंव्याहृतीःसप्तगायत्रीं शिरसासह ॥ त्रिःपठेदायतप्राणःप्राणायामःसउच्यते ॥ अत्रपठेदित्युक्तेपिवर्णाभिध्यानमात्रंनोच्चारणं ॥ शनैर्नासापुटेवायुमु त्सृजेन्नतुवेगतः ॥ नकंपयेच्छरीरंतुसयोगःपरमोमतः॥ पूरकःकुंभकोरेच्यःप्राणायामस्त्रिलक्षणः ॥ नासिकाधृतउच्छ्वासोध्मातः पूरकउच्यते ॥ कुंभकोनिश्चलश्वासोरिच्यमानस्तुरेचकः ॥ इति ॥ दक्षिणेरेचकंकुर्याद्वामेनापूर्यचोदरं ॥ कुंभकेनजपंकुर्यात्प्रा णायामस्यलक्षणं ॥ ॥ मार्जनंयथा ॥ स्मृतिसंग्रहे ॥ आपोहीतित्रिभिर्मंत्रैःशिरस्यंसेचविप्रुषः ॥ यस्यक्षयायेत्यधस्तात्क्षिस्वा

द्भिःपरिषेचयेत् ॥ मध्यमानामिकांगुष्ठैःक्षेपणंतुकुशोदकैः ॥ ऋगंतेमार्जनंकुर्यात्पादांतेवासमाहितः ॥ अर्धर्चांतेथवाकुर्याच्छि
ष्टानांमतमीदृशं ॥ प्रकारांतरंसंग्रहे ॥ ससथत्रयमाकाशेमस्तकेवरवत्रयं ॥ भूम्यांप्रोक्तंनत्रयंतुएतन्मार्जनलक्षणं ॥ एतान्यक्षरा
णिपादांतप्रदर्शकानियथा—चक्षसे । रसः । जिन्वथ । एतेषुपादांतेषुआकाशे ( हृदये ) मार्जनं ॥ मयोभुवः । मातरः । गमा
मवः । एषुपादांतेषुमस्तके ( शिरसि ) ॥ दधातन । इहनः । चनः । एषुपादांतेषुभूम्यां ( पादयोः ) इति ॥ एतच्चधाराच्यु
तजलेवामहस्तधृतेवानकार्यं ॥ अपरंच ॥ शिरसोमार्जनंकुर्यात्कुशैःसोदकबिंदुभिः ॥ प्रणवेनव्याहृतिभिर्गायत्र्येतिक्रमात्रयं ॥
अब्दैवताभिर्ऋग्भिश्चचतुर्थमितिमार्जनमिति ॥ ॥ अघमर्षणं ॥ उद्धृत्यदक्षिणेहस्तेजलंगोकर्णवत्कृते ॥ निःश्वसन्नासिकाग्रे
षुपाप्मानंपुरुषंस्मरेत् ॥ ऋतंचेतितृचंवापिद्रुपदांवाजपेदृचं ॥ दक्षनासापुटेनैवपाप्मानमपसारयेत् ॥ तज्जलंनावलोक्याथवा
मभागेक्षितौक्षिपेदिति ॥ ॥ अर्घ्यदानं ॥ तच्चआदित्योपासनंकुर्वन्कुर्यात् ॥ कराभ्यांतोयमादायगायत्र्याचाभिमंत्रितं ॥
आदित्याभिमुखस्तिष्ठंस्त्रिरूर्ध्वमथतत्क्षिपेत् ॥ अत्रधीमहिधियइत्यनयोःसांतत्येनसस्वरसंधिः ॥ जलाभावेमहामार्गेबंधनेत्वशु
चावपि ॥ उभयोःसंध्ययोःकालेरजसाचार्घ्यमुत्सृजेत् ॥ संग्रहे ॥ मुक्तहस्तेनदातव्यंमुद्रांतत्रनकारयेत् ॥ तर्जन्यंगुष्ठयोगेतु
राक्षसीमुद्रिकास्मृता ॥ राक्षसीमुद्रिकार्घ्येणतत्तोयंरुधिरंभवेत् ॥ जलेष्वर्घ्यंप्रदातव्यंजलाभावेशुचिस्थले ॥ संप्रोक्ष्यवारिणा
सम्यक्ततोर्घ्यंतुप्रदापयेत् ॥ ईषन्नम्रःप्रभातेवैमध्याह्नऋजुरास्थितः ॥ सूर्यायार्घ्यांजलिंदद्यात्सायंतूपविशेद्भुवि ॥ ॥ गायत्री
जपः ॥ जपन्नासीतसावित्रींप्रत्यगातारकोदयात् ॥ संध्याप्राक्प्रातरेवंहितिष्ठेदासूर्यदर्शनात् ॥ प्रातस्तिष्ठन्जपेदेवींसायं
चैवोपविश्यच ॥ उपविश्यतुमध्याह्नेप्राङ्मुखोजपमाचरेत् ॥ आसनाद्युक्तशुचौदेशेदर्भाभसोक्षितेदर्भान्संस्तीर्यव्याहृतिभि

रुपविश्यप्राणायामत्रयंकृत्वाआत्मानंव्याहृतिभिरभ्युक्ष्यसावित्र्याऋषिदैवतच्छंदांस्यनुस्मृत्यषड्भिस्तदंगमंत्रैर्यथांगमात्मनिविन्य
स्यात्मानंतद्रूपंभावयेत् ॥ आसनानिपूर्वमुक्तानि ॥ अत्रासनोपवेशनविधिदर्शनात्पूर्वंतूष्णीमेवदर्भासनउपवेशनमितिगम्यते ॥
॥ जपसंख्या ॥ याज्ञवल्क्यः ॥ ब्रह्मचार्याहिताग्निश्चशतमष्टोत्तरंजपेत् ॥ वानप्रस्थोयतिश्चैवसहस्रादधिकंजपेत् ॥ सायंप्रातश्च
मध्याह्नेसावित्रींवाग्यतोजपेत् ॥ सहस्रपरमांदेवींशतमध्यांदशावरां ॥ गायत्रींप्रजपेद्धीमान्सर्वपापप्रणाशिनीं ॥ अत्रबौधाय
नेन—शतकृत्वउभयतःप्रणवांससप्तव्याहृतिकांमनसावादशकृत्वइत्यादिविशेषउक्तः ॥ अष्टोत्तरशतंनित्यमष्टाविंशतिमेववा ॥
विधिनादशकंवापित्रिकालंप्रजपेद्बुधइति ॥ नारदः ॥ सर्वत्रैवप्रदोषेषुगायत्रीमष्टसंख्यया ॥ अष्टाविंशत्यनध्यायेजपेन्नाष्टोत्तरं
शतमिति ॥ सुमंतुः ॥ अष्टम्यांचचतुर्दश्यांनित्यादर्धंजपेत्सुधीः ॥ प्रतिपत्सुतुरीयांशंपर्वण्यल्पतरंजपेत् ॥ उत्तमंमानसंजाप्य
मुपांशुमध्यमंस्मृतं ॥ अधमंवाचिकंप्राहुःसर्वमंत्रेषुवैद्विजाः ॥ जपेनियममाहशौनकः ॥ कृत्वोत्तानौकरौप्रातःसायंचाधोमुखौ
ततः ॥ मध्येसंमुखहस्ताभ्यांजपएवमुदाहृतः ॥ स्मृत्यंतरे ॥ हस्तौनाभिसमौधृत्वाप्रातःसंध्याजपंचरेत् ॥ हृत्समौतुकरौमध्येसायं
मुखसमौकरौ ॥ इति ॥ वस्त्रेणाच्छाद्यतुकरंदक्षिणंयःसदाजपेत् ॥ तस्यतत्सफलंजाप्यंतद्धीनमफलंस्मृतमिति ॥ आर्द्रवस्त्रेण
नाच्छादयेत् ॥ ॥ गायत्रीमंत्रार्थः ॥ तत्सवितुरिति ॥ तत् सवितुर्जगत्कारणस्यश्रीसूर्यस्य वरेण्यंवरणीयं भर्गस्तेजः अंधका
रभर्जनात् धीमहिध्यायेम यो नःधियोऽस्माकंबुद्धीः प्रचोदयात्स्वरूपे प्रेरयेत् ॥ प्रेरयतीत्यर्थः ॥ एवंगायत्रीमंत्रार्थस्यजपका
लेमनसानुसंधानंकार्यं ॥ ॥ संध्याकालातिक्रमेप्रायश्चित्तं ॥ संध्याकालेत्वतिक्रांतेस्नात्वाचम्ययथाविधि ॥ जपेदष्टशतंदेवीं
ततःसंध्यांसमाचरेत् ॥ यत्तुवसिष्ठवचनं ॥ कालातिक्रमणेचैवत्रिसंध्यमपिसर्वदा ॥ चतुर्थार्घ्यंप्रकुर्वीतभानोर्व्याहृतिसंपुटमिति

तदल्पकालातिक्रमविषयं ॥ एकाहाद्यतिक्रमेजमदग्निः ॥ एकाहंसमतिक्रम्यसंध्यावंदनकर्मतु ॥ अहोरात्रोषितोभूत्वागायत्र्या अयुतंजपेत् ॥ द्विरात्रेद्विगुणंप्रोक्तंत्रिरात्रेत्रिगुणंस्मृतं ॥ ॥ कालातिक्रमेत्वपवादः ॥ रात्रौप्रहरपर्यंतंदिवाकर्माणिकारयेत् ॥ अवगाहंब्रह्मयज्ञंसौरजप्यंविवर्जयेत् ॥ ब्रह्मयज्ञनिषेधस्तुतैत्तिरीयातिरिक्तपरः ॥ तेषांरात्रावपितत्प्रतिपादनात् ॥ इति ॥ छ ॥



## ॥ १७ ॥ प्रातःसंध्याप्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ श्रीसरस्वत्यैनमः ॥ श्रीगुरुभ्योनमः ॥ ॥ ॐकेशवायनमः ॥ नारायणायनमः ॥ माधवायनमः ॥ गोविंदायनमः ॥ विष्णवेनमः ॥ मधुसूदनायनमः ॥ त्रिविक्रमायनमः ॥ वामनायनमः ॥ श्रीधरायनमः ॥ हृषीकेशाय नमः ॥ पद्मनाभायनमः ॥ दामोदरायनमः ॥ संकर्षणायनमः ॥ वासुदेवायनमः ॥ प्रद्युम्नायनमः ॥ अनिरुद्धायनमः ॥ पुरुषोत्तमायनमः ॥ अधोक्षजायनमः ॥ नारसिंहायनमः ॥ अच्युतायनमः ॥ जनार्दनायनमः ॥ उपेंद्रायनमः ॥ हरयेनमः ॥ श्रीकृष्णायनमः ॥ ॐभूः ॥ ॐभुवः ॥ ओꣳसुवः ॥ ॐमहः ॥ ॐजनः ॥ ॐतपः ॥ ओꣳसत्यं ॥ ॐतत्सवितुर्वरेण्यंभर्गोदे वस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ओमापोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम् ॥ प्रातःसंध्याकुमारीरक्तारक्तवर्णारक्तव स्त्रारक्तमाल्यानुलेपनाहंसवाहनाब्रह्मदैवत्यागार्हपत्याग्न्युपस्थानाऋग्वेदसꣳहिताप्रथमाब्रह्मसंध्यावेदवतीनाम्नीतिध्यात्वा ममउ पात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंप्रातःसंध्यामुपासिष्ये ॥ आयातुवरदादेवीअक्षरंब्रह्मसंमितं ॥ गायत्रींछंदसांमातेदंब्रह्म जुषस्वमे ॥ (यदह्नात्कुरुतेपापंतदह्नात्प्रतिमुच्यते) ॥ यद्रात्रियात्कुरुतेपापंतद्रात्रियात्प्रतिमुच्यते ॥ सर्ववर्णेमहादेविसंध्याविद्ये सरस्वति ॥ अजरेअमरेदेविसर्वदेविनमोस्तुते ॥ ओजोसिसहोसिबलमसिभ्राजोसिदेवानांधामनामासिविश्वमसिविश्वायुःसर्व

मसिसर्वायुरभिभूरोंगायत्रीमावाहयामि सावित्रीमावाहयामि सरस्वतीमावाहयामि छंदर्षीनावाहयामि श्रियमावाहयामि
ह्रियमावाहयामि ॥ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उश
तीरिवमातरः ॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ आपोवाइदꣳसर्वंविश्वाभूतान्यापःप्राणा
वाआपःपशवआपोन्नमापोमृतमापःसम्राडापोविराडापःस्वराडापश्छंदाꣳस्यापोयजूꣳष्यापः सत्यमापःसर्वादेवताआपोभूर्भुवः
सुवरापओं ॥ सूर्यश्चमामन्युश्चमन्युपतयश्चमन्युकृतेभ्यः ॥ पापेभ्योरक्षंतां ॥ यद्रात्रियापापमकार्षं ॥ मनसावाचाहस्ताभ्यां ॥
पद्भ्यामुदरेणशिश्ना ॥ रात्रिस्तदवलुंपतु ॥ यत्किंचदुरितंमयि ॥ इदमहंमाममृतयोनौ ॥ सूर्येज्योतिषिजुहोमिस्वाहा ॥ केश
वायनमः ॥ नारायणायनमः ॥ माधवायनमः ॥ गोविंदायनमः ॥ दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनो
मुखाकरत्प्रणआयूꣳषितारिषत् ॥ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्यभाजयते
हनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ हिरण्यवर्णाःशुचयःपावकायासु
जातःकश्यपोयास्विंद्रः ॥ अग्निंयागर्भंदधिरेविरूपास्तानआपःशꣳस्योनाभवंतु ॥ यासाꣳराजावरुणोयातिमध्येसत्यानृतेअवप
श्यंजनानां ॥ मधुश्चुतःशुचयोयाःपावकास्तानआपःशꣳस्योनाभवंतु ॥ यासांदेवादिविकृण्वंतिभक्षंयाअंतरिक्षेबहुधाभवंति ॥
याःपृथिवींपयसोंदंतिशुक्रास्तानआपःशꣳस्योनाभवंतु ॥ शिवेनमाचक्षुषापश्यतापःशिवयातनुवोपस्पृशतत्वचंमे ॥ सर्वाꣳअ
ग्नीꣳरप्सुषदोहुवेवोमयिवर्चोबलमोजोनिधत्त ॥ पवमानःसुवर्जनः ॥ पवित्रेणविचर्षणिः ॥ यःपोतासपुनातुमा ॥ पुनंतुमादेव
जनाः ॥ पुनंतुमनवोधिया ॥ पुनंतुविश्वआयवः ॥ जातवेदःपवित्रवत् ॥ पवित्रेणपुनाहिमा ॥ शुक्रेणदेवदीद्यत् ॥ अग्नेक्र

त्वाक्रतूꣳरनु ॥ यत्तेपवित्रमर्चिषि ॥ अग्नेविततमंतरा ॥ ब्रह्मतेनपुनीमहे ॥ उभाभ्यांदेवसवितः ॥ पवित्रेणसवेनच ॥ इदंब्रह्मपुनीमहे ॥ वैश्वदेवीपुनतीदेव्यागात् ॥ यस्यैबह्वीस्तनुवोवीतपृष्ठाः ॥ तयामदंतःसधमाद्येषु ॥ वयꣳस्यामपतयोरयीणां ॥ वैश्वानरोरश्मिभिर्मापुनातु ॥ वातःप्राणेनेषिरोमयोभूः ॥ द्यावापृथिवीपयसापयोभिः ॥ ऋतावरीयज्ञियेमापुनीतां ॥ बृहद्भिःसवितस्तृभिः ॥ वर्षिष्ठैर्देवमन्मभिः ॥ अग्नेदक्षैःपुनाहिमा ॥ येनदेवाअपुनत ॥ येनापोदिव्यंकशः ॥ तेनदिव्येनब्रह्मणा ॥ इदंब्रह्मपुनीमहे ॥ यःपावमानीरध्येति ॥ ऋषिभिःसंभृतꣳरसं ॥ सर्वꣳसपूतमश्नाति ॥ स्वदितंमातरिश्वना ॥ पावमानीर्यो अध्येति ॥ ऋषिभिःसंभृतꣳरसं ॥ तस्मैसरस्वतीदुहे ॥ क्षीरꣳसर्पिर्मधूदकं ॥ पावमानीःस्वस्त्ययनीः ॥ सुदुघाहिपयस्वतीः ॥ ऋषिभिःसंभृतोरसः ॥ ब्राह्मणेष्वमृतꣳहितं ॥ पावमानीर्दिशंतुनः ॥ इमँल्लोकमथोअमुं ॥ कामान्त्समर्धयंतुनः ॥ देवीर्देवैःसमाभृताः ॥ पावमानीःस्वस्त्ययनीः ॥ सुदुघाहिघृतश्चुतः ॥ ऋषिभिःसंभृतोरसः ॥ ब्राह्मणेष्वमृतꣳहितं ॥ येनदेवाःपवित्रेण ॥ आत्मानंपुनतेसदा ॥ तेनसहस्रधारेण ॥ पावमान्यःपुनंतुमा ॥ प्राजापत्यंपवित्रं ॥ शतोद्यामꣳहिरण्मयं ॥ तेनब्रह्मविदोवयं ॥ पूतंब्रह्मपुनीमहे ॥ इंद्रःसुनीतीसहमापुनातु ॥ सोमःस्वस्त्यावरुणःसमीच्या ॥ यमोराजाप्रमृणाभिःपुनातुमा ॥ जातवेदामोर्जयंत्यापुनातु ॥ द्रुपदादिवेन्मुमुचानः ॥ स्विन्नस्नात्वीमलादिव ॥ पूतंपवित्रेणेवाज्यं ॥ आपःशुंधंतुमैनसः ॥ ॐभूर्भुवःसुवः ॥ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ श्रीसूर्यायइदमर्घ्यंदत्तंनमम ॥ इतित्रीनर्घ्यान्दत्वा ॥ ३ ॥ असावादित्योब्रह्म ॥ आचम्य ॥ केशवायनमः ॥ नारायणायनमः ॥ माधवायनमः ॥ गोविंदायनमः ॥ विष्णवेनमः ॥ श्रीकृष्णायनमः ॥ ॐभूः ॥ ॐभुवः ॥ ओꣳसुवः ॥ ॐमहः ॥ ॐजनः ॥ ॐतपः ॥ ओꣳसत्यं ॥

तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ओमापोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम् ॥ अपक्रामंतुभूता
निपिशाचाःसर्वतोदिशं ॥ सर्वेषामवरोधेनब्रह्मकर्मसमारभे ॥ पृथ्वीतिमंत्रस्यमेरुपृष्ठऋषिः ॥ कूर्मपृष्ठोदेवता ॥ सुतलंछंदः ॥
आसनेविनियोगः ॥ पृथ्वित्वयाधृतालोकादेवित्वंविष्णुनाधृता ॥ त्वंचधारयमांदेविपवित्रंकुरुचासनं ॥ अंगुष्ठाग्रेतुगोविंदंतर्जे
न्यांतुमहीधरं ॥ मध्यमायांहृषीकेशमनामिक्यांत्रिविक्रमं ॥ कनिष्ठिक्यांन्यसेद्विष्णुंकरमध्येचमाधवं ॥ एवंचकरविन्यासंसर्वं
पापप्रणाशनं ॥ भूः पादाभ्यांनमः ॥ भुवः जानुभ्यांनमः ॥ सुवः कटिभ्यांनमः ॥ महः नाभ्यैनमः ॥ जनः हृदयायनमः ॥
तपः कंठायनमः ॥ सत्यं ललाटायनमः ॥ परंब्रह्म शिरसेस्वाहा ॥ तत्सवितुर्ब्रह्मात्मनेहृदयायनमः ॥ वरेण्यंविष्णवात्मनेशिरसे
स्वाहा ॥ भर्गोदेवस्यरुद्रात्मनेशिखायैवषट् ॥ धीमहिपरमात्मनेकवचायहुं ॥ धियोयोनोज्ञानात्मनेनेत्रत्रयायवौषट् ॥ प्रचोद
यात्सत्यात्मनेअस्त्रायफट् ॥ इतिदिग्बंधः ॥ गायत्र्यागायत्रीछंदोविश्वामित्रऋषिः ॥ सवितादेवताग्निर्मुखंब्रह्माशिरोविष्णुर्हृ
दयꣳरुद्रःशिखापृथिवीयोनिः प्राणापानव्यानोदानसमानासप्राणाश्वेतवर्णासांख्यायनसगोत्रागायत्रीचतुर्विꣳशत्यक्षरात्रिपदा
षट्कुक्षिःपंचशीर्षोपनयनेविनियोगः ॥ ॐ भूः ॥ ॐ भुवः ॥ ओꣳसुवः ॥ ॐमहः ॥ ॐजनः ॥ ॐतपः ॥ ओꣳसत्यं ॥ ॐतत्स
वितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ओमापोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम् ॥ प्रातःसंध्यांगत्वेनअष्टो
त्तरशतसंख्ययाअष्टाविꣳशतिसंख्ययावागायत्रीजपमहंकरिष्ये ॥ सुमुखंसंपुटंचैवविततंविस्तृतंतथा ॥ द्विमुखंत्रिमुखंचैवचतुः
पंचमुखंतथा ॥ षण्मुखाधोमुखंचैवव्यापकांजलिकंतथा ॥ शकटंयमपाशंचग्रंथितंचोल्मुकोल्मुकं ॥ प्रलंबंमुष्टिकंचैवमत्स्यं
कूर्मंवराहकं ॥ सिंहाक्रांतंमहाक्रांतंमुद्गरंपल्लवंतथा ॥ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिंदुकलानिबद्धमुकुटां

तत्त्वार्थवर्णात्मिकां ॥ गायत्रींवरदाभयांकुशकशांशुभ्रंकपालंगुणंशंखंचक्रमथारविंदयुगुलंहस्तैर्वहंतींभजे ॥ महामालेमहा
मायेसर्वशक्तिस्वरूपिणि ॥ चतुर्वर्गस्त्वयिन्यस्तस्तस्मान्मेसिद्धिदाभव ॥ ॐ भूर्भुवःसुवस्तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥
धियोयोनःप्रचोदयात् ॥ इति १०८ ॥ २८ जपित्वा ॥ तत्सवितुर्ब्रह्मात्मने हृदयायनमः ॥ वरेण्यंविष्ण्वात्मनेशिरसेस्वाहा ॥
भर्गोदेवस्यरुद्रात्मनेशिखायैवषट् ॥ धीमहिपरमात्मनेकवचायहुं ॥ धियोयोनोज्ञानात्मनेनेत्रत्रयायवौषट् ॥ प्रचोदयात्सत्या
त्मनेअस्त्रायफट् ॥ इतिदिग्विमोकः ॥ सुरभिर्ज्ञानशूर्पंचयोनिःकूर्मोथपंकजं ॥ लिंगंनिर्याणमुद्राचजपांतेष्टौप्रकीर्तिताः ॥ ॥
मुकुलितकरआदित्यमुपतिष्ठते ॥ मित्रस्यचर्षणीधृतश्रवोदेवस्यसानसि ॥ सत्यंचित्रश्रवस्तमं ॥ मित्रोजनान्यातयतिप्रजान
न्मित्रोदाधारपृथिवीमुतद्यां ॥ मित्रःकृष्टीरनिमिषाभिचष्टेसत्यायहव्यंघृतवद्विधेम ॥ प्रसमित्रमर्तोअस्तुप्रयस्वान्यस्तआदित्य
शिक्षतिव्रतेन ॥ नहन्यतेनजीयतेत्वोतोनैनमꣳहोअश्नोत्यंतितोनदूरात् ॥ यच्चिद्धितेविशोयथाप्रदेववरुणव्रतं ॥ मिनीमसिद्य
विद्यवि ॥ यत्किंचेदंवरुणदैव्येजनेभिद्रोहंमनुष्याश्चरामसि ॥ अचित्तीयत्तवधर्मायुयोपिममानस्तस्मादेनसोदेवरीरिषः ॥ कित
वासोयद्रिरिपुर्नदीवियद्वाघासत्यमुतयन्नविद्म ॥ सर्वाताविष्यशिथिरेवदेवाथातेस्यामवरुणप्रियासः ॥ याꣳसदासर्वभूतानिस्था
वराणिचराणिच ॥ सायंप्रातर्नमस्यंतिसामासंध्याभिरक्षतु ॥ नमःप्राच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमोदक्षि
णायैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमःप्रतीच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमउदीच्यैदि
शेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमंऊर्ध्वायैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमोधरायैदिशेयाश्चदे
वताएतस्यांप्रतिवसंत्येताभ्यश्चनमो नमोवांतरायैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमोगंगायमुनयोर्मध्येयेवसंति

॥ १४ ॥

तेमेप्रसन्नात्मानश्चिरंजीवितंवर्धयंतिनमोगंगायमुनयोर्मुनिंभ्यश्चनमोनमोगंगायमुनयोर्मुनिंभ्यश्चनमः ॥ अवांतरदिशाभ्योन
मः ॥ सश्स्रवंतुदिशोमयिसमागच्छंतुसूनृताः ॥ सर्वेकामाअभियँतुनःप्रियाअभिस्रवंतुनःप्रियाअभिवादये ॥ ( अत्रस्वस्वप्रवर
गोत्रोच्चारःकार्यः ) त्रिप्रवरान्वितामुकगोत्रोत्पन्नोहंयजुर्वेदस्यतैत्तिरीयशाखांतर्गतहिरण्यकेशीशाखाध्यायी अमुकदेवश
र्माहं भोगुरोअभिवादयामि ॥ नमोब्रह्मण्यदेवायगोब्राह्मणहितायच ॥ जगद्धितायकृष्णायगोविंदायनमोनमोगोविंदायन
मोनमः ॥ उत्तमेशिखरेजातेभूम्यांपर्वतमूर्धनि ॥ ब्राह्मणेभ्योभ्यनुज्ञातागच्छदेवियथासुखं ॥ स्तुतोमयावरदावेदमाता
प्रचोदयंतीपवनेद्विजाता ॥ आयुःपृथिव्यांद्रविणंब्रह्मवर्चसंमह्यंदत्वाप्रजातुंब्रह्मलोकं ॥ घृणिःसूर्यआदित्योनप्रभावात्यक्षरं ॥
मधुक्षरंतितद्रसं ॥ सत्यंवैतद्रसमापोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम् ॥ ब्रह्मलोकायनमः ॥ रुद्रलोकायनमः ॥ संध्यायैनमः ॥
विद्यायैनमः ॥ सरस्वत्यैनमः ॥ वेदायनमः ॥ वेदपुरुषायनमः ॥ इष्टदेवताभ्योनमः ॥ कुलदेवताभ्योनमः ॥ स्थानदेवता
भ्योनमः ॥ वास्तुदेवताभ्योनमः ॥ एतत्कर्मप्रधानदेवताभ्योनमः ॥ सर्वेभ्योदेवेभ्योनमः ॥ सर्वेभ्योब्राह्मणेभ्योनमोनमः ॥
आकाशात्पतितंतोयंयथागच्छतिसागरं ॥ सर्वदेवनमस्कारःकेशवंप्रतिगच्छति ॥ केशवायनमः ॥ नारायणायनमः ॥ माध
वायनमः ॥ गोविंदायनमः ॥ विष्णवेनमः ॥ मधुसू० त्रिवि० वाम० श्रीधरा० हृषीके० पद्मना० दामोदरा० संक० वासु०
प्रद्यु० अनि० पुरु० अधो० नार० अच्यु० जना० उपेंद्रा० हरये० श्रीकृष्णायनमः ॥ ॐभूः ॐभुवः ओंश्सुवः ॐमहः
ॐजनः ॐतपः ओंश्सत्यं ॥ ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ओमापोज्योतीरसोमृतंब्रह्म
भूर्भुवःसुवरोम् ॥ अनेनप्रातःसंध्योपासनाख्येनकर्मणाभगवान्श्रीपरमेश्वरःप्रीयतांनमम ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ वषट्तेविष्ण

वासआकृणोमितन्मेंजुषस्वशिपिविष्टहव्यं ॥ वर्धंतुत्वासुष्टुतयोगिरोमेयूयंपातस्वस्तिभिःसदानः ॥ आदित्योवाएषएतन्मंडलंतपतितत्रताऋचस्तदृचामंडलꣳसऋचांलोकोथयएषएतस्मिन्मंडलेर्चिर्दीप्यतेतानिसामानिससाम्नांलोकोथयएषएतस्मिन्मंडलेर्चिषिपुरुषस्तानियजूꣳषिसयजुषांमंडलꣳसयजुषांलोकःसैषात्रय्येवविद्यातपतियएषोंतरादित्येहिरण्मयःपुरुषः ॥१४॥ आदित्योवैतेजओजोबलंयशश्चक्षुःश्रोत्रमात्मामनोमन्युर्मनुर्मृत्युःसत्योमित्रोवायुराकाशःप्राणोलोकपालःकःकिंकंतत्सत्यमन्नममृतोजीवोविश्वःकतमःस्वयंभुब्रह्मैतदमृतएषपुरुषएषभूतानामधिपतिर्ब्रह्मणःसायुज्यꣳसलोकतामाप्नोत्येतासामेवदेवतानाꣳसायुज्यꣳसार्ष्टिताꣳसमानलोकतामाप्नोतियएवंवेदेत्युपनिषत् ॥ १५ ॥ उपनिषत् ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १८ ॥ औपासनकालः ॥

श्रीः ॥दक्षः॥ संध्याकर्मावसानेतुस्वयंहोमोविधीयते॥ अशक्तौसएवाह॥ ऋत्विक्पुत्रोगुरुर्भ्राताभागिनेयोथविट्पतिः(विट्पतिर्जामाता) ॥ एतैरपिहुतंयत्स्यात्तद्धुतंस्वयमेवतु ॥ असमक्षंतुदंपत्योर्होतव्यंनर्त्विगादिना ॥ द्वयोरप्यसमक्षंतुभवेद्धुतमनर्थकं ॥ प्रातर्होमकालमाहमनुः ॥ उदितेनुदितेचैवसमयाध्युषितेतथा ॥ सायंहोमकालमाहकात्यायनः॥ यावत्सम्यङ्नभाव्यंतेनभस्यृक्षाणिसर्वतः ॥ लोहितत्वंतुनापैतितावत्सायंतुहूयते ॥ इत्याद्युक्तकालेऔपासनहोमोब्रह्मचारिणोऽग्निकार्यप्रयोगश्चात्रापेक्षितःपरंतुसोऽग्रेसंस्कारप्रकरणेविवाहोपनयनादिप्रयोगोत्तरंयथाक्रमंसंगृह्यतएवेतिनात्रविन्यस्तः ॥



## ॥ १९ ॥ द्वादशनमस्काराः ॥

श्रीः ॥ अद्यपूर्वोच्चरितवर्तमानएवंगुणविशेषणविशिष्टायांशुभपुण्यतिथौममआत्मनःश्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंश्रीसूर्य

नारायणप्रीत्यर्थंद्वादशनमस्काराख्यंकर्मकरिष्ये ॥ ध्यानं ॥ ध्येयःसदासवितृमंडलमध्यवर्तीनारायणःसरसिजासनसंनिविष्टः ॥ केयूरवान्मकरकुंडलवान्किरीटीहारीहिरण्मयवपुर्धृतशंखचक्रः ॥ एकचक्रोरथोयस्यदिव्यःकनकभूषणः ॥ समेभवतुसुप्रीतः पद्महस्तोदिवाकरः ॥ ॐ मित्रायनमः ॥ ॐ रवयेनमः ॥ ॐ सूर्यायनमः ॥ ॐ भानवेनमः ॥ ॐ खगायनमः ॥ ॐ पूष्णे नमः ॥ ॐ हिरण्यगर्भायनमः ॥ ॐ मरीचयेनमः ॥ ॐ आदित्यायनमः ॥ ॐ सवित्रेनमः ॥ ॐ अर्कायनमः ॥ ॐ भास्क रायनमः ॥ मित्ररविसूर्यभानुखगपूषहिरण्यगर्भमरीच्यादित्यसवित्रर्कभास्करेभ्योनमः ॥ विनतातनयोदेवःकर्मसाक्षीसुरेश्वरः ॥ सप्ताश्वःसप्तरज्जुश्चअरुणोमेप्रसीदतु ॥ अरुणायनमः ॥ आदित्यस्यनमस्कारंयेकुर्वंतिदिनेदिने ॥ जन्मांतरसहस्रेषुदारिद्र्यंनोप जायते ॥ अनेनद्वादशनमस्काराख्येनकर्मणाभगवान्सवितृसूर्यनारायणःप्रीयतांनमम ॥ अकालमृत्युहरणंसर्वव्याधिविना शनं ॥ सूर्यपादोदकंतीर्थंजठरेधारयाम्यहं ॥ ॥ इतिद्वादशनमस्काराः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २० ॥ तृचाकल्पनमस्काराः ॥

श्रीः ॥ आचम्यप्राणानायम्यअद्येत्यादिदेशकालावुत्कीर्त्यश्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंश्रीसवितृसूर्यनारायणप्रीत्यर्थंचतृचा कल्पविधिनानमस्काराख्यंकर्मकरिष्ये ॥ ( पात्रेजलंगृहीत्वातन्मध्येगंधाक्षतपुष्पाणिक्षिप्त्वा ) ॥ ध्येयःसदासवितृमंडलमध्यव र्तीनारायणःसरसिजासनसंनिविष्टः ॥ केयूरवान्मकरकुंडलवान्किरीटीहारीहिरण्मयवपुर्धृतशंखचक्रः ॥ इतिध्यात्वा ॥ ॐ ह्रां उ॒द्यन्न॒द्यमि॑त्रमहः ह्रां ॐमित्रायनमः ॥ ॐ ह्रीं आ॒रोह॒न्नुत्त॑रां॒दिव॑म् ह्रीं ॐ रवयेनमः ॥ ॐ ह्रूं हृ॒द्रो॒गंमम॑सूर्य ह्रूं ॐसूर्यायनमः ॥ ॐ ह्रैं हरि॒माणं॑चनाशय ह्रैं ॐ भानवेनमः ॥ ॐ ह्रौं शु॒केषु॑मेहरि॒माणम् ह्रौं ॐ खगायनमः ॥ ॐ ह्रः रोप॒णाका॑सुदध्मसि ह्रः

ॐ पूष्णेनमः ॥ ॐ ह्रां अथोहारिद्रवेषुमे ह्रां ॐ हिरण्यगर्भायनमः ॥ ॐ ह्रीं हरिमाणंनिदध्मसि ह्रीं ॐ मरीचयेनमः ॥ ॐ ह्रूं उदगादयमादित्यः ह्रूं ॐ आदित्यायनमः ॥ ॐ ह्रैं विश्वेनसहसासह ह्रैं ॐ सवित्रेनमः ॥ ॐ ह्रौं द्विषंतंमह्यंरंधयंन् ह्रौं ॐ अर्का यनमः ॥ ॐ ह्रः मोअहंद्विषतेरंधम् ह्रः ॐ भास्करायनमः ॥ ॐ ह्रांह्रीं उद्यन्नद्यमित्रमहआरोहन्नुत्तरांदिवं ह्रांह्रीं ॐ मित्ररवि भ्यांनमः ॥ ॐ ह्रूंह्रैं हृद्रोगंममसूर्यहरिमाणंचनाशय ह्रूंह्रैं ॐ सूर्यभानुभ्यांनमः ॥ ॐ ह्रौंह्रः शुकेषुमेहरिमाणंरोपणाकासुदध्मसि ह्रौंह्रः ॐ खगपूषभ्यांनमः ॥ ॐ ह्रांह्रीं अथोहारिद्रवेषुमेहरिमाणंनिदध्मसि ह्रांह्रीं ॐ हिरण्यगर्भमरीचिभ्यांनमः ॥ ॐ ह्रूंह्रैं उद गादयमादित्योविश्वेनसहसासह ह्रूंह्रैं ॐ आदित्यसवितृभ्यांनमः ॥ ॐ ह्रौंह्रः द्विषंतंमह्यंरंधयन्मोअहंद्विषतेरधं ह्रौंह्रः ॐ अर्क भास्कराभ्यांनमः ॥ ॐ ह्रांह्रींह्रूंह्रैं उद्यन्नद्य० दिवं हृद्रो० नाशय ह्रांह्रींह्रूंह्रैं ॐ मित्ररविसूर्यभानुभ्यो० ॥ ॐ ह्रौंह्रःह्रांह्रीं शुके० सुदध्मसि ॥ अथोहा० निदध्मसि ह्रौंह्रःह्रांह्रीं ॐ खगपूषहिरण्यगर्भमरीचिभ्यो० ॥ ॐह्रूंह्रैंह्रौंह्रः उदगाद० सह ॥ द्विषंतं० रंधं ह्रूंह्रैंह्रौंह्रः ॐ आदित्यसवित्रर्कभास्करेभ्योनमः ॥ ॐ ह्रांह्रींह्रूंह्रैंह्रौंह्रः ह्रांह्रींह्रूंह्रैंह्रौंह्रः उद्यन्नद्य० द्विषंतंमह्यंरंधयन्मोअहं द्विषतेरधं ह्रांह्रींह्रूंह्रैंह्रौंह्रः ह्रांह्रींह्रूंह्रैंह्रौंह्रः ॐ मित्ररविसूर्यभानुखगपूषहिरण्यगर्भमरीच्यादित्यसवित्रर्कभास्करेभ्योनमः ॥ इतित्रिः ॥ विनतातनयोदेवइत्यरुणंप्रणमेत् ॥आदित्यस्यनमस्कारमित्यादिपूर्ववत् ॥ अनेनतृचाकल्पनमस्काराख्येनकर्मणाभग वान्श्रीसवितृसूर्यनारायणःप्रीयतां ॥ इतितृचाकल्पनमस्काराः ॥ तृचाकल्पपद्धतिरग्रेवक्ष्यते ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २१ ॥ नित्यदानम् ॥

श्रीः ॥ यत्किंचिदपिनित्यंदानमावश्यकं ॥ एकस्मिन्नप्यतिक्रांतंदिनेदानविवर्जिते ॥ दस्युभिर्मुषितस्येवयुक्तमाक्रंदितुंभृशं ॥

तस्मात्सर्वैरपिस्वस्वविभवानुसारेणनित्यंधनधान्यादिदेयं ॥ असंभवेपूगीफलादिकमपिप्रत्यहंदेयं ॥ ततोगोब्राह्मणादिमंगलदर्श
नंकार्यं ॥ इत्यष्टधाविभक्तदिनस्यप्रथमभागकृत्यम् ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २२ ॥ दिनद्वितीयभागकृत्यं ॥

श्रीः ॥ द्वितीयभागेवेदशास्त्राद्यभ्यासः ॥ पठेदध्यापयेद्वेदान्जपेच्चैवंविचारयेत् ॥ अवेक्षेतचशास्त्राणिधर्मादीनिद्विजोत्तमः ॥
देवार्चनमपिप्रातर्होमोत्तरंवाचतुर्थभागेब्रह्मयज्ञोत्तरंवाकार्यं ॥ देवार्चनंप्रकर्तव्यंत्रिकालेपियथाक्रमं ॥ अशक्तौविस्तरात्प्रातर्म
ध्याह्नेचंदनादितः ॥ सायंनीराजनंकुर्यात्रिकालेतुलसीदलं ॥ यथासंध्यातथापूजात्रिकालेमोक्षदास्मृता ॥ अथव्यावहारिकः
श्रुतिपौराणमंत्रसंवलितःपूजाप्रयोगोग्रेलिख्यते ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २३ ॥ देवपूजाविचारः ॥

श्रीः ॥ कूर्मपुराणे ॥ ब्रह्माणंशंकरंसूर्यंतथैवमधुसूदनं ॥ अन्यांश्चाभिमतान्देवान्भक्त्यात्वक्रोधनोनरः ॥ स्वमंत्रैरर्चयेन्नित्यं
पत्रैःपुष्पैस्तथांबुभिः ॥ पौरुषेणचसूक्तेनततोविष्णुंसमर्चयेत् ॥ पंचायतनेबोपदेवः ॥ शंभौमध्यगतेहरीनहरभूदेव्यो हरौशंकरे
भास्येनागसुता रवौहरगणेशाजांबिकाःस्थापिताः॥देव्यांविष्णुहरैकदंतरवयो लंबोदरेजेश्वरेनार्याः शंकरभागतोऽतिसुखदाव्य
स्तास्तुतेहानिदाः ॥ अत्रपंचानामप्येकस्यावाहनादिनमस्कारांतंपूजाकांडंकृत्वानंतरमितरेषामितिकांडानुसमयेनअथवासर्वेषा
मप्यावाहनाद्युपचाराःसममेवेतिपदार्थानुसमयेनवापूजनंकार्यं॥अत्रोत्तरपक्षएवज्यायः॥तत्राप्यावाहनादाविष्टदेवतायामहावि
ष्णवेइत्यादिचतुर्थ्यांऊहः पंचायतनपक्षेश्रीमहाविष्णवेशिवविनायकसूर्यशक्तिभ्यश्चेत्येवंयथोपास्यमुच्चारःकार्यः नैवेद्यादौपार्थ

क्याभावेयथांशतइतिवदेत् ॥ पूजास्थानानि ॥ अप्स्वग्नौहृदयेसूर्येस्थंडिलेप्रतिमासुच ॥ षट्स्वेतेषुहरेःसम्यगर्चनंमुनिभिःस्मृतं ॥ कामासक्तोथवाक्रुद्धःशालग्रामशिलार्चनात् ॥ भक्त्यावायदिवाभक्त्याकलौमुक्तिमवाप्नुयात् ॥ शालग्रामशिलायास्तुप्रतिष्ठानैव विद्यते ॥ महापूजांतुकृत्वादौपूजयेत्तांततोबुधः ॥ वाणलिंगानिराजेंद्रख्यातानिभुवनत्रये ॥ नप्रतिष्ठानमस्कारस्तेषामावाहनं तथा ॥ गृहेलिंगद्वयंनार्च्यंशालग्रामद्वयंतथा ॥ द्वेचक्रेद्वारकायास्तुनार्च्येसूर्यद्वयंतथा ॥ शक्तित्रयंत्रिविघ्नेशंद्वौशंखौनार्चये त्सुधीः ॥ शालग्रामाःसमाःपूज्याःसमेषुद्वितयंनहि ॥ विषमानैवपूज्यंतेविषमेष्वेकएवहि ॥ नार्च्यागृहेऽश्मजामूर्तिश्चतुरंगुलतो धिका ॥ नवितस्त्यधिकाधातुसंभवाश्रेयइच्छता ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २४ ॥ शालग्रामशिलापरीक्षा ॥

श्रीः ॥ विष्णुरहस्ये ॥ गंडकीसरितांपुण्याचक्रतीर्थंचतत्रतु ॥ शालग्रामाभिधंक्षेत्रंतत्रतेषांसमुद्भवः ॥ द्वारदेशेसमेचक्रेदृश्येते नांतरीयके ॥ वासुदेवःसविज्ञेयःशुक्लाभश्चातिशोभनः ॥ द्वेचक्रेएवसंलग्नेपूर्वभागेतुपुष्कलः ॥ संकर्षणःसविज्ञेयोरक्ताभश्चैव सर्वतः ॥ प्रद्युम्नःसूक्ष्मचक्रस्तुश्यामवर्णस्तथैवच ॥ सुशिरश्छिद्रवहुलोदीर्घाकारःसुशोभनः ॥ अनिरुद्धश्चनीलाभोवर्तुलश्चा तिशोभनः ॥ अतसीपुष्पसंकाशोविंदुनापरिशोभितः ॥ परितोवर्तुलश्चैववामनःपरिकीर्तितः ॥ विंदुत्रयसमायुक्तशंखचक्रा न्वितोमुखे ॥ तत्तल्लक्षणसंयुक्तोधनुर्वलयपंचकः ॥ दीर्घदक्षिणक्षामास्योमत्स्याकृतिसमीपगः ॥ कूर्ममूर्तिर्गर्भवक्रोदुर्लभःसर्व कामदः ॥ वनमालांकिताश्यामावर्तुलाचातिशोभना ॥ श्रीवत्सकौस्तुभाभ्यांचविंदुनापरिशोभिता ॥ साचैवंदेवदेवस्यपूजनी यामहीक्षिता ॥ वराहशक्तिलिंगस्तुचक्रेचविषमेस्थिते ॥ इंद्रनीलनिभःस्थूलस्त्रिरेखालांछितःशुभः ॥ कपिलोनारसिंहस्तुवहुच

क्रस्तथोन्नतः ॥ वामपार्श्वेस्थितेचक्रेकृष्णवर्णेसबिंदुके ॥ लक्ष्मीनृसिंहोविख्यातोभुक्तिमुक्तिप्रदायकः ॥ पारिजातध्वजीवज्रीव
र्तुलःस्यात्सुशोभनः॥पुरुषोत्तमःसविज्ञेयःसर्वसौभाग्यदायकः ॥ रेखाद्वितयसंयुक्तःपद्मचिह्नितएवच ॥ श्यामोनारायणोदेवो
नाभिचक्रस्तथोन्नतः ॥ ध्वजवज्रांकुशोपेतश्चतुश्चक्रश्चवर्तुलः ॥ गदाकृतिस्तथारेखातल्लक्ष्मीमध्यदेशतः ॥ लक्ष्मीनारायणोदेवो
ह्यभीष्टफलदःशुभः ॥ चतुश्चक्रःसूक्ष्मरंध्रोवनमालांकितोदरः ॥ लक्ष्मीनारायणःप्रोक्तोभुक्तिमुक्तिफलप्रदः ॥ अनंतचक्रैर्बहुभि
श्चिह्नैरप्युपलक्षितः ॥ अनंतःसतुविज्ञेयःसर्वपूजाफलप्रदः ॥ नानावर्णोह्यनंतःस्यान्नागभोगेनचिह्नितः॥ कृष्णवर्णस्तथाविष्णुः
स्थूलचक्रःसुशोभनः ॥ गदाकृतिस्तथारेखादृश्यतेमध्यदेशतः ॥ श्रीधरस्तुतथादेवश्चिह्नितोवनमालया ॥ कदंबमुकुलाकारः
सर्वसिद्धिफलप्रदः ॥ त्रिविक्रमोमहादेवःश्यामवर्णोमहाद्युतिः ॥ वामपार्श्वेतथाचक्रेरेखाचैवतुदक्षिणे ॥ मधुसूदनःसविज्ञेय
एकचक्रोमहाद्युतिः ॥ स्निग्धवर्णोऽव्रणश्चैववर्तुलश्चसुशोभनः ॥ श्यामलश्चमहासूक्ष्मोदधिबिंदुसमन्वितः॥ दधिवामनइत्युक्तः
पशुपुत्रधनप्रदः ॥ वामपार्श्वेतथाचक्रेरेखाचैवतुदक्षिणे ॥ पीतवर्णोधनुःपर्शुलांगलांकितशोभितः ॥ रामेतरश्चरामश्चसर्वमृत्यु
हरःशुभः ॥ परमेष्ठीतुशुक्लाभःपद्मचक्रसमन्वितः ॥ वर्तुलस्तुतथापीतःपृष्ठेतुसुखिरःस्मृतः ॥ हयग्रीवांकुशाकारोरेखापद्मसमी
पगः ॥ बहुरेखासमाकीर्णःपक्षेनीलमथापिवा ॥ कृष्णवर्णःसमाख्यातोमहासारस्वतप्रदः ॥ चतस्रोयत्रदृश्यंतेरेखाःपार्श्वसमी
पगाः ॥ द्वेचक्रेमध्यदेशेतुसाशिलातुचतुर्मुखी ॥ कूर्मचक्रेमहाभागेश्वेताभागोखुरान्विता ॥ शिवनाभिरितिख्याताभुक्तिमुक्ति
फलप्रदा ॥ चक्रंतुकेवलंपत्रंपंकजेनसमन्वितं ॥ लांछनंवनमालायाःश्रियायुक्तःस्थितोहरिः ॥ एकंचक्रंशिरोदेशेनानावर्णमुखे
तथा ॥ सुदर्शनमितिज्ञेयंसर्वपापप्रणाशनं ॥ चतुश्चक्रःश्यामवर्णोभवेद्देवोजनार्दनः ॥ वैकुंठोमणिवर्णाभश्चक्रमेकंतथांबुजं ॥

द्वारोपरितथारेखापूजयेत्तंसुखप्रदं ॥ गोविंदःपुंडरीकाक्षःकृष्णवर्णोमहाद्युतिः ॥ दक्षिणेतुगदाचक्रेवामेपर्वतलांछनं ॥ अर्ध चंद्राकृतिर्देवोहृषीकेशःसउच्यते ॥ इतिशालिग्रामशिलापरीक्षा ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २५ ॥ देवपूजायांपुष्पादिनिर्णयः ॥

श्रीः ॥ पुष्पैररण्यसंभूतैःपत्रैर्वागिरिसंभवैः ॥ अपर्युषितनिश्छिद्रैःप्रोक्षितैर्जंतुवर्जितैः ॥ आत्मारामोद्भवैर्वापिभक्त्यासंपूजये त्सुरान् ॥ कृमिकीटावपन्नानिशीर्णपर्युषितानिच ॥ स्वयंपतितपुष्पाणित्यजेदुपहतानिच ॥ उपहतानिमलादिभिः ॥ मुकुलैर्ना र्चयेद्देवमपक्वंननिवेदयेत् ॥ यत्फलंकृमिविद्धंचप्रयत्नात्तद्विवर्जयेत् ॥ प्रत्येकमुक्तपुष्पेणदशसौवर्णिकंफलं ॥ स्त्रजापिनृपशार्दू लतदेवद्विगुणंभवेत् ॥ समित्पुष्पकुशादीनिब्राह्मणःस्वयमाहरेत् ॥ शूद्रानीतैःक्रयक्रीतैःकर्मकुर्वन्पतत्यधः ॥ लक्षार्चनादौ नायंनिषेधः ॥ समित्पुष्पकुशादीनिवहंतंनाभिवादयेत् ॥ तद्धारीचैवनान्यान्हिनिर्माल्यंतद्भवेत्तयोः ॥ देवोपरिधृतंयच्चवाम हस्तेधृतंचयत् ॥ देवतास्तन्नगृह्णंतिपुष्पंनिर्माल्यतांगतमिति ॥ याचितैःपत्रपुष्पाद्यैर्यःकरोतिममार्चनमितिवाराहाद्याचितैर्न पूजयेत् ॥ नित्यपूजार्थंपरोपवनादेरपिपुष्पादिग्रहेचौर्यदोषोनेतिसिंधौ॥पर्युषितविचारःभविष्ये ॥ प्रहरंतिष्ठतेजातीकरवीरमह र्निशं ॥ तुलस्यांबिल्वपत्रेचजलजेषुचसर्वशः ॥ नपर्युषितदोषोस्तिमालाकारगृहेषुच ॥ बिल्वादेरपर्युषितत्वदिनसंख्या—बिल्वः ३० अपामार्गः ३ जाती १ तुलसी ६ शमी ६ शतावरी ११ केतकी ४ भृंगराजः ९ दूर्वा ८ मंदारः १ पद्मं १ नागके सरः २ दर्भाः ३० अगस्त्यः ३ तिलः १ मल्लिका ४ चंपकः ९ करवीरं ८ एतेषामेतद्दिनोत्तरंपर्युषितत्वं ॥ विष्णोःप्रियाणि— मालतीजातीकेतकीमल्लिकाशोकचंपकपुंनागबकुलोत्पलकुंदकरवीरपाटलातगरपुष्पाण्यन्यानिचसुरभीणि ॥ शिवस्यप्रियाणि—

अर्ककरवीरबिल्वबकुलधत्तूरपाटलामंदारापामार्गजातीचंपकोशीरतगरनागकेसरपुंनागजपामल्लिकासहकारकुसुंभपुष्पाणि ॥ सूर्यगणाधिपयोरारक्तजपादीन्यन्यानिसुरभीणिदूर्वाश्चेति ॥ विशेषोन्यत्रालोचनीयः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २६ ॥ देवपूजाप्रारंभः ॥

श्रीगणेशायनमः ॥ उदयात्पूर्वंनिर्माल्यमपसार्ययथाकालेपूजाकार्या ॥ तत्रप्रथमं ॥ ॐयेभ्योमातामधुमत्पिन्वतेपयःपीयूषंद्यौरदितिरद्रिबर्हाः ॥ उक्थशुष्मान्वृषभरान्त्स्वप्नसस्ताँऽआदित्याँऽअनुमदास्वस्तये॥एवापित्रेविश्वदेवायवृष्णेयज्ञैर्विधेमनमसाहविर्भिः ॥ बृहस्पतेसुप्रजावीरवंतोवयंस्यामपतयोरयीणां ॥ इतिमंत्रौपठन्घंटानादंकृत्वाआचम्य ॥ ॐकेशवायनमः ॥ नारायणायनमः ॥ माधवायनमः ॥ गोविंदायनमः ॥ विष्णवेनमः ॥ मधुसूदनायनमः ॥ त्रिविक्रमायनमः ॥ वामनायनमः ॥ श्रीधरायनमः ॥ हृषीकेशायनमः ॥ पद्मनाभायनमः ॥ दामोदरायनमः ॥ संकर्षणायनमः ॥ वासुदेवायनमः ॥ प्रद्युम्नायनमः ॥ अनिरुद्धायनमः ॥ पुरुषोत्तमायनमः ॥ अधोक्षजायनमः ॥ नारसिंहायनमः ॥ अच्युतायनमः ॥ जनार्दनायनमः ॥ उपेंद्रायनमः ॥ हरयेनमः ॥ श्रीकृष्णायनमः ॥ ॐभूः ॥ ॐभुवः ॥ ओꣳसुवः ॥ ॐमहः ॥ ॐजनः ॥ ॐतपः ॥ ओꣳसत्यं ॥ ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ओमापोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरों ॥ श्रीमन्महागणाधिपतयेनमः ॥ इष्टदेवताभ्योनमः ॥ कुलदेवताभ्यो० ॥ ग्रामदेवताभ्यो० ॥ वास्तुदेवताभ्यो० ॥ लक्ष्मीनारायणाभ्यां० ॥ उमामहेश्वराभ्यां० ॥ शचीपुरंदराभ्यां० ॥ मातापितृभ्यांनमः ॥ सर्वेभ्योदेवेभ्योनमः ॥ सर्वेभ्योब्राह्मणेभ्योनमोनमः ॥ अविघ्नमस्तु ॥ सुमुखश्चैकदंतश्चकपिलोगजकर्णकः ॥ लंबोदरश्चविकटोविघ्नराजोगणाधिपः ॥ धूम्रकेतुर्गणाध्यक्षोभालचंद्रोगजा

ननः ॥ द्वादशैतानिनामानियःपठेच्छृणुयादपि ॥ विद्यारंभेविवाहेचप्रवेशेनिर्गमेतथा ॥ संग्रामेसंकटेचैवविघ्नस्तस्यनजायते ॥
शुक्लांबरधरंदेवंशशिवर्णंचतुर्भुजं ॥ प्रसन्नवदनंध्यायेत्सर्वविघ्नोपशांतये ॥ सर्वमंगलमांगल्येशिवेसर्वार्थसाधिके ॥ शरण्येत्र्यं
बकेगौरिनारायणिनमोस्तुते ॥ सर्वदासर्वकार्येषुनास्तितेषाममंगलं ॥ येषांहृदिस्थोभगवान्मंगलायतनंहरिः ॥ तदेवलग्नंसुदिनं
तदेवताराबलंचंद्रबलंतदेव ॥ विद्याबलंदैवबलंतदेवलक्ष्मीपतेतेंघ्रियुगंस्मरामि ॥ लाभस्तेषांजयस्तेषांकुतस्तेषांपराजयः ॥ येषा
मिंदीवरश्यामोहृदयस्थोजनार्दनः ॥ विनायकंगुरुंभानुंब्रह्मविष्णुमहेश्वरान् ॥ सरस्वतींप्रणौम्यादौसर्वकार्यार्थसिद्धये ॥ अभी
प्सितार्थसिद्ध्यर्थंपूजितोयःसुरासुरैः ॥ सर्वविघ्नहरस्तस्मैगणाधिपतयेनमः ॥ सर्वेष्वारब्धकार्येषुत्रयस्त्रिभुवनेश्वराः ॥ देवादिशं
तुनःसिद्धिंब्रह्मेशानजनार्दनाः ॥ श्रीमद्भगवतोमहापुरुषस्यविष्णोराज्ञयाप्रवर्तमानस्यअद्यब्रह्मणोद्वितीयेपरार्धेविष्णुपदेश्रीश्वे
तवाराहकल्पेवैवस्वतमन्वंतरेभरतवर्षेभरतखंडेकलियुगेकलिप्रथमचरणेजंबुद्वीपेभरतवर्षेदंडकारण्येदेशेगोदावर्यादक्षिणेतीरे
कृष्णावेण्योरुत्तरेतीरेबौद्धावतारेरामक्षेत्रेरामरामाश्रमेशालिवाहनशकेअस्मिन्वर्तमानेअमुकनामसंवत्सरेअमुकायनेअमुकर्तौ
अमुकमासेअमुकपक्षेअमुकतिथौअमुकवासरेऽमुकनक्षत्रेऽमुकस्थेचंद्रेऽमुकस्थेसूर्येऽमुकस्थेदेवगुरौशेषेषुग्रहेषुयथायथंराशिस्था
नस्थितेषुसत्सुशुभनामयोगेशुभकरणेएवंगुणविशेषणविशिष्टायांशुभपुण्यतिथौममआत्मनःश्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंम
मोपात्तदुरितक्षयद्वाराश्रीमहाविष्णुप्रीत्यर्थंयथामीलितोपचारद्रव्यैःपूजनमहंकरिष्ये॥पंचायतनपक्षेश्रीरुद्रविनायकसूर्यशक्तिप
रिवृतश्रीमहाविष्णुपूजांकरिष्येइतिस्वेष्टपंचायतनोद्देशेनसंकल्प्यतदंगत्वेनआसनविधिंपुरुषसूक्तादिन्यासान्कलशपूजनंशंखपू
जनंघंटापूजनंचकरिष्ये ॥ पृथ्वीतिमंत्रस्यमेरुपृष्ठऋषिः कूर्मपृष्ठोदेवता सुतलंछंदः आसनेविनियोगः ॥ पृथ्वित्वयाधृतालोका

देवित्वंविष्णुनाधृता ॥ त्वंचधारयमांदेविपवित्रंकुरुचासनं ॥ ऊर्ध्वकेशिविरूपाक्षिमांसशोणितभोजने ॥ तिष्ठदेविशिखाबंधेचामुंडेह्यपराजिते ॥ अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं ॥ सर्वेषामवरोधेनपूजाकर्मसमारभे ॥ तीक्ष्णदंष्ट्रमहाकायकल्पांतदहनोपम ॥ भैरवायनमस्तुभ्यमनुज्ञांदातुमर्हसि ॥ सहस्रशीर्षेतिषोडशर्चस्यसूक्तस्यनारायणऋषिःजगद्बीजपरमपुरुषोदेवताअंत्यात्रिष्टुप्न्यासेपूजनेविनियोगः ॥ ॐ सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् ॥ सभूमिंविश्वतोवृत्वात्यतिष्ठद्दशांगुलं ॥ वामकरायनमः ॥ ॐ पुरुषएवेदंसर्वंयद्भूतंयच्चभव्यं ॥ उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ दक्षिणकरायनमः ॥ ॐएतावानस्यमहिमातोज्यायाँश्चपूरुषः ॥ पादोस्यविश्वाभूतानित्रिपादस्यामृतंदिवि ॥ वामपादायनमः ॥ ॐ त्रिपादूर्ध्वऽउदैत्पुरुषःपादोस्येहाभवत्पुनः ॥ ततोविष्वङ्व्यक्रामत्साशनानशनेअभि ॥ दक्षिणपादायनमः ॥ ॐतस्माद्विराळजायतविराजोऽअधिपूरुषः ॥ सजातोअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ वामजानवेनमः ॥ ॐयत्पुरुषेणहविषादेवायज्ञमतन्वत ॥ वसंतोऽअस्यासीदाज्यंग्रीष्मइध्मःशरद्धविः ॥ दक्षिणजानवेनमः ॥ ॐतंयज्ञंबर्हिषिप्रौक्षन्पुरुषंजातमग्रतः ॥ तेनदेवाऽअयजंतसाध्याऋषयश्चये ॥ वामकट्यैनमः ॥ ॐतस्माद्यज्ञात्सर्वहुतःसंभृतंपृषदाज्यं ॥ पशून्तांश्चक्रेवायव्यानारण्यान्ग्राम्याश्चये ॥ दक्षिणकट्यैनमः ॥ ॐतस्माद्यज्ञात्सर्वहुतऋचःसामानिजज्ञिरे ॥ छंदांसिजज्ञिरेतस्माद्यजुस्तस्मादजायत ॥ नाभ्यैनमः ॥ ॐतस्मादश्वाअजायंतयेकेचोभयादतः ॥ गावोहजज्ञिरेत्तस्मातस्माज्जाताऽअजावयः ॥ हृदयायनमः ॥ ॐयत्पुरुषंव्यदधुःकतिधाव्यकल्पयन् ॥ मुखंकिमस्यकौबाहूकाऊरूपादाउच्येते ॥ कंठायनमः ॥ ॐब्राह्मणोस्यमुखमासीद्बाहूराजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यःपद्भ्यांशूद्रोअजायत ॥ वामभुजायनमः ॥ ॐचंद्रमामनसोजातश्चक्षोःसूर्योऽअजायत ॥ मुखादिंद्रश्चाग्निश्चप्राणाद्वायुर

जायत ॥ दक्षिणभुजायनमः ॥ ॐनाभ्याऽआसीदंतरिक्षंशीर्ष्णोद्यौःसमवर्तत ॥ पद्भ्यांभूमिर्दिशःश्रोत्रात्तथालोकाँऽअकल्पयन् ॥ मुखायनमः ॥ ॐसप्तास्यासन्परिधयस्त्रिःसप्तसमिधःकृताः ॥ देवायद्यज्ञंतन्वानाऽअबध्नन्पुरुषंपशुं ॥ नेत्राभ्यांनमः ॥ ॐयज्ञेनयज्ञमयजंतदेवास्तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानःसचंतयत्रपूर्वेसाध्याःसंतिदेवाः ॥ मूर्ध्नेनमः ॥ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यःपद्भ्यांशूद्रोअजायत ॥ हृदयायनमः ॥ चंद्रमामनसोजातःचक्षोःसूर्योअजायत ॥ मुखादिंद्रश्चाग्निश्चप्राणाद्वायुरजायत ॥ शिरसेस्वाहा ॥ नाभ्याआसीदंतरिक्षंशीर्ष्णोद्यौःसमवर्तत ॥ पद्भ्यांभूमिर्दिशःश्रोत्रात्तथालोकाँअकल्पयन् ॥ शिखायैवषट् ॥ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधःकृताः ॥ देवायद्यज्ञंतन्वानाऽअबध्नन्पुरुषंपशुं ॥ कवचायहुं ॥ यज्ञेनयज्ञमयजंतदेवास्तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानःसचंतयत्रपूर्वेसाध्याःसंतिदेवाः ॥ अस्त्रायफट् ॥ कलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः ॥ मूलेतत्रस्थितोब्रह्मामध्येमातृगणाःस्मृताः ॥ कुक्षौतुसागराःसर्वेसप्तद्वीपावसुंधरा ॥ ऋग्वेदोथयजुर्वेदःसामवेदोह्यथर्वणः ॥ अंगैश्चसहिताःसर्वेकलशंतुसमाश्रिताः ॥ अत्रगायत्रीसावित्रीशांतिःपुष्टिकरीतथा ॥ आयांतुदेवपूजार्थंदुरितक्षयकारकाः ॥ गंगेचयमुनेचैवगोदावरिसरस्वति ॥ नर्मदेसिंधुकावेरिजलेस्मिन्संनिधिंकुरु ॥ ॐभूर्भुवःसुवःकलशायनमः ॥ सकलपूजार्थेगंधाक्षतपुष्पंसमर्पयामि ॥ धेनुमुद्रांप्रदर्श्य ॥ शंखादौचंद्रदैवत्यंकुक्षौवरुणदेवता ॥ पृष्ठेप्रजापतिश्चैवअग्रेगंगासरस्वती ॥ त्वंपुरासागरोत्पन्नोविष्णुनाविधृतःकरे ॥ नमितःसर्वदेवैश्चपाचजन्यनमोस्तुते ॥ पांचजन्यायविद्महेपावमानायधीमहि ॥ तन्नःशंखःप्रचोदयात् ॥ शंखदेवताभ्योनमःविलेपनार्थेचंदनंअलंकरणार्थेतुलसीपत्रंपूजार्थेपुष्पंसं० ॥ कलशोदकेनशंखोदकेनपूजाद्रव्याणिप्रोक्ष्यआत्मानंप्रोक्षेत् ॥ अपवित्रःपवित्रो

वासर्वावस्थांगतोपिवा ॥ यःस्मरेत्पुंडरीकाक्षंसबाह्याभ्यंतरःशुचिः ॥ शंखमुद्रांप्रदर्श्य ॥ आगमार्थंतुदेवानांगमनार्थंतुरक्षसां ॥ कुर्वेघंटारवंतत्रदेवताह्वानलांछनं ॥ घंटायैनमःसकलपूजार्थेगंधाक्षतपुष्पंसमर्पयामि ॥ घंटामुद्रांप्रदर्श्य ॥ घंटानादंकुर्यात् ॥

उत्तरदिशा.

| विष्णुपंचायतनं | शिवपंचायतनं | सूर्यपंचायतनं | देवीपंचायतनं | गणेशपंचायतनं |
|---|---|---|---|---|
| शंकरः २ / गणेशः ३ | विष्णुः २ / सूर्यः ३ | शंकरः २ / गणेशः ३ | विष्णुः २ / शंकरः ३ | विष्णुः २ / शंकरः ३ |
| विष्णुः १ | शंकरः १ | सूर्यः १ | देवी १ | गणेशः १ |
| देवी ५ / सूर्यः ४ | देवी ५ / गणेशः ४ | देवी ५ / विष्णुः ४ | सूर्यः ५ / गणेशः ४ | देवी ५ / सूर्यः ४ |

दक्षिणदिशा.

अथध्यानं ॥ शांताकारंभुजगशयनंपद्मनाभंसुरेशंविश्वाधारंगगनसदृशंमेघवर्णंशुभांगं ॥ लक्ष्मीकांतंकमलनयनंयोगिभिर्ध्यानगम्यंवंदेविष्णुंभवभयहरंसर्वलोकैकनाथं ॥ १ ॥ ध्यायेन्नित्यंमहेशंरजतगिरिनिभंचारुचंद्रावतंसंरत्नाकल्पोज्ज्वलांगंपरशुमृगवराभीतिहस्तंप्रसन्नं ॥ पद्मासीनंसमंतात्स्तुतममरगणैर्व्याघ्रकृत्तिंवसानंविश्वाद्यंविश्ववंद्यंनिखिलभयहरंपंचवक्त्रंत्रिनेत्रं ॥ ॥ २ ॥ एकदंतंशूर्पकर्णंगजवक्त्रंचतुर्भुजं ॥ पाशांकुशधरंदेवंध्यायेत्सिद्धिविनायकं ॥ ३ ॥ ध्येयःसदासवितृमंडलमध्यवर्ती

नारायणः सरसिजासनसंनिविष्टः ॥ केयूरवान्मकरकुंडलवान्किरीटीहारीहिरण्मयवपुर्धृतशंखचक्रः ॥ ४ ॥ नित्यंपद्मासनासी नांसुप्रसन्नांचतुर्भुजां ॥ वरदांविश्वजननींदेवींध्यायेऽखिलेष्टदां ॥ ५ ॥ श्रीमहाविष्णप्रमुखपंचायतनदेवताः ध्यायामि ॥ ॐ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिंविश्वतोवृत्वात्यतिष्ठद्दशांगुलं ॥ आवाहयामिभक्त्यात्वांशिबिकादिहयैर्गजैः ॥ पूजार्थंमंडपेनानामणिहाटकनिर्मिते ॥ १ ॥ श्रीमहाविष्णुप्रमुखपंचायतनदेवताभ्योनमः आवाहनार्थेपुष्पांजलिंसमर्पयामि ॥ पुरुषएवेदंसर्वंयद्भूतंयच्चभव्यं ॥ उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ आसनंस्वर्णरत्नाढ्यंमृदुतूलपरिच्छदं ॥ ददामिभक्त्या स्थित्वास्मिन्नुपचारान्गृहाणभोः ॥ २ ॥ श्रीमहाविष्णु० ॥ आसनार्थेतुलसीपत्रं० ॥ एतावानस्यमहिमातोज्यायांश्चपूरुषः ॥ पादोऽस्यविश्वाभूतानित्रिपादस्यामृतंदिवि ॥ पाद्यंस्वीकुरुमद्दत्तंचरणांबुरुहद्वये ॥ युक्तंसुगंधपुष्पाब्जमणिहेमनवांकुरैः ॥ ३ ॥ श्रीमहाविष्णु० ॥ पाद्यंस० ॥ त्रिपादूर्ध्वउदैत्पुरुषःपादोऽस्येहाभवत्पुनः ॥ ततोविष्वङ्व्यक्रामत्साशनानशनेअभि ॥ अर्घ्यं हस्तद्वयेदत्तंचंदनोशीरवासितं ॥ यवदूर्वांकुरफलंपुष्परत्नान्वितंमुदा ॥ ४ ॥ श्रीमहाविष्णु० ॥ अर्घ्यं० ॥ तस्माद्विराळजायत विराजोअधिपूरुषः ॥ सजातोअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ आचम्यतांतोयमिदंवस्त्रपूतंसुगंधितं ॥ आनीतंयमुनागंगाती र्थेभ्योतिप्रयत्नतः ॥ ५ ॥ श्रीमहाविष्णु० ॥ आचमनीयं० ॥ ॐ यत्पुरुषेणहविषादेवायज्ञमतन्वत ॥ वसंतोअस्यासीदाज्यं ग्रीष्मइध्मः शरद्धविः ॥ गंगासरस्वतीरेवापयोष्णीयमुनाजलैः ॥ स्नापितोसिमयादेवतथाशांतिंप्रयच्छमे ॥ ६ ॥ श्रीमहावि

१ उद्वासावाहनेनस्तः स्थिरायामुद्धवार्चने । अस्थिरायांविकल्पः स्यात्स्थंडिलेचभवेत्त्रयं । यत्रावाहनविसर्जनयोर्निषेधस्तत्र । आवाहनकृचादद्या त्पूर्वंपुष्पांजलिंहरेः । अंतेपुष्पांजलिंदद्यादंगसंपूर्तिहेतवे । मध्यमानामिकामध्येपुष्पंसंगृह्यपूजयेत् । अंगुष्ठतर्जन्यग्राभ्यांनिर्माल्यमपनोदयेत् ॥

ष्णु० ॥ स्नानं० आचमनीयंसम० ॥ मधुपर्कंगृहाणेमंकांस्यसंपुटसंस्थितं ॥ मध्वाज्यदधिरूपंत्वांविधिपूर्वकमर्पितं ॥ मधुपर्कं
निवेदयामि ॥ मधुपर्कांतेआचमनीयं० ॥ अथपंचामृतस्नानं ॥ ॐ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यं ॥ भवावाजस्य
संगथे ॥ दुग्धंकामदुघोत्पन्नंदेवानांप्रीतिकारकं ॥ स्नानार्थंतेमयानीतंगृहाणघटसंभृतं ॥ श्रीमहाविष्णुप्रमुख० ॥ पयःस्नानं० ॥
पयःस्नानांतेशुद्धोदकस्नानंस० ॥ शुद्धोदकस्नानांतेआचमनीयंसमर्प० ॥ सकलपूजार्थेगंधपुष्पंसमर्पयामि ॥ ॐ दधिक्राव्णो
अकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणआयूंषितारिषत् ॥ दधिस्नातुंददाम्येतदानीतंदधिसागरात् ॥ गृहा
णमसृणंस्वर्णघटस्थंचारुशीतलं ॥ श्रीमहाविष्णुप्रमुखपंचायतनदेवताभ्योनमः ॥ दधिस्नानंस० ॥ दधिस्नानांतेशुद्धोदकस्ना
नंसमर्पयामि ॥ शुद्धोदकस्नानांतेआचमनीयंसमर्पयामि ॥ सकलपूजार्थेगंधपुष्पंस० ॥ ॐ घृतंमिमिक्षिरेघृतमस्ययोनिर्घृतेश्रि
तोघृतमुंवस्यधाम ॥ अनुष्वधमावहमादयस्वस्वाहाकृतंवृषभवक्षिहव्यं ॥ घृतंपितृमनुष्याणांदेवानांप्रीतिकारणं ॥ स्नातुंगृहा
णतत्कालंप्रतप्तनवनीतजं ॥ श्रीमहाविष्णुप्रमुख० ॥ घृतस्नानंस० शुद्धोदकस्नानंस० आचमनीयंस० ॥ सकलपूजार्थेगंध
पुष्पं० ॥ ॐ मधुवाताऋतायतेमधुक्षरंतिसिंधवः ॥ माध्वीर्नःसंत्वोषधीः ॥ मधुनक्तमुतोषसिमधुमत्पार्थिवꣳरजः ॥ मधुद्यौर
स्तुनःपिता ॥ मधुमान्नोवनस्पतिर्मधुमाꣳअस्तुसूर्यः ॥ माध्वीर्गावोभवंतुनः ॥ मधुभ्रमरसंघुष्टंमधुपुष्परसोद्भवं ॥ भक्त्याम
याहृतंशुद्धंस्नानार्थंप्रतिगृह्यतां ॥ श्रीमहाविष्णुप्रमुख० ॥ मधुस्नानंस० ॥ शुद्धोदकस्नानंस० ॥ आचमनीयंस० ॥ सकलपू
जार्थेगंध० ॥ त्वेक्रतुमपिवृंजंतिविश्वेद्विर्यदेतेत्रिर्भवंत्यूमाः ॥ स्वादोःस्वादीयःस्वादुनासृजासमतऊषुमधुमधुनाभियोधि ॥
शर्करांगुडसंभूतांशुभ्रांमलनिवारिणीं ॥ तुभ्यंददामिस्नानार्थंस्वादुस्वादुतरामहं ॥ श्रीमहाविष्णुप्रमुखपं० ॥ शर्करास्नानंस० ॥

शुद्धोदकस्नानंस० ॥ आचमनीयंस० ॥ सकलपूजार्थेगंधा० ॥ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरीꣳसर्वभूतानांता
मिहोपह्वयेश्रियं ॥ कर्पूरैलासमायुक्तंसुगंधद्रव्यसंयुतं ॥ गंधोदकंमयादत्तंस्नानार्थंप्रतिगृह्यतां ॥ श्रीमहाविष्णुप्रमुख० ॥
गंधोदकस्नानंस० ॥ शुद्धोदकस्नानंस० ॥ आचमनीयंस० ॥ सकलपूजार्थेगंध० ॥ श्रीमहाविष्णुप्रमुख० ॥ विलेपनार्थेचंदनं
स० ॥ अलंकरणार्थेतुलसीपत्रंस० ॥ पूजार्थेपुष्पाणितुलसीपत्राणिबिल्वपत्राणिदूर्वांकुरांश्चऋतूद्भवानिपुष्पाणिसमर्पयामि ॥
श्रीमहाविष्णुप्रमुख० ॥ धूपंसमर्पयामि ॥ दीपंसमर्पयामि ॥ नैवेद्यार्थेपंचामृतनैवेद्यं ॥ ( अथवापयःशर्करागुडं ) समर्पयामि ॥
ॐ प्राणायस्वाहा ॥ ॐ अपानायस्वाहा ॥ ॐ व्यानायस्वाहा ॥ ॐ उदानायस्वाहा ॥ ॐ समानायस्वाहा ॐ ब्रह्मणेस्वाहा ॥
नैवेद्यमध्येपानीयं० ॥ ॐ प्राणायस्वाहा० ॥ ब्रह्मणेस्वाहा ॥ हस्तप्रक्षालनंस० ॥ मुखप्रक्षालनं० ॥ करोद्वर्तनार्थेचंदनं० ॥
मुखवासार्थेपूगीफलतांबूलंसुवर्णपुष्पदक्षिणांसमर्पयामि ॥ श्रीमहाविष्णुप्रमुखपंचा० प्रदक्षिणां० ॥ नमस्कारान्स० ॥ मंत्रपुष्पं
स० ॥ अनेनयथाज्ञानेनकृतपूजनेनपूर्वाराधनेनश्रीमहाविष्णुःप्रीयतांनमम ॥ तत्सद्ब्रह्मार्पणमस्तुउत्तरेनिर्माल्यंविसर्जयेत् ॥
अथाभिषेकः[1] ॥ नमःसोमायचरुद्रायचनमस्ताम्रायचारुणायचनमःशंगायचपशुपतयेचनमउग्रायचभीमायचनमोअग्रेवधायच
दूरेवधायचनमोहंत्रेचहनीयसेचनमोवृक्षेभ्योहरिकेशेभ्योनमस्तारायनमःशंभवेचमयोभवेचनमःशंकरायचमयस्करायचनमः
शिवायचशिवतरायचनमस्तीर्थ्यायचकूल्यायचनमःपार्यायचावार्यायचनमःप्रतरणायचोत्तरणायचनमआतार्यायचालाद्या

१ चंदनोशीरकर्पूरकुंकुमागरुवासितजलैरुद्रसुवर्णघर्मानुवाकमहापुरुषविद्यापुरुषसूक्तराजनसामभिरभिषेकः । स्नानेधूपेचदीपेचघंटादेनादमा
चरेत् । स्नानेवस्त्रेचनैवेद्येदद्यादाचमनंतथा ॥ प्रतिमापट्टयंत्राणांनित्यंस्नानंनकारयेत् । कारयेत्पर्वदिवसेयथामलनिवारणं ॥

यच्चंनमः शष्प्यायचफेन्यायचनमः सिकत्यायचप्रवाह्यायच ॥८॥ शंचमेमयश्चमेप्रियंचमेनुकामश्चमेकामश्चमेसौमनसश्चमेभद्रंचमे
श्रेयश्चमेवस्यश्चमेयशश्चमेभगश्चमेद्रविणंचमेयंताचमेधर्ताचमेक्षेमश्चमेधृतिश्चमेविश्वंचमेमहश्चमेसंविच्चमेज्ञात्रंचमेसूश्चमेप्रसूश्च
मेसीरंचमेलयश्चमऋतंचमेमृतंचमेयक्ष्मंचमेनामयच्चमेजीवातुश्चमेदीर्घायुत्वंचमेनमित्रंचमेभयंचमेसुगंचमेशयनंचमेसूषाचमेसु
दिनंचमे ॥ ३ ॥ अतोदेवाअवंतुनोयतोविष्णुर्विचक्रमे ॥ पृथिव्याःसप्तधामभिः ॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूढ
मस्यपांसुरे ॥ त्रीणिपदाविचक्रमेविष्णुर्गोपाअदाभ्यः ॥ अतोधर्माणिधारयन् ॥ विष्णोःकर्माणिपश्यतयतोव्रतानिपस्पशे ॥
इंद्रस्ययुज्यःसखा ॥ तद्विष्णोःपरमंपदंसदापश्यंतिसूरयः ॥ दिवीवचक्षुराततं ॥ तद्विप्रासोविपन्यवोजागृवांसःसमिंधते ॥ वि
ष्णोर्यत्परमंपदं ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामग्नेस्तेजसासूर्यस्यवर्चसेंद्रस्येंद्रियेणाभिषिंचामि ॥ बला
यश्रियैयशसेन्नाद्याय ॥ भूर्भुवःसुवःअमृताभिषेकोस्तुशांतिःपुष्टिस्तुष्टिश्चास्तु ॥ श्रीमहाविष्णुप्रमुख० अभिषेकस्नानंसमर्पया
मि ॥ अभिषेकस्नानांतेआचमनीयंसमर्पयामि ॥ तदस्तुमित्रावरुणातदग्नेशंयोरस्मभ्यमिदमस्तुशस्तं ॥ अशीमहिगाधमुतप्रति
ष्ठांनमोदिवेमहतेसौभगाय ॥ गृहावैप्रतिष्ठासूक्तंतत्प्रतिष्ठिततमयावाचाशंस्तव्यंतस्माद्यद्यपिदूरैवपशूँल्लभतेगृहानेवैनानाजिग
मिषतिगृहाहिपशूनांप्रतिष्ठाप्रतिष्ठा ॥ नर्यप्रजांमेगोपाय ॥ अमृतत्वायजीवसे ॥ जातांजनिष्यमाणांच ॥ अमृतेसत्ये
प्रतिष्ठितां ॥ सुप्रतिष्ठितमस्तु ॥ तंयज्ञंबर्हिषिप्रौक्षन्पुरुषंजातमग्रतः ॥ तेनदेवाअयजंतसाध्याऋषयश्चये ॥ वस्त्रयुग्मंगृहाणेदंरत्न
किंकिणिकायुतं ॥ श्वेतंपीतंतथारक्तंनीलंचित्रंयथारुचि ॥ श्रीमहाविष्णुप्र० वस्त्रार्थेतुलसीपत्रंस० ॥७॥ तस्माद्यज्ञात्सर्वहुतःसंभृ

१ वस्त्रंनित्यंनूतनंदेयं । क्षालनेनैकस्यैववस्त्रस्यप्रतिदिनंदानेदोषोन । वस्त्रमभ्युक्षणाच्छुद्ध्येदपरंतुदिनेदिने ॥ अपरंपुष्पादि ॥

तंपृषदाज्यं ॥ पशून्तांश्चक्रेवायव्यानारण्यान्ग्राम्याश्चये ॥ यज्ञसूत्रंत्रिवृत्सौत्रंराजतंकांचनंनवं ॥ रत्नग्रंथियुतंशुद्धंमंत्रितंप्रतिगृह्यतां॥श्रीमहाविष्णुप्र० ॥ यज्ञोपवीतार्थेतुलसीपत्रंस० ॥ आचमनीयंस० ॥८॥ तस्माद्यज्ञात्सर्वहुतऋचःसामानिजज्ञिरे ॥ छंदांसिजज्ञिरेतस्माद्यजुस्तस्मादजायत॥श्रीखंडंचंदनंदिव्यंगंधाढ्यंसुमनोहरं॥विलेपनंसुरश्रेष्ठचंदनंप्रतिगृह्यतां ॥ श्रीमहाविष्णुप्र० ॥ विलेपनार्थेचंदनंस० ॥९॥ अक्षताश्चसुरश्रेष्ठाःकुंकुमाक्ताःसुशोभिताः॥ मयानिवेदिताभक्त्यागृहाणपरमेश्वर ॥ श्रीमहाविष्णुप्र० ॥ अलंकरणार्थेअक्षतान्तुलसी० ॥ तस्मादश्वाअजायंतयेकेचोभयादतः ॥ गावोहजज्ञिरेतस्मात्तस्माज्जाताअजावयः ॥ माल्यादीनिसुगंधीनिमालत्यादीनिवैप्रभो ॥ मयाहृतानिपूजार्थंपुष्पाणिप्रतिगृह्यतां ॥ करवीरैर्जातिकुसुमैश्चंपकैर्बकुलैःशुभैः ॥ शतपत्रैश्चकह्लारैरर्चयेत्परमेश्वर ॥ १० ॥ श्रीमहाविष्णुप्र० ॥ पूजार्थेकालोद्भवपुष्पाणिस० ॥ अहिरिवभोगैःपर्येतिबाहुंज्यायाहेतिंपरिबाधमानः ॥ हस्तघ्नोविश्वावयुनानिविद्वान्पुमान्पुमांसंपरिपातुविश्वतः ॥ हरिद्रांकुंकुमंपरिमलद्रव्यंचसमर्पयामि ॥ श्रीमहाविष्णुप्रमुखपं० ॥ केशवादिचतुर्विंशतिनामभिःतुलसीपत्राणिसमर्पयामि ॥ त्रिदलंत्रिगुणाकारंत्रिनेत्रंचत्रियायुधं॥ त्रिजन्मपापसंहारंएकबिल्वंशिवार्पणं॥ दर्शनंबिल्ववृक्षस्यस्पर्शनंपापनाशनं ॥ अघोरपापसंहारंएकबिल्वंशिवार्पणं ॥ यत्पुरुषंव्यदधुःकतिधाव्यकल्पयन् ॥ मुखंकिमस्यकौबाहूकाऊरूपादाउच्येते ॥ धूरसिधूर्वधूर्वंतंधूर्वतंयोस्मान्धूर्वतितं ॥ धूर्वयंवयंधूर्वामि ॥ वनस्पतिरसोद्भूतोगंधाढ्योगंधउत्तमः ॥ आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यतां ॥११॥ श्रीमहाविष्णुप्र० ॥ धूपंस० ॥ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यःपद्भ्यांशूद्रोअजायत ॥ उद्दीप्यस्वजातवेदोपघ्नंनिर्ऋतिंमम ॥ पशूꣳश्चमह्यमावहजीवनंचदिशोदिश ॥ आज्यंचवर्तिसंयुक्तंवह्निनायोजितंमया ॥ दीपंगृहाणदेवेशत्रैलोक्यतिमिरापह ॥ भ

त्त्यादीपंप्रयच्छामिदेवायपरमात्मने ॥ त्राहिमांनिरयाद्धोराद्दीपोयंप्रतिगृह्यतां ॥ श्रीमहाविष्णुप्र० दीपंस० ॥ १२ ॥ चंद्रमा मनसोजातश्चक्षोःसूर्योअजायत ॥ मुखादिंद्रश्चाग्निश्चप्राणाद्वायुरजायत ॥ नैवेद्यंगृह्यतांदेवभक्तिंमेह्यचलांकुरु ॥ ईप्सितं मेवरंदेहिपरत्रचपरांगतिं ॥ शर्कराखंडखाद्यानिदधिक्षीरघृतानिच ॥ आहारंभक्ष्यभोज्यंचनैवेद्यंप्रतिगृह्यतां॥श्रीमहाविष्णुप्र० नैवेद्यार्थेपयःशर्करानैवेद्यंस० ॥ नैवेद्यात्पूर्वआचमनीयंस० ॥ अमृतोपस्तरणमसि ॥ ॐ प्राणायस्वाहा ॥ ॐ अपानायस्वा हा ॥ ॐ व्यानायस्वाहा ॥ ॐ उदानायस्वाहा ॥ ॐ समानायस्वाहा ॥ ॐ ब्रह्मणेस्वाहा ॥ नैवेद्यमध्येपानीयंस० ॥ १३ ॥ ॐ प्राणायस्वाहा ॥ ॐ अपा० ब्रह्मणेस्वाहा ॥ उत्तरापोशनंस० ॥ हस्तप्रक्षालनंस० ॥ मुखप्रक्षालनंस० ॥ करोद्वर्तनार्थेचं दनंस० ॥ पूगीफलंमहद्दिव्यंनागवल्लीदलैर्युतं ॥ कर्पूरैलासमायुक्तंतांबूलंप्रतिगृह्यतां ॥ तांबूलंसमर्पयामि ॥ हिरण्यगर्भगर्भ स्थंहेमबीजंविभावसोः ॥ अनंतपुण्यफलदमतःशांतिंप्रयच्छमे ॥ श्रीमहाविष्णुप्र० सुवर्णपुष्पदक्षिणांस० ॥ इदंफलंमयादे वस्थापितंपुरतस्तव ॥ तेनमेसुफलावाप्तिर्भवेज्जन्मनिजन्मनि ॥ फलेनफलितंसर्वंत्रैलोक्यंसचराचरं ॥ तस्मात्फलप्रदानेनसफला श्रमनोरथाः॥श्रीमहाविष्णुप्र० नारिकेलफलंकालोद्भवफलंसमर्पयामि ॥ कर्पूरनीराजनदीपंस०॥ श्रियेजातःश्रियआनिरियाय श्रियंवयोजरितृभ्योदधाति ॥ श्रियंवसानाअमृतत्वमायन्भवंतिसत्यासमिथामितद्रौ ॥ श्रियएवैनंतच्छ्रियामादधातिसंततमृ चावषट्कृत्यंसंतत्यैसंधीयतेप्रजयापशुभिर्यएवंवेद ॥ याज्ययायजतिप्रत्तिवैयाज्यापुण्यैवलक्ष्मीःपुण्यामेवतल्लक्ष्मींसंभावयति पुण्यांलक्ष्मींसंस्कुरुते ॥ कर्पूरगौरंकरुणावतारंसंसारसारंभुजगेंद्रहारं ॥ सदावसंतंहृदयारविंदेभवंभवानीसहितंनमामि ॥ आ र्तिक्यंस० ॥नाभ्याआसीदंतरिक्षंशीर्ष्णोद्यौःसमवर्तत॥पद्भ्यांभूमिर्दिशःश्रोत्रात्तथालोकाँअकल्पयन् ॥ अन्यथाशरणंनास्तित्व

मेवशरणंमम ॥ तस्मात्कारुण्यभावेनरक्षस्वपरमेश्वर ॥ श्रीमहाविष्णुप्र० ॥ नमस्कारान्स० ॥१४॥ ॐ सप्तास्यासन्परिधयस्त्रिः सप्तसमिधःकृताः ॥ देवायद्यज्ञंतन्वानाअबध्नन्पुरुषंपशुं ॥ यानिकानिचपापानिजन्मांतरकृतानिच ॥ तानितानिविनश्यंतिप्रद क्षिणपदेपदे ॥ श्रीमहाविष्णुप्र० प्रदक्षिणाःस० ॥१५॥ यज्ञेनयज्ञमयजंतदेवास्तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानःस चंतयत्रपूर्वेसाध्याःसंतिदेवाः ॥ ॐ राजाधिराजायप्रसह्यसाहिने ॥ नमोवयंवैश्रवणायकुर्महे ॥ समेकामान्कामकामायमह्यं ॥ कामेश्वरोवैश्रवणोददातु ॥ कुबेरायवैश्रवणाय ॥ महाराजायनमः ॥ ॐ स्वस्ति साम्राज्यंभौज्यंस्वाराज्यंवैराज्यंपारमेष्ठ्यंराज्यं माहाराज्यमाधिपत्यमयंसमंतपर्यायीस्यात्सार्वभौमःसार्वायुषआंतादापरार्धात्पृथिव्यैसमुद्रपर्यंतायाएकराळिति तदप्येषश्लोको भिगीतोमरुतःपरिवेष्टारोमरुत्तस्यावसन्गृहे ॥ आविक्षितस्यकामप्रेर्विश्वेदेवाःसभासदइति ॥ योवैतांब्रह्मणोवेद ॥ अमृतेनावृतां पुरीं ॥ तस्मैब्रह्मचब्रह्माच ॥ आयुःकीर्तिंप्रजांददुः ॥ श्रीमहाविष्णुप्रमुखपंचायतनदेवताभ्योनमः ॥ मंत्रपुष्पंसमर्पयामि ॥१६॥ गतंदुःखंगतंपापंगतंदारिद्र्यमेवच ॥ आगतासुखसंपत्तिःपुण्योहंतवदर्शनात् ॥ शिरोमत्पादयोःकृत्वाबाहुभ्यांचपरस्परं ॥ प्रपन्नं पाहिमामीशभीतंमृत्युग्रहार्णवात् ॥ इतिवदन्नमेत् ॥ ततोऽग्निमावाह्यपुरुषसूक्तेनप्रत्यृचमाज्यंहुत्वातदसंभवेसूक्तावृत्तिद्वयंज प्त्वापुनस्तेनैवसूक्तेनषोडशपुष्पाण्यर्पयित्वापुनःसूक्तंजपेत् ॥ तदनंतरंस्वोपदिष्टमूलमंत्रंयथाशक्तिजप्त्वा ॥ राजोपचारान्मनसाक ल्पितान्स्वीकुरुष्वभो ॥ छत्रचामरसंगीतव्यजनांदोलिकादिकान् ॥ समस्तराजोपचारार्थेगंधाक्षतपुष्पंस० ॥ आवाहनंनजानामिन जानामितवार्चनं ॥ पूजांचैवनजानामिक्षम्यतांपरमेश्वर ॥ मंत्रहीनंक्रियाहीनंभक्तिहीनंसुरेश्वर ॥ यत्पूजितंमयादेवपरिपूर्णंतद स्तुमे ॥ अनेनयथाशक्तिध्यानावाहनादिपूजनेनश्रीभगवान्परमेश्वरःप्रीयतांनमम ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ बाणरावणचंडीशनं

दीभृंगीरिटादयः ॥ सदाशिवप्रसादेनसर्वेगृहंतुशांभवाः ॥ कलशशंखघंटाधूपदीपस्थावरदीपदेवताभ्योनमः ॥ सर्वोपचारार्थेगं धाक्षतपुष्पंस० ॥ शंखमध्येस्थितंतोयंभ्रामितंकेशवोपरि॥ अंगलग्नंमनुष्याणांब्रह्महत्यांव्यपोहति ॥ अकालमृत्युहरणंसर्वव्याधि विनाशनं॥ विष्णुपादोदकंतीर्थंजठरेधारयाम्यहं॥ विष्णुनिर्माल्यंदेवदत्तंभावयित्वाशिरसिधारयेत् ॥ अपराधसहस्राणिक्रियंते हर्निशंमया॥ दासोयमितिमांमत्वाक्षमस्वपरमेश्वर ॥ इतिप्रार्थना ॥ अनेनयथाज्ञानेनकृतपूजनेनभगवान्श्रीपरमेश्वरःप्री० ॥

## ॥ २७ ॥ पार्थिवलिंगपूजा ॥

श्रीः ॥ आचम्यप्राणानायम्यइष्टदेवतांगुर्वादींश्चनमस्कृत्यदेशकालोत्कीर्तनांतेमुक्कामनयापार्थिवलिंगपूजांकरिष्यइतिसंक ल्पः ॥ पार्थिवप्रकारस्तु अरण्यतडागनदीतीरादिशुद्धस्थानमभिलक्ष्योक्तं ॥ गत्वास्थानंनमस्कुर्यान्मंत्रमेतमुदीरयेत् ॥ सर्वा धारधरादेवत्वद्रूपांमृत्तिकामिमां ॥ लिंगार्थंतुप्रगृह्णामिप्रसन्नोभवमेप्रभो ॥ इतिमृत्तिकाग्राह्या ॥ तत्परिमाणंतु ॥ यावत्स्यादा त्मनःशक्तिर्मृदंतावत्समुद्धरेत् ॥ तदर्धंवाथतस्यार्धंतदर्धंवातदर्धकं ॥ एवंपलद्वयान्न्यूनंनतुकुर्यात्कदाचन ॥ इतिशक्त्यनुसारे णमृदमानीयतदुपर्याद्रतार्थंजलंदत्वा ॐसद्योजातमितिमंत्रेणमृदंहस्तेगृहीत्वा वामदेवायनमइतितस्यांजलंनिषिच्य अघोरेभ्य इतिपीठंकृत्वा तत्पुरुषायेतिउपरिभागस्थमृदोपरितनपीठमध्यदेशेजलबुद्बुदमस्तकाकारमस्तकंसतिसंभवेपंचसूत्रलक्षणयुतमति रमणीयंलिंगंकुर्यात् ॥ ततः ईशानःसर्वविद्यानामितिलिंगमस्तकेऽक्षतानर्पयित्वापूजापीठेबिल्वपत्रंनिधायतदुपरिलिंगंसंस्थाप येत् ॥ ततः अस्यश्रीप्राणप्रतिष्ठामंत्रस्यब्रह्मविष्णुरुद्राऋषयःऋग्यजुःसामानिच्छंदांसिचिद्रूपिणीप्राणशक्तिर्देवताआंबीजंह्रींश क्तिःक्रोंकीलकंअस्मिन्पार्थिवलिंगेसांबशिवप्राणप्रतिष्ठापनेवि० ॥ततोलिंगमस्तकोपरिपाणितलंकृत्वा ॐ आंह्रींक्रोंयंरंलंवंशंषंसंहं

हंसः सांबशिवप्राणाइहप्राणाः सांबशिवजीवइहस्थितः सांबशिवसर्वेंद्रियाणि सांबशिववाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणप्राणा इहागत्यसुखंचिरंतिष्ठंतुस्वाहाइतित्रिवारंपठेत्॥ततःकर्पूरगौरंकरुणावतारंसंसारसारंभुजगेंद्रहारं॥ सदारमंतंहृदयारविंदेभवंभवानीसहितंनमामि॥इतिध्यात्वावक्ष्यमाणमूलमंत्रेणमानसोपचारैःसंपूज्यउत्तानहस्ताग्रेणलिंगंस्पृशन्अस्मिन्लिंगे ॐभूःपुरुषंसांबशिवमावाहयामि ॥ ॐ भुवःपुरुषंसांबशिवं० ॥ ॐ सुवःपुरुषंसांबशिवं० ॥ ॐ भूर्भुवःसुवःपुरुषंसांबशिवंआवाहयामीतिपठित्वा ॥ चैतन्यविग्रहंदेवंस्थितंहृदयपंकजे ॥ स्वीयमार्गेणागतंतंचिंतयेत्कुसुमांजलौ ॥ इतिवचनात्मूलमंत्रंपठन्कुसुमांजलावागतंतंसंचिंत्य ॥ स्वामिन्सर्वजगन्नाथयावत्पूजावसानकं ॥ तावत्त्वंप्रीतिभावेनलिंगेस्मिन्संनिधिंकुरु ॥ इतिमंत्रेणांजलिस्थपुष्पाणिलिंगमस्तकेस्थापयेत् ॥ ततः गोभूहिरण्यवस्त्रादिबलिपुष्पनिवेदने ॥ ज्ञेयोनमःशिवायेतिमंत्रःसर्वार्थसाधकः ॥ सर्वमंत्राधिकश्चायंप्रणवाद्यःषडक्षरः ॥ इतिनंदिपुराणवचनात् ॐ नमःशिवायेतिमूलमंत्रांते ॐ सद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः सांबशिवायासनंसमर्पयामीत्यासनंदद्यात् ॥ एवंपाद्याद्युपचारेष्वपिमूलमंत्रपाठानंतरंवक्ष्यमाणमंत्रांतरंपठित्वोपचारान्दद्यात् ॥ यस्मिन्नुपचारेमंत्रांतरंनास्तितत्रमूलमंत्रएवेतिबोध्यं ॥ ॐ भवेभवेनातिभवेभवस्वमां इतिपाद्यं ॥ ॐ भवोद्भवायनमः इत्यर्घ्यं ॥ ॐ वामदेवायनमः इत्याचमनीयं ॥ ॐ ज्येष्ठायनमः इत्यंतेआपोहिष्ठेतितिसृभिर्हिरण्यवर्णाःशुचयःपावकाइतिचतसृभिःसतिसामर्थ्येपवमानःसुवर्जनइत्यनुवाकेनरुद्राध्यायेनपुरुषसूक्तेनचाभिषिच्यआचमनंदत्वा ॥ ॐ भवंदेवंतर्पयामि शर्वंदेवंत० ईशानंदेवंत० पशुपतिंदेवंत० उग्रंदेवंत० रुद्रंदेवंत० भीमंदेवंत० महांतंदेवंत० ८॥ भवस्यदेवस्यपत्नींत० शर्वस्यदेवस्यपत्नींत० ईशान्यस्यदेवस्यपत्नींत० पशुपतेर्देवस्यपत्नींत० उग्रस्यदेवस्यपत्नींत० रुद्रस्यदेवस्यपत्नींत० भीमस्यदेवस्यप

त्नींत० महतोदेवस्यपत्नींत० ८॥ इतितर्पयित्वा॥ ॐ श्रेष्ठायनमः इतिवस्त्रं० आचमनीयं० ॥ ॐ रुद्रायनमः इत्युपवीतं० आचम
नीयं० ॥ ॐ कालायनमः इतिगंधं ॥ ॐ कलविकरणायनमः इत्यक्षतान् ॥ ॐ बलविकरणायनमः इतिपुष्पाणि ॥ ॐ बला
यनमः इतिधूपं० ॥ ॐ बलप्रमथनायनमः इतिदीपं० ॥ ॐ सर्वभूतदमनायनमः इतिनैवेद्यं० मूलेनफलं ॥ ॐ मनोन्मनाय
नमः इतितांबूलं ॥ मूलेननीराजनं ॥ ईशानःसर्वविद्यानां इतिमंत्रेणपुष्पांजलिंदत्वा ॥ ॐ शर्वायक्षितिमूर्तयेनमः इतिलिं
गस्यपूर्वदिग्भागेवेद्यां ॐ भवायजलमूर्तयेनमः इतीशान्यां ॐरुद्रायतेजोमूर्तयेनमः इत्युत्तरस्यां ॐ उग्रायवायुमूर्तयेनमः
इतिवायव्यां ॐभीमायआकाशमूर्तयेनमःइतिपश्चिमायां ॐपशुपतयेयजमानमूर्तयेनमः इतिनैर्ऋत्यां ॐमहादेवायसोममू
र्तयेनमः इतिदक्षिणस्यां ॐ ईशानायसूर्यमूर्तयेनमः इत्याग्नेय्यांइत्यष्टासुदिक्षुवेद्यांअष्टमूर्तिपूजांकृत्वा ॥ ॐभवायदेवायनमः
शर्वाय० ईशानाय० पशुपतये० उग्राय० रुद्राय० भीमाय० महते० ८ ॥ इतिलिंगमस्तकेष्टौपुष्पाण्यर्पयित्वा ॥ लिंगवामभागे
ॐ भवस्यदेवस्यपत्न्यैनमः शर्वस्य० ईशानस्य० पशुपतेः० उग्रस्य० रुद्रस्य० भीमस्य० महतोदेवस्यपत्न्यैनमः इत्यभितोष्टौपुष्पाणि
दद्यात् ॥ ततः ॐ अघोरेभ्यइत्यारभ्यमंत्रत्रयंदशवारंजप्त्वाअष्टोत्तरसहस्रंशतंवामूलमंत्रंचजप्त्वा ॥ गुह्यातिगुह्यगोप्तात्वंगृहा
णास्मत्कृतंजपं ॥ सिद्धिर्भवतुदेवेशत्वत्प्रसादान्मयिस्थिरा ॥ इतिमंत्रेणदेवायजपंसमर्प्यपंचप्रदक्षिणाःनमस्कारांश्चकृत्वोपवि
श्यपुनःप्रणम्य ईशानःसर्वविद्यानामितिमंत्रेणलिंगमस्तकस्थंपुष्पमाघ्रायशिरसिधृत्वाहृदिप्रविष्टंदेवंसंचिंत्यमूलेनमानसैःपंचोप
चारैःसंपूज्य ॥ कृतेनपार्थिवलिंगपूजनेनश्रीपरमेश्वरःप्रीयतामितीश्वरायार्पयेत् ॥ इतिबौधायनकल्पबृहद्वासिष्ठलैंगानुसारी
पार्थिवलिंगपूजाविधिःसमाप्तः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २८ ॥ भूशुद्धिः ( आसनविधिः ) ॥



श्रीः ॥ आचम्यप्राणानायम्यदेशकालोत्कीर्तनपूर्वकर्मसंकल्प्यशरीरशुद्ध्यर्थंभूशुद्धिभूतशुद्धिप्राणप्रतिष्ठांतर्मातृकाबहिर्मातृका न्यासान्करिष्यइतिसंकल्प्य ॥ शुचौदेशेआसनार्थंकुशाअजिनंचैलमितिक्रमादुपर्युपर्यास्तीर्यतदासनंगायत्र्यामूलमंत्रेणचाभ्यु क्ष्य ॥ पृथ्वीतिमंत्रस्यमेरुपृष्ठऋषिःकूर्मपृष्ठोदेवतासुतलंछंदःआसनोपवेशनेविनियोगः ॥ ॐ पृथ्वित्वयाधृतालोकादेवित्वंविष्णु नाधृता॥त्वंचधारयमांदेविपवित्रंकुरुचासनं॥अनंतासनायनमः ॥ विमलासनाय० ॥पद्मासनाय० ॥ कूर्मासनाय० ॥ योगास नाय० ॥ आधारशक्तिकमलासनाय० ॥ मध्येपरमसुखायनमःइत्यासनेप्राङ्मुखउपविश्यस्वस्तिकपद्मान्यतरासनंबध्नीयात् ॥ (तल्लक्षणंगौतमीतंत्रे ॥ जानूर्वोरंतरेसम्यक्कृत्वापादतलेउभे ॥ ऋजुकायोवसेद्योगीस्वस्तिकंतत्प्रचक्षते ॥ ऊर्वोरुपरिविन्यस्यतथा पादतलेउभे॥पद्मासनमितिप्रोक्तंयोगिनांहृदयंगमं॥इति॥) ततः ऊर्ध्वकेशिविरूपाक्षिमांसशोणितभोजने ॥ तिष्ठदेविशिखाबंधे चामुंडेह्यपराजिते ॥ इतिचामुंडांसंप्रार्थ्य ॥ स्वशिरसिगुंगुरुभ्योनमः ॥ दक्षिणांसेगंगणपतयेनमः ॥ वामेदुंदुर्गायैनमः ॥ दक्षिणजानुनिक्षंक्षेत्रपालायनमः ॥ वामेसंसरस्वत्यैनमः ॥ इतिनमस्कृत्य ॥ अंआत्मनेनमः ॥ संसत्वात्मनेनमः ॥ रंरजआ त्मनेनमः ॥ तंतमआत्मनेनमः ॥ नमोस्त्वनंतायनमोस्तुवेधसेनमोवसिष्ठायनमोस्तुशक्तये ॥ पराशरायाथनमोस्तुशाश्वतेन मोस्तुतेसत्यवतीसुताय ॥ नमोगुरुभ्योगुरुपादुकाभ्योनमःपरेभ्यःपरपादुकाभ्यः ॥ आचार्यसिद्धेश्वरपादुकाभ्योनमोस्तुलक्ष्मी पतिपादुकाभ्यः ॥ ॐ नमोमहद्भ्योनमोअर्भकेभ्योनमोयुवभ्योनमआशिनेभ्यः ॥ यजामदेवान्यदिशक्नवामममाज्यायसःशंसमा वृक्षिदेवाः ॥ इतिनमस्कुर्यात् ॥ अपसर्पंतुतेभूतायेभूताभूमिसंस्थिताः ॥ येभूताविघ्नकर्तारस्तेनश्यंतुशिवाज्ञया ॥ अपक्रामंतुभू

तानिपिशाचाः सर्वतोदिशं ॥ सर्वेषामवरोधेनब्रह्मकर्मसमारभे ॥ इत्यनेनवामपादपार्ष्णिघातत्रयेणपार्थिवान्विघ्नान् तालत्रये
णआंतरिक्षान् दिव्यदृष्ट्यवलोकनेनदिव्यान्विघ्नांश्चोत्सार्य सर्वभूतनिवारणायसशरायसशार्ङ्गायसुदर्शनायास्त्रराजायहुंफट्इति
दिग्बंधंविधायपरितोग्निप्राकारंविचिंत्यभूतशुद्धिंकुर्यात् ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २९ ॥ भूतशुद्धिः ॥

सायथा ॥ मूलाधारस्थितांबिसतंतुनिभांविद्युत्प्रभांप्रसुप्तभुजगाकारांसार्धत्रिवलयांस्वयंभूलिंगवेष्टिनींकुंडलिनींध्यात्वामूलाधा
रात्प्रणवेनभुजगीमिवतामुत्थाप्यप्रणवेनोर्ध्वमुखंविकसितंहृत्पद्मंकृत्वातत्रत्यंजीवात्मानंषट्चक्रभेदक्रमेणब्रह्मरंध्रंनीत्वा सहस्रद
लगतबिंदुरूपेपरमात्मनिसंयोज्यहंसःसोहंइतिमंत्रेणपरमात्मनैक्यभावमापादयेत् ॥ पादादिजानुपर्यंतंपृथिवीमंडलंचतुरस्रंस्व
र्णवर्णवज्रलांछितंनिवृत्तिकलंब्रह्मदैवत्यंलंबीजयुक्तंध्यायेत् ॥ स्योनेत्यस्ययाज्ञिक्यउपनिषदोभूमिर्गायत्रीभूमिनमस्कारेवि० ॥
स्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ लंभूम्यैनमःइतिनमस्कुर्यात् ॥ जान्वादिनाभिपर्यंतंअंबुमंडलं
अर्धचंद्राकारंशुभ्रवर्णपद्मद्वयलांछितंप्रतिष्ठाकलंविष्णुदैवत्यंवंबीजयुक्तंध्यायेत् ॥ अप्सुमइत्यस्यविश्वेदेवाआपोनुष्टुप् ॥ अंबुन
मस्कारेवि० ॥ अप्सुमेसोमोअब्रवीदंतर्विश्वानिभेषजा ॥ अग्निंचविश्वशंभुवमापश्चविश्वभैषजीः ॥ वंअंबुनेनमः ॥ नाभ्यादिहृ
दयपर्यंतंतेजोमंडलंत्रिकोणंरक्तवर्णंस्वस्तिकलांछितंविद्याकलंशिवदैवत्यंरंबीजयुक्तंध्यायेत् ॥ अग्निंदूतमित्यस्यप्रजापतिरग्निर्गा
यत्रीतेजोनमस्कारेवि० ॥ अग्निंदूतंवृणीमहेहोतारंविश्ववेदसं ॥ अस्ययज्ञस्यसुक्रतुं ॥ रंतेजसेनमः ॥ हृदयादिभ्रूमध्यपर्यंतंवा
युमंडलंवृत्तंधूम्रवर्णषड्बिंदुलांछितंशांतिकलंईशानदैवत्यंयंबीजयुक्तंध्यायेत् ॥ वायोशतमित्यस्यविश्वेदेवावायुरनुष्टुप्वायुनम

स्कारेवि० ॥ वायोंशुतश्हरींणायुवस्वपोष्यांणां ॥ उतवांतेसहुस्रिणोरथआयातुपाजसा ॥ यंवायवेनमः ॥ भ्रूमध्यादाब्रह्मरंध्रं आकाशमंडलंवृत्तंशुक्लवर्णंविधुलांछितंशांत्यतीतकलंसदाशिवदैवत्यंहंबीजयुक्तंध्यायेत् ॥ घृतंघृतपावानइत्यस्यसोमआकाशोय जुःआकाशनमस्कारेवि० ॥ घृतंघृतपावानःपिबतवसांवसापावानःपिबतांतरिंक्षस्यहविरसिस्वाहात्वांतरिंक्षायदिशःप्रदिशआदि शोंविदिशउदिशस्वाहादिग्भ्योनमोदिग्भ्यः ॥ हंआकाशायनमः ॥ पद्भ्रस्तपायूपस्थावाचःक्रमात्पृथिव्यादिषुन्यसामि ॥ गमना दानरेचनानंदवचनानिक्रमात्पृ० ॥ घ्राणरसनचक्षुःस्पर्शनश्रोत्राणिक्रमा० ॥ गंधरसरूपस्पर्शशब्दान्क्रमा० ॥ समानोदानव्या नापानप्राणान्क्रमा०॥एवंविन्यस्यपृथ्वींपंचगुणांषड्डुद्धातप्रयोगेणलं६ अंबुनिप्रविलापयामि॥ अंबुचतुर्गुणंपंचोद्धातप्रयोगेणवं ५ अग्नौप्रविलापयामि ॥ अग्निंत्रिगुणंचतुरुद्धातप्रयोगेणरं ४ वायौप्रविलापयामि ॥ वायुंद्विगुणंत्रिरुद्धातप्रयोगेणयं ३ आका शेप्रविलापयामि ॥ आकाशमेकगुणंद्विरुद्धातप्रयोगेणहं २ अहंकारेप्रविलापयामि ॥ तमहंकारंमहत्तत्त्वेप्रविला० तन्महत्तत्त्वं प्रकृतौप्र० तांप्रकृतिंपरब्रह्मणिप्र० ॥ इतिप्रविलापयेत् ॥ ततः ॥ ब्रह्महत्याशिरस्कंचस्वर्णस्तेयभुजद्वयं ॥ सुरापानहृदायुक्तं गुरुतल्पकटिद्वयं ॥ तत्संसर्गिपदद्वंद्वमंगप्रत्यंगपातकं ॥ उपपातकरोमाणंरक्तश्मश्रुविलोचनं ॥ अधोमुखंकृष्णवर्णमंगुष्ठपरि माणकं ॥ खड्गचर्मधरंक्रुद्धंवामकुक्षौविचिंतयेत् ॥ ततोयमितिवायुबीजेनषोडश १६ वारमावृत्तेनपापपुरुषंसंशोष्य रमित्यग्नि बीजेनचतुःषष्टि ६४ वारमावृत्तेनसंदह्य यमितिवायुबीजेनद्वात्रिंशत् ३२ वारमावृत्तेनतद्भस्मदक्षिणनासापुटेनबहिर्निःसार्य वमित्यमृतबीजेनषोडश १६ वारमावृत्तेनतद्भस्मामृतेनसंप्लाव्य लमितिभूमिबीजेनषोडश १६ वारमावृत्तेनघनीभूतंदेहंविभा व्य हमितिआकाशबीजेनषोडश १६ वारमावृत्तेनदेवताराधनयोग्यतांविभाव्य ब्रह्मणःसकाशात्प्रकृतिः प्रकृतेर्महत्तत्त्वं महत्त

त्वादहंकरः अहंकारादाकाशः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यःपृथिवी पृथिव्याओषधयः ओषधीभ्योन्नं अन्नाद्रेतः रेतसःपुरुषः सवाएषपुरुषोन्नरसमयः इतिसृष्टिक्रमंविभाव्यप्रणवेनहृत्पद्ममूर्ध्वमुखंविभाव्यहंसःसोहंइतिमंत्रेणजीवात्मानंहृत्पद्मे समागतंविभाव्यकुंडलिनींस्वस्थानगतांविभावयेत् ॥ इतिभूतशुद्धिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३० ॥ प्राणप्रतिष्ठा ॥

अस्यश्रीप्राणप्रतिष्ठामंत्रस्यब्रह्मविष्णुशिवाऋषयःऋग्यजुःसामानिछंदांसिचैतन्यरूपाप्राणशक्तिर्देवता आंबीजं ह्रींशक्तिः क्रोंकी लकंप्राणप्रतिष्ठापनेवि०॥ब्रह्मविष्णुशिवेभ्यऋषिभ्योनमःशिरसि ॥ ऋग्यजुःसामभ्यश्छंदोभ्योनमःमुखे॥ चैतन्यरूपायैप्राणश क्तिदेवतायैनमःहृदये ॥ आंबीजायगुह्ये॥ह्रींशक्तयेनमःपादयोः॥क्रोंकीलकायनमःनाभौ॥ प्राणप्रतिष्ठापनेविनियोगायनमःसर्वा गे ॥ ॐआंह्रींक्रोंअंकंखंगंघंङंआकाशवाय्वग्निसलिलपृथिव्यात्मनेआंहृदयायनमः ॥ॐआंह्रींक्रोंइंचंछंजंझंञंशब्दस्पर्शरूपरसगं धात्मनेईशिरसेस्वाहा ॥ॐ आंह्रींक्रोंउंटंठंडंढंणंश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मनेऊंशिखायैवषट् ॥ ॐ आंह्रींक्रोंएंतंथंदंधंनंवाक्पा णिपादपायूपस्थात्मनेऐंकवचायहुं॥ ॐ आह्रींक्रोंओंपंफंबंभंमंवचनादानविसर्गगमनानंदात्मनेऔंनेत्रत्रयायवौषट् ॥ ॐ आंह्रीं क्रोंअंयंरंलंवंशंषंसंहंळंक्षंमनोबुद्ध्यहंकारचित्तानंदात्मनेअःअस्त्रायफट्इतिषडंगेषुतत्तन्मुद्राभिर्विन्यस्य नाभ्यादिपादद्वयाग्रांतं आंनमः ॥ कंठादिनाभ्यंतंह्रींनमः ॥ मूर्धादिकंठांतंक्रोंनमः ॥ ततोहृद्येव यंत्वगात्मनेनमः ॥ रंअसृगात्मनेनमः ॥ लंमांसा त्मने० ॥ वंमेदआत्मने० ॥ शंअस्थ्यात्मने० ॥ षंमज्जात्मने० ॥ संशुक्रात्मने० ॥ हंओजआत्मने० ॥ नंजीवात्मने० ॥ क्षंपर मात्मने० ॥ ततोहृदयकमलेयंनमः आग्नेयेरंनमः पूर्वेलंनमः पश्चिमेवंनमः ईशानेशंनमः नैर्ऋतेषंनमः उत्तरेसंनमः

दक्षिणेहंनमः कर्णिकायांक्षंनमः इतिविन्यसेत् ॥ ततःसमस्तमातृकाभिर्मूर्धादिचरणावधिव्यापकन्यासंविधाय ॥ रक्ताब्धिपोतारुणपद्मसंस्थांपाशांकुशाविक्षुशरासबाणान् ॥ शूलेकपालंदधतींकराग्रैरक्तांत्रिनेत्रांप्रणमामिदेवीं ॥ इतिध्यायेत् ॥ वामाद्यूर्ध्वयोराद्ये तदाद्यधःस्थयोरन्ये तदाद्यधःस्थयोरपरेइत्यायुधस्थितिः ॥ शरासोधनुः ॥ ततोहृदिदक्षहस्ततलंनिधाय ॥ ॐ आंह्रींक्रोंअंयंरंलंवंशंषंसंहंळंक्षंअःक्रोंह्रींआंहंसःसोहंममप्राणाइहप्राणाः ॥ पुनरोमित्यादिजपांतमुक्त्वाममजीवइहस्थितः ॥ पुनस्तथैवोक्त्वाममसर्वेंद्रियाणि ॥ पुनस्तथैवोक्त्वाममवाङ्मनश्चक्षुःश्रोत्रत्वग्घ्राणप्राणाइहागत्यसुखंचिरंतिष्ठंतुस्वाहा ॥ असुनीते॒पुन॒र॒स्मासु॒चक्षुः॒पुनः॑प्रा॒णमि॒हनो॑धेहि॒भोगं॑ ॥ ज्योक्प॑श्येम॒सूर्य॑मु॒च्चर॑न्त॒मनु॑मतेमृ॒ळया॑नः॒स्व॒स्ति ॥ गर्भाधानादिपंचदशसंस्कारसिद्ध्यर्थंपंचदशवारंप्रणवंजपेत् ॥ इतिप्राणप्रतिष्ठा ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३१ ॥ अंतर्मातृकान्यासः ॥

तत्रमातृकाभिःप्राणायामत्रयंकृत्वामातृकान्यासंकुर्यात् सचस्वरैःपूरकः कादिभिःकुंभकःयादिभीरेचकः इतिप्राणायामक्रमः ॥ इत्थंप्राणायामत्रयंकृत्वा ॥ अस्यश्रीमातृकामंत्रस्यब्रह्मणऋषयेनमःशिरसि ॥ गायत्र्यैछंदसेनमःमुखे ॥ मातृकासरस्वत्यैदेवतायैनमःहृदये ॥ हल्भ्योवीजेभ्योनमःगुह्ये ॥ स्वरेभ्यःशक्तिभ्योनमःपादयोः ॥ व्यक्तयेकीलकायनमःनाभौ ॥ मातृकान्यासेविनियोगायनमःसर्वांगे ॥ ॐ अंकंखंगंघंङंआंअंगुष्ठाभ्यांनमः ॥ ॐ इंचंछंजंझंञंईंतर्जनीभ्यांनमः ॥ ॐ उंटंठंडंढंणंऊंमध्यमाभ्यांवषट् ॥ ॐ एंतंथंदंधंनंऐंअनामिकाभ्यांहुं ॥ ॐ ओंपंफंबंभंमंऔंकनिष्ठिकाभ्यांवौषट् ॥ ॐ अंयंरंलंवंशंषंसंहंळंक्षंअःकरतलकरपृष्ठाभ्यांफट् ॥ एवंअंकंइत्यादिहृदयायनमः शिरसेस्वाहा शिखायैवषट् कवचायहुं नेत्रत्रयायवौषट् अस्त्रायफट् ॥

सर्वाभिर्मातृकाभिस्त्रिर्व्यापकं ॥ अथध्यानं ॥ पंचाशद्वर्णभेदैर्विहितवदनदोःपादहृत्कुक्षिवक्षोदेशांभास्वत्कपर्दाकलितशशिक
लामिंदुकुंदावदातां ॥ अक्षस्रक्कुंभचिंतालिखितवरकरांत्रीक्षणांपद्मसंस्थामच्छाकल्पामतुच्छस्तनजघनभरांभारतींतांनमामि ॥
दक्षिणोर्ध्वकरमारभ्यदक्षाधःकरपर्यंतमायुधस्थितिः ॥ चिंतालिखितंपुस्तकं ॥ एवंध्यात्वांतर्मातृकान्यासंकुर्यात् ॥ तत्रादौकं
ठस्थेविशुद्धचक्रेषोडशदलेपूर्वादिप्रादक्षिण्येन ॐ अंनमः ॐ आंनमः ॐ अःनमः इतिविन्यस्य हृदयस्थेनाहतचक्रेद्वादशदले
पूर्वादिप्रादक्षिण्येन ॐ कंनमः ॐ खंनमः ॐ ठंनमः इतिविन्यस्य नाभिमंडलस्थेमणिपूरकचक्रेदशदलेपूर्वादिप्रादक्षिण्येन ॐ
डंनमः ॐ ढंनमः ॐ फंनमः इतिविन्यस्य लिंगमूलस्थेस्वाधिष्ठानचक्रेषड्दलेपूर्वादिप्रादक्षिण्येन ॐ बंनमः ॐ भंनमः ॐ
लंनमः इतिविन्यस्य मूलाधारस्थेमूलाधारचक्रेचतुर्दलेपूर्वादिप्रादक्षिण्येन ॐ वंनमः ॐ संनमः इतिविन्यस्य भ्रूमध्यस्थेआज्ञा
चक्रेद्विदलेदक्षिणवामक्रमेण ॐ हंनमः ॐ क्षंनमः इतिविन्यसेत् ॥ इत्यंतर्मातृकान्यासः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३२ ॥ बहिर्मातृकान्यासः ॥

पंचाशल्लिपिभिर्विभक्तमुखदोःपन्मध्यवक्षस्थलांभास्वन्मौलिनिबद्धचंद्रशकलामापीनतुंगस्तनीं ॥ मुद्रामक्षगुणंसुधाढ्यकलशं
विद्यांचहस्तांबुजैर्बिभ्राणांविशदप्रभांत्रिनयनांवाग्देवतामाश्रये ॥ इतिध्यात्वा ॥ ॐ अंनमःशिरसि ॥ सर्वत्रादौतारः ॥ आंन
मःमुखवृत्ते ॥ इंनमःदक्षिणनेत्रे ॥ ईंनमःवामनेत्रे ॥ उंनमःदक्षिणश्रोत्रे ॥ ऊंनमःवामश्रोत्रे ॥ ऋंनमःदक्षिणनासापुटे ॥
ॠंनमःवामनासापुटे ॥ ऌंनमःदक्षिणगंडे ॥ ॡंनमःवामगंडे ॥ एंनमःऊर्ध्वोष्ठे ॥ ऐंनमःअधरोष्ठे ॥ ओंनमःऊर्ध्वदंतपंक्तौ ॥
औंनमःअधरदंतपंक्तौ ॥ अंनमःशिरसि ॥ अःनमःग्रीवायां ॥ कंनमःदक्षिणबाहुमूले ॥ खंनमःदक्षिणकूर्परे ॥ गंनमःदक्षि

णमणिबंधे ॥ घंनमः दक्षिणकरांगुलिमूलेषु ॥ ङंनमः दक्षिणकरांगुल्यग्रेषु ॥ चंनमः वामबाहुमूले ॥ छंनमः वामकूर्परे ॥ जंनमः वाममणिबंधे ॥ झंनमः वामकरांगुलिमूलेषु ॥ ञंनमः वामकरांगुल्यग्रेषु ॥ टंनमः दक्षिणपादमूले ॥ ठंनमः दक्षिणजानुनि ॥ डंनमः दक्षिणगुल्फे ॥ ढंनमः दक्षिणपादांगुलिमूलेषु ॥ णंनमः दक्षिणपादांगुल्यग्रेषु ॥ तंनमः वामपादमूलेषु ॥ थंनमः वामजानुनि ॥ दंनमः वामगुल्फे ॥ धंनमः वामपादांगुलिमूलेषु ॥ नंनमः वामपादांगुल्यग्रेषु॥ पंनमः दक्षिणपार्श्वे ॥ फंनमः वामपार्श्वे ॥ बंनमः पृष्ठेः ॥ भंनमः नाभौ ॥ मंनमः जठरे ॥ यंनमः हृदि ॥ रंनमः दक्षिणांसे ॥ लंनमः ककुदि ॥ वंनमः वामांसे ॥ शंनमः हृदादिदक्षकराग्रांतं ॥ षंनमः हृदादिवामकराग्रांतं ॥ संनमः हृदादिदक्षिणपादाग्रांतं ॥ हंनमः हृदादिवामपादाग्रांतं ॥ ळंनमः हृदादिगुह्यांतं ॥ क्षंनमः हृदादिमूर्धांतं ॥ अंगुष्ठानामिकाभ्यामयंन्यासः ॥ आचक्रायहृदयायनमः ॥ विचक्रायशिरसेस्वाहा ॥ सुचक्रायशिखायैवषट् ॥ त्रैलोक्यरक्षणचक्रायकवचायहुं ॥ असुरांतकचक्रायअस्त्रायफट् ॥ अंगषट्कपक्षे ॥ असुरांतकचक्रायनेत्रत्रयायवौषट् ॥ सुदर्शनचक्रायअस्त्रायफट् ॥ इतिबहिर्मातृकान्यासः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३३ ॥ पवनपावनप्रारंभः ॥



श्रीः ॥ सुमुखश्चेत्यादिश्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंशरीरशुद्ध्यर्थंआत्मानंपावयिष्ये ॥ आचार्यःऋत्विग्यजमानैःसहैकविंशतिदर्भपिंजूलान्यादायसप्तभिःसप्तभिःपावयति ॥ ॐ चित्पतिर्मापुनात्वच्छिद्रेणपवित्रेणवसोःसूर्यस्यरश्मिभिः ॥ नाभ्याः सोदकैर्दर्भैर्मुखपर्यंतंसंमार्ष्टि ॥ सकृन्मंत्रेणद्विस्तूष्णीं ॥ यद्देवादेवहेडनं ॥ देवासश्चकृमावयं ॥ आदित्यास्तस्मान्मामुंचत ॥ ऋतस्यर्तेनमामुत ॥ देवाजीवनकाम्यायत् ॥ वाचानृतमूदिम ॥ अग्निर्मातस्मादेनसः ॥ गार्हपत्यःप्रमुंचतु ॥ दुरितायानिच

कृम ॥ कुरोतुमामनेनसँ ॥ ऋतेनद्यावापृथिवी ॥ ऋतेनुत्वꣳसरस्वती ॥ ऋतान्मामुंचताꣳहंसः ॥ यदुन्यकृतमारिम ॥ सुजा
तशꣳसादुतवाजामिशुꣳसात् ॥ ज्यायसुःशꣳसादुतवाकनीयसः ॥ अनाज्ञातंदेवकृतुंयदेनः॥तस्मात्त्वमस्मान्जातवेदोमुमुग्धि ॥
यद्वाचायन्मनसा ॥ बाहुभ्यामूरुभ्यामष्ठीवद्भ्यां ॥ शिश्नैर्यदनृतंचकृमावयं ॥ अग्निर्मातस्मादेनसः ॥ यद्धस्ताभ्यांचुकरुकिल्बि
षाणि ॥ अक्षाणांवग्नुमुपजिघ्नमानः ॥ दूरेपश्याचराष्ट्रभृच्च ॥ तान्यप्सरसावनुदत्तामृणानि ॥ अदीव्यन्नृणंयदहंचकार ॥ यद्वा
दास्यंत्संजगाराजनेभ्यः ॥ अग्निर्मातस्मादेनसः ॥ यन्मयिमातागर्भेसति ॥ एनश्चकारयत्पिता ॥ अग्निर्मातस्मादेनसः ॥ यदा
पिपेषमातरंपितरं ॥ पुत्रःप्रमुदितोधयन् ॥ अहिꣳसितौपितरौमयाततत् ॥ तदग्नेअनृणोभवामि ॥ यदंतरिक्षंपृथिवीमुतद्यां ॥
यन्मातरंपितरंवाजिहिꣳसिम ॥ अग्निर्मातस्मादेनसः ॥ यदाशसानिशसायत्पराशसा ॥ यदेनश्चकृमानूतननंयत्पुराणं॥अग्निर्मात
स्मादेनसः ॥ अतिक्रामामिदुरितंयदेनः ॥ जहामिरिप्रंपरमेसधस्थे ॥ यत्रयंतिसुकृतोनापिदुष्कृतः ॥ तमारोहामिसुकृतांनु
लोकं ॥ त्रितेदेवाअमृजतैतदेनः ॥ त्रितएतन्मनुष्येषुमामृजे ॥ ततोमायदिकिंचिदानशे ॥ अग्निर्मातस्मादेनसः ॥ गार्हपत्यः
प्रमुंचतु ॥ दुरितायानिचकृम ॥ करोतुमामनेनसं ॥ दिविजाताअप्सुजाताः ॥ याजाताओषधीभ्यः॥ अथोयाअग्निजाआपः ॥
तानःशुंधंतुशुंधनीः ॥ यदापोनक्तंदुरितंचराम ॥ यद्वादिवानूतननंयत्पुराणं ॥ हिरण्यवर्णास्ततउत्पुनीतनः ॥ इमंमेवरुणतत्त्वा
यामि ॥ त्वन्नोअग्नेसत्वंनोअग्ने ॥ त्वमग्नेअयासि ॥ इत्यनुवाकंजपित्वा ॥ दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः॥सुरभि
नोमुखाकरत्प्रणआयूꣳषितारिषत् ॥ इतिमार्जनं ॥ तांस्त्यक्त्वा ॥ अन्यान्गृहीत्वा ॥ ॐ वाक्पतिर्मापुनात्वच्छिद्रेणपवित्रेणव
सोःसूर्यस्यरश्मिभिः ॥ नाभ्याःसोदकैर्दर्भैर्नासिकपर्यंतंसमार्ष्टि ॥ सकृन्मंत्रेणद्विस्तूष्णीं ॥ पवमानःसुवर्जनः ॥ पवित्रेणविच

षेणिः ॥ यःपोतासपुनातुमा ॥ पुनंतुमादेवजनाः ॥ पुनंतुमनवोधिया ॥ पुनंतुविश्वआयवः ॥ जातवेदःपवित्रवत् ॥ पवित्रे
णपुनाहिमा ॥ शुक्रेणदेवदीद्यत् ॥ अग्नेक्रत्वाक्रतूंरनु ॥ यत्तेपवित्रमर्चिषि ॥ अग्नेवितंतमंतरा ॥ ब्रह्मतेनपुनीमहे ॥ उभा
भ्यांदेवसवितः ॥ पवित्रेणसवेनच ॥ इदंब्रह्मपुनीमहे ॥ वैश्वदेवीपुनतीदेव्यागात् ॥ यस्यैबह्वीस्तनुवोवीतपृष्ठाः ॥ तयामदंतः
सधमाद्येषु ॥ वयंस्यामपतयोरयीणां ॥ वैश्वानरोरश्मिभिर्मापुनातु ॥ वातःप्राणेनेषिरोमयोभूः॥द्यावापृथिवीपयसापयोभिः॥
ऋतावरीयज्ञियेमापुनीतां ॥ बृहद्भिःसवितस्तृभिः ॥ वर्षिष्ठैर्देवमन्मभिः॥ अग्नेदक्षैःपुनाहिमा॥येनदेवाअपुनत॥येनापोदिव्यंक
शः ॥ तेनदिव्येनब्रह्मणा॥इदंब्रह्मपुनीमहे॥यःपावमानीरध्येति॥ऋषिभिःसंभृतंरसं ॥ सर्वंसपूतमश्नाति ॥ स्वदितंमातरिश्व
ना ॥ पावमानीर्योअध्येति ॥ ऋषिभिःसंभृतंरसं ॥ तस्मैसरस्वतीदुहे॥क्षीरंसर्पिर्मधूदकं॥पावमानीस्वस्त्ययनीः ॥ सुदुघाहि
पयस्वतीः ॥ ऋषिभिःसंभृतोरसः ॥ ब्राह्मणेष्वमृतंहितं ॥ पावमानीर्दिशंतुनः ॥ इमंलोकमथोअमुं ॥ कामान्त्समर्धयंतुनः॥
देवीर्देवैःसमाभृताः ॥ पावमानीःस्वस्त्ययनीः ॥ सुदुघाहिघृतश्चुतः ॥ ऋषिभिःसंभृतोरसः ॥ ब्राह्मणेष्वमृतंहितं ॥ येनदे
वाःपवित्रेण ॥ आत्मानंपुनतेसदा ॥ तेनसहस्रधारेण ॥ पावमान्यःपुनंतुमा ॥ प्राजापत्यंपवित्रं ॥ शतोद्यामंहिरण्मयं ॥
तेनब्रह्मविदोवयं ॥ पूतंब्रह्मपुनीमहे ॥ इंद्रःसुनीतीसहमापुनातु ॥ सोमःस्वस्त्यावरुणःसमीच्या ॥ यमोराजाप्रमृणाभिःपुना
तुमा ॥ जातवेदामोर्जयंत्यापुनातु ॥ इत्यनुवाकंजप्त्वा ॥ ततोमार्जनं ॥ आपोहिष्ठामयोभुवः ॥ तानऊर्जेदधातन ॥ महेरणा
यचक्षसे ॥ योवःशिवतमोरसः ॥ तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमामवः ॥ यस्यक्षयायजिन्वथ ॥
आपोजनयथाचनः ॥ तांस्त्यक्त्वा ॥ अन्यान्गृहीत्वा ॥ ॐ देवोवःसवितापुनात्वच्छिद्रेणपवित्रेणवसोःसूर्यस्यरश्मिभिः ॥

त्याय । त्वमेवकेवलंकर्तासि । त्वमेवप्रत्यक्षंविष्णुरसि । त्वमेवप्रत्यक्षंब्रह्मासि । त्वमेवप्रत्यक्षंरुद्रोऽसि । त्वमेवप्रत्यक्षमृगसि । त्वमेवप्रत्यक्षंयजुरसि । त्वमेवप्रत्यक्षंसामासि । त्वमेवप्रत्यक्षमथर्वासि । त्वमेवसर्वंछंदोसि । आदित्याद्वायुर्जायते । आदित्या द्भूमिर्जायते । आदित्यादापोजायंते । आदित्याज्ज्योतिर्जायते । आदित्याद्व्योमदिशोजायंते । आदित्याद्वेदाजायंते । आदि त्याद्देवाजायंते । आदित्योवाएषएतन्मंडलंतपति । असावादित्योब्रह्म । आदित्योऽतःकरणमनोबुद्धिचित्ताहंकाराः । आदि त्योवैव्यानसमानोदानापानप्राणाः । आदित्योवैश्रोत्रत्वक्चक्षूरसनानासाः । आदित्योवैवाक्पाणिपादोपस्थपायूनि । आदित्यो वैशब्दस्पर्शरूपरसगंधाः । आदित्योवैवचनादानगमनानंदविसर्गाः । आनंदमयोज्ञानमयोविज्ञानमयआदित्यः । नमोमित्रा यभानवेमृत्योर्मापाहिभ्राजिष्णवेविश्वहेतवेनमः । सूर्योनोदिवस्पातुवातोअंतरिक्षात् । अग्निर्नःपार्थिवेभ्यः । सूर्याद्भवंतिभू तानि । सूर्येणपालितानितु । सूर्येलयंप्राप्नुवंति । यःसूर्यःसोहमेवच । चक्षुर्नोदेवःसविता । चक्षुर्नउतपर्वतः । चक्षुर्धातादधा तुनः । आदित्यायविद्महेसहस्रकरायधीमहि । तन्नःसूर्यःप्रचोदयात् । सवितापश्चात्तात् । सवितापुरस्तात् । सवितोत्तरा त्तात् । सविताधरात्तात् । सवितानःसुवतुसर्वतातिम् । सवितानोरासतांदीर्घमायुः ॥ ॥ ओमित्येकाक्षरंब्रह्म । घृणिरिति द्वेअक्षरे । सूर्यइत्यक्षरद्वयम् । आदित्यइतित्रीण्यक्षराणि । एतद्वैसूर्यस्याष्टाक्षरंमनुंयःसदाहरहर्जपतिसोब्रह्मण्योब्राह्मणोभ वति । सूर्याभिमुखंजप्त्वामहाव्याधिभयात्प्रमुच्यते । अलक्ष्मीर्नश्यति । अभक्ष्यभक्षणात्पूतोभवति । अपेयपानात्पूतोभवति । अगम्यागमनात्पूतोभवति । व्रात्यसंभाषणात्पूतोभवति । मध्याह्नेसूर्याभिमुखःपठेत् । सद्यःपंचमहापापात्प्रमुच्यते । सैषासा वित्रींविद्यानकस्यचित्प्रशंसेत् । यएतन्महाभागःप्रातःपठतिसभाग्यवान्जायते । पशून्विंदतिवेदार्थंलभते । त्रिकालंजप्त्वाक्र

तुशतफलंप्राप्नोति । हस्तादित्येजपतिसमहामृत्युंतरति । यएवंवेद । इत्युपनिषत् ॥ इतिसूर्याथर्वशीर्षसमाप्तम् ॥ ॥ ७ ॥

## ॥ ४३ ॥ देव्यथर्वशीर्षम् ॥

श्रीः ॥ ॐ सर्वेवैदेवादेवीमुपतस्थुःकासित्वंमहादेवीति साब्रवीदहंब्रह्मस्वरूपिणी । मत्तःप्रकृतिपुरुषात्मकंजगत् । शून्यंचाशून्यंच । अहमानंदानानंदौअहंविज्ञानाविज्ञानेअहंब्रह्माब्रह्मणीद्वेब्रह्मणीवेदितव्ये । इतिचाथर्वणीश्रुतिः । अहंपंचभूतानि । अहंपंचतन्मात्राणि । अहमखिलंजगत् । वेदोहमवेदोहं । विद्याहमविद्याहम् । अजाहमनजाहं । अधश्चोर्ध्वंचतिर्यक्चाहं । अहꣳरुद्रेभिर्वसुभिश्चरामि । अहमादित्यैरुतविश्वदेवैः । अहंमित्रावरुणावुभौविभर्मि । अहमिंद्राग्नीअहमश्विनाउभौ । अहꣳसोमंत्वष्टारंपूषणंभगंदधामि । अहंविष्णुमुरुक्रमं । ब्रह्माणमुतप्रजापतिंदधामि । अहंदधामिद्रविणꣳहविष्मतेसुप्राव्येयजमानायसुन्वते । अहꣳराष्ट्रीसंगमनीवसूनांचिकितुषीप्रथमायज्ञियानां । अहꣳसुवेपितरमस्यमूर्धन्ममयोनिरप्स्वंतःसमुद्रे । यएवंवेदसदैवीꣳसंपदमाप्नोति । तेदेवाअब्रुवन् । नमोदेव्यैमहादेव्यैशिवायैसततंनमः । नमःप्रकृत्यैभद्रायैनियताःप्रणताःस्मताम् । तामग्निवर्णांतपसाज्वलंतींवैरोचनींकर्मफलेषुजुष्टाम् । दुर्गांदेवींशरणंप्रपद्यामहेऽसुरान्नाशयित्र्यैतेनमः । देवींवाचमजनयंतदेवास्तांविश्वरूपाःपशवोवदंति । सानोमंद्रेषमूर्जंदुहानाधेनुर्वागस्मानुपसुष्टुतैतु ॥ कालरात्रींब्रह्मस्तुतांवैष्णवींस्कंदमातरम् । सरस्वतीमदितिंदक्षदुहितरंनमामःपावनांशिवाम् । महालक्ष्म्यैचविद्महेसर्वशक्त्यैचधीमहि । तन्नोदेवीप्रचोदयात् । अदितिर्ह्यजनिष्टदक्षयादुहितातव । तांदेवाअन्वजायंतभद्राअमृतबंधवः ॥ कामेयोनिःकमलावज्रपाणिर्गुहाहंसामातलिश्वाभ्रमिंद्रः । पुनर्गुहासकलामाययाचापृथक्क्लेशाविश्वमातादिविद्याः ॥ एषात्मशक्तिः । एषाविश्वमोहिनीपाशांकुशधनुर्बाणधरा । एषाश्री

महाविद्या । यएवंवेद सशोकंतरति । नमस्तेभगवतिमातरस्मान्पाहिसर्वतः । सैषावैष्णव्यष्टौवसवः सैवैकादशरुद्राः सैषाद्वा
दशादित्याः सैषाविश्वेदेवाः सोमपाअसोमपाश्च सैषायातुधानाअसुरारक्षांसिपिशाचयक्षसिद्धाः सैषासत्वरजस्तमांसि सैषाब्रह्मवि
ष्णुरुद्ररूपिणी सैषाप्रजापतींद्रमनवः सैषाग्रहनक्षत्रज्योतिष्कलाकाष्ठादिविश्वरूपिणीतामहंप्रणौमिनित्यम् । पापापहारिणीदेवी
भुक्तिमुक्तिप्रदायिनी । अनंतांविजयांशुद्धांशरण्यांसर्वदांशिवाम् । वियदाकारसंयुक्तंवीतिहोत्रसमन्वितम् ॥ अर्धेंदुलसितंदे
व्याबीजंसर्वार्थसाधकम् ॥ एवमेकाक्षरंमंत्रंयतयःशुद्धचेतसः । ध्यायंतिपरमानंदमयाज्ञानांबुराशयः ॥ वाङ्मयाब्रह्मभूस्तस्मा
त्षष्ठवक्त्रसमन्वितम् । सूर्योवामश्रोत्रबिंदुसंयुक्ताष्टतृतीयकम् ॥ नारायणेनसंमिश्रोवायुश्चाधारयुक्तयः । विच्चेनवार्णकोणस्यम
हानानंददायकः । हृत्पुंडरीकमध्यस्थांप्रातःसूर्यसमप्रभाम् । पाशांकुशधरांसौम्यांवरदाभयहस्तकाम् ॥ त्रिनेत्रांरक्तवसनांभ
क्तकामदुहंभजे । भजामित्वांमहादेविमहाभयविनाशिनि ॥ महादारिद्र्यशमनिमहाकारुण्यरूपिणि । यस्याःस्वरूपंब्रह्मादयो
नजानंतितस्मादुच्यतेअज्ञेया । यस्याअंतोनलभ्यतेतस्मादुच्यतेअनंता । यस्यालक्ष्यंनोपलक्ष्यतेतस्मादुच्यतेअलक्षा । यस्याज
ननंनोपलक्ष्यतेतस्मादुच्यतेअजा । एकैवसर्वत्रवर्ततेतस्मादुच्यतएका । एकैवविश्वरूपिणीतस्मादुच्यतेऽनेका । अतएवोच्य
तेऽज्ञेयानंतलक्ष्यजैकानैका । मंत्राणांमातृकादेवीशब्दानांज्ञानरूपिणी । ज्ञानानांचिन्मयातीताशून्यानांशून्यसाक्षिणी ॥ यस्याः
परतरंनास्तिसैषादुर्गाप्रकीर्तिता । तांदुर्गांदुर्गमांदेवींदुराचारविघातिनीम् ॥ नमामिभवभीतोऽहंसंसारार्णवतारिणीम् ॥ ॥
इदमथर्वशीर्षंयोऽधीते । सपंचाथर्वशीर्षफलमाप्नोति । इदमथर्वशीर्षज्ञात्वायोर्चांस्थापयति । शतलक्षंप्रजप्त्वापिनार्चाशुद्धिंच
विंदति । शतमष्टोत्तरंचास्यपुरश्चर्याविधिःस्मृतः । दशवारंपठेद्यस्तुसद्यःपापैःप्रमुच्यते । महादुर्गाणितरतिमहादेव्याःप्रसा

दतः ॥ सायमधीयानोदिवसकृतंपापंनाशति । प्रातरधीयानोरात्रिकृतंपापंनाशयति । सायंप्रातःप्रयुंजानोअपापोभवति । निशीथेतुरीयसंध्यायांजप्त्वावाक्सिद्धिर्भवति । नूतनायांप्रतिमायांजप्त्वादेवतासांनिध्यंभवति । भौमाश्विन्यांमहादेवीसंनिधौ जप्त्वामहामृत्युंतरतिसमहामृत्युंतरति । यएवंवेदइत्युपनिषत् ॥ इत्यथर्वशीर्षम् ॥ ॥ ७ ॥ ॥ ७ ॥

## ॥ ४४ ॥ महापुरुषविद्या ॥

श्रीः ॥ ॐ जितंतेपुंडरीकाक्षनमस्तेविश्वभावन ॥ सुब्रह्मण्यनमस्तेस्तुमहापुरुषपूर्वज ॥ १ ॥ नमोहिरण्यगर्भायप्रधानाव्यक्तरूपिणे ॥ ॐनमोवासुदेवायशुद्धज्ञानस्वरूपिणे ॥ २ ॥ देवानांदानवानांचसामान्यमसिदैवतं ॥ सर्वदाचरणद्वंद्वंव्रजामिशरणंतव ॥ ३ ॥ एकस्त्वमसिलोकस्यस्रष्टासंहारकस्तथा ॥ अध्यक्षश्चानुमंताचगुणमायासमावृतः ॥ ४ ॥ संसारसागरंघोरमनंतंक्लेशभाजनं ॥ त्वामेवशरणंप्राप्यनिस्तरंतिमनीषिणः ॥ ५ ॥ नतेरूपंनचाकारोनायुधानिनचास्पदं ॥ तथापिपुरुषाकारोभक्तानांत्वंप्रकाशसे ॥ ६ ॥ नैवकिंचित्परोक्षंतेनप्रत्यक्षोसिकस्यचित् ॥ नैवकिंचिदसिद्धंतेनचसिद्धोसिकस्यचित् ॥ ७ ॥ कार्याणांकारणंपूर्णंवचसांवाच्यमुत्तमं ॥ योगिनांपरमांसिद्धिंवदंतिपरमंविदः ॥ ८ ॥ अहंभीतोस्मिदेवेशसंसारेऽस्मिन्भयावहे ॥ त्राहिमांपुंडरीकाक्षनजानेशरणंपरं ॥ ९ ॥ कालेष्वपिचसर्वेषुदिक्षुसर्वासुचाच्युत ॥ शरीरेपिगतौचापिवर्ततेमेमहद्भयं ॥ १० ॥ त्वत्पादकमलादन्यन्नमेजन्मांतरेष्वपि ॥ निमित्तंकुशलस्यास्तियेनगच्छामिसद्गतिं ॥ ११ ॥ विज्ञानंयदिदंप्राप्तंयदिदंज्ञानमर्जितं ॥ जन्मांतरेपिमेदेवामभूदस्यपरिक्षयः ॥ १२ ॥ दुर्गतावपिजातायांत्वंगतिस्त्वंमतिर्मम ॥ यदिनाथंचविंदेयंतावतास्मिकृतीसदा ॥ १३ ॥ अकाम



१ धर्मसिंधौदेवपूजांप्रकृत्य 'स्वर्णघर्मानुवाकेनमहापुरुषविद्यया' इत्युक्तमासीदतोऽत्राभिषेकसूक्तेषुपौराणाया अपिमहापुरुषविद्यायानिवेशःकृतः ॥

कलुषंचित्तंममतेपादयोःस्थितं ॥ कामयेवैष्णवत्वंतुसर्वजन्मसुकेवलं ॥१४॥ पुरुषस्यहरेःसूक्तंस्वर्ग्यंधन्यंयशस्करं ॥ आत्मज्ञानमिदंपुण्यंयोगज्ञानमिदंपरं ॥१५॥ इत्येवमनयास्तुत्यास्तुत्वादेवंदिनेदिने ॥ किंकरोस्मीतिचात्मानंदेवायैवनिवेदयेत् ॥१६॥ इति ॥

## ॥ ४५ ॥ देवेप्रारंभः ॥

श्रीः ॥ मूर्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतायजातमग्निं ॥ कविंसम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाः ॥ १ ॥ ममत्तुनःपरिज्मावसर्हाममत्तुवातोअपांवृषण्वान् ॥ शिशीतमिंद्रापर्वतायुवन्नस्तन्नोविश्वेवरिवस्यंतुदेवाः ॥ २ ॥ सबुध्नादाष्टजनुषाभ्यग्रंबृहस्पतिर्देवतायस्यसम्राट् ॥ बुध्नाद्योअग्रमभ्यत्योजसाबृहस्पतिमाविवासंतिदेवाः ॥ ३ ॥ वायुस्त्वाꣳअग्नेप्रमुमोक्तुदेवःप्रजापतिःप्रजयासंविदानः ॥ प्रमुंचमानाभुवनस्यरेतोगातुंधत्तयजमानायदेवाः ॥ ४ ॥ जातवेदोवपयागच्छदेवान्त्वꣳहिहोताप्रथमोवभूथ ॥ घृतेनत्वंतनुवोवर्धयस्वस्वाहाकृतꣳहविरदंतुदेवाः ॥ ५ ॥ शतंवर्चिनःसहस्रंचसाकꣳहथोअप्रत्यसुरस्यवीरान् ॥ उतमातामहिषमन्ववेनदमीत्वाजहतिपुत्रदेवाः ॥६॥ यज्ञेनयज्ञमयजंतदेवास्तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानःसचंतेयत्रपूर्वेसाध्याःसंतिदेवाः ॥ ७ ॥ बृहस्पतेसवितर्बोधयैनꣳसꣳशितंचित्संतराꣳसꣳशिशाधि ॥ वर्धयैनंमहतेसौभगायविश्वएनमनुमदंतुदेवाः ॥ ८ ॥ यईशेअस्यद्विपदश्चतुष्पदःकस्मैदेवायहविषाविधेम ॥ यआत्मदाबलदायस्यविश्वउपासतेप्रशिषंयस्यदेवाः ॥ ९ ॥ येसहाꣳसिसहसासहंतेरेजंतेअग्नेपृथिवीमखेभ्यः ॥ विश्वेदेवाविश्वेदेवाः ॥ १० ॥ अपामतिंदुर्मतिंबाधमानाराय स्पोषेयज्ञपतिमाभजंतीसुवर्धेहियजमानायपोषमश्विनाध्वर्यूसादयतामिहत्वा ॥ अग्नेःपुरीषमसिदेवयानीतांत्वावि

श्वेंअभिगृणंतुदेवाः ॥ ११ ॥ मर्माणितेवर्मभिश्छादयामिसोमस्त्वाराजामृतेनाभिवस्तां ॥ उरोर्वरीयोवरिवस्तेअस्तुजयंतंत्वामनुमदंतुदेवाः ॥ १२ ॥ प्रजापतेस्तपसावावृधानःसद्योजातोदधिषेयज्ञमग्ने ॥ स्वाहाकृतेनहविषापुरोगायाहिसाध्याहविरदंतुदेवाः ॥ १३ ॥ तत्ग्रहाणांग्रहत्वं ॥ देवतावाएतायजमानस्यगृहेगृह्यंते ॥ यत्ग्रहाः ॥ विदुरेनंदेवाः ॥ १४ ॥ तदिष्टीनामिष्टित्वं ॥ एष्टयोहवैनाम ॥ ताइष्टयइत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥ १५ ॥ दशहूतोहवैनामैषः ॥ तंवाएतंदशहूतꣳसंतं ॥ दशहोतेत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥१६॥ सप्तहूतोहवैनामैषः ॥ तंवाएतꣳसप्तहूतꣳसंतं ॥ सप्तहोतेत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥ १७ ॥ षड्ढूतोहवैनामैषः ॥ तंवाएतꣳषड्ढूतꣳसंतं ॥ षड्ढोतेत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥ १८ ॥ पंचहूतोहवैनामैषः ॥ तंवाएतंपंचहूतꣳसंतं ॥ पंचहोतेत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥ १९ ॥ चतुर्हूतोहवैनामैषः ॥ तंवाएतंचतुर्हूतꣳसंतं ॥ चतुर्होतेत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥ २० ॥ आशिक्षंतोनशेकिम ॥ मेदस्वतायजमानाः ॥ स्रुचाज्येनजुह्वतः ॥ अकामावोविश्वेदेवाः ॥ २१ ॥ नहिस्पशमविदंनन्यमस्मात् ॥ वैश्वानरात्पुरएतारमग्नेः ॥ अथेममंथनमृतममूराः ॥ वैश्वानरंक्षेत्रजित्यायदेवाः ॥२२॥ उपतेगाइवाकरं ॥ वृणीष्वदुहितर्दिवः ॥ रात्रीस्तोमंनजिग्युषी ॥ देवींवाचमजनयंतदेवाः ॥२३॥ सहिवेदयथाहविः ॥ शिवाअस्मभ्यमोषधीः ॥ कृणोतुविश्वचर्षणिः ॥ भद्रांनःश्रेयःसमनैष्टदेवाः ॥ २४ ॥ अयंयज्ञोवर्धतांगोभिरश्वैः ॥ इयंवेदिःस्वपत्यासुवीरा ॥ इदंबर्हिरतिबर्हीꣳष्यन्या ॥ इमंयज्ञंविश्वेअवंतुदेवाः ॥ २५ ॥ देवंदेवायजागृवि ॥ कामिहैकाःकइमेपतंगाः ॥ मांथालाःकुलिप

रिंमापतंति ॥ अनांवृत्तैतान्प्रधमंतुदेवाः ॥२६॥ स्तोमैसप्तदशेस्तुतं ॥ वैरूपेणविशौजसा ॥ हविरिंद्रेवयोदधुः ॥ शारदेनर्तु
नादेवाः ॥ २७ ॥ एकविंशशक्रभवःस्तुतं ॥ वैराजेनःश्रियाश्रियं ॥ हविरिंद्रेवयोदधुः ॥ हेमंतेनर्तुनादेवाः ॥ २८ ॥ मरुत
स्त्रिणवेस्तुतं ॥ बलेनशक्करीःसहः ॥ हविरिंद्रेवयोदधुः ॥ शैशिरेनर्तुनादेवाः ॥ २९ ॥ आदित्यान्काममवसेहुवेम ॥ येभूता
निजनयंतोविचिख्युः ॥ सीदंतुपुत्राअदितेरुपस्थं ॥ स्तीर्णबर्हिर्हविरद्यायदेवाः ॥ ३० ॥ आवृत्रहणागीर्भिर्विप्रः ॥ ब्रह्मणस्प
तेत्वमस्ययंता ॥ सूक्तस्यबोधितनयंचजिन्व ॥ विश्वंतद्भद्रंयदवंतिदेवाः ॥ ३१ ॥ नराशंसोग्नास्पतिर्नोअव्यात् ॥ आयेवा
मस्यसंगथेरयीणां ॥ प्रियादेवस्यसवितुःस्याम ॥ आनोविश्वेअस्क्रागमंतुदेवाः ॥ ३२ ॥ शमभिषाचःशमुरातिषाचः ॥ शंनो
दिव्याःपार्थिवाःशंनोअप्याः ॥ येसवितुःसत्यसवस्यविश्वे ॥ मित्रस्यव्रतेवरुणस्यदेवाः ॥ ३३ ॥ याश्चवैशंतीरुतप्रासचीर्याः ॥
यासामषाढामधुभक्षयंति ॥ तानआपःशंस्योनाभवंतु ॥ तन्नोविश्वेउपशृण्वंतुदेवाः ॥३४॥ तौदेवेभ्यःकृणुतोदीर्घमायुः ॥
शतंसहस्राभेषजानिधत्तः ॥ यज्ञंनोराजावरुणउपयातु ॥ तन्नोविश्वेअभिसंयंतुदेवाः ॥ ३५ ॥ श्रेष्ठौदेवानामुतमानुषाणां ॥
तंब्राह्मणाःसोमपाःसोम्यासः ॥ प्रोष्ठपदासोअभिरक्षंतिसर्वे ॥ चत्वारएकमभिकर्मदेवाः ॥ ३६ ॥ लोकस्यराजामहतोमहान्हि ॥
सुगंनःपंथामभयंकृणोतु ॥ यस्मिन्नक्षत्रेयमएतिराजा ॥ यस्मिन्नेनमभ्यषिंचंतदेवाः ॥ ३७ ॥ यथादेवतमेवप्रसौति ॥ वैव्यस्य
चमानुषस्यचव्यावृत्त्यै ॥ त्रिराह ॥ त्रिषत्याहिदेवाः ॥ ३८ ॥ यएवदेवानांहविष्कृतः ॥ तान्ह्वयति ॥ त्रिर्ह्वयति ॥ त्रिष
त्याहिदेवाः ॥३९॥ ततब्रह्महणंनात्यच्यवत ॥ अंतर्वेदिनिनयत्यवरुध्यै ॥ उल्मुकेनाभिगृह्णातिशृतत्वाय ॥ शृतकामाइवहिदेवाः

॥४०॥ तेषांतद्भागधेयं ॥ तानेवतेनंप्रीणाति ॥ वैश्वदेव्यर्चा ॥ एतेहिविश्वैदेवाः ॥ ४१ ॥ सद्योजातोव्यमिमीतयज्ञं ॥ अग्नि
र्देवानामभवत्पुरोगाः॥ अस्यहोतुःप्रदिश्यृतस्यवाचि ॥ स्वाहाकृतꣳहविरंदंतुदेवाः ॥४२॥ आत्मन्वान्त्सोमघृतवान्हिभूत्वा ॥
देवान्गच्छसुर्वविदयजमानायमह्यं ॥ इराभूतिःपृथिव्यैरसोमोत्क्रमीत् ॥ देवाःपितरःपितरोदेवाः ॥ ४३ ॥ यज्ञियायज्ञंविचयं
तिशंच ॥ ओषधीरापइहशक्करीश्च ॥ योमाहृदामनसायश्चवाचा ॥ योब्रह्मणाकर्मणाद्वेष्टिदेवाः ॥ ४४ ॥ विच्छिनद्मिविधृती
भ्याꣳसपत्नान् ॥ जातान्भ्रातृव्यान्येचजनिष्यमाणाः ॥ विशोयंत्राभ्यांविधमाम्येनान् ॥ अहꣳस्वानामुत्तमोसानिदेवाः
॥ ४५ ॥ उषाश्चतस्मैनिम्रुक्क ॥ सर्वंपापꣳसमूहतां ॥ योनःसपत्नोयोरणः ॥ मर्तोभिदासतिदेवाः ॥ ४६ ॥ अन्नैविराट् ॥
विराजैवान्नाद्यमवरुंधे ॥ त्रेधाविभज्यदेवतांजुहोति ॥ त्र्यावृतोवैदेवाः ॥४७॥ अस्मिन्नेवतल्लोकेकामान्दधाति ॥ तस्मादस्मि
न्लोकेबहवःकामाः ॥ त्रयाणांत्रयाणाꣳसहवपाजुहोति ॥ त्र्यावृतोवैदेवाः ॥४८॥ राजामहिमा ॥ यद्रूपांमहिम्नोभयतःपरि
यजंति ॥ यजमानमेवराज्येनोभयतःपरिगृह्णाति ॥ पुरस्तात्स्वाहाकारावाअन्येदेवाः ॥ ४९ ॥ एतद्वैतदेवाएतांदेवतां ॥ पशुं
भूतंमेधायालभंत ॥ यज्ञमेव ॥ यज्ञेनयज्ञमयजंतदेवाः ॥ ५० ॥ तेनमेतप ॥ तेनमेज्वल ॥ तेनमेदीदिहि ॥ यावद्देवाः
॥ ५१ ॥ वासोददाति ॥ तेनायुःप्रतिरते ॥ वेदितृतीयेयजेत ॥ त्रिषत्याहिदेवाः ॥५२॥ कृशानुर्विश्वावसुः ॥ मूर्धन्वान्त्सू
र्यवर्चाः॥ कृतिरित्येकादशगंधर्वगणाः ॥ देवाश्चमहादेवाः ॥ ५३ ॥ एवाहिवायो ॥ एवाहींद्र ॥ एवाहिपूषन् ॥ एवाहिदेवाः
॥ ५४ ॥ भुवनंदेवसूवरीः ॥ आदित्यानदितिंदेवीं ॥ योनिनोर्ध्वमुदीषत ॥ भद्रंकर्णेभिःशृणुयामदेवाः ॥ ५५ ॥ उषाश्चत

सैनिमुक्कसर्वैपापश्समूहतां ॥ योनःसपत्नोयोरणः । मर्तोभिदासतिदेवाः ॥ ५६ ॥ ऋतस्यपदेकवयोनिपांति ॥ अंतःप्रविष्टंकर्तारमेतं॥ अंतश्चंद्रमसिमनसाचरंतं॥ सहैवसंतंनविजानंतिदेवाः ॥ ५७ ॥ शुक्रःप्रविद्वान्प्रदिशश्चतस्रः ॥ तमेवंविद्वानमृतइहभवति ॥ नान्यःपंथाअयनायविद्यते ॥ यज्ञेनयज्ञमयजंतदेवाः ॥५८॥ ॐ राजाधिराजायंप्रसह्यसाहिने ॥ नमोवयंवैश्रवणायंकुर्महे ॥ समेकामान्कामकामायमह्यं ॥ कामेश्वरोवैश्रवणोददातु ॥ कुबेरायवैश्रवणायं ॥ महाराजायनमः ॥ ॐ स्वस्ति ॥ साम्राज्यंभौज्यंस्वाराज्यंवैराज्यंपारमेष्ठ्यंराज्यंमाहाराज्यमाधिपत्यमयंसमंतपर्यायीस्यात्सार्वभौमःसार्वायुषआंतादापरार्धात् पृथिव्यैसमुद्रपर्यंतायाएकराळिति ॥ तदप्येषश्लोकोभिगीतोमरुतःपरिवेष्टारोमरुत्तस्यावसन्गृहे ॥ आविक्षितस्यकामप्रेर्विश्वेदेवाःसभासदइति ॥ विश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोहस्तउतविश्वतस्पात् ॥ संबाहुभ्यांनमतिसंपतत्रैर्द्यावापृथिवीजनयन्देवएकः ॥ योवैतांब्रह्मणोवेद ॥ अमृतेनावृतांपुरीं ॥ तस्मैब्रह्मचब्रह्माच ॥ आयुःकीर्तिंप्रजांददुः ॥ इतिदेवेमंत्राःसमाप्ताः ॥

## ॥ ४६ ॥ गायत्र्यःपुष्पमंत्राश्च ॥

अथगायत्री ॥ पुरुषस्यविद्महेसहस्राक्षस्यमहादेवस्यधीमहि ॥ तन्नोरुद्रःप्रचोदयात् ॥ १ ॥ तत्पुरुषायविद्महेमहादेवायधीमहि ॥ तन्नोरुद्रःप्रचोदयात् ॥ २ ॥ तत्पुरुषायविद्महेवक्रतुंडायधीमहि ॥ तन्नोदंतिःप्रचोदयात् ॥ ३ ॥ तत्पुरुषायविद्महेचक्रतुंडायधीमहि ॥ तन्नोनंदिःप्रचोदयात् ॥ ४ ॥ तत्पुरुषायविद्महेमहासेनायधीमहि ॥ तन्नःषण्मुखःप्रचोदयात् ॥ ५ ॥ तत्पुरुषायविद्महेसुवर्णपक्षायधीमहि ॥ तन्नोगरुडःप्रचोदयात् ॥ ६ ॥ वेदात्मनायविद्महेहिरण्यगर्भायधीमहि ॥ तन्नोब्रह्मप्रचोदयात्

॥ ७ ॥ नारायणाय विद्महे वासुदेवाय धीमहि ॥ तन्नो विष्णुः प्रचोदयात् ॥८॥ वज्रनखाय विद्महे तीक्ष्णदंष्ट्राय धीमहि ॥ तन्नो नारसिंहः प्रचोदयात् ॥ ९ ॥ भास्कराय विद्महे महद्युतिकराय धीमहि ॥ तन्नो आदित्यः प्रचोदयात् ॥ १० ॥ वैश्वानराय विद्महे लालीलाय धीमहि ॥ तन्नो अग्निः प्रचोदयात् ॥११॥ कात्यायनाय विद्महे कन्यकुमारि धीमहि ॥ तन्नो दुर्गिः प्रचोदयात् ॥ १२ ॥

अथ पुष्पमंत्राः ॥ योपांपुष्पंवेद । पुष्पवान्प्रजावान्पशुमान्भवति । चंद्रमावाअपांपुष्पं । पुष्पवान्प्रजावान्पशुमान्भवति । यएवंवेद । योपामायतनंवेद । आयतनवान्भवति । अग्निर्वाअपामायतनं । आयतनवान्भवति । योऽग्नेरायतनंवेद ॥ १ ॥ आयतनवान्भवति । आपोवाअग्नेरायतनं । आयतनवान्भवति । यएवंवेद । योपामायतनंवेद । आयतनवान्भवति । वायुर्वाअपामायतनं । आयतनवान्भवति । योवायोरायतनंवेद । आयतनवान्भवति ॥ २ ॥ आपोवैवायोरायतनं । आयतनवान्भवति । यएवंवेद । योऽपामायतनंवेद । आयतनवान्भवति । असौवैतपन्नपामायतनं । आयतनवान्भवति । योमुष्यतपत आयतनंवेद । आयतनवान्भवति । आपोवाअमुष्यतपतआयतनं ॥३॥ आयतनवान्भवति । यएवंवेद । योपामायतनंवेद । आयतनवान्भवति । चंद्रमावाअपामायतनं । आयतनवान्भवति । यश्चंद्रमसआयतनंवेद । आयतनवान्भवति । आपोवैचंद्रमसआयतनं । आयतनवान्भवति ॥ ४ ॥ यएवंवेद । योपामायतनंवेद । आयतनवान्भवति । नक्षत्राणिवाअपामायतनं । आयतनवान्भवति । योनक्षत्राणामायतनंवेद । आयतनवान्भवति । आपोवैनक्षत्राणामायतनं । आयतनवान्भवति । यएवंवेद ॥५॥ योपामायतनंवेद । आयतनवान्भवति । पर्जन्योवाअपामायतनं । आयतनवान्भवति । यःपर्जन्यस्यायतनंवेद ।

आयतंनवान्भवति । आपोवैपर्जन्यस्यायतंनं । आयतंनवान्भवति । यएवंवेद । योंपामायतंनंवेद ॥ ६ ॥ आयतंनवान्भवति । संवत्सरोवाअपामायतंनं । आयतंनवान्भवति । यःसंवत्सरस्यायतंनंवेद । आयतंनवान्भवति । आपोवैसंवत्सरस्यायतंनं । आयतंनवान्भवति । यएवंवेद । योंप्सुनावंप्रतिष्ठितांवेद । प्रत्येवतिष्ठति ॥ ७ ॥ इतिमंत्रपुष्पमंत्राः ॥ ॥ ७ ॥

## ॥ ४७ ॥ मध्याह्नसंध्याप्रारंभः ॥

श्रीगणेशायनमः ॥ ॐ केशवायनमः ॥ नारायणायनमः ॥ माधवायनमः ॥ गोविंदायनमः ॥ विष्णवेनमः ॥ मधुसूदनायनमः ॥ त्रिविक्रमायनमः ॥ वामनायनमः ॥ श्रीधरायनमः ॥ हृषीकेशायनमः ॥ पद्मनाभायनमः ॥ दामोदरायनमः ॥ संकर्षणायनमः ॥ वासुदेवायनमः ॥ प्रद्युम्नायनमः ॥ अनिरुद्धायनमः ॥ पुरुषोत्तमायनमः ॥ अधोक्षजायनमः ॥ नारसिंहायनमः ॥ अच्युतायनमः ॥ जनार्दनायनमः ॥ उपेंद्रायनमः ॥ हरयेनमः ॥ श्रीकृष्णायनमः ॥ ॐ भूः ॥ ॐ भुवः ॥ ओ३ंसुवः ॥ ॐ महः ॥ ॐ जनः ॥ ॐ तपः ॥ ओ३ंसत्यं ॥ ॐ तत्संवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ओमापोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम् ॥ मध्याह्नसंध्यायुवानाश्वेतवर्णाश्वेतवस्त्राश्वेतगंधानुलेपनावृषभवाहनारुद्रदैवत्यादक्षिणाग्न्युपस्थानायजुर्वेदसंहिताद्वितीयारुद्रसंध्याधर्मवतीनाम्नीइतिध्यात्वा ममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंमध्याह्नसंध्यामुपासिष्ये ॥ आयांतुवरंदादेवीअक्षरंब्रह्मसंमितं ॥ गायत्रींछंदसांमातेदंब्रह्मजुषस्वमे ॥ यदह्नात्कुरुतेपापंतदह्नात्प्रतिमुच्यते ॥ यद्रात्रियात्कुरुतेपापंतद्रात्रियात्प्रतिमुच्यते ॥ सर्ववर्णेमहादेविसंध्याविद्येसरस्वति ॥ अजरेअमरेदेविसर्वदेविनमो

१ मध्याह्नानप्रस्नायःप्रातर्वदेव अत्रमृद्ग्रहणंविशेषः । दिनतृतीयभागेयजनयाजनाध्ययनाध्यापनदानसत्प्रतिग्रहादिनायोगक्षेमार्थंद्रव्यार्जनं ॥

स्तुते॥ओजोसिसहोसिबलमसिभ्राजोसिदेवानांधामनामासिविश्वमसिविश्वायुःसर्वमसिसर्वायुरभिभूरोम् गायत्रीमावाहयामि सावित्रीमावाहयामिसरस्वतीमावाहयामिछंदर्षीनावाहयामिश्रियमावाहयामिह्रियमावाहयामिइत्यावाह्यकुशैरात्मानंमार्जयति॥ ॐआपोहिष्ठामयोभुवस्तानऊर्जेदधातन॥महेरणायचक्षसे॥योवःशिवतमोरसस्तस्यभाजयतेहनः॥उशतीरिवमातरः ॥तस्मा अरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ ततअपोभिमंत्रयति॥ ॐआपोवाइदंसर्वंविश्वाभूतान्यापःप्राणावा आपःपशवआपोन्नमापोमृतमापःसंम्राडापोविराडापःस्वराडापश्छंदांस्यापोज्योतींष्यापोयजूंष्यापःसत्यमापःसर्वादेवता आपोभूर्भुवःसुवरापओम्॥ ततःप्राश्नाति ॥ आपःपुनंतुपृथिवींपृथिवीपूतापुनातुमां ॥ पुनंतुब्रह्मणस्पतिर्ब्रह्मपूतापुनातुमां ॥ यदुच्छिष्टमभोज्यंयद्वादुश्चरितंमम ॥ सर्वंपुनंतुमामापोसतांचप्रतिग्रहंस्वाहा॥ केशवायनमः ॥ नारायणायनमः ॥ माधवाय नमः॥ गोविंदायनमः ॥ ॐदधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः॥सुरभिनोमुखाकरत्प्रणआयूंषितारिषत् ॥ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः॥ हिरण्यवर्णाःशुचयःपावकायासुजातःकश्यपोयास्विंद्रः॥ अग्निंयागर्भंदधिरे विरूपास्तानआपःशंस्योनाभवंतु ॥ यासांराजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानां ॥ मधुश्चुतःशुचयोयाःपावकास्ता नआपःशंस्योनाभवंतु ॥ यासांदेवादिविकृण्वंतिभक्षंयाअंतरिक्षेबहुधाभवंति ॥ याःपृथिवींपयसोंदंतिशुक्रास्तानआपःशंस्योनाभवंतु ॥ शिवेनमाचक्षुषापश्यतापःशिवयातनुवोपस्पृशतत्वचंमे ॥ सर्वांअग्नींरप्सुषदोहुवेवोमयिवर्चोबलमोजोनिधत्त ॥

पवमानः सुवर्जनः ॥ पवित्रेण विचर्षणिः ॥ यः पोता स पुनातु मा ॥ पुनंतु मा देवजनाः ॥ पुनंतु मनवो धिया ॥ पुनंतु विश्व आयवः ॥
जातवेदः पवित्रवत् ॥ पवित्रेण पुनाहि मा ॥ शुक्रेण देव दीद्यत् ॥ अग्ने क्रत्वा क्रतूँ रनु ॥ यत्ते पवित्रमर्चिषि ॥ अग्ने विततमंतरा ॥
ब्रह्म तेन पुनीमहे ॥ उभाभ्यां देव सवितः ॥ पवित्रेण सवेन च ॥ इदं ब्रह्म पुनीमहे ॥ वैश्वदेवी पुनती देव्यागात् ॥ यस्यै बह्वीस्तनु
वो वीतपृष्ठाः ॥ तया मदंतः सधमाद्येषु ॥ वयँ स्याम पतयो रयीणां ॥ वैश्वानरो रश्मिभिर्मा पुनातु ॥ वातः प्राणेनेषिरो मयोभूः ॥
द्यावापृथिवी पयसा पयोभिः ॥ ऋतावरी यज्ञिये मा पुनीतां ॥ बृहद्भिः सवितस्तृभिः ॥ वर्षिष्ठैर्देव मन्मभिः ॥ अग्ने दक्षैः पुनाहि मा ॥
येन देवा अपुनत ॥ येनापो दिव्यं कशः ॥ तेन दिव्येन ब्रह्मणा ॥ इदं ब्रह्म पुनीमहे ॥ यः पावमानीरध्येति ॥ ऋषिभिः संभृतँ रसं ॥
सर्वँ स पूतमश्नाति ॥ स्वदितं मातरिश्वना ॥ पावमानीर्यो अध्येति ॥ ऋषिभिः संभृतँ रसं ॥ तस्मै सरस्वती दुहे ॥ क्षीरँ सर्पिर्म
धूदकं ॥ पावमानीः स्वस्त्ययनीः ॥ सुदुघा हि पयस्वतीः ॥ ऋषिभिः संभृतो रसः ॥ ब्राह्मणेष्वमृतँ हितं ॥ पावमानीर्दिशंतु नः ॥
इमं लोकमथो अमुं ॥ कामान्त्समर्धयंतु नः ॥ देवीर्देवैः समाभृताः ॥ पावमानीः स्वस्त्ययनीः ॥ सुदुघा हि घृतश्चुतः ॥ ऋषिभिः
संभृतो रसः ॥ ब्राह्मणेष्वमृतँ हितं ॥ येन देवाः पवित्रेण ॥ आत्मानं पुनते सदा ॥ तेन सहस्रधारेण ॥ पावमान्यः पुनंतु मा ॥
प्राजापत्यं पवित्रं ॥ शतोद्यामँ हिरण्मयं ॥ तेन ब्रह्मविदो वयं ॥ पूतं ब्रह्म पुनीमहे ॥ इंद्रः सुनीती सह मा पुनातु ॥ सोमः स्वस्त्या
वरुणः समीच्या ॥ यमो राजा प्रमृणाभिः पुनातु मा ॥ जातवेदा मोर्जयंत्या पुनातु ॥ द्रुपदादिवेन्मुमुचानः ॥ स्विन्नः स्नात्वी मला
दिव ॥ पूतं पवित्रेणेवाज्यं ॥ आपः शुंधंतु मैनसः ॥ ॐ भूर्भुवः सुवः ॥ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचो

दयात् ॥ श्रीसूर्यनारायणायइदमर्घ्यंदत्तंनमम ॥ इतित्रीनर्घ्यान्दत्वा ॥ ३ ॥ आत्मानंप्रदक्षिणीकुर्वन्असावादित्योब्रह्म ॥ आचम्य ॥ के० यनमः ॥ ना० यनमः ॥ मा० यनमः ॥ गो० यनमः ॥ विष्णवेनमः ॥ श्रीकृष्णायनमः ॥ ॐ भूः ॥ ॐ भुवः ॥ ओ३ंसुवः ॥ ॐमहः ॥ ॐजनः ॥ ॐतपः ॥ ओ३ंसत्यं ॥ ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ओमापोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरों ॥ ॐउद्वयंतमसस्परिपश्यंतोज्योतिरुत्तरं ॥ देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमं ॥ उदुत्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्यं ॥चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः॥आप्राद्यावापृथिवीअंतरिक्ष३ंसूर्यआत्माजगतस्तस्थुषश्च॥तच्चक्षुर्देवहितंपुरस्ताच्छुक्रमुच्चरत् ॥ पश्येमशरदःशतंजीवेमशरदःशतंनंदामशरदःशतंमोदामशरदःशतंभवामशरदःशत३ंशृणवामशरदःशतंप्रब्रवामशरदःशतमजीताःस्यामशरदःशतंज्योक्चसूर्यंदृशे॥ यउदगान्महतोर्णवाद्विभ्राजमानःसरिरस्यमध्यात्समावृषभोलोहिताक्षःसूर्योविपश्चिन्मनसापुनातु ॥ इत्युपस्थाय ततउपविश्यभूतशुद्धिंकरोति ॥ यथा॥ अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं ॥ सर्वेषामवरोधेनब्रह्मकर्मसमारभे॥ पृथ्वित्वयाधृतालोकादेवित्वंविष्णुनाधृता ॥ त्वंचधारयमांदेविपवित्रंकुरुचासनं ॥ अंगुष्ठाग्रेतुगोविंदंतर्जन्यांतुमहीधरं ॥ मध्यमायांहृषीकेशमनामिक्यांत्रिविक्रमं ॥ कनिष्ठिक्यांन्यसेद्विष्णुंकरमध्येचमाधवं ॥ एवंचकरविन्यासंसर्वपापप्रणाशनं ॥ भूःपादाभ्यांनमः ॥ भुवःजानुभ्यांनमः ॥ सुवःकटिभ्यांनमः ॥ महःनाभ्यैनमः ॥ जनःहृदयायनमः ॥ तपःकंठायनमः ॥ सत्यंललाटायनमः ॥ परब्रह्मशिरसेस्वाहा ॥ तत्सवितुर्ब्रह्मात्मनेहृदयायनमः ॥ वरेण्यंविष्ण्वात्मनेशिरसेस्वाहा ॥ भर्गोदेवस्यरुद्रात्मनेशिखायैवषट् ॥ धीमहिपरमात्मने

कवचायहुं ॥ धियोयोनोज्ञानात्मनेनेत्रत्रयायवौषट् ॥ प्रचोदयात्सत्यात्मनेअस्त्रायफट् ॥ इतिदिग्बंधः ॥ गायत्र्यागायत्रीछं
दोविश्वामित्रऋषिःसवितादेवताग्निर्मुखंब्रह्माशिरोविष्णुर्हृदयंरुद्रःशिखापृथिवीयोनिःप्राणापानव्यानोदानसमानासप्राणाश्वे
तवर्णासांख्यायनसगोत्रागायत्रीचतुर्विंशत्यक्षरात्रिपदाषट्कुक्षिःपंचशीर्षोपनयनेविनियोगः ॐभूः ॥ ॐभुवः ॥ ओंसुवः ॥
ॐमहः ॥ ॐ जनः ॥ ॐतपः ॥ ओंसत्यं ॥ ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ओमापोज्यो
तीरसोमृतंब्रह्मभूर्भुवःसुवरोम् ॥ मध्याह्नसंध्यांगत्वेनअष्टोत्तरशतसंख्ययागायत्रीजपमहंकरिष्ये ॥ १०८ वा २८ ॥ सुमुखंसं
पुटंचैवविततंविस्तृतंतथा ॥ द्विमुखंत्रिमुखंचैवचतुःपंचमुखंतथा ॥ षण्मुखाधोमुखंचैवव्यापकांजलिकंतथा ॥ शकटंयमपाशं
चग्रंथितंचोल्मुकोल्मुकं ॥ प्रलंबंमुष्टिकंचैवमत्स्यंकूर्मंवराहकं ॥ सिंहाक्रांतंमहाक्रांतंमुद्गरंपल्लवंतथा ॥ मुक्ताविद्रुमहेमनील
धवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिंदुकलानिबद्धमुकुटांतत्त्वार्थवर्णात्मिकां ॥ गायत्रींवरदाभयांकुशकशांशुभ्रंकपालंगुणंशंखंच
क्रमथारविंदयुगुलंहस्तैर्वहंतींभजे ॥ महामालेमहामायेसर्वशक्तिस्वरूपिणि ॥ चतुर्वर्गस्त्वयिन्यस्तस्तस्मान्मेसिद्धिदाभव ॥
ॐभूर्भुवःसुवः॥तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात्॥इतिजपित्वा॥ तत्सवितुर्ब्रह्मात्मनेहृदयायनमः॥
वरेण्यंविष्ण्वात्मनेशिरसेस्वाहा ॥ भर्गोदेवस्यरुद्रात्मनेशिखायैवषट् ॥ धीमहिपरमात्मनेकवचायहुं ॥ धियोयोनोज्ञानात्मने
नेत्रत्रयायवौषट् ॥ प्रचोदयात्सत्यात्मनेअस्त्रायफट्इतिदिग्बंधः ॥ सुरभिर्ज्ञानशूर्पंचयोनिःकूर्मोथपंकजं ॥ लिंगंनिर्याणमुद्रा
श्चजपांतेष्टौप्रकीर्तिताः ॥ नमःप्राच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमोदक्षिणायैदिशेयाश्चदेवताएतस्यांप्र

तिवसंत्येताभ्यश्चनमोनमःप्रतीच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमउदीच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसं त्येताभ्यश्चनमोनमऊर्ध्वायैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमोधरायैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्य श्चनमोनमोवांतरायैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमोगंगायमुनयोर्मध्येयेवसंतितेमेप्रसन्नात्मानश्चिरंजीवितंव र्धयंतिनमोगंगायमुनयोर्मुनिभ्यश्चनमोनमोगंगायमुनयोर्मुनिभ्यश्चनमः ॥ अवांतरदिशाभ्योनमः ॥ सशंस्रवंतुदिशोमयि समागच्छंतुसूनृताः ॥ सर्वेकामाअभियंतुनःप्रियाअभिस्रवंतुनःप्रियाः ॥ अभिवादयेत्रिप्रवरान्वितामुकगोत्रोत्पन्नःयजुर्वेद स्यतैत्तिरीयशाखांतर्गहिरण्यकेशीशाखाध्यायीअमुकदेवशर्माहं भोगुरोअभिवादयामि ॥ नमोब्रह्मण्यदेवायगोब्राह्मणहिता यच ॥ जगद्धितायकृष्णायगोविंदायनमोनमोगोविंदायनमोनमः ॥ उत्तमेशिखरेजातेभूम्यांपर्वतमूर्धनि ॥ ब्राह्मणेभ्योभ्यनु ज्ञातागच्छदेवियथासुखं ॥ स्तुतोमयावरदावेदमाताप्रचोदयंतीपवनेद्विजाता ॥ आयुःपृथिव्यांद्रविणंब्रह्मवर्चसंमह्यंदत्वाप्रजातुं ब्रह्मलोकं ॥ घृणिःसूर्यआदित्योनप्रभावात्यक्षरं ॥ मधुक्षरंतितद्रसं ॥ सत्यंवैतद्रसमापोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम् ॥ ब्रह्मलोकायनमः ॥ विष्णुलोकायनमः ॥ रुद्रलोकायनमः ॥ संध्यायैनमः ॥ विद्यायैनमः ॥ सरस्वत्यैनमः ॥ वेदायनमः ॥ वेदपुरुषायनमः ॥ इष्टदेवताभ्यो० ॥ कुलदेवताभ्यो० ॥ स्थानदेवताभ्यो० ॥ वास्तुदेवताभ्यो० ॥ एतत्कर्मप्रधानदेवता भ्योनमः ॥ सर्वेभ्योदेवेभ्यो० ॥ सर्वेभ्योब्राह्मणेभ्योनमो० ॥ आकाशात्पतितंतोयंयथागच्छतिसागरं ॥ सर्वदेवनमस्कारः केशवंप्रतिगच्छति ॥ १ ॥ केशवायनमः ॥ नारायणायनमः ॥ माधवायनमः ॥ गोविंदायनमः ॥ विष्णवेनमः ॥ मधुसूद

नायनमः ॥ त्रिविक्रमायनमः ॥ वामनायनमः ॥ श्रीधरायनमः ॥ हृषीकेशायनमः ॥ पद्मनाभायनमः ॥ दामोदरायनमः ॥ संकर्षणायनमः ॥ वासुदेवायनमः ॥ प्रद्युम्नायनमः ॥ अनिरुद्धायनमः ॥ पुरुषोत्तमायनमः ॥ अधोक्षजायनमः ॥ नारसिंहायनमः ॥ अच्युतायनमः ॥ जनार्दनायनमः ॥ उपेंद्रायनमः ॥ हरयेनमः ॥ श्रीकृष्णायनमः ॥ ॐ भूः ॥ ॐ भुवः ॥ ओ३ँ सुवः ॥ ॐ महः ॥ ॐ जनः ॥ ॐ तपः ॥ ओ३ँसत्यं ॥ ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ओमापोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरों ॥ अनेनमध्याह्नसंध्योपासनाख्येनकर्मणाभगवान्श्रीपरमेश्वरःप्रीयतांनमम ॥ इति ॥

## ॥ ४८ ॥ ब्रह्मयज्ञः ॥

श्रीः ॥ अद्यपूर्वोच्चरितवर्तमानएवंगुणविशेषणविशिष्टायांशुभपुण्यतिथौममआत्मनःश्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंश्रीपरमेश्वरप्रीत्यर्थंब्रह्मयज्ञेनयक्ष्ये ॥ हस्तावविनिज्य ॥ त्रिराचामेत् ॥ द्विःपरिमृज्यसकृदुपस्पृश्य ॥ सव्यंपाणिंपादौप्रोक्षति ॥ शिरश्चक्षुषीनासिकेश्रोत्रेहृदयमालभ्यदक्षिणोत्तरौपाणीपादौकृत्वा ॥ ॐ भूर्भुवःसुवः ॥ तत्सवितुर्वरेण्यं ॥ भर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ १ ॥ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ २ ॥ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहिधियोयोनःप्रचोदयात् ॥ ३ ॥ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं ॥ होतारंरत्नधातमं ॥ १ ॥ इषेत्वोर्जेत्वावायवस्थोपायवस्थदेवोवःसविताप्रार्पयतुश्रेष्ठतमायकर्मणआप्यायध्वमघ्नियादेवभागमूर्जस्वतीःपयस्वतीःप्रजावतीरनमीवा अयक्ष्मामावस्तेनईशतमाघशंसोरुद्रस्यहेतिःपरिवोवृणक्तुध्रुवाअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि ॥ २ ॥ अग्न

आयाहिवीतयेगृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ ३ ॥ शंनोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥
॥ ४ ॥ शक्त्याध्ययनंकुर्यात् ॥ नमोब्रह्मणेनमोअस्त्वग्नयेनमःपृथिव्यैनमओषधीभ्यः ॥ नमोवाचेनमोवाचस्पतयेनमोविष्णवेबृ
हतेकरोमि ॥ इतित्रिवारंजप्त्वा ॥३॥ ॐशांतिःशांतिःशांतिः ॥ ब्रह्मयज्ञेनयक्ष्यमाणःप्राच्यांदिशिग्रामादच्छदिर्दर्शउदीच्यांप्रा
गुदीच्यांवोदितआदित्येदक्षिणतउपवीयोपविश्यहस्तावबनिज्यत्रिराचामेद्द्विःपरिमृज्यसकृदुपस्पृश्यशिरश्चक्षुषीनासिकेश्रोत्रेहृ
दयमालभ्ययत्रिराचामतितेनऋचःप्रीणातियद्द्विःपरिमृजंतितेनयजूंषियत्सकृदुपस्पृशतितेनसामानियत्सव्यंपाणिपादौप्रोक्ष
तियच्छिरश्चक्षुषीनासिकेश्रोत्रेहृदयमालभंतेतेनाथर्वांगिरसोब्राह्मणानीतिहासान्पुराणानिकल्पान्गाथानाराशंसीःप्रीणातिद
र्भाणांमहदुपस्तीर्योपस्थंकृत्वाप्राङासीनःस्वाध्यायमधीयीतापांवाएषओषधीनांरसोयद्दर्भाःसरसमेवब्रह्मकुरुतेदक्षिणोत्तरौपा
णीपादौकृत्वासपवित्रावोमितिप्रतिपद्यतएतद्वैयजुस्त्रयींविद्यांप्रत्येषावागेतत्परममक्षरंतदेतदृचाभ्युक्तमृचोअक्षरेपरमेव्योमन्य
स्मिन्देवाअधिविश्वेनिषेदुर्यस्तन्नवेदकिमृचाकरिष्यतियइत्तद्विदुस्तइमेसमासतइतित्रीनेवप्रायुंक्तभूर्भुवःस्वरित्याहैतद्वैवाचःसत्यं
यदेववाचःसत्यंतत्प्रायुंक्ताथसावित्रींगायत्रींत्रिरन्वाहपच्छोर्धर्चशोनवानंसवितान्श्रियःप्रसवितान्श्रियमेवाप्नोत्यथोप्रज्ञातयैव
प्रतिपदाछंदांसिप्रतिपद्यते ॥ ११ ॥ अनेनब्रह्मयज्ञाख्येनकर्मणाश्रीभगवान्परमेश्वरःप्रीयतांनमम ॥ तत्सद्ब्रह्मार्पणमस्तु ॥
अथदेवर्षिपितृतर्पणं ॥ ब्रह्माणंतर्पयामि ॥ प्रजापतिंतर्पयामि ॥ बृहस्पतिंतर्पयामि ॥ अग्निंतर्पयामि ॥ वायुंतर्पयामि ॥
सूर्यंतर्पयामि ॥ चंद्रमसंतर्पयामि ॥ नक्षत्राणितर्पयामि ॥ इंद्रंराजानंतर्पयामि ॥ यमंराजानंतर्पयामि ॥ वरुणंराजानंत

र्पयामि ॥ सोमꣳराजानंतर्पयामि ॥ वैश्रवणꣳराजानंतर्पयामि ॥ वसूंस्तर्पयामि ॥ रुद्रांस्तर्पयामि ॥ आदित्यांस्तर्पयामि ॥ विश्वान्देवांस्तर्पयामि ॥ साध्यांस्तर्पयामि ॥ ऋभूंस्तर्पयामि ॥ भृगूंस्तर्पयामि ॥ मरुतस्तर्पयामि ॥ अथर्वणस्तर्पयामि ॥ अंगिरसस्तर्पयामि ॥ ॥ अथनिवीती ॥ विश्वामित्रंतर्पयामि ॥ जमदग्निंतर्पयामि ॥ भरद्वाजंतर्पयामि ॥ गौतमंतर्पयामि ॥ अत्रिंतर्पयामि ॥ वसिष्ठंतर्पयामि ॥ कश्यपंतर्पयामि ॥ अरुंधतींतर्पयामि ॥ अगस्त्यंतर्पयामि ॥ कृष्णद्वैपायनंतर्पयामि ॥ जातूकर्ण्यंतर्पयामि ॥ तरुक्षंतर्पयामि ॥ तृणबिंदुंतर्पयामि ॥ वर्मिणंतर्पयामि ॥ वरूथिनंतर्पयामि ॥ वाजिनंतर्पयामि ॥ वाजश्रवसंतर्पयामि ॥ सत्यश्रवसंतर्पयामि ॥ सुश्रवसंतर्पयामि ॥ सुतश्रवसंतर्पयामि ॥ सोमशुष्मायणंतर्पयामि ॥ सत्ववतंतर्पयामि ॥ बृहदुक्थंतर्पयामि ॥ वामदेवंतर्पयामि ॥ वाजिरत्नंतर्पयामि ॥ हर्यज्वानंतर्पयामि ॥ उदमयंतर्पयामि ॥ गोतमंतर्पयामि ॥ ऋणंजयंतर्पयामि ॥ ऋतंजयंतर्पयामि ॥ कृतंजयंतर्पयामि ॥ धनंजयंतर्पयामि ॥ बभ्रुंतर्पयामि ॥ त्र्यरुणंतर्पयामि ॥ त्रिवर्षंतर्पयामि ॥ त्रिधातुंतर्पयामि ॥ शिबिंतर्पयामि ॥ पराशरंतर्पयामि ॥ विष्णुंतर्पयामि ॥ रुद्रंतर्पयामि ॥ स्कंदंतर्पयामि ॥ काशीश्वरंतर्पयामि ॥ ज्वरंतर्पयामि ॥ धर्मंतर्पयामि ॥ अर्थंतर्पयामि ॥ कामंतर्पयामि ॥ क्रोधंतर्पयामि ॥ वसिष्ठंतर्पयामि ॥ इंद्रंतर्पयामि ॥ त्वष्टारंतर्पयामि ॥ कर्तारंतर्पयामि ॥ धर्तारंतर्पयामि ॥ धातारंतर्पयामि ॥ मृत्युंतर्पयामि ॥ सवितारंतर्पयामि ॥ सावित्रींतर्पयामि ॥ ऋग्वेदंतर्पयामि ॥ यजुर्वेदंतर्पयामि ॥ सामवेदंतर्पयामि ॥ अथर्ववेदंतर्पयामि ॥ इतिहासपुराणांस्तर्पयामि ॥ ॥ प्राचीनावीती ॥ वैशंपायनंतर्पयामि ॥ पलिंगुंतर्पयामि ॥ तित्तिरंतर्पयामि ॥ उखंतर्पयामि ॥

आत्रेयंपदकारंतर्पयामि ॥ कौंडिण्यंवृत्तिकारंतर्पयामि ॥ सूत्रकारंतर्पयामि ॥ सत्याषाढंतर्पयामि ॥ प्रवचनकर्तृंस्तर्पयामि ॥ आचार्यांस्तर्पयामि ॥ ऋषींस्तर्पयामि ॥ वानप्रस्थांस्तर्पयामि ॥ ऊर्ध्वरेतसस्तर्पयामि ॥ एकपत्नींस्तर्पयामि ॥ १४ ॥ यथाधिकारंपितॄन् ॥ आब्रह्मस्तंबपर्यंतंदेवर्षिपितृमानवाः ॥ तृप्यंतुपितरःसर्वेमातृमातामहादयः ॥ अतीतकुलकोटीनांसप्तद्वीपनिवासिनां ॥ आब्रह्मभुवनाल्लोकादिदमस्तुतिलोदकं ॥ येकेचास्मत्कुलेजाताअपुत्रागोत्रिणोमृताः ॥ तेगृह्णंतुमयादत्तंसूत्रनिष्पीडनोदकं ॥ अनेनतर्पणाख्येनकर्मणाभगवान्परमेश्वरःप्रीयतांनमम ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ४९ ॥ वैश्वदेवः ॥

श्रीः ॥ केशवादिचतुर्विंशतिनामभिःआचम्य प्राणायामंकृत्वा ॥ अद्यपूर्वोच्चरितवर्तमानएवंगुणविशेषणविशिष्टायांशुभपुण्यतिथौममआत्मनःश्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं पंचसूनादोषपरिहारार्थंआत्मसंस्कारार्थंअन्नसंस्कारार्थंसिद्धान्नेनप्रातःसायंवैश्वदेवौतंत्रेणकरिष्ये ॥ रुक्मकनामानमग्निंप्रतिष्ठापयामि ॥ वेणुधमन्याग्निंप्रज्वाल्य ॥ चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँ२ँआविवेश ॥ सप्तहस्तश्चतुःशृंगःसप्तजिह्वोद्विशीर्षकः ॥ त्रिपात्प्रसन्नवदनःसुखासीनःशुचिस्मितः ॥ स्वाहांतुदक्षिणेपार्श्वेदेवींवामेस्वधांतथा ॥ बिभ्रद्दक्षिणहस्तैस्तुशक्तिमन्नंस्रुचंस्रुवं ॥ तोमरंव्यजनंवामैर्घृतपात्रंचधारयन् ॥मेषारूढोजटाबद्धोगौरवर्णोमहौजसः॥धूम्रध्वजोलोहिताक्षःसप्तार्चिःसर्वकामदः ॥ आत्माभिमुखमासीनएवंरूपोहुताशनः॥अग्नेवैश्वानरशांडिल्यगोत्रमेषध्वजप्राङ्मुखममसंमुखोवरदोभव ॥ यथाहुतद्वसवोगौर्यंचित्पदिषितामसुंचतायजत्राः॥ एवात्वमस्मत्प्रमुंचाव्यं२ँहुःप्रातार्यग्नेप्रतरांनआयुः ॥ परिस्तीर्य ॥ अदितेनुमन्यस्व ॥ अनुमतेनु

मन्यस्व ॥ सरस्वतेनुमन्यस्व ॥ देवसवितःप्रसुव ॥ यस्त्वाहृदाकीरिणामन्यमानोमर्त्यंमर्त्योजोहवीमि ॥ जातवेदोयशोअस्मा सुधेहिप्रजाभिरग्नेअमृतत्वमश्यां ॥ यस्मैत्वँसुकृतेजातवेदउलोकमग्नेकृणवःस्योनं ॥ अश्विनँसपुत्रिणंवीरवंतंगोमंतँरयिंनश तेस्वस्ति ॥ सिद्धमन्नमग्नावधिश्रित्य ॥ उदगुद्वास्य ॥ प्रोक्ष्य ॥ अग्नेःपश्चान्नीत्वा॥ अभिघार्य ॐ अग्नयेस्वाहा ॥ अग्नयइदंन मम ॥ विश्वेभ्योदेवेभ्यःस्वाहा॥ विश्वेभ्योदेवेभ्यइदंनमम ॥ ध्रुवायभूमायस्वाहा ॥ ध्रुवायभूमायेदंनमम ॥ध्रुवक्षितयेस्वाहा॥ ध्रुवक्षितयइदंनमम ॥अच्युतक्षितयेस्वाहा ॥ अच्युतक्षितयइदंनमम॥ अग्नयेस्विष्टकृतेस्वाहा॥ अग्नयेस्विष्टकृतइदंनमम ॥ ॐ भूस्वाहाअग्नयइदंनमम ॥ ॐ भुवःस्वाहावायवइदंनमम ॥ ॐसुवःस्वाहासूर्यायेदंनमम ॥ ॐ भूर्भुवःसुवःस्वाहाप्रजापतयइदं नमम ॥ यथाहुतद्वसवोगौर्यंचित्पदिषितामर्मुचतायजत्राः ॥ एवात्वमस्मत्प्रमुंचाव्यँहः प्रातार्यग्नेप्रतरांनआयुः ॥ परिस्तरणानि उत्तरेविसृज्य ॥ अदितेन्वमँस्थाः ॥ अनुमतेन्वमँस्थाः ॥ सरस्वतेन्वमँस्थाः ॥ देवसवितःप्रासावीः ॥ यज्ञनमस्तेयज्ञ ॥ नमोनमश्चतेयज्ञ ॥ शिवेनमेसंतिष्ठस्व ॥ स्योनेनमेसंतिष्ठस्व ॥ सुभूतेनमेसंतिष्ठस्व ॥ ब्रह्मवर्चसेनमेसंतिष्ठस्व ॥ यज्ञस्यर्धिमनु संतिष्ठस्व ॥ उपतेयज्ञनमः ॥ उपतेनमः ॥ उपतेनमः ॥ सर्वमंत्रेषुतिष्ठति ॥ मेधावि ॥ तेजस्वि ॥ वर्चस्वि ॥ ब्रह्मवर्चसि आयुष्मान्भूयासं ॥ स्वस्ति ॥ श्रद्धांमेधांयशःप्रज्ञांविद्यांबुद्धिंश्रियंबलं ॥ आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहन ॥ प्रमादात्कुर्वं तांकर्मप्रच्यवेताध्वरेषुयत् ॥ स्मरणादेवतद्विष्णोःसंपूर्णस्यादितिश्रुतिः ॥ ॥ बलिहरणेनयक्ष्ये । तत्रभूमिंप्रोक्ष्य ॥ धर्मायस्वाहा ॥ अधर्मायस्वाहा ॥ परिषिच्य ॥ अद्भ्यःस्वाहा ॥ परिषिच्य ॥ ओषधिवनस्पतिभ्यःस्वाहा ॥ रक्षोदेवजनेभ्यःस्वाहा ॥ परिषि

च्य ॥ गृह्याभ्यःस्वाहा ॥ अवसानेभ्यःस्वाहा ॥ अवसानपतिभ्यःस्वाहा ॥ सर्वभूतेभ्यःस्वाहा ॥ परिषिच्य ॥ कामायस्वाहा ॥
परिषिच्य ॥ अंतरिक्षायस्वाहा ॥ परिषिच्य ॥ यदेजतिजगतियच्चचेष्टतिनाम्नोभागोयन्नाम्नेस्वाहा ॥ परिषिच्य ॥ ॐ पृथिव्यै
स्वाहा ॥ अंतरिक्षायस्वाहा ॥ दिवेस्वाहा ॥ सूर्यायस्वाहा ॥ चंद्रमसेस्वाहा ॥ नक्षत्रेभ्यःस्वाहा ॥ इंद्रायस्वाहा ॥ बृहस्पत
येस्वाहा ॥ प्रजापतयेस्वाहा ॥ ब्रह्मणेस्वाहा ॥ परिषिच्य ॥ प्राचीनावीती ॥ स्वधापितृभ्यःस्वाहा ॥ परिषिच्य ॥ यज्ञोपवीती ॥
अपउपस्पृश्य ॥ नमोरुद्रायपशुपतयेस्वाहा ॥ परिषिच्य ॥ देवेभ्यःस्वाहा ॥ अग्नौआहुतिंहुत्वा ॥ अग्नौपरिषिच्य ॥ अपसव्यं ॥
पितृभ्यःस्वधास्तु ॥ परिषिच्य ॥ सव्यं ॥ भूतेभ्योनमः ॥ परिषिच्य ॥ मनुष्ययज्ञेनयक्ष्ये ॥ मनुष्येभ्योहंत ॥ परिषिच्य ॥
प्रजापतयेस्वाहा ॥ परिषिच्य ॥ परमेष्ठिनेस्वाहा ॥ परिषिच्य ॥ यथाकूपःशतधारःसहस्रधारोअक्षितः ॥ एवामेअस्तुधान्यं
सहस्रधारमक्षितं ॥ धनधान्यैस्वाहा ॥ परिषिच्य ॥ द्वावेकंद्वौचचत्वारिप्रत्येकंत्रितयंतथा ॥ पृथिव्यादिदशैतानिप्रत्येकंशेष
मेवच ॥ इतिपरिषेचनक्रमः ॥ अग्नयेनमः गंधाक्षतपुष्पंसमर्पयामि ॥ अनेनप्रातःसायंवैश्वदेवहोमाख्येनकर्मणाभगवान्परमे
श्वरःप्रीयतांनमम ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ येभूताःप्रचरंतिदिवानक्तंबलिमिच्छंतोवितुदस्यप्रेष्याः ॥ तेभ्योबलिंपुष्टिकामोहरा
मिमयिपुष्टिंपुष्टिपतिर्दधातुस्वाहा ॥ चांडालवायसेभ्यःभूतेभ्यइदंनमम ॥ हस्तौपादौप्रक्षाल्य ॥ आचम्य ॥ केश० श्रीकृष्णा०
ॐ भू० रोम् अनाज्ञातादिमंत्रत्रयंजपेत् ॥ शांतापृथिवीशिवमंतारिक्षंद्यौर्नोदेव्यभयंनोअस्तु ॥ शिवादिशःप्रदिशउद्दिशानो
आपोविद्युतःपरिपांतुसर्वतःशांतिःशांतिःशांतिः ॥ वैश्वदेवःसमाप्तः ॥ ॥ छ ॥ ॥ छ ॥

# अथ बलिहरणम्

२५ देवेभ्यः स्वा०[1]

| | | | | | | |
|---|---|---|---|---|---|---|
| ३१ यथाकू० | ९ सर्वभूते० | १२ यदेजति० | ५ रक्षोदेवज० | २२ ब्रह्मणे० | २७ भूतेभ्यो० | २६ पितृभ्य० |
| ३० परमे० | ८ अवसाने० | ११ अंतरिक्षा० | ४ ओषधिवन० | २१ प्रजाप० | २४ नमो० | २३ स्वधापि० |
| २९ प्रजाप० | ७ अवसाने० | १० कामाय० | ३ अद्भ्यः स्वा० | २० बृहस्प० | | |
| २८ मनुष्ये० | ६ गृह्याभ्य० | २ अधर्मा० | १ धर्मो० | १९ इंद्राय० | | |
| | | | | १८ नक्षत्रे० | | |
| | | | | १७ चंद्रम० | | |
| | | | | १६ सूर्याय० | | |
| | | | | १५ दिवे० | | |
| | | | | १४ अंतरि० | | |
| | | | | १३ पृथि० | | |

१ इयं २५ तमाहुतिः कुंडे प्रक्षेप्या.

## ॥ ५० ॥ गोविप्रपूजनविधिः ॥



श्रीः ॥ देशकालावुत्कीर्त्यश्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंश्रीरुद्ररूपिण्यागोःपूजनमहंकरिष्ये ॥ गवामंगेषुतिष्ठंतिभुवनानिचतुर्दश ॥ यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच॥श्रीरुद्ररूपिण्यैगवेनमइतिसर्वानुपचारान्दत्वा ओदननैवेद्यंसमर्पयामि ॥ गोग्रासमंत्रः॥आगावोअग्मन्नुतभद्रमंक्रन्॥ सीदंतुगोष्ठेरणयंत्वस्मे ॥प्रजावतीःपुरुरूपाइहस्युः ॥ इंद्रायपूर्वीरुषसोदुहानाः ॥ सौरभेय्यःसर्वहिताःपवित्राःपुण्यराशयः ॥ प्रतिगृह्णंत्विमंग्रासंगावस्त्रैलोक्यमातरः ॥ गवामंगेष्वितिमंत्रेणप्रदक्षिणामंत्रपुष्पंसमर्पयामि ॥ अनेनगोपूजनेनश्रीरुद्ररूपिणीगौःप्रीयतां ॥ ॥ अथब्राह्मणपूजा ॥ महाविष्णुस्वरूपिणेब्राह्मणायइदमासनंइदंपाद्यं ॥ चरणंपवित्रंविततंपुराणंयेनपूतस्तरतिदुष्कृतानि ॥ तेनपवित्रेणशुद्धेनपूताअतिपाप्मानमरातिंतरेम ॥ भूमिदेवाग्रजन्मासित्वंविप्रपुरुषोत्तम ॥ प्रत्यक्षोयज्ञपुरुषअर्घोयंप्रतिगृह्यतां ॥ इदमर्घ्यंस० अस्त्वर्घ्यः गंधाःपातु सौमंगल्यंचास्तु अक्षताःपांतु आयुष्यमस्तु पुष्पाणिपांतु सौश्रियमस्तु धूपंपातुदीपंपातुतांबूलंपातुदक्षिणाःपांतुऐश्वर्यमस्तु ॥ नमोस्त्वनंतायसहस्रमूर्तयेसहस्रपादाक्षिशिरोरुवाहवे ॥ सहस्रनाम्नेपुरुषायशाश्वतेसहस्रकोटीयुगधारिणेनमः ॥ सकलाराधनैःस्वर्चितमस्तु अस्तुसकलाराधनैःस्वर्चितं ॥ भोजनविधिः॥ ॥ गायत्र्यापात्राणिप्रोक्ष्य ॥ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरितावभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणां ॥ एकोविष्णुर्महद्भूतंपृथग्भूतान्यनेकशः ॥ त्रीन्लोकान्व्याप्यभूतात्माभुंक्तेविश्वभुगव्ययः ॥ अनेनब्राह्मणभोजनेनकर्मांगदेवतास्वरूपीपरमेश्वरःप्रीयतां ॥ यंतुनदयोवर्षंतुपर्जन्याः॥ सुपिप्पलाओषधयोभवंतु॥ अन्नवतामोदनवतामामिक्षवतां ॥ एषांराजाभूयासं ॥ ओदनमुद्ब्रुवते ॥ परमेष्ठीवाएषः ॥ यदोदनः ॥ परमामेवैनंश्रियंगमयति ॥

## ॥ ५१ ॥ परिवेषणविधिः ॥

सत्यंत्वर्तेनपरिंषिंचामीतिप्रातः ॥ ऋतंत्वासत्येनपरिंषिंचामीतिसायं ॥ ओंभूःस्वाहा ॥ ॐ भुवःस्वाहा॥ ॐ सुवःस्वाहा ॥ ॐ भूर्भुवःसुवःस्वाहा ॥ ॐ अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः ॥ प्रप्रदातारंतारिषऊर्जंनोधेहिद्विपदेचतुष्पदे ॥ अमृतोपस्तरणमसि ॥ ॐ प्राणायस्वाहा ॥ ॐ अपानायस्वाहा ॥ ॐ व्यानायस्वाहा ॥ ॐ उदानायस्वाहा ॥ ॐ समानायस्वाहा ॥ ॐ ब्रह्मणेस्वाहा ॥ अमृतापिधानमसि ॥ परिवेषणंसमाप्तम् ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ५२ ॥ भोजनविशेषविधिः ॥

श्रीः ॥ आयुष्कामःप्राङ्मुखःकीर्तिकामोदक्षिणामुखःश्रीकामोनिष्कामोपिप्रत्यङ्मुखः पित्र्यंविनानोदङ्मुखःकदाचन जीवत्पितृकोजीवदन्यतरोवानदक्षिणामुखःकदाचनेत्यभिसंधायोपविश्य भूर्भुवःसुवरोमितिआह्रियमाणमन्नमुपस्थायपरिविष्टंप्रणवव्याहृतिसहितयागायत्र्याभ्युक्ष्यतर्जन्यांरौप्यंधृतंचेन्निष्कास्यवामहस्तेनचतुरस्रमंडलेस्थापितंभोजनपात्रंधृत्वादक्षिणहस्तेनजलमादाय सत्यंत्वर्तेनपरिंषिंचामिइतिप्रातः ऋतंत्वासत्येनपरिंषिंचामिइतिसायंपरिषिच्यभोजनपात्रस्यदक्षिणतोदशांगुलपरिमितंपंचांगुलपरिमितंवास्थलंत्यक्त्वातत्रतूष्णीमभ्युक्ष्यान्नात्किंचिद्गृहीत्वा भूःस्वाहा (अग्नयइदं) पुनर्गृहीत्वा भुवःस्वाहा (वायवइदं) पुनःसुवःस्वाहा ( सूर्यायेदं ) पुनःभूर्भुवःसुवःस्वाहा ( प्रजापतयइदं ) इतिप्राक्संस्थमुदक्संस्थंवाभ्युक्षितदेशेबलीन्दद्यात् ॥ बलिषुनवात्यागः ॥ ततोवलीन्परिषिच्यहस्तंप्रक्षाल्य ॥ अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः ॥ प्रप्रदातारंतारिषऊर्जंनोधेहिद्विपदेचतुष्पदे॥ इत्यन्नमभिमंत्र्य गोकर्णाकृतिनाहस्तेनमाषपरिमितंजलमादाय ॐश्रद्धायांप्राणेनिविष्टोमृतंजुहोमि श्रद्धायाम

पाने० इत्यादि त्वामृतत्वायेत्यात्मानंपरमात्मनिसंयुक्तंभावयित्वा अमृतोपस्तरणमसि इतिपुरस्तादुदकंपिबति ॥ ततःपरिविष्टा दन्नाद्घृतप्लुतादेकामाहुतिंश्रद्धायांप्राणे० शिवोमाविं० प्राणायस्वाहा इतितर्जनीमध्यमांगुष्ठैर्मुखेजुहुयात् ॥ श्रद्धायामपाने० इतिमध्यमानामिकांगुष्ठैर्द्वितीयां ॥ श्रद्धायांव्या० इतिकनिष्ठिकानामिकांगुष्ठैस्तृतीयां ॥ श्रद्धायामुदा० इतितर्जनीरहिताभिः कनिष्ठिकातर्जन्यंगुष्ठैश्चतुर्थीं ॥ श्रद्धायांसमाने० इतिसर्वांगुलिभिःपंचमीं ॥ त्यागेविकल्पः ॥ अथवासर्वाआहुतयोमुक्तकनिष्ठि केनकरेणहोतव्याः ॥ अयंचहोमोन्नरसमविजानतादंतैःस्पर्शमकुर्वतामौनेनैवकर्तव्यः ॥ अतऊर्ध्वमनियमोमौनस्य ॥ जीवत्पितृक स्यप्राणाहुत्यूर्ध्वंमौनंनास्त्येव ॥ मौनलोपेविष्णुस्मरणं ॥ ततोभोजनपात्रमाधारोपरिसंस्थाप्यदत्तांश्चतुरोबलीन्केनचिन्निष्काश यित्वाअसंभवेतान्प्रच्छाद्यपादौभूमौनिधायवामहस्तांगुष्ठतर्जनीमध्यमाभिर्धृतभोजनपात्रःपंचार्द्रोविमुक्तशिखोभुंजीयात् ॥ भोजनोत्तरंततःसर्वंभुक्तोच्छिष्टमन्नमादाय ॥ रौरवादिनिमग्नानांदेहिनामन्नमिच्छतां ॥ तृप्तयेन्नमिदंदत्तमक्षय्यमुपतिष्ठतु ॥ इत्युच्छिष्टभाग्भ्योन्नंदत्वा ॥ रौरवेपूयनिलयेपद्मार्बुदनिवासिनां ॥ अर्थिनामुदकंदत्तमक्षय्यमुपतिष्ठतु ॥ इत्यन्नोपर्युदकंद द्यात् ततःअमृतापिधानमसि ॥ इत्युदकंपीत्वोत्तिष्ठेत् ॥ ॥ छ ॥ ॥ छ ॥

---

१ भोजनेनियमाः । गायत्र्यभ्युक्षितंकिंचिदन्नंपात्रेकस्मिंश्चित्प्रदेशेपृथङ्निधायभोजनांतेतद्भुंजीयात् । वामहस्तेनान्नंनस्पृशेत् । नपादौशिरोवस्तिंच स्पृशेत् । पदाभोजनपात्रंनस्पृशेत् । नोच्छिष्टआज्यंगृह्णीयाद्द्रवद्रव्याणिच । नप्रसृतांगुलिर्भुंजीयात्नफूत्कारसंयुतंनाजीर्णीनातिबुभुक्षितोबहुनार्द्रवासा नार्द्रशिरानदेवतायतनेनप्रसारितपादोनवेष्टितशिराःनसशब्दंनोत्संगकृतभाजनोनग्रासशेषंनबहूनांभुंजतांत्वरान्वितःनब्रह्मकीर्तयन्नभार्ययासहनभि न्नभाजनेनभूम्यांनपाणितलेनतैलयंत्रग्रावोलूखलपेषणयंत्रशब्देषुजायमानेषुभुंजीयात् । उद्धृतपीतावशेषमुदकंनैवपिबेत् उदकपात्रंदक्षिणभागएवस्था

# ॥ ५३ ॥ सायंसंध्या ॥

श्रीः ॥ ॐ केशवायनमः० श्रीकृष्णायनमः ॥ ॐ भूः ॥ ॐ भुवः ॥ ॐ स्सुवः ॥ ॐमहः ॥ ॐजनः ॥ ॐतपः ॥ ॐ स्सत्यं ॥
ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ॐमापोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम् ॥ सायंसंध्यावृद्धा
कृष्णाकृष्णवर्णाकृष्णवस्त्राकृष्ण माल्यानुलेपनागरुडवाहनाविष्णुदैवत्याआहवनीयाग्न्युपस्थानासामवेदसंहितातृतीयाविष्णु
संध्यासत्यवतीनाम्नीतिध्यात्वा ममउपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंसायंसंध्यामुपासिष्ये ॥ आयातुवरदादेवीअक्षरंब्रह्म

---

पयेत् । चंडालपतितरजस्वलावाक्यंश्रृण्वन्नैकमपिग्रासंभुंजीयात् । उदकपानकालेभोजनपात्रेमुखाद्यच्चुदकंपतेत्त्तदातदन्नंनभुंजीयात् । ब्रह्मचारीचेन्मा
षसमुद्रक्षारलवणादिवर्जमन्नंकांस्यव्यतिरिक्तेपात्रेभुंजीत । वटाश्वत्थार्कपत्रेषुसाम्रकदलीपत्रेपलाशमध्यमपत्रेकरेखर्परकेपाषाणेचसर्वेषांभोजनंनि
षिद्धं । उदकपानकालेदक्षिणहस्तेनपात्रंधारयन्नुद्धृतोदकपात्रंवामहस्तेनादायदक्षिणमणिबंधेतत्पात्रंसंस्पर्श्यवामहस्तेनैवपिबेत् ।एकपंक्त्युपविष्टानांमध्ये
यदिकश्चननास्तिक्यात्प्रमादाद्वाभुंजानेषुपूर्वमुत्तिष्ठेत्तदाशिष्टंभोजनपात्रस्थमन्नंपरित्यजेत्।संकटे अग्निनाभस्मनादर्भेणोदकेनद्वारव्यवधानेनवापंक्तिभे
दःकार्यः । भोजनपात्रेशिष्टंलवणंपात्रमस्पृशन्वामहस्तेनजलेनप्लावयेत् । ततोभोजनपात्रंनिष्काशयित्वाहस्तप्रक्षालनमकुर्वन्नेकवारंगंडूषमेवादौकृत्वा
हस्तौमुखंचयावल्लेपनिःसरणंतर्जनीरहितांगुलिभिःप्रक्षाल्य लोहितनिःसरणंविनायावद्दंतलग्नमुच्छिष्टंनिर्गच्छतितावन्निष्काश्यषोडशगंडूषान्कृत्वा
मुखंपादौचप्रक्षालयेत् । अथभोजनकालेचेदशुचिर्भवतिद्विजः । भूमौनिक्षिप्यतंग्रासंस्नात्वाविप्रोविशुद्ध्यति । संवर्तः । केशकीटावपन्नंचनीलीलाक्षो
पघातितं । स्नाय्वस्थिचर्मसंसृष्टंभुक्त्वातूपवसेदहः । हारीतः । विशुद्धमपिचाहारंमक्षिकाकृमिजंतुभिः । केशरोमनखैर्वापिदूषितंपरिवर्जयेत् ।
अपवादः । देवद्रोण्यांविवाहादौयज्ञेषुप्रकृतेषुच । काकैःश्वभिश्चसंस्पृष्टमन्नंतन्नविवर्जयेत् । अन्नंतन्मात्रमुद्धृत्यशेषंसंस्कारमर्हति । ब्रह्मपुराणे ।
भक्ष्यंत्वभक्ष्यवाक्येनयद्द्याद्रोषधर्मतः । गुरोरपिनभोक्तव्यंवाग्दुष्टंतन्महापदि ॥ वाग्दुष्टंभावदुष्टंचभाजनेभावदूषिते । भुक्त्वान्नंतुद्विजःपश्चात्त्रि
रात्रंतुव्रतीभवेत् । एतेषुनिषिद्धेष्वन्यतमदोषेषुसत्सुतत्तत्प्रायश्चित्तादिविस्तरोविस्तरभियानात्रालेखिसोन्यत्रद्रष्टव्यः ।

संमितं ॥ गायत्रींछंदसांमातेदंब्रह्मजुषस्वंमे ॥ यदह्नात्कुरुतेपापंतदह्नात्प्रतिमुच्यंते ॥ यद्रात्रियात्कुरुतेपापंतद्रात्रियात्प्रतिमुच्यंते ॥ सर्ववर्णेमहादेविसंध्याविद्येसरस्वति ॥ अजरेअमरेदेविसर्वदेविनमोस्तुते ॥ ओजोसिसहोसिवलमसिभ्राजोसिदेवानां धामनामासिविश्वंमसिविश्वायुःसर्वमसिसर्वायुरभिभूरोंगायत्रीमावाहयामिसावित्रीमावाहयामिसरस्वतीमावाहयामिछंदर्षीना वाहयामिश्रियमावाहयामिह्रियमावाहयामि ॥ ॐ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ आपोवाइदंसर्वंविश्वाभूतान्यापःप्राणावाआपःपशवआपोन्नमापोमृतमापःसम्राडापोविराडापःस्वराडापश्छंदांस्यापोज्योतींष्यापोयजूंष्यापःसत्यमापःसर्वादेवताआपोभूर्भुवःसुवरापओम् ॥ अग्निश्चमामन्युश्चमन्युपतश्चमन्युकृतेभ्यः ॥ पापेभ्योरक्षंतां ॥ यदह्नापापमकार्षं ॥ मनसावाचाहस्ताभ्यां ॥ पद्भ्यामुदरेणशिश्ना ॥ अहस्तदवलुंपतु ॥ यत्किंचदुरितंमयि ॥ इदमहंमाममृतयोनौ ॥ सत्येज्योतिषिजुहोमिस्वाहा ॥ इतिप्राश्याचम्य ॥ केशवायनमः ॥ नारायणायनमः ॥ माधवायनमः ॥ गोविंदायनमः ॥ दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणआयूंषितारिषत् ॥ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ हिरण्यवर्णाःशुचयःपावका० जातवेदामोर्जयंत्यापुनातु ॥ द्रुपदादिवेन्मुमुचानः ॥ स्विन्नःस्नात्वीमलादिव ॥ पूतंपवित्रेणेवाज्यं ॥ आपःशुंधंतुमैनसः ॥ ॥ प्रत्यङ्मुखः ॐ भूर्भुवःसुवः ॥ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ श्रीसवित्रेऽर्घ्यंदत्तंनमम ॥ इतित्रीनर्घ्यान्दत्वा ॥ प्रत्यङ्मुखएवगायत्रीजपंसमाप्यअसावादित्योब्रह्म ॥ केशवायनमः ॥

नारायणायनमः ॥ माधवायनमः ॥ गोविंदायनमः ॥ विष्णवेनमः ॥ मधुसूद० ॥ श्रीकृष्णायनमः ॥ ॐ भूः ॥ ॐ भुवः ॥
ओ॑ꣳसुवः ॥ ॐ महः ॥ ॐ जनः ॥ ॐ तपः ॥ ओ॑ꣳसत्यं ॥ ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनः प्रचोदयात् ॥
ओमापोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम् ॥ अपसर्पंतु० अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं ॥ सर्वेषामवरोधेनब्रह्मकर्मसमा
रभे ॥ पृथ्वीतिमंत्रस्य ॥ मेरुपृष्ठऋषिः ॥ कूर्मोदेवता ॥ सुतलंछंदः ॥ आसनेविनियोगः ॥ ॐ पृथ्वित्वयाधृतालोकादेवित्वंविष्णु
नाधृता ॥ त्वंचधारयमांदेविपवित्रंकुरुचासनं ॥ अंगुष्ठाग्रेतुगोविंदंतर्जन्यांतुमहीधरं ॥ मध्यमायांहृषीकेशमनामिक्यांत्रिविक्रमं ॥
कनिष्ठिक्यांन्यसेद्विष्णुंकरमध्येतुमाधवं ॥ एवंचकरविन्यासंसर्वपापप्रणाशनं ॥ भूःपादाभ्यांनमः ॥ भुवःजानुभ्यांनमः ॥
सुवःकटिभ्यांनमः ॥ महःनाभ्यैनमः ॥ जनःहृदयायनमः ॥ तपःकंठायनमः ॥ सत्यंललाटायनमः ॥ परब्रह्मशिरसेस्वाहा ॥
तत्सवितुर्ब्रह्मात्मनेहृदयायनमः ॥ वरेण्यंविष्णवात्मनेशिरसेस्वाहा ॥ भर्गोदेवस्यरुद्रात्मनेशिखायैवषट् ॥ धीमहिपरमात्मनेक
वचायहुं ॥ धियोयोनोज्ञानात्मनेनेत्रत्रयायवौषट् ॥ प्रचोदयात्सत्यात्मनेअस्त्रायफट् ॥ इतिदिग्बंधः ॥ गायत्रियागायत्रीछंदो
विश्वामित्रऋषिः सवितादेवताग्निर्मुखंब्रह्माशिरोविष्णुर्हृदयꣳरुद्रःशिखापृथिवीयोनिःप्राणापानव्यानोदानसमानासप्राणाश्वेत
वर्णासांख्यायनसगोत्रागायत्रीचतुर्विꣳशत्यक्षरात्रिपदाषट्कुक्षिःपंचशीर्षोपनयनेविनियोगः ॥ ॐ भूः ॥ ॐ भुवः ॥ ओ॑ꣳसुवः ॥
ॐ महः ॥ ॐ जनः ॥ ॐ तपः ॥ ओ॑ꣳसत्यं ॥ ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ओमापो
ज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम् ॥ सायंसंध्यांगत्वेनअष्टोत्तरशतसंख्ययाष्टाविंशतिवागायत्रीजपमहंकरिष्ये ॥ सुमुखंसंपुटंचैव०
मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिंदुकलानिबद्धमुकुटांतत्त्वार्थवर्णात्मिकां ॥ गायत्रींवरदाभयांकुशकशांशुभ्रं

कपालंगुणंशंखंचक्रमथारविंदयुगुलंहस्तैर्वहंतींभजे॥ महामालेमहामायेसर्वशक्तिस्वरूपिणि ॥ चतुर्वर्गस्त्वयिन्यस्तस्तस्मान्मेसिद्धिदाभव ॥ ॐ भूर्भुवःसुर्वः तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ इतिजपित्वा ॥ तत्सवितुर्ब्रह्मात्मनेहृदयायनमः ॥ वरेण्यंविष्ण्वात्मनेशिरसेस्वाहा ॥ भर्गोदेवस्यरुद्रात्मनेशिखायैवषट् ॥ धीमहिपरमात्मनेकवचायहुं ॥ धियोयोनोज्ञानात्मनेनेत्रत्रयायवौषट् ॥ ॥ प्रचोदयात्सत्यात्मनेअस्त्रायफट् ॥ इतिदिग्विमोकः ॥ सुरभिर्ध्यानशूर्पंचयोनिःकूर्मोथपंकजं ॥ लिंगंनिर्याणमुद्रांचजपांतेष्टौप्रकीर्तिताः॥ ॐ इमंमेवरुणश्रुधीहवमद्याचमृडय॥ त्वामवस्युराचके ॥ तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानआयुःप्रमोषीः ॥ त्वंनोअग्नेवरुणस्यविद्वान्देवस्यहेडोवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत् ॥ सत्वंनोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ ॥ अवयक्ष्वनोवरुणꣳरराणोवीहिमृडीकꣳसुहवोनएधि ॥ यच्चिद्धितेविशोयथाप्रदेवबरुणव्रतं ॥ मिनीमसिद्यविद्यवि ॥ यत्किंचेदंवरुणदैव्येजनेभिद्रोहंमनुष्याश्चरामसि ॥ अचित्तीयत्तवधर्मायुयोपिममानस्तस्मादेनसोदेवरीरिषः ॥ कितवासोयद्रिरिपुर्नदीवियद्वाघासत्यमुतयन्नविद्म॥ सर्वाताविष्यशिथिरेवदेवाथातेस्यामवरुणप्रियासः ॥ याꣳसदासर्वभूतानिस्थावराणिचराणिच ॥ सायंप्रातर्नमस्यंतिसामासंध्याभिरक्षतु ॥ नमःप्रतीच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमउदीच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमःप्राच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमोदक्षिणायैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमऊर्ध्वायैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमोधरायैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमोवांतरायैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमोगंगायमुनयोर्मध्येयेवसंतितेमे

प्रसन्नात्मानश्चिरंजीवितंवर्धयंतिनमोगंगायमुनयोर्मुनिभ्यश्चनमोनमोगंगायमुनयोर्मुनिभ्यश्चनमः ॥ अवांतरदिशाभ्योनमः ॥
सᳫंस्रवंतुदिशोमयिसमागच्छंतुसूनृताः॥सर्वेकामाअभियंतुनःप्रियाअभिस्रवंतुनःप्रियाः॥ॐप्रियाअभिवादयेत्रिप्रवरान्वितअ
मुकगोत्रोत्पन्नःयजुर्वेदस्यतैत्तिरीयशाखांतर्गतहिरण्यकेशीशाखाध्यायीअमुकदेवशर्माहं भोगुरोअभिवादयामि॥नमोब्रह्मण्यदे
वायगोब्राह्मणहितायच ॥ जगद्धितायकृष्णायगोविंदायनमोनमः ॥ उत्तमेशिखरेजातेभूम्यांपर्वतमूर्धनि॥ब्राह्मणेभ्योभ्यनुज्ञा
तागच्छदेवियथासुखं ॥ स्तुतोमयावरदावेदमाताप्रचोदयंतीपवनेद्विजाता ॥ आयुःपृथिव्यांद्रविणंब्रह्मवर्चसंमह्यंदत्वाप्रजातुं
ब्रह्मलोकं ॥ घृणिःसूर्यआदित्योनप्रभावात्यक्षरं ॥मधुक्षरंतितद्रसं ॥ सत्यंवैतद्रसमापोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरों ॥ ब्रह्म
लोकायनमः ॥ विष्णुलोकायनमः ॥ रुद्रलोकायनमः ॥ संध्यायैनमः ॥ विद्यायैनमः ॥ सरस्वत्यैनमः ॥ वेदायनमः ॥ वेद
पुरुषायनमः ॥ आकाशात्पतितंतोयंयथागच्छतिसागरं ॥ सर्वदेवनमस्कारःकेशवंप्रतिगच्छति ॥ केशवायनमःइत्याचम्यप्रा
णानायम्य ॥ अनेनसायंसंध्योपासनाख्येनकर्मणाभगवान्परमेश्वरःप्रीयतांनमम ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ ॐवषट्तेविष्णवा
स० ॥ सायंसंध्योत्तरंध्रुवोपस्थानंकरिष्ये ॥ भूःप्रपद्येभुवःप्रपद्येस्वःप्रपद्येभूर्भुवःस्वःप्रपद्येब्रह्मप्रपद्येब्रह्मकोशंप्रपद्येमृतंप्रपद्येमृत
कोशंप्रपद्येचतुर्जालंब्रह्मकोशंयंमृत्युर्नावपश्यतितंप्रपद्येदेवान्प्रपद्येदेवपुरंप्रपद्येपरीवृतोवरीवृतोब्रह्मणावर्मणाहंतेजसाकश्यपस्य
यस्मैनमस्तच्छिरोधर्मोमूर्धानंब्रह्मोत्तराहनुर्यज्ञोधराविष्णुर्हृदयᳫंसंवत्सरःप्रजननमश्विनौपूर्वपादावत्रिर्मध्यंमित्रावरुणावपरपा
दावग्निःपुच्छस्यप्रथमंकांडंततइंद्रस्ततःप्रजापतिरभयंचतुर्थᳫंसवाएषदिव्यःशाक्वरःशिंशुमारस्तᳫंहयएवंवेदापपुनर्मृत्युंजयतिज
यतिस्वर्गंलोकंनाध्वनिप्रमीयतेनाग्नौप्रमीयतेनाप्सुप्रमीयतेनानपत्यःप्रमीयतेलघ्वान्नोभवतिध्रुवस्त्वमसिध्रुवस्यक्षितमसित्वंभू

तानामधिपतिरसित्वंभूतानां श्रेष्ठोसित्वांभूतान्युपपर्यावर्तंतेनमस्तेनमःसर्वेतेनमोनमःशिशुकुमारायनमः ॥ १९ ॥ ॥ छ ॥



## ॥ ५४ ॥ उदकशांतिःसप्रयोगा ॥

श्रीः ॥ गोमयेनगोचर्ममात्रंचतुरस्रमुपलिप्यकर्ताशुचिःसुप्रक्षालितपाणिपादआचांतोदर्भेषूपविश्यदूर्वादर्भांश्चधारयमाणःप्राणा नायम्यतिलकादिकृत्वादेशकालौसंकीर्त्यअस्माकमित्यादिममशरीरेउत्पन्नस्योत्पत्स्यमानस्यचकफवातपित्तत्रिदोषान्यतमप्रको पोद्भूतज्वरादिविविधव्याधेःजीवच्छरीराविरोधेनसमूलनिवृत्त्याक्षिप्रारोग्यावाप्त्यर्थंग्रहभूतप्रेतपिशाचक्षुद्रदेवतासिद्धाभिशा पादिविविधोपद्रवशांत्यर्थंचसर्वापन्निवृत्तिपूर्वकसर्वाभीष्टसिद्धिद्वाराश्रीषडंगसहितवेदपुरुषब्रह्मप्रीत्यर्थंब्राह्मणद्वाराबौधायनो क्तामुदकशांतिंकरिष्ये॥तत्रादौनिर्विघ्नतासिद्ध्यर्थंमहागणपतिपूजनंपंचवाक्यैःपुण्याहवाचनंब्राह्मणवरणंचकरिष्ये॥ गणपतिंसं पूज्यपंचवाक्यैःपुण्याहंवाचयित्वाब्राह्मणवरणंकुर्यात् ॥ अमुकप्रवरान्वितामुकगोत्रोत्पन्नोमुकशर्माऽहंअमुकप्रवरान्वितामुकगो त्रममुकशाखाध्यायिनममुकशर्माणंब्राह्मणं अस्यामुदकशांतौपूर्वस्यांदिशिविहितसूक्तजपकर्तारंत्वांवृणे अस्यामुदकशांतौदक्षि णस्यांदिशि० अस्यामुदकशांतौपश्चिमायांदिशिविहितसूक्तजपकर्तारमाचार्यत्वेनचत्वांवृणे अस्यामुदकशांतावुत्तरस्यांदिशिवि हितसूक्तजपकर्तारं० ॥ नमोस्त्वनंताय० ॥ अस्ययागस्यनिष्पत्तौभवंतोभ्यर्चितामया ॥ सुप्रसन्नाःप्रकुर्वंतुशांतिकंविधिपूर्वकं ॥ यांतुदेवगणाःसर्वे० ॥ सर्वेआचम्यप्राणानायम्यदेशकालावुत्कीर्त्यअमुकगोत्रोत्पन्नेनामुकशर्मणायजमानेनउदकशांतिकर्मणि वृतोहमाचार्यकर्मकरिष्ये ॥ निर्विघ्नार्थंमहागणपतिस्मरणंशरीरशुद्ध्यर्थंपुरुषसूक्तजपंचकरिष्ये ॥ गणपतिंस्मृत्वापुरुषसूक्तंजप्त्वा यदत्रसंस्थितंभूतं० जितंतेपुंडरीकाक्ष० अपक्रामंत्वितिसर्षपविकिरणादिप्रादेशांतंकृत्वा पंचप्रस्थसिकताभिःशुद्धाभिरद्भिरर

त्रिमात्रंचतुरस्रंस्थंडिलंकृत्वासुवर्णत्रीहिदर्भानंगुष्ठेनमहानाम्न्याचोपसंगृह्य ॥ ॐब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआ
वः ॥ सबुध्नियाउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ इतितस्यपश्चादारभ्यमध्येप्राचीꣳसंततांलेखांलिखित्वा ॥ तद्दक्षि
णतः ॥ ॐ नाकेसुपर्णमुपयत्पतंतꣳहृदावेनंतोअभ्यचक्षतत्वा ॥ हिरण्यपक्षंवरुणस्यदूतंयमस्ययोनौशकुनंभुरण्युं ॥ प्रादेशमात्रांत
थैवलेखांविलिख्य ॥ तस्योत्तरतः ॥ ॐ आप्यायस्वसमेतुतेविश्वतःसोमवृष्णियं ॥ भवावाजस्यसंगथे ॥ तथैवलेखांविलिख्य तस्यद
क्षिणतोमध्यादारभ्य ॥ ॐ योरुद्रोअग्नौयोअप्सुयओषधीषुयोरुद्रोविश्वाभुवनाविवेशतस्मैरुद्रायनमोअस्तु ॥ इत्युदीचीꣳसंत
तांलेखांविलिख्यतस्याःपश्चात्प्रादेशमात्रां ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूढस्यपाꣳसुरे ॥ इतितथैवलेखांविलिख्य
तस्याःपुरस्तात् ॥ इंद्रंविश्वाअवीवृधन्त्समुद्रव्यचसंगिरः ॥ रथीतमꣳरथीनांवाजानाꣳसत्पतिंपतिं ॥ इतितथैवलेखांविलिख्या
द्भिरभ्युक्ष्य देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामाददे॥उत्तरतोनिरस्यअपउपस्पृश्यगंधोदकेनाभ्युक्ष्यदूर्वादर्भैः
प्रच्छाद्यपुष्पैःफलैश्चावकीर्यतदुत्तरतोदर्भेषुप्रोक्षणींब्रह्मपात्रंचासाद्यप्रोक्षणीꣳसꣳस्कृत्यप्रोक्षिताःस्थइतित्रिः ॥ ब्रह्मपात्रंत्रिःप्रोक्ष्य
धूपयेत्॥ब्रह्मजज्ञानमितिमंत्रेणब्रह्मपात्रंस्थंडिलेनिधाय॥देवस्यत्वासवितुः० हस्ताभ्यांपरिस्तृणामीतिषोडशदर्भैरुदगग्रैःपुरस्तात्प
रिस्तीर्य ॥ भूर्भुवःसुवरितिदक्षिणतःप्रागग्रैःसप्तदशभिः ॥ उद्वयंतमसस्परिपश्यंतोज्योतिरुत्तरं ॥ देवंदेवत्रासूर्यमगन्मज्योतिरु
त्तममितिपश्चादुदगग्रैरष्टादशभिः ॥ अग्नआयाहिवीतयेगृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ उत्तरतःप्रागग्रैःसप्तदशभिः
परिस्तीर्य तिरःपवित्रंब्रह्मपात्रेअपआनीय ॐ भूर्भुवःसुवः तत्सवितुर्वरेण्यं० ॐ शंनोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभि
स्रवंतुनः ॥ आपोवाइदꣳसर्वंविश्वाभूतान्यापःप्राणावाआपःपशवआपोन्नमापोमृतमापःसम्राडापोविराडापःस्वराडापश्छंदाꣳ

यामि ॥ भुवर्ऋषींस्तर्पयामि ॥ सुवर्ऋषींस्तर्पयामि ॥ भूर्भुवःसुवर्ऋषींस्तर्पयामि ॥ प्राचीनावीती ॥ वैशंपायनादयोयेपितरः ॥
तान्पितॄंस्तर्पयामि ॥ भूःपितॄंस्तर्पयामि ॥ भुवःपितॄंस्तर्पयामि ॥ सुवःपितॄंस्तर्पयामि ॥ भूर्भुवःसुवःपितॄंस्तर्पयामि ॥ यन्मयादू
षितंतोयंशारीरमलसंभवात्॥तद्दोषपरिहारार्थंयक्ष्माणंतर्पयाम्यहं ॥ इतियक्ष्माणंतर्पयित्वा ततोबहिरागत्यदर्भानन्योन्यस्मैआ
दित्संतोवा ततोवस्त्रपरिधानादिकुर्युः॥आचम्यप्राणानायम्य ॥ अद्यपूर्वोच्चरित० श्रीपरमेश्वरप्रीत्यर्थंशरीरवाङ्मनःशुद्ध्यर्थंपंच
गव्यप्राशनमहंकरिष्ये ॥ ॐयत्त्वगस्थिगतंपापंदेहेतिष्ठतिमामके ॥ प्राशनात्पंचगव्यस्यदहत्वग्निरिवेंधनं ॥ ॐ ॐ ॐ एवंत्रिवारं
त्रिःप्राश्य ॥ ॥ अथऋषिपूजनं ॥ ॥ आचम्यदेशकालौसंकीर्त्यउत्सर्जनांगत्वेनब्रह्मादिदेवानां विश्वामित्रादिऋषीणांवैशं
पायनादिपितॄणांच स्थापनंपूजनंचकरिष्ये॥देवगणादिपूजार्थंचतुरस्रांप्राक्प्रवणांउदक्प्रवणांदक्षिणाप्रवणांचवेदिंकुर्यात् ॥ त
त्रप्राक्प्रवणेदेशेप्रागग्रैर्दर्भैःउदगपवर्गाण्यासनानिकल्पयंति ब्रह्मणेआसनंकल्पयामि १ प्रजापतयेआसनंकल्पयामि २ बृहस्पत
येआसनंकल्पयामि ३ अग्नयेआसनंकल्पयामि ४ वायवेआसनंकल्पयामि ५ सूर्यायआसनंकल्पयामि ६ चंद्रमसेआसनंकल्प
यामि ७ नक्षत्रेभ्यआसनंकल्पयामि ८ इंद्रायराज्ञेआसनंकल्पयामि ९ यमायराज्ञेआसनंकल्पयामि १० वरुणायराज्ञेआसनं
कल्पयामि ११ सोमायराज्ञेआसनंकल्पयामि १२ वैश्रवणायराज्ञेआसनंकल्पयामि १३ वसुभ्यआसनंकल्पयामि १४ रुद्रेभ्य
आसनंकल्पयामि १५ आदित्येभ्यआसनंकल्पयामि १६ विश्वेभ्योदेवेभ्यआसनंकल्पयामि १७ साध्येभ्यआसनंकल्पयामि
१८ ऋभुभ्यआसनंकल्पयामि १९ भृगुभ्यआसनंकल्पयामि २० मरुद्भ्यआसनंकल्पयामि २१ अथर्वभ्यआसनंकल्पयामि
२२ अंगिरोभ्यआसनंकल्पयामि २३ ॥ ततोनिवीतीउत्तरतउदीचीप्रवणेदेशेउदगग्रैर्दर्भैःप्रागपवर्गाण्यासनानिकल्पयंतिमंडल

स्योत्तरभागेउत्तराग्रान्दर्भान् ॥ विश्वामित्रायआसनंकल्पयामि १ जमदग्नयेआसनंकल्पयामि २ भरद्वाजायआसनंकल्पयामि ३ गौतमायआसनंकल्पयामि ४ अत्रयेआसनंकल्पयामि ५ वसिष्ठायआसनंकल्पयामि ६ कश्यपायआसनंकल्पयामि ७ अनयोर्मध्येअरुंधत्यैआसनंकल्पयामि ८ ॥ देवस्यदक्षिणेउत्तराग्रान्दर्भान् ॥ अगस्त्यायआसनंकल्पयामि १ मध्येपूर्वाग्रान्दर्भान्उदगपवर्गेण द्विपंचाशदृषीनावाहयेत् ॥ कृष्णद्वैपायनायआसनंकल्पयामि २ जातूकर्ण्यायआसनंकल्पयामि ३ तरुक्षायआसनंकल्पयामि ४ तृणबिंदवेआसनंकल्पयामि ५ वर्मिणेआसनंकल्पयामि ६ वरूथिनेआसनंकल्पयामि ७ वाजिनेआसनंकल्पयामि ८ वाजिश्रवसेआसनंकल्पयामि ९ सत्यश्रवसेआसनंकल्पयामि १० सुश्रवसेआसनंकल्पयामि ११ सुतश्रवसेआसनंकल्पयामि १२ सोमशुष्मायणायआसनंकल्पयामि १३ सत्ववतेआसनंकल्पयामि १४ बृहदुक्थायआसनंकल्पयामि १५ वामदेवायआसनंकल्पयामि १६ वाजिरत्नायआसनंकल्पयामि १७ हर्यज्वायनायआसनंकल्पयामि १८ उदमयायआसनंकल्पयामि १९ गोतमायआसनंकल्पयामि २० ऋणंजयायआसनंकल्पयामि २१ ऋतंजयायआसनंकल्पयामि २२ कृतंजयायआसनंकल्पयामि २३ धनंजयायआसनंकल्पयामि २४ बभ्रवेआसनंकल्पयामि २५ त्र्यरुणायआसनंकल्पयामि २६ त्रिवर्षायआसनंकल्पयामि २७ त्रिधातवेआसनंकल्पयामि २८ शिबिंतायआसनंकल्पयामि २९ पराशरायआसनंकल्पयामि ३० विष्णवेआसनंकल्पयामि ३१ रुद्रायआसनंकल्पयामि ३२ स्कंदायआसनंकल्पयामि ३३ काशीश्वरायआसनंकल्पयामि ३४ ज्वरायआसनंकल्पयामि ३५ धर्मायआसनंकल्पयामि ३६ अर्थायआसनंकल्पयामि ३७ कामायआसनंकल्पयामि ३८ क्रोधायआसनंकल्पयामि ३९ वसिष्ठायआसनंकल्पयामि ४० इंद्रायआसनंकल्पयामि ४१ त्वष्ट्रेआसनंकल्पयामि ४२ कर्त्रेआसनंक

ल्पयामि ४३ धर्त्रेआसनंकल्पयामि ४४ धात्रेआसनंकल्पयामि ४५ मृत्यवेआसनंकल्पयामि ४६ सवित्रेआसनंकल्पयामि ४७ सावित्र्यैआसनंकल्पयामि ४८ ऋग्वेदायआसनंकल्पयामि ४९ यजुर्वेदायआसनंकल्पयामि ५० सामवेदायआसनंकल्पयामि ५१ अथर्ववेदायआसनंकल्पयामि ५२ इतिहासपुराणायआसनंकल्पयामि ५३ ॥ प्राचीनावीती ॥ एभ्योदक्षिणतोदक्षिणाप्रवणेदेशेदक्षिणाग्रैर्दर्भैः प्रत्यगपवर्गाण्यासनानिकल्पयंति ॥ मंडलस्यदक्षिणेदक्षिणाग्रान्दर्भान् ॥ वैशंपायनायआसनंकल्पयामि १ पलिंगवेआसनंकल्पयामि २ तित्तिरायआसनंकल्पयामि ३ उखायआसनंकल्पयामि ४ आत्रेयायपदकारायआसनंकल्पयामि ५ कौंडिण्यायवृत्तिकारायआसनंकल्पयामि ६ सूत्रकारेभ्यआसनंकल्पयामि ७ सत्याषाढायआसनंकल्पयामि ८ प्रवचनकर्तृभ्यआसनंकल्पयामि ९ आचार्येभ्यआसनंकल्पयामि १० ऋषिभ्यआसनंकल्पयामि ११ वानप्रस्थेभ्यआसनंकल्पयामि १२ ऊर्ध्वरेतोभ्यआसनंकल्पयामि १३ एकपत्निभ्यआसनंकल्पयामि १४ । पित्रेआसनंकल्पयामि १ पितामहायआसनंकल्पयामि २ प्रपितामहायआसनंकल्पयामि ३ मात्रेआसनंकल्पयामि ४ पितामह्यैआसनंकल्पयामि ५ प्रपितामह्यैआसनंकल्पयामि ६ मातामहायआसनंकल्पयामि ७ मातुःपितामहायआसनंकल्पयामि ८ मातुःप्रपितामहायआसनंकल्पयामि ९ मातामह्यैआसनंकल्पयामि १० मातुःपितामह्यैआसनंकल्पयामि ११ मातुःप्रपितामह्यैआसनंकल्पयामि १२ अमुंकल्पयाम्यमुंकल्पयामीत्यासनेमुंतर्पयामीत्युदकेनामुष्मैनमोमुष्मैनमइतिगंधपुष्पधूपदीपैरभ्यर्च्यअमुष्मैस्वाहामुष्मैस्वाहामुष्मैस्वाहेत्यनेनामुंतर्पयाम्यमुंतर्पयामीतिफलोदकेनामुष्मैनमोमुष्मैनमइत्युपस्थाय ॥ सव्यं ॥ ब्रह्माणंतर्पयामीतितर्पयेत् उक्तपितृगणांस्तिलोदकेनतर्पयेत् ॥ ब्रह्मादिदेवेभ्यः विश्वामित्रादिऋषिभ्यः वैशंपायनादिपितृभ्यः ॥ अर्घ्यसम० ॥ आचमनीयंसमर्पयामि ॥

पंचामृतस्नानं ॥ वस्त्रोपवस्त्रे ॥ यज्ञोपवीतं ॥ गंधं ॥ अलंकारान्दत्वा ॥ ब्रह्मणेनमः इत्यादिपुष्पंसमर्पयामि ॥ धूपं ॥ दीपं ॥ महानैवेद्यं ॥ ब्रह्मणेस्वाहा ॥ इत्यादि ॥ ब्रह्माणंतर्पयामीतिपूर्ववत् ॥ फलोदकं उत्तरापोशनं हस्तप्रक्षालनंसमर्पयामि मुखप्रक्षालनंसमर्पयामि करोद्वर्तनं मुखवासार्थेपूगीफलतांबूलं दक्षिणां उत्तरनीराजनं ॥ ब्रह्मणेप्रजापतयेइत्यादिमंत्रपुष्पं ॥ प्रदक्षिणां ॥ नमस्कारान् ॥ प्रार्थयेत् ॥ अनेनकृतपूजनेनब्रह्मादिदेवविश्वामित्रादिऋषिवैशंपायनादिपितृस्वरूपीपरमेश्वरःप्रीयतां ॥ अथस्थंडिलविधिः ॥ ॥ आचम्यप्राणानायम्य ॥ अद्यपूर्वोच्चरितवर्तमानएवंगुणविशेषणविशिष्टायांशुभपुण्यतिथौममआत्मनःश्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंवेदोत्सर्जनांगंहवनंकर्तुंस्थंडिलादिसर्वंकर्मकरिष्ये ॥ स्थंडिलंगोमयेनोपलिप्यउल्लिख्य ॥ उद्धन्यमानमस्याअमेध्यं ॥ अपपाप्मानंयजमानस्यहंतु ॥ शिवानःसंतुप्रदिशश्चतस्रः ॥ ॐ शंनोमातापृथिवीतोकसाता ॥ तिस्रःप्राचीस्तिस्रउदीचीरेखाःकृत्वा ॥ रेखासाधनमुत्तरतःस्थंडिलेनिधायप्रोक्ष्य ॥ शंनोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ शकलमाग्नेय्यांनिरस्यअपउपस्पृश्य ॥ इंद्राद्यष्टौलोकपालानावाहयति इंद्रायनमः अग्नयेनमः यमायनमः निर्ऋतयेनमः वरुणायनमः वायवेनमः सोमायनमः ईशानायनमः मध्येअग्निस्थानायनमः ॥ इत्यक्षतैरावाह्य ॥ ॐवैश्वानरस्यरूपं ॥ पृथिव्यांपरिस्रसा ॥ स्योनमाविशंतुनः ॥ भूर्भुवःसुवरोम्बलवर्धननामानमग्निंप्रतिष्ठापयामिइत्यग्निंप्रतिष्ठाप्य ॥ प्रोक्षितेंधनानिनिक्षिप्य ॥ वेणुधमन्याप्रबोध्यध्यायेत् ॥ ॐचत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँ आविवेश ॥ सप्तहस्तश्चतुःशृंगःसप्तजिह्वोद्विशीर्षकः ॥ त्रिपात्प्रसन्नवदनःसुखासीनःशुचिस्मितः ॥ स्वाहांतुदक्षिणेपार्श्वेदेवींवामे स्वधांतथा ॥ बिभ्रद्दक्षिणहस्तैस्तुशक्तिमन्नंस्रुचंस्रुवं ॥ तोमरंव्यजनंवामैर्घृतपात्रंचधारयन् ॥ आत्माभिमुखमासीनएवंरूपोहुता

शनः ॥ अग्नेवैश्वानरशांडिल्यगोत्रमेषध्वजप्राङ्मुखममसंमुखोवरदोभव ॥ समित्रयमादाय ॐश्रद्धएहिसत्येनत्वाह्वयामि ३ ॐ
याःपुरस्तात्प्रस्रवंत्युपरिष्टात्सर्वतश्चयाः ॥ ताभीरश्मिपवित्राभिःश्रद्धांयज्ञमारभे॥ आकूत्यैत्वाकामायत्वासमृधेत्वापुरोदधेअमृत
त्वायजीवसे ॥ आकूतिमस्यावसेकाममस्यसमृद्ध्यै ॥ इंद्रस्ययुंजतेधियः ॥ आकूतिंदेवींमनसःपुरोदधेयज्ञस्यमातासुहवामेअस्तु ॥
यदिच्छामिमनसासकामोविदेयमेनद्धृदयेनिविष्टं ॥ हृदयालंभः उदकस्पर्शः प्राणायामः उत्सर्जनहोमकर्मणियायक्ष्यमाणादेवता
स्ताःसर्वाःपरिग्रहीष्यामि ॥ जातवेदसमग्निमिध्मेन आघारहोमे प्रजापतिंमनुमिंद्रंचाज्येन ॥ आज्यभागहोमे अग्निंसोमंचाज्येन॥
सामान्यप्रधानहोमे॥ अग्निंजातवेदस१ँस१ँराधनी१ँस१ँराधनींदेवींप्रसाधनींदेवीं व्याहृतीनामग्निंवायुंसूर्यंप्रजापतिंप्रत्येकमाज्ये
न ॥ वैशेषिकप्रधानहोमे॥प्रजापतिंकांडऋषिंसोमंकांडऋषिंअग्निंकांडऋषिंविश्वान्देवान्कांडऋषीन्स्वयंभुवंकांडऋषिं ॥ सावित्रीं
ऋग्वेदंयजुर्वेदंसामवेदंअथर्ववेदंसदसस्पतिंचाज्येनयक्ष्ये ॥ परमात्मानंयज्ञोपवीतेनयक्ष्ये ॥ अंगहोमे ॥ वरुणंद्विःअग्नीवरुणौद्विः
अयासमग्निंप्रजापतिंप्रत्येकमाज्येनयक्ष्ये ॥ जयाहोमे॥चित्तंचित्तिंआकूतंआकूतिंविज्ञातंविज्ञानंमनःशक्करीःदर्शपूर्णमासंबृहद्रथं
तरंप्रजापतिंचप्रत्येकमाज्येनयक्ष्ये ॥ अभ्यातानहोमे॥अग्निंभूतानामधिपतिं इंद्रंज्येष्ठानामधिपतिं यमंपृथिव्याअधिपतिं वायुमं
तरिक्षस्याधिपतिं सूर्यंदिवोधिपतिं चंद्रमसंनक्षत्राणामधिपतिं बृहस्पतिंब्रह्मणोधिपतिं मित्रंसत्यानामधिपतिं वरुणंअपामधि
पतिं समुद्रंस्रोत्यानामधिपतिं अन्न१ँसाम्राज्यानामधिपतिं सोमंओषधीनामधिपतिं सवितारंप्रसवानामधिपतिं रुद्रंपशूनामधि
पतिं ॥ उदकस्पर्शः त्वष्टारंरूपाणामधिपतिं विष्णुंपर्वतानामधिपतिं मरुतोगणानामधिपतीन्॥प्राचीनावीती पितॄन्पितामहान्प

रान्वरांश्चप्रत्येकमाज्येनयक्ष्ये ॥ यज्ञोपवीती उदकस्पर्शः ॥ राष्ट्रभृद्धोमेअग्निंगंधर्वंओषधीरप्सरसःसूर्यंगंधर्वंमरीचीरप्सरसःचं द्रमसंगंधर्वंनक्षत्राण्यप्सरसः यज्ञंगंधर्वंदक्षिणाअप्सरसः मनोगंधर्वंऋक्सामान्यप्सरसः वातंगंधर्वंअपोप्सरसः भुवनस्यपतिंमृत्युं गंधर्वंविश्वमप्सरसः पर्जन्यंगंधर्वंविद्युतोप्सरसः अमृडयंमृत्युंगंधर्वंप्रजाअप्सरसः कामंगंधर्वंआधीरप्सरसः सनोभुवनस्यपतिं चप्रत्येकमाज्येनयक्ष्ये ॥ स्विष्टकृद्धोमे ॥ अग्निंꣳस्विष्टकृतंहुतशेषेणयक्ष्ये ॥ उत्सर्जनांगत्रिवृदन्नहोमे ॥ अग्निंत्रिवृदन्नेन ॥ सोमंत्रिवृदन्नेन अग्निमन्नादंत्रिवृदन्नेन अग्निमन्नपतिंत्रिवृदन्नेन प्रजापतिंत्रिवृदन्नेन विश्वान्देवान्त्रिवृदन्नेन सर्वादे वताःत्रिवृदन्नेन अग्निंꣳस्विष्टकृतंत्रिवृदन्नेन वास्तोष्पतिंबलीकरणेनयक्ष्ये ॥ प्रायश्चित्तहोमे ॥ अग्निंत्रिःअग्नीवरुणौद्विःइंद्रंद्विः त्र्यंबकंविष्णुंअग्निंवायुंसूर्यंबृहस्पतिंवरुणंइंद्रंविश्वान्देवांश्चाज्येनयक्ष्ये ॥ सꣳस्रावहोमे ॥ वसून्रुद्रानादित्यान्सꣳस्रावाज्येनय क्ष्ये ॥ एतादेवताःसद्योयक्ष्ये ॥ ॐभूर्भुवःसुवःस्वाहा ॥ प्रजापतयइदंनमम ॥ अन्वाधानसमिधंदद्यात् ॥ ॐएषहिदेवःप्रदिशोनु सर्वाःपूर्वोहिजातःसउगर्भेअंतः ॥ सविजायमानःसजनिष्यमाणःप्रत्यङ्मुखांस्तिष्ठतिविश्वतोमुखः ॥ इत्यग्निमाचारात्संमुखीकृत्य यथाहुतद्वंसवोगौर्यैचित्पदिषितामर्मुचतायजत्राः ॥ एवात्वमस्मत्प्रमुंचाव्यꣳहुःप्रातार्यग्नेप्रतरान्नआयुः ॥ परिस्तीर्य ॥ पुरस्तात् दक्षिणतः पश्चात् उत्तरतः ॥ इध्मबंधनं ॥ भूर्भुवःसुवःदक्षिणतःब्रह्मणेइदमासनं ॥ भूर्भुवःसुवःउत्तरतःब्रह्मप्रणीतायैइदमा सनं ॥ द्वौदर्भौहस्तेगृहीत्वा हृदयमालभ्य ॥ ॐमयिगृह्णाम्यग्रेअग्निꣳरायस्पोषायसुप्रजास्त्वायसुवीर्याय ॥ मयिप्रजांमयिवर्चो दधाम्यरिष्टाःस्यामतनुवासुवीराः ॥ योनोअग्निःपितरोहृत्स्वंतरमर्त्योमर्त्याꣳआविवेश ॥ तमात्मन्परिगृह्णीमहेवयंमासोअस्माꣳ अवहायपरागात् ॥ पात्राण्यासाद्य अग्नेरुत्तरतःदर्भान्सꣳस्तीर्य तेषुदर्वीआज्यस्थालींप्रणीतांप्रोक्षणींइध्मंबर्हिःउपवेषंसंमार्गद

र्भान्अवज्वलनदर्भान्यज्ञोपवीतंआज्यंत्रिवृदन्नंचासादयामि॥ ॐब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः॥सबुध्निया
उपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः॥ अस्मिन्कुशेब्रह्मणेनमः ब्रह्माणंआवाहयामि ॥ ब्रह्मसदनात्तृणंनिरस्य अपउपस्पृश्य
ब्रह्मप्रणीतासंस्कारः ॥ समावप्रच्छिन्नाग्रौदर्भौसमौसाग्रौअंतर्गर्भरहितौप्रादेशमात्रौपवित्रेकृत्वा नखादन्येनच्छित्वा अद्भिरनु
मृज्य प्रणीतापात्रंत्रिःप्रक्षाल्य प्रागग्रपवित्रांतर्हितेपात्रेपआनीय उपबिलंपूरयित्वा ॥ पवित्रेअंगुष्ठोपकनिष्ठिकाभ्यांधृत्वाउदग
ग्राभ्यांपवित्राभ्यांत्रिरुत्पूय दक्षिणोत्तराभ्यांपाणिभ्यांसमंप्राणैर्धृत्वा अविषिंचन्अग्नेर्दक्षिणतोहृत्वा उत्तरेणाग्निंदर्भेषुनिधाय
अन्यैर्दर्भैरपिदधाति ॥ तिरःपवित्रंप्रोक्षणीःसꣳस्कृत्य ॥ यथापुरस्तात्उदगग्रपवित्रांतर्हितमद्भिःपूरयित्वा बिलवंत्युत्ताना
निकृत्वा इध्मंचविस्रस्य प्राक्संस्थंविषायेध्मंत्रिःसर्वाभिःप्रोक्षति ॥ तेपवित्रेआज्यपात्रेनिधाय दर्वींनिष्टप्य संमृज्य संमार्ग
कुशानादाय दर्वींप्राचीमग्रैरंतरतोभ्याकारंप्रतीचींमध्यैर्बाह्यतोमूलैर्दंडंसंमृज्य पुनर्निष्टप्य अनधोनिदधाति ॥ संमार्गान
भ्युक्ष्य अग्नावादधाति ॥ आज्यंविलाप्य पवित्रांतर्हितायामाज्यस्थाल्यामाज्यंनिरुप्य उपवेषेणाग्न्यायतनादुत्तरतोंगारान्निरूह्य
तेष्वधिश्रित्य दर्भैराज्यमवद्योत्य ॥ दर्भाग्रद्वयंसजलमाज्येन्यस्यप्रज्वालितैर्दर्भैःत्रिःपर्यग्निकृत्वा उल्मुकंनिरस्य अपउपस्पृश्य
उपवेषेणअंगारान्प्रत्यूह्य उपवेषेनिरस्य अपउपस्पृश्य ॥ अपरेणाग्निंबर्हिरास्तीर्यतेष्वाज्यस्थालीमानीय पवित्रेविरलेकृत्वा उद
गग्राभ्यांपवित्राभ्यांपुनराहारमाज्यंत्रिरुत्पूय पवित्रेप्रोक्ष्य अग्नावाधाय शम्याभिःपरिदधाति ॥ अपरेणाग्निमुदीचीनकुंबांमध्य
मांनिदधाति॥ दक्षिणेनाग्निꣳसꣳस्पृष्टांमध्यमयाप्राचीनकुंबां॥ उत्तरेणाग्निꣳसꣳस्पृष्टांमध्यमयाप्राचीनकुंबां॥ अपरेणाग्निंप्राङ्मु
खउपविशति ॥ ॐअदितेनुमन्यस्व ॥ ॐअनुमतेनुमन्यस्व ॥ ॐसरस्वतेनुमन्यस्व ॥ ॐदेवसवितःप्रसुव ॥ इध्ममङ्क्त्वाभ्याद

धाति ॥ अयंतइध्मआत्माजातवेदस्तेनेध्यस्ववर्धस्वचेंधिवर्धयचास्मान्प्रजयापशुभिर्ब्रह्मवर्चसेनान्नाद्येनसमेधयस्वाहा ॥जातवेद
सेग्नयइदं॥अथदर्व्याजुहोतिउत्तरपरिधिसंधिमन्ववहृत्य ॥ ॐप्रजापतयेमनवेस्वाहा ॥ प्रजापतयेमनवइदं ॥ दक्षिणपरिधिसंधि
मन्ववहृत्य॥ॐइंद्रायस्वाहा ॥इंद्रायेदं इदंद्वयमुपांशु ॥ उत्तरार्धपूर्वार्धे॥ अग्नयेस्वाहा॥ अग्नयइदं॥ दक्षिणार्धपूर्वार्धे ॥ ॐसोमा
यस्वाहा ॥ सोमायेदं ॥ तावंतरेणेतराजुहोति ॥ युक्तोवहजातवेदः पुरस्तादग्नेविद्धिकर्मक्रियमाणंयथेदं ॥ त्वंभिषक्भेषजस्यासि
कर्तात्वयागाश्वान्पुरुषान्सनेमस्वाहा ॥ जातवेदसेग्नयइदं ॥ यातिरश्चीनिपद्यसेहंविधरणीइति ॥ तांत्वाघृतस्यधारयाग्नौसँराध
नीयजेस्वाहा ॥ सँराधन्याइदं॥ ॐसँराधन्यैदेव्यैस्वाहा ॥ सँराधन्यैदेव्याइदं ॥ ॐप्रसाधन्यैदेव्यैस्वाहा॥ प्रसाधन्यैदेव्या
इदं ॥ ॐभूःस्वाहा ॥ अग्नयइदं॥ॐभुवःस्वाहा॥वायवइदं ॥ ॐसुवःस्वाहा॥सूर्यायेदं ॥ ॐभूर्भुवःसुवःस्वाहा ॥ प्रजापतयइदं ॥
प्रधानहोमे॥ॐप्रजापतयेकांडऋषयेस्वाहा॥ प्रजापतयेकांडऋषयइदं ॥ ॐसोमायकांडऋषयेस्वाहा॥ सोमायकांडऋषयइदं ॥ ॐ
अग्नयेकांडऋषयेस्वाहा॥ अग्नयेकांडऋषयइदं ॥ ॐविश्वेभ्योदेवेभ्यःकांडऋषिभ्यःस्वाहा॥ विश्वेभ्योदेवेभ्यःकांडऋषिभ्यइदं ॥
स्वयंभुवेकांडऋषयेस्वाहा ॥ स्वयंभुवेकांडऋषयइदं ॥ सावित्र्यैस्वाहा ॥ सावित्र्याइदं ॥ ऋग्वेदायस्वाहा ॥ ऋग्वेदायेदं ॥
यजुर्वेदायस्वाहा ॥ यजुर्वेदायेदं ॥ सामवेदायस्वाहा ॥ सामवेदायेदं ॥ अथर्ववेदायस्वाहा ॥ अथर्ववेदायेदं ॥ सदसस्पत
येस्वाहा ॥ सदसस्पतयइदं ॥ यज्ञोपवीतंपरमंपवित्रंप्रजापतेर्यत्सहजंपुरस्तात् ॥ आयुष्यमग्र्यंप्रतिमुंचशुभ्रंयज्ञोपवीतंबलमस्तु
तेजःस्वाहा ॥ परमात्मनइदं ॥ इतियज्ञोपवीतंहुत्वाविप्रेभ्योदत्त्वाचधारयेत् ॥ ॥ अथयज्ञोपवीतसंस्कारः ॥ श्रौतस्मार्तकर्मा
नुष्ठानसिद्ध्यर्थंयज्ञोपवीतसंस्कारंकरिष्ये ॥गायत्र्यायज्ञोपवीतमभिमंत्रयेत्॥ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणाय

चक्षसे ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ हिरण्यवर्णाःशुचयःपावकायासुजातःकश्यपोयास्विंद्रः ॥ अग्निंयागर्भंदधिरेविरूपास्तानआपःशꣳस्योनाभवंतु ॥ यासाꣳराजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानां ॥ मधुश्चुतःशुचयोयाःपावकास्तानआपःशꣳस्योनाभवंतु ॥ यासांदेवादिविकृण्वंतिभक्षंयाअंतरिक्षेबहुधाभवंति ॥ याःपृथिवींपयसोंदंतिशुक्रास्तानआपःशꣳस्योनाभवंतु ॥ शिवेनमाचक्षुषापश्यतापःशिवयातनुवोपस्पृशतत्वचंमे ॥ सर्वाꣳअग्नीꣳरप्सुषदोहुवेवोमयिवर्चोबलमोजोनिधत्त ॥ पवमानःसुवर्जनः ॥ पवित्रेणविचर्षणिः ॥ यःपोतासपुनातुमा ॥ पुनंतुमादेवजनाः ॥ पुनंतुमनवोधिया ॥ पुनंतुविश्वआयवः ॥ जातवेदःपवित्रवत् ॥ पवित्रेणपुनाहिमा ॥ शुक्रेणदेवदीद्यत् ॥ अग्नेक्रत्वाक्रतूꣳरनु ॥ १ ॥ यत्तेपवित्रमर्चिषि ॥ अग्नेविततमंतरा ॥ ब्रह्मतेनपुनीमहे ॥ उभाभ्यांदेवसवितः ॥ पवित्रेणसवेनच ॥ इदंब्रह्मपुनीमहे ॥ वैश्वदेवीपुनतीदेव्यागात् ॥ यस्यैबह्वीस्तनुवोवीतपृष्ठाः ॥ तयामदंतःसधमाद्येषु ॥ वयꣳस्यामपतयोरयीणां ॥ २ ॥ वैश्वानरोरश्मिभिर्मापुनातु ॥ वातःप्राणेनेषिरोमयोभूः ॥ द्यावापृथिवीपयसापयोभिः ॥ ऋतावरीयज्ञियेमापुनीतां ॥ बृहद्भिःसवितस्तृभिः ॥ वर्षिष्ठैर्देवमन्मभिः ॥ अग्नेदक्षैःपुनाहिमा ॥ येनदेवाअपुनत ॥ येनापोदिव्यंकशः ॥ तेनदिव्येनब्रह्मणा ॥ ३ ॥ इदंब्रह्मपुनीमहे ॥ यःपावमानीरध्येति ॥ ऋषिभिःसंभृतꣳरसं ॥ सर्वꣳसपूतमश्नाति ॥ स्वदितंमातरिश्वना ॥ पावमानीर्योअध्येति ॥ ऋषिभिःसंभृतꣳरसं ॥ तस्मैसरस्वतीदुहे ॥ क्षीरꣳसर्पिर्मधूदकं ॥ पावमानीःस्वस्त्ययनीः ॥ ४ ॥ सुदुघाहिपयस्वतीः ॥ ऋषिभिःसंभृतोरसः ॥ ब्राह्मणेष्वमृतꣳहितं ॥ पावमानीर्दिशंतुनः ॥ इमंलोकमथोअमुं ॥ कामान्समर्धयंतुनः ॥ देवीर्देवैःसमाभृताः ॥ पावमानीःस्वस्त्ययनीः ॥ सुदुघाहिघृतश्चुतः ॥ ऋषिभिःसं

भूतोरसः ॥५॥ ब्राह्मणेष्वमृतꣳहितं ॥ येनदेवाःपवित्रेण ॥ आत्मानंपुनतेसदा ॥ तेनसहस्रधारेण ॥ पावमान्यःपुनंतुमा ॥ प्राजापत्यंपवित्रं ॥ शतोद्यामꣳहिरण्मयं ॥ तेनब्रह्मविदोवयं ॥ पूतंब्रह्मपुनीमहे ॥ इंद्रःसुनीतीसहमापुनातु ॥ सोमःस्वस्त्यावरुणःसमीच्या ॥ यमोराजाप्रमृणाभिःपुनातुमा ॥ जातवेदामोर्जयंत्यापुनातु ॥६॥ इतिमंत्रेणयज्ञोपवीतंमार्जयेत् ॥ ॐ भूरग्निंचपृथिवींचमांच ॥ त्रीꣳश्चलोकान्त्संवत्सरंच ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वद्ध्रुवासीद ॥ भुवोवायुंचांतरिक्षंचमांच ॥ त्रीꣳश्चलोकान्त्संवत्सरंच ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वद्ध्रुवासीद ॥ स्वरादित्यंचदिवंचमांच ॥ त्रीꣳश्चलोकान्त्संवत्सरंच ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वद्ध्रुवासीद ॥ भूर्भुवःसुवश्चंद्रमसंचदिशश्चमांच ॥ त्रीꣳश्चलोकान्त्संवत्सरंच ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वद्ध्रुवासीद ॥ ॐ कारंप्रथमतंतौन्यसामि ॥ अग्निंद्वितीयतंतौन्यसामि ॥ नागांस्तृतीयतंतौन्यसामि ॥ सोमंचतुर्थतंतौन्यसामि ॥ पितॄन्पंचमतंतौन्यसामि ॥ प्रजापतिंषष्ठतंतौन्यसामि ॥ वायुंसप्तमतंतौन्यसामि ॥ सूर्यअष्टमतंतौन्यसामि ॥ विश्वान्देवान्नवमतंतौन्यसामि ॥ गायत्रींप्रत्येकंदशवारंजप्त्वाअभिमंत्र्य ॥ अद्यपूर्वोच्च० प्राप्त्यर्थंश्रौतस्मार्तकर्मानुष्ठानसिद्ध्यर्थंयज्ञोपवीतधारणमहंकरिष्ये ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामाददे ॥ यज्ञोपवीतंगृहीत्वा ॥ ॐ उद्वयंतमसस्परिपश्यंतोज्योतिरुत्तरं ॥ देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमं ॥ उदुत्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्यं ॥ चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावापृथिवीअंतरिक्षꣳसूर्यआत्माजगतस्तस्थुषश्च ॥ त्रिस्ताडयेत् ॥ सूर्यायदर्शयित्वा ॥ यज्ञोपवीतंपरमंपवित्रंप्रजापतेर्यत्सहजंपुरस्तात् ॥ आयुष्यमग्र्यंप्रतिमुंचशुभ्रंयज्ञोपवीतंबलमस्तुतेजः ॥ दक्षिणंबाहुमुद्धार्यधारयेत् ॥ कांडादीन्जपतिअथवात्रीनादितोनुवाकानधीयंते

॥ १ ॥ उत्सृष्टावैवेदाः ॥ त्र्यहमेकाहंवानध्यायःकार्यः ॥ ॐइमंमेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके स्वाहा ॥ वरुणायेदंनमम ॥ ॐतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानआयुःप्रमोषीःस्वाहा ॥ वरुणायेदंनमम॥ॐत्वंनोअग्नेवरुणस्यविद्वान्देवस्यहेडोवयासिसीष्ठाः॥यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत्स्वाहा ॥ अग्नीवरुणाभ्यामिदंनमम ॥ ॐसत्वंनोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ ॥ अवयक्ष्वनोवरुणꣳरराणोवीहिमृडीकꣳसुहवोनएधिस्वाहा ॥ अग्नीवरुणाभ्यामिदंनमम ॥ ॐत्वमग्नेअयास्ययासन्मनसाहितः ॥ अयासन्हव्यमूहिषेयानोधेहिभेषजꣳस्वाहा॥ अयसेऽग्नयइदंनमम ॥ ॐप्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयꣳस्यामपतयोरयीणाꣳस्वाहा ॥ प्रजापतयइदं ॥ चित्तंचस्वाहा ॥ चित्तायेदं ॥ चित्तिश्चस्वाहा ॥ चित्तयइदं ॥ आकूतंचस्वाहा ॥ आकूतायेदं ॥ आकूतिश्चस्वाहा ॥ आकूत्याइदं ॥ विज्ञातंचस्वाहा ॥ विज्ञातायेदं ॥ विज्ञानंचस्वाहा ॥ विज्ञानायेदं ॥ मनश्चस्वाहा ॥ मनसइदं ॥ शक्करीश्चस्वाहा ॥ शक्करीभ्यइदं ॥ दर्शश्चस्वाहा ॥ दर्शायेदं ॥ पूर्णमासश्चस्वाहा ॥ पूर्णमासायेदं ॥ बृहच्चस्वाहा ॥ बृहतइदं ॥ रथंतरंचस्वाहा ॥ रथंतरायेदं ॥ ॐप्रजापतिर्जयानिंद्रायवृष्णेप्रायच्छदुग्रःपृतनाज्येषुतस्मैविशःसमनमंतसर्वाःसउग्रःसहिहव्योबभूवस्वाहा ॥ प्रजापतयइदं ॥ ॐअग्निर्भूतानामधिपतिःसमावत्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मन्नस्यांदेवहूत्याꣳस्वाहा॥अग्नयेभूतानामधिपतयइदं ॥ॐइंद्रोज्येष्ठानामधिपतिःसमावत्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मन्नस्यांदेवहूत्याꣳस्वाहा॥इंद्रायज्येष्ठानामधिपतयइदं॥ॐयमःपृथिव्याधिपतिःसमावत्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मन्नस्यांदेवहूत्याꣳस्वाहा ॥ यमायपृथिव्याअधिपतयइ

दं॥ॐवायुरंतरिक्षस्याधिपतिःसमावत्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मन्नस्यांदेवहूत्याᳬस्वाहा॥वायवें तरिक्षस्याधिपतयइदं॥ॐसूर्योदिवोधिपतिःसमावत्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मन्नस्यांदेवहूत्याᳬ स्वाहा॥सूर्यायदिवोधिपतयइदं॥ॐचंद्रमानक्षत्राणामधिपतिःसमावत्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्क र्मन्नस्यांदेवहूत्याᳬस्वाहा॥चंद्रमसेनक्षत्राणामधिपतयइदं ॥ ॐबृहस्पतिर्ब्रह्मणोधिपतिःसमावत्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेस्यामाशि ष्यस्यांपुरोधायामस्मिन्कर्मन्नस्यांदेवहूत्याᳬस्वाहा॥बृहस्पतयेब्रह्मणोधिपतयइदं ॥ ॐमित्रःसत्यानामधिपतिःसमावत्वस्मिन्ब्रह्म न्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मन्नस्यांदेवहूत्याᳬस्वाहा॥मित्रायसत्यानामधिपतयइदं ॥ ॐवरुणोपामधिपतिः समावत्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मन्नस्यांदेवहूत्याᳬस्वाहा ॥ ॐवरुणायापामधिपतयइदं ॥ समु द्रःस्रोत्यानामधिपतिःसमावत्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मन्नस्यांदेवहूत्याᳬस्वाहा ॥ समुद्रायस्रो त्यानामधिपतयइदं॥ॐअन्नᳬसाम्राज्यानामधिपतितन्मावत्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मन्नस्यांदे वहूत्याᳬस्वाहा॥अन्नायसाम्राज्यानामधिपतयइदं ॥ ॐसोमओषधीनामधिपतिःसमावत्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यांदेवहूत्याᳬस्वाहा॥सोमायओषधीनामधिपतयइदं ॥ ॐसविताप्रसवानामधिपतिःसमावत्वस्मिन्ब्रह्म न्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मन्नस्यांदेवहूत्याᳬस्वाहा॥सवित्रेप्रसवानामधिप० ॥ॐरुद्रःपशूनामधिपतिःसमा वत्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मन्नस्यांदेवहूत्याᳬस्वाहा ॥ रुद्रायपशूनामधिपत० ॥ उदकस्पर्शः ॥ ॐत्वष्टारूपाणामधिपतिःसमावत्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मन्नस्यांदेवहूत्याᳬस्वाहा ॥ त्वष्ट्रेरूपा

णामधिपतयइदं ॥ ॐ विष्णुःपर्वतानामधिपतिःसमावत्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मन्नस्यांदेवहूत्या
ᳪस्वाहा ॥ विष्णवेपर्वतानामधिपतयइदं ॥ मरुतोगणानामधिपतयस्तेमावंत्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायाम
स्मिन्कर्मन्नस्यांदेवहूत्याᳪस्वाहा ॥ मरुद्भ्योगणानामधिपतिभ्यइदं ॥ प्राचीनावीती ॥ पितरःपितामहाःपरेवरेततास्ततामहाइह
मावत ॥ अस्मिन्ब्रह्मन्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मन्नस्यांदेवहूत्याᳪस्वाहा ॥ पितृभ्यःपितामहेभ्यःपरेभ्यो
वरेभ्यइदं ॥ यज्ञोपवीती ॥ उदकस्पर्शः ॥ ऋताषाडृतधामाग्निर्गंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ अग्नयेगंधर्वायेदं ॥ तस्यौ
षधयोप्सरसऊर्जोनामताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा ॥ ओषधीभ्योप्सरोभ्यइदं ॥ सᳪहितोविश्वसामासूर्योगंधर्वःसइदंब्रह्म
क्षत्रंपातुतस्मैस्वाहा ॥ सूर्यायगंधर्वायेदं ॥ तस्यमरीचयोप्सरसआयुवोनामताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा ॥ मरीचिभ्योप्सरो
भ्यइदं ॥ सुषुम्नःसूर्यरश्मिश्चंद्रमागंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ चंद्रमसेगंधर्वायेदं ॥ तस्यनक्षत्राण्यप्सरसोबेकुरयोना
मताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा ॥ नक्षत्रेभ्योप्सरोभ्यइदं ॥ भुज्युःसुपर्णोयज्ञोगंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ यज्ञाय
गंधर्वायेदं ॥ तस्यदक्षिणाअप्सरसःस्तवानामताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा ॥ दक्षिणाभ्योप्सरोभ्यइदं ॥ प्रजापतिर्विश्वकर्मा
मनोगंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ मनसेगंधर्वायेदं ॥ तस्यर्क्सामान्यप्सरसोवह्नयोनामताइदंब्रह्मक्षत्रंपातुताभ्यःस्वा
हा ॥ ऋक्सामभ्योप्सरोभ्यइदं ॥ इषिरोविश्वव्यचावातोगंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ वातायगंधर्वायेदं ॥ तस्यापो
प्सरसोमुदानामताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा ॥ अद्भ्योप्सरोभ्यइदं ॥ भुवनस्यपतेयस्यतउपरिगृहाइहच ॥ सनोरास्वाज्यानिᳪ
रायस्पोषᳪसुवीर्यᳪसंवत्सरीणाᳪस्वस्तिᳪस्वाहा ॥ भुवनस्यपत्यइदं ॥ परमेष्ठ्यधिपतिर्मृत्युर्गंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥

मृत्यवेगंधर्वायेदं ॥ तस्यविश्वम्प्सरसोभुवोनामताइदंब्रह्मक्षत्रंपांतुताभ्यःस्वाहा ॥ विश्वसाअप्सरोभ्यइदं ॥ सुक्षितिःसुभूतिर्भद्रकृत्सुवर्वान्पर्जन्योगंधर्वःसइदंब्रह्मक्षत्रंपांतुतस्मैस्वाहा ॥ पर्जन्यायगंधर्वायेदं ॥ तस्यंविद्युतोप्सरसोरुचोनामताइदंब्रह्मक्षत्रंपांतुताभ्यःस्वाहा ॥ विद्युद्भ्योप्सरोभ्यइदं ॥ दूरेहेतिरमृडयोमृत्युर्गंधर्वःसइदंब्रह्मक्षत्रंपांतुतस्मैस्वाहा ॥ अमृडयायमृत्यवेगंधर्वायेदं ॥ तस्यंप्रजाअप्सरसोभीरुवोनामताइदंब्रह्मक्षत्रंपांतुताभ्यःस्वाहा ॥ प्रजाभ्योप्सरोभ्यइदं ॥ चारुःकृपणकाशीकामोगंधर्वःसइदंब्रह्मक्षत्रंपांतुतस्मैस्वाहा ॥ कामायगंधर्वायेदं ॥ तस्याधयोप्सरसःशोचयंतीर्नामताइदंब्रह्मक्षत्रंपांतुताभ्यःस्वाहा ॥ आधिभ्योप्सरोभ्यइदं ॥ सनोभुवनस्यपतेयस्यंतउपरिगृहाइहच ॥ उरुब्रह्मणेस्मैक्षत्रायमहिशर्मयच्छस्वाहा ॥ सनोभुवनस्यपत्यइदं ॥ यदस्यकर्मणोत्यरीरिचंयद्वान्यूनमिहाकरं ॥ अग्निष्टत्स्विष्टकृद्विद्वान्त्सर्वंꣳस्विष्टंꣳसुहुतंकरोतुमे ॥ अग्नयेस्विष्टकृतेसुहुतहुतेसर्वहुतआहुतीनांकामानाꣳसमर्धयित्रेस्वाहा ॥ अग्नयेस्विष्टकृतइदं ॥ अथत्रिवृदन्नहोमः ॥ ॐ अग्नयेस्वा० अग्नयइदं १ सोमायस्वा० सोमायेदं २ अग्नयेन्नादायस्वा० अग्नयेन्नादायेदं ३ अग्नयेन्नपतयेस्वा० अग्नयेन्नपतयइदं ४ प्रजापतयेस्वा०प्रजापतयइ० ५ विश्वेभ्योदेवेभ्यःस्वा० विश्वेभ्योदेवेभ्य० ६ सर्वाभ्योदेवताभ्यःस्वा० सर्वाभ्योदेवताभ्यइदं ७ अग्नयेस्विष्टकृतेस्वा०अग्नयेस्विष्टकृतइ० ८ अग्नेरुत्तरतोदर्भानास्तीर्यहविःशेषेणबलिंकरोति ॥ वास्तुपतयेस्वा० वास्तुपतयइदं ९ तूष्णीमंतेपरिषेकः ॥ त्रिवृदन्नहोमाख्यस्यकर्मणः पुण्याहंभवंतोब्रुवंतु स्वस्ति० ऋद्धिं० पुण्याहवाचनफलसमृद्धिरस्त्वितिभवंतोब्रुवंतु ॥ शुल्वप्रहरणं ॥ रुद्रायपशुपतयेस्वाहा ॥ रुद्रायपशुपतयइदं ॥ उदकस्पर्शः ॥ परिध्यंजनं मध्यमं दक्षिणं उत्तरं

१ अयंत्रिवृदन्नहोमोमाहेश्वर्यादौपृथगेवकार्यइतिप्रतिपादितमस्तिपरंतुतंत्रानुष्ठानस्यप्रचुरप्रचारादत्रैवन्यस्तः ॥

च ॥ परिसमूहनं ॥ यथाहतद्वसवइतिपूर्ववत्परिषेकः ॥ यथाहतद्वसवोगौर्यचित्पदिषितामसुंचतायजत्राः ॥ एवात्वमस्मत्प्रमुं
चाव्यंहः प्रातार्यग्नेप्रतरान्नआयुः ॥ बर्हिर्भ्यः परिस्तरणेभ्यश्चकानिचित्तृणान्यादायदर्व्यामग्राण्यनक्ति ॥ मध्यानिमूलानि
चाज्यस्थाल्यां ॥ अग्राणिदर्व्यांमध्यानिमूलानिचाज्यस्थाल्यां ॥ मूलानिमध्यानिचाज्यस्थाल्यांअग्राणिदर्व्यां ॥ एकंतृण
मवशिष्यसर्वंप्रहृत्य ॥ सर्पेभ्यःस्वाहा ॥ सर्पेभ्यइदं ॥ एतदेतदेतत् ॥ घ्राणं चक्षुः पृथिवीं चालभ्यापउपस्पृश्यपरिधी
न्प्रहरति मध्यमंमध्येकरोति सहेतरौप्रहरति ॥ अनाज्ञातंयदाज्ञातंयज्ञस्यक्रियतेमिथु ॥ अग्नेतदस्यकल्पयत्वंहिवेत्थयथा
तथंस्वाहा ॥ अग्नयइदं ॥ पुरुषसंमितोयज्ञोयज्ञः पुरुषसंमितः ॥ अग्नेतदस्यकल्पयत्वंहिवेत्थयथातथंस्वाहा ॥ अग्नयइदं ॥
यत्पाकत्रामनसादीनदक्षानयज्ञस्यमन्वतेमर्तासः ॥ अग्निष्टद्धोताक्रतुविद्विजानन्यजिष्ठोदेवांऋतुशोयजातिस्वाहा ॥ अग्नय
इदं ॥ त्वंनोअग्नेवरुणस्यविद्वान्देवस्यहेडोवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषांसिप्रमुमुग्ध्यस्मत्स्वाहा ॥
अग्नीवरुणाभ्यामिदं ॥ सत्वंनोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ ॥ अवयक्ष्वनोवरुणंरराणोवीहिमृडीकंसुहवोनए
धिस्वाहा ॥ अग्नीवरुणाभ्यामिदं ॥ यतइंद्रभयामहेततोनोअभयंकृधि ॥ मघवञ्छग्धितवतन्नऊतयेविद्विषोविमृधोजहिस्वा
हा ॥ इंद्रायेदं ॥ स्वस्तिदाविशस्पतिर्वृत्रहाविमृधोवशी ॥ वृषेंद्रःपुरएतुनःस्वस्तिदाअभयंकरःस्वाहा ॥ अभयंकरायेदं ॥ त्र्यंबकं
यजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात्स्वाहा ॥ त्र्यंबकायेदं ॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥
समूढमस्यपांसुरेस्वाहा ॥ विष्णवइदं ॥ ॐभूःस्वाहा ॥ अग्नयइदं ॥ ॐ भुवःस्वाहा ॥ वायवइदं ॥ ॐसुवःस्वाहा ॥ सूर्या
येदं ॥ ॐमहःस्वाहा ॥ बृहस्पतयइदं ॥ ॐजनःस्वाहा ॥ वरुणायेदं ॥ ॐतपःस्वाहा ॥ इंद्रायेदं ॥ ॐसत्यंस्वाहा ॥

विश्वेभ्योदेवेभ्यइदं ॥ अस्मिन्कर्मणिकेशकीटकपतंगपिपीलिकामक्षिकाद्युपघातदोषपरिहारार्थंद्वेमिंदाहुतीहोष्यामि ॥ ॐय्यन्मे आत्मनोमिंदाभूदग्निस्तत्पुनराहार्जातवेदाविचर्षणिः स्वाहा ॥ मिंदवतेग्नयइदं ॥ पुनरग्निश्चक्षुरदात्पुनरिंद्रोबृहस्पतिः ॥ पुनर्मे अश्विनायुवंचक्षुराधत्तमक्ष्योः स्वाहा ॥ मिंदवतेग्नयइदं ॥ अस्मिन्कर्मणिस्वराक्षरपदवर्णभ्रेषन्यूनातिरिक्तदोषपरिहारार्थंआभिर्गीर्भिरित्याज्याहुतिंहोष्यामि॥ आभिर्गीर्भिर्यदतोनऊनमाप्यायय हरिवोवर्धमानः॥ यदास्तोतृभ्योमहिगोत्रारुजासिभूयिष्ठभाजोअधतेस्यामस्वाहा ॥ इंद्रायहरिवतइदं॥ सांगतासिद्ध्यर्थंसर्वप्रायश्चित्तंकरिष्ये ॥ भूर्भुवः सुवःस्वाहा ॥ प्रजापतयइदं ॥ वसुभ्योरुद्रेभ्यआदित्येभ्यः स्वाहा ॥ वसुभ्योरुद्रेभ्यआदित्येभ्यः सँस्रावभाग्भ्यइदं ॥ बर्हिषिपूर्णपात्रंनिनयेत् ॥ सर्दसिसन्मेभूयाः सर्वमसिसर्वमेभूयाः पूर्णमसिपूर्णमेभूयाअक्षितमसिमामेक्षेष्ठाः प्राच्यांदिशिदेवाऋत्विजोमार्जयंतां॥ दक्षिणायांदिशिमासाःपितरोमार्जयंतां॥ प्रतीच्यांदिशिगृहाःपशवोमार्जयंतां ॥ उदीच्यांदिश्यापओषधयोवनस्पतयोमार्जयंतां ॥ ऊर्ध्वायांदिशियज्ञः सँवत्सरोयज्ञपतिर्मार्जयतां ॥ समुद्रंवःप्रहिणोम्यक्षिताःस्वांयोनिमपिगच्छत ॥ अच्छिद्रःप्रजयाभूयासंमापरासेचिमत्पयः ॥ यदप्सुतेसरस्वतिगोष्वश्वेषुयन्मधु ॥ तेनमेवाजिनीवतिमुखमङ्धिसरस्वति ॥ मुखंविमृष्टे ॥ कृतस्यउत्सर्जनहवनाख्यस्यकर्मणः सांगतासिद्ध्यर्थंब्रह्मणेपूर्णपात्रप्रतिनिधिभूतांदक्षिणांदातुमहमुत्सृज्ये ॥ ब्रह्माणंविसर्जयामि ॥ परिस्तरणान्युत्तरेविसृजेत् ॥ अदितेन्वमँस्थाः ॥ अनुमतेन्वमँस्थाः ॥ सरस्वतेन्वमँस्थाः ॥ देवसवितःप्रासावीः॥ इतिपूर्ववत्परिषिच्य ॥ उपतिष्ठते ॥ यज्ञनमस्तेयज्ञ ॥ नमोनमश्चतेयज्ञ ॥ शिवेनमेसंतिष्ठस्व ॥ स्योनेनमेसंतिष्ठस्व ॥ सुभूतेनमेसंतिष्ठस्व ॥ ब्रह्मवर्चसेनमेसंति

ष्ठस्व ॥ यज्ञस्यर्धिमनुसंतिष्ठस्व ॥ उपतेयज्ञनमः ॥ उपतेनमः ॥ उपतेनमः ॥ अग्नयेनमः ॥ गंधाद्युपचारैःपूजयेत् ॥ अग्ने नयसुपथारायेअस्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठांतेनमउक्तिंविधेम ॥ अग्नयेनमः मंत्रपुष्पं समर्पयामि ॥ स्वस्ति ॥ श्रद्धांमेधांयशःप्रज्ञांविद्यांबुद्धिंश्रियंबलं ॥ आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहन ॥ प्रमादात्कुर्व तांकर्मप्रच्यवेताध्वरेषुयत् ॥ स्मरणादेवतद्विष्णोःसंपूर्णस्यादितिश्रुतिः ॥ प्रायश्चित्तान्यशेषाणितपःकर्मात्मकानिवै ॥ यानि तेषामशेषाणांकृष्णानुस्मरणंपरं ॥ अनेनमयाकृतेनदेशकालाद्यनुसारतःवेदोत्सर्जनहवनेनश्रीभगवान्परमेश्वरःप्रीयतांनमम ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ विष्णवेनमोविष्णवेनमोविष्णवेनमः ॥ इतिवेदोत्सर्जनं ॥

## ॥ ५६ ॥ अथवेदोपाकर्म ॥

आचम्यप्राणानायम्यदेशकालावुत्कीर्त्यममात्मनःश्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंअधीतानांछंदसांअध्येष्यमाणानांस्थानो च्छ्वासादिजनितयातयामतानिरासेनाप्यायनद्वाराश्रीपरमेश्वरप्रीत्यर्थंएभिर्ब्राह्मणैःसहवेदोपाकरणाख्यंकर्मकरिष्ये॥तदंगंगणप तिपूजनंस्थंडिलादिसकलंकर्मकरिष्ये॥गणपतिपूजनंकृत्वास्थंडिलंगोमयेनोपलिप्येत्यादिसर्वंउत्सर्जनवत् ॥ त्रिवृदन्नंनास्ति ॥ वेदोत्सर्जनशब्दस्थानेवेदोपाकरणइत्यूहः ॥ अनेनवेदोपाकरणहवनेनपरमेश्वरःप्रीयतां ॥ कृतस्यकर्मणःसांगतासिद्ध्यर्थंयथाश क्तिब्राह्मणान्भोजयिष्ये ॥ तेभ्योदक्षिणांदातुमहमुत्सृजे ॥ तेनश्रीपरमेश्वरःप्रीयतां ॥ ॥ हरिःॐम् ॥ इषेत्वोर्जेत्वावायवस्थोपा यवस्थदेवोवःसविताप्रार्पयतुश्रेष्ठतमायकर्मणआप्यायध्वमघ्नियादेवभागमूर्जस्वतीःपयस्वतीःप्रजावतीरनमीवाअयक्ष्मामाव

स्तेनईशतमाघशꣳसोरुद्रस्यहेतिःपरिवोवृणक्तुध्रुवाअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि ॥ १ ॥ इषेत्रिचत्वारिꣳशत् ॥
॥ १ ॥ यज्ञस्यघोषदसिप्रत्युष्टꣳरक्षःप्रत्युष्टाअरातयःप्रेयमगाद्धिषणाबर्हिरच्छमनुनाकृतास्वधयावितष्टातआवहंतिकवयःपुर
स्ताद्देवेभ्योजुष्टमिहबर्हिरासदेदेवानांपरिषूतमसिवर्षवृद्धमसिदेवबर्हिर्मात्वान्वङ्मातिर्यक्पर्वतेराध्यासमाच्छेत्तातेमारिषंदेवब
र्हिःशतवल्शंविरोहसहस्रवल्शा ॥ १ ॥ विवयꣳरुहेमपृथिव्याःसंपृचःपाहिसुसंभृतात्वासंभराम्यदित्यैरास्नासींद्राण्यैसंनहनं
पूषातेग्रंथिंग्रंथ्नातुसतेमास्थादिंद्रस्यत्वाबाहुभ्यामुद्यच्छेबृहस्पतेर्मूर्ध्नाहराम्युर्वंतरिक्षमन्विहिदेवंगमममसि ॥ २ ॥ सहस्रवल्शाअ
ष्टात्रिꣳशच्च ॥ २ ॥ शुंधध्वंदैव्यायकर्मणेदेवयज्यायैमातरिश्वनोघर्मोसिद्यौरसिपृथिव्यसिविश्वधायाअसिपरमेणधाम्नादृꣳहस्व
माह्वार्वसूनांपवित्रमसिशतधारंवसूनांपवित्रमसिसहस्रधारꣳहुतस्तोकोहुतोद्रप्सोग्नयेबृहतेनाकायस्वाहाद्यावापृथिवीभ्याꣳसावि
श्वायुःसाविश्वव्यचाःसाविश्वकर्मासंपृच्यध्वमृतावरीरूर्मिणीर्मधुमत्तमामंद्राधनस्यसातयेसोमेनत्वातनच्मींद्रायदधिविष्णोह
व्यꣳरक्षस्व ॥ १ ॥ सोमेनाष्टौच ॥ ॥ ॐआपउंदंतुजीवसेदीर्घायुत्वायवर्चसओषधेत्रायस्वैनꣳस्वधितेमैनꣳहिꣳसीर्देवश्रूरेतानि
प्रवपेस्वस्त्युत्तराण्यशीयापोअस्मान्मातरःशुंधंतुघृतेननोघृतपुवःपुनंतुविश्वमस्मत्प्रवहंतुरिप्रमुदाभ्यःशुचिरापूतएमिसोमस्यतनू
रसितनुवंमेपाहिमहीनांपयोसिवर्चोधाअसिवर्चः ॥ १ ॥ मयिधेहिवृत्रस्यकनीनिकासिचक्षुष्पाअसिचक्षुर्मेपाहिचित्पतिस्त्वापुना
तुवाक्पतिस्त्वापुनातुदेवस्त्वासवितापुनात्वच्छिद्रेणपवित्रेणवसोःसूर्यस्यरश्मिभिस्तस्यतेपवित्रपतेपवित्रेणयस्मैकंपुनेतच्छकेय
मावोदेवासईमहेसत्यधर्माणोअध्वरेयद्वोदेवासआगुरेयज्ञियासोहवामहइंद्राग्नीद्यावापृथिवीआपओषधीस्त्वंदीक्षाणामधिपतिर

सीहमासंतंपाहि ॥ २ ॥ वर्चेओषधीरष्टौर्च ॥ १ ॥ हरिः ॐम् ॥ युंजानःप्रथमंमनस्तत्वायसविताधियः ॥ अग्निंज्योतिर्नि चाय्यपृथिव्याअध्याभरत् ॥ युक्त्वायमनसोदेवान्त्सुवर्यतोधियादिवं ॥ बृहज्ज्योतिःकरिष्यतःसविताप्रसुवातितान् ॥ युक्तेनम नसावयंदेवस्यसवितुःसवे ॥ सुवर्गेयायशक्त्यै ॥ युंजतेमनउतयुंजतेधियोविप्राविप्रस्यबृहतोविपश्चितः ॥ विहोत्रादधेवयुना विदेकइत् ॥ १ ॥ महीदेवस्यसवितुःपरिष्टुतिः ॥ युजेवांब्रह्मपूर्व्यंनमोभिर्विश्लोकायंतिपथ्येवसूराः ॥ शृण्वंतिविश्वेअमृतस्य पुत्राआयेधामानिदिव्यानितस्थुः ॥ यस्यप्रयाणमन्वन्यइद्ययुर्देवादेवस्यमहिमानमर्चतः ॥ यःपार्थिवानिविममेसएतशोरजांसि देवःसवितामहित्वना ॥ देवसवितःप्रसुवयज्ञंप्रसुव ॥ २ ॥ यज्ञपतिंभगायदिव्योगंधर्वः ॥ केतपूःकेतंनःपुनातुवाचस्पति र्वाचमद्यस्वदातिनः ॥ इमंनोदेवसवितर्यज्ञंप्रसुवदेवायुवंसखिविदंसत्राजितंधनजितंसुवर्जितं ॥ ऋचास्तोमंसमर्धयगाय त्रेणरथंतरं ॥ बृहद्गायत्रवर्तनि ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यांगायत्रेणछंदसाददेंगिरस्वदभ्रिरसिनारिः ॥ ३ ॥ असिपृथिव्याःसधस्थादग्निंपुरीष्यमंगिरस्वदाभरत्रैष्टुभेनत्वाछंदसाददेंगिरस्वद्बभ्रिरसिनारिरसित्वयावयंसधस्थआ ग्निंशकेमखनितुंपुरीष्यंजागतेनत्वाछंदसाददेंगिरस्वद्धस्तआधायसविताबिभ्रदभ्रिंहिरण्ययीं ॥ तयाज्योतिरजस्रमिदग्निंखा त्वीनआभरानुष्टुभेनत्वाछंदसाददेंगिरस्वत् ॥४॥ इद्यज्ञंप्रसुवनारिरानुष्टुभेनत्वाछंदसात्रीणिच ॥१॥ ॐम् ॥ अनुमत्यैपुरोडा शमष्टाकपालंनिर्वपति ॥ येप्रत्यंचःशम्यायाअवशीयंते ॥ तंनैर्ऋतमेककपालं ॥ इयंवाअनुमतिः ॥ इयंनिर्ऋतिः ॥ नैर्ऋतेनपूर्वे णप्रचरति ॥ पाप्मानमेवनिर्ऋतिंपूर्वांनिरवदयते ॥ एककपालोभवति ॥ एकधैवनिर्ऋतिंनिरवदयते ॥ यदहुत्वागार्हपत्यईयुः

॥ १ ॥ रुद्रोभूत्वाग्निरनूत्थाय ॥ अध्वर्युंचयजमानंचहन्यात् ॥ वीहिस्वाहाहुतिंजुषाणइत्याह ॥ आहुत्यैवैनंꣳशमयति ॥ नार्तिं
मार्छैत्यध्वर्युर्नयजमानः ॥ एकोल्मुकेनयंति ॥ तद्धिनिर्ऋत्यैभागधेयं ॥ इमांदिशंयंति ॥ एषावैनिर्ऋत्यैदिक् ॥ स्वायामेवदि
शिनिर्ऋतिंनिरवदयते ॥ २ ॥ स्वकृतइरिणेजुहोतिप्रदरेवा ॥ एतद्वैनिर्ऋत्याआयतनं ॥ स्वएवायतनेनिर्ऋतिंनिरवदयते ॥
एषतेनिर्ऋतेभागइत्याह ॥ निर्दिशत्येवैनां ॥ भूतेहविष्मत्यसीत्याह ॥ भूतिमेवोपावर्तते॥मुंचेममꣳहंसइत्याह॥ अꣳहंसएवैनं
मुंचति ॥ अंगुष्ठाभ्यांजुहोति ॥३॥ अंततएवनिर्ऋतिंनिरवदयते ॥ कृष्णंवासःकृष्णतूषंदक्षिणा ॥ एतद्वैनिर्ऋत्यैरूपं ॥ रूपेणैव
निर्ऋतिंनिरवदयते ॥ अप्रतीक्षमायंति ॥ निर्ऋत्याअंतर्हित्यै ॥ स्वाहानमोयइदंचकारेतिपुनरेत्यगार्हपत्येजुहोति॥आहुत्यैवनम
स्यंतोगार्हपत्यमुपावर्तंते ॥ आनुमतेनप्रचरति ॥ इयंवाअनुमतिः ॥४॥ इयमेवास्मैराज्यमनुमन्यते ॥ धेनुर्दक्षिणा॥ इमामेवधे
नुंकुरुते ॥ आदित्यंचरुंनिर्वपति ॥ उभयीष्वेवप्रजास्वभिषिच्यते ॥ दैवीषुचमानुषीषुच ॥ वरोदक्षिणावरोहिराज्यꣳसमृद्ध्यै ॥
आग्नावैष्णवमेकादशकपालंनिर्वपति ॥ अग्निःसर्वादेवताः ॥५॥ विष्णुर्यज्ञः॥ देवताश्चैवयज्ञंचावरुंधे ॥ वामनोवहीदक्षिणा ॥
यद्वही ॥ तेनाग्नेयः ॥ यद्वामनः ॥ तेनवैष्णवःसमृद्ध्यै ॥ अग्नीषोमीयमेकादशकपालंनिर्वपति ॥ अग्नीषोमाभ्यांवाइंद्रोवृत्रम
हन्निति ॥ यदग्नीषोमीयमेकादशकपालंनिर्वपति ॥ ६ ॥ वार्त्रघ्नमेवविजित्यै ॥ हिरण्यंदक्षिणासमृद्ध्यै ॥ इंद्रोवृत्रꣳहत्वा ॥
देवताभिश्चेंद्रियेणचव्यार्ध्यत॥सएतमैंद्राग्नमेकादशकपालमपश्यत्॥ तंनिरवपत्॥ तेनवैसवैदेवताश्चेंद्रियंचावारुंध ॥ यदैंद्राग्न
मेकादशकपालंनिर्वपति ॥ देवताश्चैवतेनेंद्रियंचयजमानोवरुंधे ॥ ऋषभोवहीदक्षिणा ॥ ७ ॥ यद्वही ॥ तेनाग्नेयः ॥ यदै

षभः ॥ तेनैंद्रःसमृद्ध्यै ॥ आग्नेयमष्टाकपालंनिर्वपति ॥ ऐंद्रंदधि ॥ यदाग्नेयोभवति ॥ अग्निर्वैयज्ञमुखं ॥ यज्ञमुखमेवार्द्धिंपुर स्ताद्धत्ते ॥ यदैंद्रंदधि ॥ ८ ॥ इंद्रियमेवावरुंधे ॥ ऋषभोवहीदक्षिणा ॥ यद्वही ॥ तेनाग्नेयः ॥ यदृषभः ॥ तेनैंद्रःसमृद्ध्यै ॥ यावतीर्वैप्रजाओषधीनामहुतानामाश्नन् ॥ ताःपराभवन् ॥ आग्रयणंभवतिहुताद्याय ॥ यजमानस्यापराभावाय ॥ ९ ॥ देवा वाओषधीष्वाजिमयुः ॥ ताइंद्राग्नीउदजयतां ॥ तावेतमैंद्राग्नंद्वादशकपालंनिरवृणातां ॥ यदैंद्राग्नोभवत्युज्जित्यै ॥ द्वादशक पालोभवति ॥ द्वादशमासाःसंवत्सरः ॥ संवत्सरेणैवास्माअन्नमवरुंधे ॥ वैश्वदेवश्चरुर्भवति ॥ वैश्वदेवंवाअन्नं ॥ अन्नमेवा स्मैस्वदयति ॥१०॥ प्रथमजोवत्सोदक्षिणासमृद्ध्यै ॥ सौम्यꣳश्यामाकंचरुंनिर्वपति ॥ सोमोवाअकृष्टपच्यस्यराजा ॥ अकृष्ट पच्यमेवास्मैस्वदयति ॥ वासोदक्षिणा ॥ सौम्यꣳहिदेवतयावासःसमृद्ध्यै ॥ सरस्वत्यैचरुंनिर्वपति ॥ सरस्वतेचरुं ॥ मिथुनमे वावरुंधे ॥ मिथुनौगावौदक्षिणासमृद्ध्यै ॥ एतिवाएषयज्ञमुखादृध्याः ॥ योग्नेर्देवतायाएति ॥ अष्टावेतानिहवीꣳषिभवति ॥ अष्टा क्षरागायत्री ॥ गायत्रोग्निः ॥ तेनैवयज्ञमुखादृध्याअग्नेर्देवतायैनैति ॥११॥ ॥ ३म् ॥ सहवैदेवानांचासुराणांचयज्ञौप्रततावा स्तांवयꣳस्वर्गंलोकमेष्यामोवयमेष्यामइतितेसुराःसंनह्यसहसैवाचरन्ब्रह्मचर्येणतपसैवदेवास्तेसुराअमुह्यꣳस्तेनप्राजानꣳस्तेपरा भवन्तेनस्वर्गंलोकमायन्प्रसृतेनवैयज्ञेनदेवाःस्वर्गंलोकमायन्नप्रसृतेनासुरान्पराभावयन्प्रसृतौहवैयज्ञोपवीतिनोयज्ञोप्रसृतोनुप वीतिनोयत्किंचब्राह्मणोयज्ञोपवीत्यधीतेयजतएवतत्तस्माद्यज्ञोपवीत्येवाधीयीतयाजयेद्यजेतवायज्ञस्यप्रसृत्याअजिनंवासोवाद क्षिणतउपवीयदक्षिणंबाहुमुद्धरतेवधत्तेसव्यमितियज्ञोपवीतमेतदेवविपरीतंप्राचीनावीतꣳसंवीतंमानुषं ॥१॥ गच्छगच्छेतिवि०

## ॥ ऋषिमंडलम् ॥

अगस्त्याः १

ब्रह्मणे. १
प्रजाप. २
बृहस्पत. ३
अग्नये. ४
वायवे. ५
सूर्याय. ६
चंद्रम. ७
नक्षत्रे. ८
इंद्रायरा. ९
यमायरा. १०
वरुणाय. ११
सोमायरा. १२
वैश्रवणाय. १३
वसुभ्यः १४
रुद्रेभ्यः १५
आदित्ये. १६
विश्वेभ्यो. १७
साध्ये. १८
ऋभुभ्यः १९
भृगुभ्यः २०
मरुद्भ्यः २१
अथर्व. २२
अंगिरा. २३

कश्यपा. ७
अरुंधत्यै. ८
वसिष्ठाय. ६
अत्रये. ५
गौतमा. ४
भरद्वा. ३
जमद. २
विश्वामि. १

इतिहास. ५२
अथर्ववे. ५१
सामवे. ५०
यजुर्वे. ४९
ऋग्वेदा. ४८
सावित्र्यै. ४७
सवित्रे. ४६
मृत्यवे. ४५
धात्रे. ४४
धर्त्रे. ४३
कर्त्रे. ४२
त्वष्ट्रे. ४१
इंद्राय. ४०

वसिष्ठाय. ३९
क्रोधाय. ३८
कामाय. ३७
अर्थाय. ३६
धर्माय. ३५
ज्वराय. ३४
काशीश्वराय. ३३
स्कंदाय. ३२
रुद्राय. ३१
विष्णवे. ३०
पराशरा. २९
शिबिंता. २८
त्रिधातवे. २७

त्रिवर्षा. २६
त्र्यरुणा. २५
बभ्रवे. २४
धनंजया. २३
कृतंजया. २२
ऋतंजया. २१
ऋणंजया. २०
गोतमाय. १९
उद्मयाय. १८
हर्यज्वाय. १७
वाजिरत्ना. १६
वामदेवा. १५
बृहदुक्था. १४

सत्ववते. १३
सोमशु. १२
सुतश्र. ११
सुश्रव. १०
सत्यश्र. ९
वाजिश्र. ८
वाजिने. ७
वरूथि. ६
वर्मिणे. ५
तृणबिंदवे. ४
तरुक्षा. ३
जातूक. २
कृष्णद्वै. १

वंशैपायनाय. १
पलिंगवे. २
तित्तिराय. ३
उखाय. ४
आत्रेयाय. ५
कौंडिण्याय. ६
सूत्र. ७
सत्याषाढाय. ८
प्रवच. ९
आचा. १०
ऋषी. ११
वानप्र. १२
ऊर्ध्व. १३
एकप. १४

पित्रे. १
पिताम. २
प्रपिताम. ३
मात्रे. ४
पितामह्यै. ५
प्रपितामह्यै. ६
मातामहा. ७
मातुःपिता. ८
मातुःप्र. ९
मातामह्यै. १०
मातुःपि. ११
मातुःप्र. १२

## ॥ ५७ ॥ अथपर्जन्यसूक्तप्रारंभः ॥

ॐमारुतमसिमरुतामोजोपांधारांभिंधिरमयंतमरुतश्येनमायिनंमनोजवसंवृषणंसुवृक्तिं ॥ येनशर्धंरुग्रमवसृष्टमेतितदश्विनापरिधत्तंस्वस्ति॥ पुरोवातोवर्षंजिन्वरावृत्स्वाहावातावद्वर्षन्नुग्ररावृत्स्वाहास्तनयन्वर्षन्भीमरावृत्स्वाहानशन्यवस्फूर्जंदिद्युद्वर्षंत्वेषरावृत्स्वाहातिरात्रंवर्षन्पूर्तिरावृत् ॥१॥ स्वाहाबहुहायमवृषादितिश्रुतरावृत्स्वाहातपतिवर्षन्विराडावृत्स्वाहावस्फूर्जंदिद्युद्वर्षंभूतरावृत्स्वाहामांदावाशाःशुंध्यूरजिराः ॥ ज्योतिष्मतीस्तमस्वरीरुंदतीःसुफेनाः ॥ मित्रभृतःक्षत्रभृतःसुराष्ट्राइहमावत ॥ वृष्णोअश्वस्यसंदानमसिवृष्ट्यैत्वोपनह्यामि ॥ २ ॥ पूर्तिरावृद्विचत्वारिंशच्च ॥ देवावसव्याअग्नेसोमसूर्य ॥ देवाःशमण्यामित्रावरुणार्यमन् ॥ देवाःसपीतयोपानंपादाशुहेमन् ॥ उद्नोदत्तोदधिंभितदिवःपर्जन्यादंतरिक्षात्पृथिव्यास्ततोनोवृष्ट्यावत ॥ दिवाचित्तमःकृण्वंतिपर्जन्येनोदवाहेन ॥ पृथिवींयद्व्युंदंति ॥ आयंनरःसुदानवोददाशुषेदिवःकोशमचुच्यवुः ॥ विपर्जन्याःसृजंतिरोदसीअनुधन्वनायंति ॥ १ ॥ वृष्टयः ॥ उदीरयथामरुतःसमुद्रतोयूयंवृष्टिंवर्षयथापुरीषिणः ॥ नवोदस्राउपदस्यंतिधेनवःशुभंयातामनुरथाअवृत्सथ ॥ सृजावृष्टिंदिवआद्भिःसमुद्रंपृण ॥ अब्जाअसिप्रथमजाबलमसिसमुद्रियं ॥ उन्नंभयपृथिवींभिंधीदद्व्यिंनभः ॥ उद्नोदिव्यस्यनोदेहीशानोविसृजादृतिं ॥ येदेवादिविभागायेंतरिक्षभागायेपृथिविभागाः ॥ तइमंयज्ञमवंतुतइदंक्षेत्रमाविशंतुतइदंक्षेत्रमनुविविशंतु ॥ २ ॥ यंतिदेवाविंशतिश्च ॥ मारुतमसिमरुतामोजइतिकृष्णंवासःकृष्णतूषंपरिधत्तएतद्वैवृष्ट्यैरूपंसरूपएवभूत्वापर्जन्यंवर्षयतिरमयंतंमरुतश्येनमायिनमितिपश्चाद्वातंप्रातिमीवतिपुरोवातमेवजनयतिवर्ष

स्यावरुध्यैवातनामानिजुहोतिवायुर्वैवृष्ट्याईशेवायुमेवस्वेनभागधेयेनोपधावतिसएवास्मैपर्जन्यंवर्षयत्यष्टौ ॥ १ ॥ जुहोतिचत
स्रोवैदिशश्चतस्रोवांतर्दिशादिग्भ्यएववृष्टिꣳसंप्रच्यावयतिकृष्णाजिनेसंयौतिहविरेवाकरंतर्वेदिसंयौत्यवरुध्यैयतीनामद्यमाना
नाꣳशीर्षाणिपरापतंतेखर्जूराअभवंतेषाꣳरसऊर्ध्वोपतत्तानिकरीराण्यभवन्त्सौम्यानिवैकरीराणिसौम्याखलुवाआहुतिर्दिवोवृ
ष्टिंच्यावयतियत्करीराणिभवंति ॥ २ ॥ सौम्ययैवाहुत्यादिवोवृष्टिमवरुंधेमधुषासंयौत्यपांवाएष ओषधीनाꣳरसोयन्मध्वद्भ्यए
वौषधीभ्योवर्षत्यथौअद्भ्यएवौषधीभ्योवृष्टिंनिनयतिमांदावाशाइतिसंयौतिनामधेयैरेवैनाअच्छैत्यथोयथाब्रूयादसावेहीत्येवमेवै
नानामधेयैरा ॥ ३ ॥ च्यावयतिवृष्णोअश्वस्यसंदानमसिवृष्ट्यैत्वोपनह्यामीत्याहवृषावाअश्वोवृषापर्जन्यःकृष्णइवखलुवैभूत्वा
वर्षतिरूपेणैवैनꣳसमर्धयतिवर्षस्यावरुध्यै ॥ ४ ॥ अष्टौभवंतिनामधेयैरेकान्नत्रिꣳशच्च ॥ देवावसव्यादेवाःशर्मण्यादेवाःसपीत
यइत्याबध्नातिदेवताभिरेवान्वहंवृष्टिमिच्छतियदिवर्षेत्तावत्येवहोतव्यंयदिनवर्षेच्छ्वोभूतेहविर्निर्वपेदहोरात्रेवैमित्रावरुणावहोरा
त्राभ्यांखलुवैपर्जन्योवर्षतिनक्तंवाहिदिवावावर्षतिमित्रावरुणावेवस्वेनभागधेयेनोपधावतितावेवास्मै॥१॥ अहोरात्राभ्यांपर्जन्यं
वर्षयतोग्नयेधावच्छरैपुरोडाशमष्टाकपालंनिर्वपेन्मारुतꣳसप्तकपालꣳसौर्यमेककपालमग्निर्वाइतोवृष्टिमुदीरयतिमरुतःसृष्टांनयं
तियदाखलुवाअसावादित्योन्यङ्रश्मिभिःपर्यावर्ततेथवर्षतिधामच्छदिवखलुवैभूत्वावर्षत्येतावैदेवतावृष्ट्याईशतेताएवस्वेनभा
गधेयेनोपधावतिताः ॥२॥ एवास्मैपर्जन्यंवर्षयंत्युतावर्षिष्यन्वर्षत्येवसृजावृष्टिंदिवआद्भिःसमुद्रंपृणेत्याहेमाश्चैवामूश्चापःसमर्द्धय
त्यथोआभिरेवामूरच्छैत्यब्जाअसिप्रथमजाबलमसिसमुद्रियमित्याहयथायजुरेवैतदुन्नंभयपृथिवीमितिवर्षाह्वांजुहोत्येषावाओषधी

नांवृष्टिवनिस्तयैववृष्टिमाच्यावयतियेदेवादिविभागाइतिकृष्णाजिनमवधूनोतीमएवास्मैलोकाःप्रीताअभीष्टाभवंति ॥३॥ अस्मै धावतितावाएकविंशतिश्च ॥ ॥ इतिपर्जन्यसूक्तैःसहवेदोपाकरणप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ५८ ॥ शांतिपाठः ॥

श्रीः ॥ यस्यवाक्यंसऋषिर्यातेनोच्यतेसादेवतायदक्षरपरिमाणंतच्छंदःसर्वारिष्टशांत्यर्थंशांतिसूक्तानांराक्षोघ्नसूक्तानांपठनेविनियोगः ॥ ॐकृणुष्वपाजःप्रसितिंनपृथ्वींयाहिराजेवामवाँइभेन ॥ तृष्वीमनुप्रसितिंद्रूणानोस्तासिविध्यरक्षसस्तपिष्ठैः ॥ तवभ्रमासआशुयापतंत्यनुस्पृशधृषताशोशुचानः ॥ तपूंष्यग्नेजुह्वापतंगानसंदितोविसृजविष्वगुल्काः ॥ प्रतिस्पशोविसृजतूर्णितमोभवापायुर्विशोअस्याअदब्धः ॥ योनोदूरेअघशंसोयोअंत्यग्नेमाकिष्टेव्यथिरादधर्षीत् ॥ उदग्नेतिष्ठप्रत्यातनुष्वन्यमित्राँओषतात्तिग्महेते ॥ योनोअरातिंसमिधानचक्रेनीचातंधक्ष्यतसंनशुष्कं ॥ ऊर्ध्वोभवप्रतिविध्याध्यस्मदाविष्कृणुष्वदैव्यान्यग्ने ॥ अवस्थिरातनुहियातुजूनांजामिमजामिंप्रमृणीहिशत्रून् ॥ सतेजानातिसुमतिंयविष्ठयईवतेब्रह्मणेगातुमैरत् ॥ विश्वान्यस्मैसुदिनानिरायोद्युम्नान्यर्योविदुरोअभिद्यौत् ॥ सेदग्नेअस्तुसुभगःसुदानुर्यस्त्वानित्येनहविषायउक्थैः ॥ पिप्रीषतिस्वआयुषिदुरोणेविश्वेदस्मैसुदिनासासदिष्टिः ॥ अर्चामितेसुमतिंघोष्यर्वाक्संतेवावाताजरतामियंगीः ॥ स्वश्वास्त्वासुरथामर्जयेमास्मेक्षत्राणिधारयेरनुद्यून् ॥ इहत्वाभूर्याचरेदुपत्मन्दोषावस्तर्दीदिवांसमनुद्यून् ॥ क्रीडंतस्त्वासुमनसःसपेमाभिद्युम्नातस्थिवांसोजनानां ॥ यस्त्वास्वश्वःसुहिरण्योअग्नउपयातिवसुमतारथेन ॥ तस्यत्राताभवसितस्यसखायस्तआतिथ्यमानुषग्जुजोषत् ॥ महोरुजामिबंधुतावचोभिस्तन्मापितुर्गोतमादन्वियाय ॥ त्वंनोअस्यवचसश्चिकिद्धिहोतर्यविष्ठसुक्रतोदमूनाः ॥ अस्वप्नजस्तरणयःसुशेवाअ

तँद्रासोवृकाअश्रंमिष्ठाः ॥ तेपायवंःसुभ्रियँचोनिषद्यान्नेतवनःपांत्वमूर ॥ येपायवोंमामतेयंतेंअग्नेपश्यंतोअंधंदुरितादरंक्षन् ॥ ररक्षतान्त्सुंकृतोंविश्ववेंदादिप्सँतइद्रिपवोनाहदेभुः ॥ त्वयावयश्सधन्यस्त्वोतास्तवप्रणीत्यश्यामवाजान् ॥ उभाशंसासूदय सत्यतातेनुष्टुयाकृणुह्यह्याण ॥ अयातेअग्नेसमिधाविधेमप्रतिस्तोमंशस्यमानंगृभाय ॥ दहाशसोंरक्षसंःपाह्यस्मान्द्रुहोनिदो मित्रमहोअवद्यात् ॥ रक्षोहणंवाजिनमाजिघर्मिमित्रंप्रथिष्ठमुपयामिशर्मं ॥ शिशानोअग्निःक्रतुभिःसमिद्धःसनोदिवासरिषःपा तुनक्तं ॥ विज्योतिषाबृहताभात्यग्निराविर्विश्वानिकृणुतेमहित्वा ॥ प्रादेवीर्मायाःसहतेदुरेवाःशिशीतेशृंगेरक्षसेविनिक्षे॥उतस्वा नासोदिविषँत्वग्नेस्तिग्मायुधारक्षसेहंतवाउं ॥ महाइंद्रोवज्रबाहुःषोडशीशर्मयच्छतु ॥ स्वस्तिनोंमघवाकरोतुहंतुपाप्मानंयोस्मा न्द्वेष्टि ॥ सजोषाइंद्रसगणोमरुद्भिःसोमंपिववृत्रहन्छूरविद्वान् ॥ जहिशत्रूंरपमृधोनुदस्वाथाभयंकृणुहिविश्वतोनः ॥ त्रातारमिं द्रमवितारमिंद्रंहवेंहवेसुहवंशूरमिंद्रं ॥ हुवेनुशक्रंपुरुहूतमिंद्रंस्वस्तिनोंमघवाधात्विंद्रः ॥ यतइंद्रभयामहेततोनोअभयंकृ धि ॥ मघवन्छग्धितवतन्नऊतयेविद्विषोविमृधोंजहि ॥ स्वस्तिदाविशस्पतिर्वृत्रहाविमृधोंवशी ॥ वृषेंद्रःपुरएतुनःस्वस्तिदाअभयं करः ॥ आभिर्गीभिर्यदतोनऊनमाप्यायायहरिवोवर्धमानः ॥ यदास्तोतृभ्योमहिगोत्रारुजासिभूयिष्ठभाजोअधतेस्याम ॥ येदेवाःपु रःसदोग्निनेत्रादक्षिणसदोयमनेत्राःपश्चात्सदःसवितृनेत्राउत्तरसदोवरुणनेत्राउपरिषदोबृहस्पतिनेत्रारक्षोहणस्तेनःपांतुतेनोवंतु तेभ्योनमस्तेभ्यःस्वाहासमूढंरक्षःसंदग्धंरक्षइदमहंरक्षोभिसंदहाम्यग्नयेरक्षोघ्नेस्वाहायमायसवित्रेवरुणायबृहस्पतयेदुवस्व तेरक्षोघ्नेस्वाहाप्रष्टिवाहीरथोदक्षिणादेवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यांरक्षसोवधंजुहोमिहतंरक्षोवधिष्म

रक्षोयद्वस्तेतद्दक्षिणा ॥ पावमानेनत्वास्तोमेनगायत्रस्यवर्तन्योपाꣳशोर्वीर्येणदेवस्त्वासवितोत्सृजतुजीवातवेजीवनस्यायैबृहद्रथं
तरयोस्त्वास्तोमेनत्रिष्टुभोवर्तन्याशुक्रस्यवीर्येणदेवस्त्वासवितोत्सृजतुजीवातवेजीवनस्यायाअग्नेस्त्वामात्रयाजगत्यैवर्तन्याग्रय
णस्यवीर्येणदेवस्त्वासवितोत्सृजतुजीवातवेजीवनस्यायाइममग्नआयुषेवर्चसेकृधितिग्मंꣳरेतोवरुणसोमराजन् ॥ मातेवास्माअदि
तेशर्मयच्छविश्वेदेवाजरदष्टिर्यथासत्॥अग्निरायुष्मान्त्सवनस्पतिभिरायुष्मान्तेनत्वायुषायुष्मंतंकरोमि ॥ सोमआयुष्मान्त्सओ
षधीभिरायुष्मान्तेनत्वायुषायुष्मंतंकरोमि ॥यज्ञआयुष्मान्त्सदक्षिणाभिरायुष्मान्तेनत्वायुषायुष्मंतंकरोमि ॥ ब्रह्मायुष्मत्तद्ब्राह्म
णैरायुष्मत्तेनत्वायुषायुष्मंतंकरोमि॥ देवाआयुष्मंतस्तेमृतेनायुष्मंतस्तेनत्वायुषायुष्मंतंकरोमि ॥१॥ नाभापृथिव्याःसमिधानम
ग्निꣳरायस्पोषायबृहतेहवामहे ॥ इरंमदंबृहदुक्थंयजत्रंजेतारमग्निंपृतनासुसासहिं॥याःसेनाअभीत्वरीराव्याधिनीरुगणाउत ॥
येस्तेनायेचतस्कारास्ताꣳस्तेअग्नेपिदधाम्यास्ये ॥ दꣳष्ट्राभ्यांमलिम्लून्जंभ्यैस्तस्कराꣳउत ॥ हनूभ्याꣳस्तेनान्भगवस्ताꣳस्त्वं
खादसुखादितान् ॥ येजनेषुमलिम्लवस्तेनासस्तस्करावने ॥ येकक्षेष्वघायवस्ताꣳस्तेदधामिजंभयोः ॥ योअस्मभ्यमराती
याद्यश्चनोद्वेषतेजनः ॥ निंदाद्योअस्मान्दिप्साच्चसर्वंतंमस्मसाकुरु ॥ सꣳशितंमेब्रह्मसꣳशितंवीर्यंबलं ॥ सꣳशितंक्षत्रंजि
ष्णुयस्याहमस्मिपुरोहितः ॥ उदेषांबाहूअतिरमुद्वर्चउदूबलं ॥ क्षिणोमिब्रह्मणामित्रानुन्नयामिस्वाꣳअहं ॥ दृशानोरुक्मउ
र्व्याव्यद्यौदुर्मर्षमायुःश्रियेरुचानः ॥ अग्निरमृतोअभवद्वयोभिर्यदेनंद्यौरजनयत्सुरेताः ॥ विश्वारूपाणिप्रतिमुंचतेकविःप्रासा
वीद्भद्रंद्विपदेचतुष्पदे ॥ विनाकमख्यत्सवितावरेण्योनुप्रयाणमुषसोविराजति ॥ नक्तोषासासमनसाविरूपेधापयेतेशिशुमेकꣳ
समीची ॥ द्यावाक्षामारुक्मोअंतर्विभातिदेवाअग्निंधारयन्द्रविणोदाः ॥ सुपर्णोसिगरुत्मान्त्रिवृत्तेशिरोगायत्रंचक्षुस्तोमआत्मासा

मंतेतनूर्वामदेव्यंबृहद्रथंतरेपक्षौयंज्ञायज्ञियंपुच्छंछंदांꣳस्यंगानिधिष्णियाःशफायजूꣳषिनाम ॥ सुपर्णोसिगरुत्मान्दिवंगच्छसुवः
पत ॥ याजाताओषधयोदेवेभ्यस्त्रियुगंपुरा ॥ मंदामिबभ्रूणामहꣳशतंधामानिसप्तच ॥ शतंवोअंबधामानिसहस्रमुतवोरुहः ॥
अथाशतक्रत्वोयूयमिमंमेअगदंकृत ॥ पुष्पावतीःप्रसूवतीःफलिनीरफलाउत ॥ अश्वाइवसजित्वरीर्वीरुधःपारयिष्णवः ॥
ओषधीरितिमातरस्तद्वोदेवीरुपब्रुवे ॥ रपांꣳसिविघ्नतीरितरपश्चातयमानाः ॥ अश्वत्थेवोनिषदनंपर्णेवोवसतिःकृता ॥ गोभा
जइत्किलासथयत्सनवथपूरुषं ॥ यदहंवाजयन्निमाओषधीर्हस्तआदधे ॥ आत्मायक्ष्मस्यनश्यतिपुराजीवगृभोयथा ॥ यदोषध
यःसंगच्छंतेराजानःसमिताविव ॥ विप्रःसउच्यतेभिषग्रक्षोहामीवचातनः ॥ निष्कृतिर्नामवोमाताथायूयꣳस्थसंकृतीः ॥ सराः
पतत्रिणीःस्थनयदामयतिनिष्कृत ॥ अन्यावोअन्यामवत्वन्यान्यस्याउपावत ॥ ताःसर्वाओषधयःसंविदानाइदंमेप्रावतावचः॥
उच्छुष्माओषधीनांगावोगोष्ठादिवेरते ॥ धनꣳसनिष्यंतीनामात्मानंतवपूरुष ॥ अतिविश्वाःपरिष्ठास्तेनइवव्रजमक्रमुः ॥
ओषधयःप्राचुच्यवुर्यत्किंचतनुवाꣳरपः ॥ यास्तआतस्थुरात्मानंयाआविविशुःपरुःपरुः ॥ तास्तेयक्ष्मंविबाधंतामुग्रोमध्यमशी
रिव ॥ साकंयक्ष्मप्रपतश्येनेनकिकिदीविना ॥ साकंवातस्यध्राज्यासाकंनश्यनिहाकया ॥ अश्वावतीꣳसोमवतीमूर्जयंतीमुदो
जसं ॥ आविंत्सिसर्वाओषधीरस्माअरिष्टतातये ॥ याःफलिनीर्याअफलाअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुंचं
त्वꣳहसः ॥ याओषधयःसोमराज्ञीःप्रविष्टाःपृथिवीमनु ॥ तासांत्वमस्युत्तमाप्रणोजीवातवेसुव ॥ अवपतंतीरवदन्दिवओषधयः
परि ॥ यंजीवमश्नवामहैनसरिष्यातिपूरुषः ॥ याश्चेदमुपशृण्वंतियाश्चदूरंपरागताः ॥ इहसंगत्यताःसर्वाअस्मैसंदत्तभेषजं ॥
मावोरिषत्खनितायस्मैचाहंखनामिवः ॥ द्विपच्चतुष्पदस्माकꣳसर्वमस्त्वनातुरं ॥ ओषधयःसंवदंतेसोमेनसहराज्ञा ॥ यस्मैकरो

तिब्राह्मणस्तꣳराजन्यारयामसि ॥ नवोनवोभवतिजायमानोह्नांकेतुरुषसामेत्यग्रे ॥ भागंदेवेभ्योविदधात्यायन्प्रचंद्रमास्तिरति
दीर्घमायुः ॥ यमादित्याअꣳशुमाप्यायंतियमक्षितमक्षितयःपिबंति ॥ तेनंनोराजावरुणोबृहस्पतिराप्यायंतुभुवनस्यगोपाः ॥
प्राच्यांदिशित्वमिंद्रासिराजोतोदीच्यांवृत्रहन्वृत्रहासि ॥ यत्रयंतिस्रोत्यास्तज्जितंतेदक्षिणतोवृषभएषिहव्यः ॥ इंद्रोजयातिन
पराजयाताअधिराजोराजसुराजयाति ॥ विश्वाहिभूयाःपृतनाअभिष्टीरुपसद्योनमस्योयथासत् ॥ अस्येदेवप्ररिरिचेमहित्वंदिवः
पृथिव्याःपर्यंतरिक्षात् ॥ स्वराडिंद्रोदमआविश्वगूर्तःस्वरिरमंत्रोववक्षेरणाय ॥ अभित्वाशूरनोनुमोदुग्धाइवधेनवः ॥ ईशान
मस्यजगतःसुवर्दृशमीशानमिंद्रतस्थुषः ॥ त्वामिद्धिहवामहेसातावाजस्यकारवः ॥ त्वांवृत्रेष्विंद्रसत्पतिंनरस्त्वांकाष्ठास्ववतः ॥
यद्यावइंद्रतेशतꣳशतंभूमीरुतस्युः ॥ नत्वावज्रिन्त्सहस्रꣳसूर्याअनुनजातमष्टरोदसी ॥ पिबासोममिंद्रमंदतुत्वायंतेसुषावहर्य
श्वाद्रिः ॥ सोतुर्बाहुभ्याꣳसुयतोनार्वा ॥ रेवतीर्नःसधमादइंद्रेसंतुतुविवाजाः ॥ क्षुमंतोयाभिर्मदेम ॥ उदग्नेशुचयस्तवविज्योतिं
षोदुत्यंजातवेदसꣳसप्तत्वाहरितोरथेवहंतिदेवसूर्य ॥ शोचिष्केशंविचक्षण ॥ चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥
आप्राद्यावापृथिवीअंतरिक्षꣳसूर्यआत्माजगतस्तस्थुषश्च ॥ विश्वेदेवाऋतावृधऋतुभिर्हवनश्रुतः ॥ जुषंतांयुज्यंपयः ॥ विश्वेदेवाः
शृणुतेमꣳहवंमेयेअंतरिक्षेयउपद्यविष्ठ ॥ येअग्निजिह्वाउतवायजत्राआसद्यास्मिन्बर्हिषिमादयध्वं ॥ तच्छंयोरावृणीमहे ॥ गातुं
यज्ञाय ॥ गातुंयज्ञपतये ॥ दैवीस्वस्तिरस्तुनः ॥ स्वस्तिर्मानुषेभ्यः ॥ ऊर्ध्वंजिगातुभेषजं ॥ शंनोअस्तुद्विपदे ॥ शंचतुष्पदे ॥
गणानांत्वागणपतिꣳहवामहेकविंकवीनामुपमश्रवस्तमं ॥ ज्येष्ठराजंब्रह्मणांब्रह्मणस्पतआनःशृण्वन्नूतिभिःसीदसादनं ॥ जातवे
दसेसुनवामसोममरातीयतोनिदहातिवेदः ॥ सनःपर्षदतिदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निः ॥ क्षेत्रस्यपतिनावयꣳहितेने

वजयामसि ॥ गामश्वंपोषयित्न्वासनोमृडातीदृशे ॥ वास्तोष्पतेप्रतिजानीह्यस्मान्त्स्वावेशोअनमीवोभवानः ॥ यत्त्वेमहेप्रतित
न्नोजुषस्वशंनएधिद्विपदेशंचतुष्पदे ॥ आसत्येनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेनादेवोयातिभुव
नाविपश्यन् ॥ आप्यायस्वसमेतुतेविश्वतःसोमवृष्णियं॥ भवावाजस्यसंगथे ॥ अग्निर्मूर्धादिवःककुत्पतिःपृथिव्याअयं ॥ अपाꣳ
रेताꣳसिजिन्वति ॥ उद्बुध्यस्वाग्नेप्रतिजागृह्येनमिष्टापूर्तेसꣳसृजेथामयंच ॥ पुनःकृण्वꣳस्त्वापितरंयुवानमन्वाताꣳसीत्त्वयितंतु
मेतं ॥ बृहस्पतेअतियदर्योअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसर्तप्रजाततदस्मासुद्रविणंधेहिचित्रं ॥ शुक्रंतेअन्यद्य
जतंतेअन्यद्विषुरूपेअहनीद्यौरिवासि ॥ विश्वाहिमायाअवसिस्वधावोभद्रातेपूषन्निहरातिरस्तु ॥ शंनोदेवीरभिष्टयआपोभवंतु
पीतये ॥ शंयोरभिस्रवंतुनः ॥ कयानश्चित्रआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ केतुंकृण्वन्नकेतवेपेशोमर्याअपे
शसे ॥ समुषद्भिरजायथाः ॥ अर्यमणंबृहस्पतिमिंद्रंदानायचोदय ॥ वाचंविष्णुꣳसरस्वतीꣳसवितारंचवाजिनं ॥ सोमꣳराजा
नंवरुणमग्निमन्वारभामहे ॥ आदित्यान्विष्णुꣳसूर्यंब्रह्माणंचबृहस्पतिं ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याꣳ
सरस्वत्यैवाचोयंतुर्यंत्रेणाग्नेस्त्वासाम्राज्येनाभिषिंचामींद्रस्यबृहस्पतेस्त्वासाम्राज्येनाभिषिंचामि ॥ अर्यमायातिवृषभस्तुविष्मा
न्दातावसूनांपुरुहूतोअर्हन् ॥ सहस्राक्षोगोत्रभृद्वज्रबाहुरस्मासुदेवोद्रविणंदधातु ॥ येतेर्यमनबहवोदेवयानाःपंथानोराजन्दि
वआचरंति ॥ तेभिर्नोदेवमहिशर्मयच्छशंनएधिद्विपदेशंचतुष्पदे ॥ बुध्नादग्रमंगिरोभिर्गृणानोविपर्वतस्यदृꣳहितान्यैरत् ॥
रुजद्रोधाꣳसिकृत्रिमाण्येषाꣳसोमस्यतामदइंद्रश्चकार ॥ बुध्नादग्रेणविमिमायमानैर्वज्रेणखान्यतृणंनदीनां ॥ वृथासृजत्पथिभि
र्दीर्घयाथैःसोमस्यतामदइंद्रश्चकार ॥ प्रयोजज्ञेविद्वाꣳअस्यबंधुंविश्वानिदेवोजनिमाविवक्ति ॥ ब्रह्मब्रह्मणउज्जभारमध्यान्नीचा

दुघ्नास्वधयाभिप्रतस्थौ ॥ महान्महीअस्तभायद्विजातोद्यांसद्मपार्थिवंचरजः ॥ सबुध्नादाष्टजनुषाभ्यग्रंबृहस्पतिर्देवतायस्यस म्राट् ॥ बुध्नाद्योअग्रंमभ्यर्त्योजसाबृहस्पतिमाविवासंतिदेवाः ॥ भिनद्वलंविपुरोदर्दरीतिकनिक्रदत्सुवरपोजिगाय ॥ यांसदा सर्वभूतानिस्थावराणिचराणिच ॥ सायंप्रातर्नमस्यंतिसामासंध्याअभिरक्षत्वोंनमः ॥ नमोअस्तुसर्पेभ्योयेकेचपृथिवीमनु ॥ येअंतरिक्षेयेदिवितेभ्यःसर्पेभ्योनमः ॥ येदोरोचनेदिवोयेवासूर्यस्यरश्मिषु ॥ येषामप्सुसदःकृतंतेभ्यःसर्पेभ्योनमः ॥ याइष वोयातुधानानांयेवावनस्पतींरनु ॥ येवाऽवटेषुशेरतेतेभ्यःसर्पेभ्योनमः ॥ अपांयोद्रवणेरसः ॥ तमहमस्माआमुष्यायणाय ॥ तेजसेब्रह्मवर्चसायगृह्णामि ॥ अपांयऊर्मौरसः ॥ तमहमस्माआमुष्यायणाय ॥ ओजसेवीर्यायगृह्णामि ॥ अपांयोमध्यतोरसः ॥ तमहमस्माआमुष्यायणाय ॥ पुष्ट्यैप्रजननायगृह्णामि ॥ अपांयोयज्ञियोरसः ॥ तमहमस्माआमुष्यायणाय ॥ आयुषेदीर्घायुत्वा यगृह्णामि ॥ शंचमेमयश्चमेप्रियंचमेनुकामश्चमेकामश्चमेसौमनसश्चमेभद्रंचमेश्रेयश्चमेवस्यश्चमेयशश्चमेभगश्चमेद्रविणंचमेयंताच मेधर्ताचमेक्षेमश्चमेधृतिश्चमेविश्वंचमेमहश्चमेसंविच्चमेज्ञात्रंचमेसूश्चमेप्रसूश्चमेसीरंचमेलयश्चमऋतंचमेमृतंचमेयक्ष्मंचमेनामयच्च मेजीवातुश्चमेदीर्घायुत्वंचमेनमित्रंचमेभयंचमेसुगंचमेशयनंचमेसूषाचमेसुदिनंचमे ॥ नमोब्रह्मणेनमोअस्त्वग्नयेनमःपृथिव्यैनम ओषधीभ्यः ॥ नमोवाचेनमोवाचस्पतयेनमोविष्णवेबृहतेकरोमि ॥ इतित्रिः ॥ ॐशांतिःशांतिःशांतिः ॥ कृणुष्वपाजोमहा न्त्सजोषात्रातारमिंद्रंयतइंद्रभयामहेस्वस्तिदाभिर्गीर्भिर्येदेवाःपावमानेनाग्निरायुष्मान्नाभापृथिव्यायाजातानवोनवस्तच्छंयोर्ग णानांत्वार्यमणमर्यमायाति ॥ ॥ इतिशांतिपाठःसमाप्तः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ५९ ॥ महालयश्राद्धप्रयोगः ॥



श्रीः ॥ आचम्यपवित्रपाणिः ॥ पुवित्रंवंतुःपरिवाजमासंतेपितैषांप्रत्नोअभिरक्षतिव्रतं ॥ मुहःसंमुद्रंवरुणस्तिरोदधेधीराइच्छेकुर्धरुणेष्वारभं ॥ ऊर्ध्वकेशिविरूपाक्षिमांसशोणितभोजने ॥ तिष्ठदेविशिखाबंधेचामुंडेह्यपराजिते ॥ अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं ॥ सर्वेषामविरोधेनश्राद्धकर्मसमारभे ॥ प्राणानायम्य ॥ पितृदेवताभ्योनमः ॥ निहन्मिसर्वंयदमेध्यवद्भवेद्धताश्चसर्वेसुरदानवामया ॥ रक्षांसियक्षाश्चपिशाचगुह्यकाहतामयायातुधानाश्चसर्वे ॥ पूर्वेकुशयवान्क्षिपेत् ॥ अपसव्यं ॥ तिलारक्षंत्वसुरान्दर्भारक्षंतुराक्षसान् ॥ पंक्तिंवैश्रोत्रियोरक्षेदतिथिःसर्वरक्षकः ॥ सुरक्षकः ॥ दक्षिणेकुशतिलान्क्षिपेत् ॥ सव्यं ॥ अपवित्रःपवित्रोवासर्वावस्थांगतोपिवा ॥ यःस्मरेत्पुंडरीकाक्षंसबाह्याभ्यंतरःशुचिः ॥ सर्वंशुचि ॥ आत्मानंमार्जयेत् ॥ अपसव्यं ॥ श्राद्धभूमौगयांध्यात्वाध्यात्वादेवंगदाधरम् ॥ वस्वादींश्चपितॄन्ध्यात्वाततःश्राद्धंप्रवर्तये ॥प्रवर्तय॥ उदीरतामवरउत्परासउन्मध्यमाःपितरःसोम्यासः ॥ असुंयईयुरवृकाऋतज्ञास्तेनोवंतुपितरोहवेषु ॥ आगच्छंतुश्राद्धकालेपित्रादयः । सव्यंविश्वैर्देवैःसहविष्णवेनमः ॥ विष्णुर्विष्णुः श्रीमद्भगवतोमहापुरुषस्येत्यादिश्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं ॥ धुरिलोचनसंज्ञकानांविश्वेषांदेवानां ॥ अपसव्यं ॥ अस्मत्पितृपितामहप्रपितामहानांअमुकशर्मणांगोत्राणांवसुरुद्रादित्यस्वरूपाणांअस्मन्मातृपितामहीप्रपितामहीनांअ



---

१ संबंधगोत्रनामभिरितिवाक्यात् अमुकगोत्राणां अमुकशर्मणां वसु० मितिपाठःश्रेयान् तथा सकारेणतुवक्तव्यंगोत्रंसर्वत्रधीमताइतिवाक्यात् अमुकसगोत्राणामित्यपि ।

मुकदानांगोत्राणांवसुरुद्रादित्यस्वरूपाणांअस्मत्सापत्नमातुःदायाःगोत्रायाःवसुरूपायाःअस्मन्मातामहमातुःपितामहमातुःप्रपितामहानांअमुकशर्मणांगोत्राणांवसुरुद्रादित्यस्वरूपाणां अस्मन्मातामहीमातुःपितामहीमातुःप्रपितामहीनांअमुकदानांगोत्राणां वसुरुद्रादित्यस्वरूपाणांअस्मत्पत्न्याःदायाःगोत्रायाःवसुरूपायाःअस्मत्पुत्रस्यशर्मणःगोत्रस्यसपत्नीकस्यवसुरूपस्यअस्मद्दुहितुः दायाःगोत्रायाःसभर्तृकायाःवसुरूपायाः अस्मत्पितृव्यस्यशर्मणःगोत्रस्यसपत्नीकस्यसापत्यस्यवसुरूपस्य अस्मन्मातुलस्यशर्मणः गोत्रस्यसपत्नीकस्यसापत्यस्यवसुरूपस्य अस्मद्भ्रातुःशर्मणःगोत्रस्यसपत्नीकस्यसापत्यस्यवसुरूपस्य अस्मत्पितृभगिन्याःदायाः गोत्रायाःसभर्तृकायाःसापत्यायाःवसुरूपायाःअस्मन्मातृभगिन्याःदायाः गो०सभर्तृकायाःसापत्यायाःवसुरूपायाः अस्मद्भगिन्याःदायाः गो०सभर्तृकायाःसापत्यायाःवसुरूपायाःअस्मच्छ्वशुरस्यशर्मणःगोत्रस्यसपत्नीकस्यसापत्यस्यवसुरूपस्य अस्मद्गुरोःशर्मणःगोत्रस्यसपत्नीकस्यसापत्यस्यवसुरूपस्यअस्मच्छिष्यस्यशर्मणःगोत्रस्यसपत्नीकस्यसापत्यस्यवसुरूपस्य अस्मदाप्तस्यअमुकशर्मणःगोत्रस्य वसुरूपस्य एतेषांश्रेयोर्थंमोक्षार्थंतृप्त्यर्थंदेशकालाद्यनुसारतःपित्रादीनांसकृन्महालयापरपक्षिकश्राद्धं सदैवंसाग्नौकरणंसपिंडंपार्वणैकोद्दिष्टेनविधिनाअन्नेनहविषासद्यःकरिष्ये॥तदंगत्वेनगृहभांडादिशुद्ध्यर्थंयवतिलोदकाभिमंत्रणंप्रायश्चित्तसूक्तजपंचकरिष्ये॥कुरुष्व ताम्रपात्रेयवोदकंरजतपात्रेतिलोदकंपूरयित्वा॥ इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्णिया॥ असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपह्वये श्रियम् ॥ 

---

१ अनेकामातरोयस्यश्राद्धेचापरपक्षिके । अर्घ्यदानंपृथक्कुर्यात्पिंडमेकंतुनिर्वपेत् । इतिवाक्यात् अस्मन्मातृ-मातृपितामहीप्रपितामहीनांगंगायमुनापार्वतीराधादानां अमुकगोत्राणां वसु० इतिमातुःसहैवोच्चारोनपृथक् । २ मातामहादीनांसपत्नीकत्वमितिबह्वः ।

ह्वयेश्रियं ॥ गंधंक्षिस्त्वा ॥ शरासःकुशरासोदर्भासःसैर्याउत ॥ मौंजाअदृष्टावैरिणाःसर्वेसाकंन्यलिप्सत ॥ कुशान्क्षिस्त्वा ॥ यवोसि धान्यराजोवावारुणोमधुसंयुतः॥ निर्णोदःसर्वपापानांपवित्रमृषिभिःस्मृतम् ॥ यवान् ॥ तिंलोसिसोमदेवत्योगोसवेदेवनिर्मितः ॥ प्रत्नवद्भिःप्रत्तःस्वधयापितॄनिमान्लोकान्प्रीणयाहिनःस्वधानमः ॥ तिलान् ॥ यवतिलोदकदेवताभ्यःइदंगंधंतुलसीपत्रंचसर्वेउप चाराःयवतिलैःसफलैःसहिरण्यैःसंपूर्णाःसंतु ॥ कूष्मांडमंत्रान्पुरुषसूक्तंचजस्त्वा॥ कूष्मांडमंत्राः॥कूश्मांडैर्जुहुयाद्योपूतइवमन्येत यथास्तेनोयथाभ्रूणहैवमेषभवतियोयोनौरेतःसिंचतियदर्वाचीनमेनोभ्रूणहत्यायास्तस्मान्मुच्यतेयावदेनोदीक्षामुपैतिदीक्षितए तैःसंततिर्जुहोतिसंवत्सरंदीक्षितोभवतिसंवत्सरादेवात्मानंपुनीतेमासंदीक्षितोभवतियोमासःससंवत्सरःसंवत्सरादेवात्मानंपुनी तेचतुर्विंशतिंरात्रीर्दीक्षितोभवतिचतुर्विंशतिरर्धमासाःसंवत्सरःसंवत्सरादेवात्मानंपुनीतेद्वादशरात्रीर्दीक्षितोभवतिद्वादश मासाःसंवत्सरःसंवत्सरादेवात्मानंपुनीतेषड्रात्रीर्दीक्षितोभवतिषड्वाऋतवःसंवत्सरःसंवत्सरादेवात्मानंपुनीतेतिस्रोरात्रीर्दीक्षितो भवतित्रिपदागायत्रीगायत्रियाएवात्मानंपुनीतेनमांसमश्नीयान्नस्त्रियमुपेयान्नोपर्यासीतजुगुप्सेतानृतात्पयोब्राह्मणस्यव्रतंयवा गूराजन्यस्यामिक्षावैश्यस्याथोसौम्येप्यध्वरएतद्व्रतंब्रूयाद्यदिमन्येतोपदस्यामीत्योदनंधानाःसक्तून्घृतमित्यनुव्रतयेदात्मनोनुप दासाय॥८॥ सहस्रं० शुचीवोहव्यामरुतःशुचीनांशुचिंहिनोम्यध्वरंशुचिभ्यः॥ऋतेनसत्यमृतसापआयन्शुचिजन्मानःशुच यःपावकाः॥अग्निःशुचिव्रततमःशुचिर्विप्रःशुचिःकविः॥शुचीरोचतआहुतः ॥ उदग्नेशुचयस्तवशुक्राभ्राजंतईरते॥ तवज्योतींषि व्यर्चयः॥ अपवित्रःपवित्रोवासर्वावस्थांगतोपिवा ॥ यःस्मरेत्पुंडरीकाक्षंसबाह्याभ्यंतरःशुचिः ॥ सर्वंशुचि ॥ सर्वाणिस्थलानिशु चीनिभवंतु ॥ संतुशुचीनि॥पाकप्रोक्षणं॥यद्देवादेवहेळनंदेवासश्चकृमावयं॥आदित्यास्तस्मान्मामुंचतर्तस्यर्तेनमामित ॥ देवाजी

वनकाम्यायद्वाचानृतमूदिम॥ तस्मान्नइहमुंचतविश्वेदेवाःसजोषसः॥ ऋतेनद्यावापृथिवीऋतेनत्वंसरस्वति॥कृतान्नःपाह्येनसो यत्किंचानृतमूदिम ॥ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि॥ धियोयोनःप्रचोदयात्॥ विहितमंत्रैःपाकादीनांपवित्रतास्तु ॥ सर्वेपा काःशुचयोभवंतु॥ पाकप्रोक्षणंविधिवदस्तु ॥ अस्तुविधिवत्॥ हस्तेकुशान्हिरण्यंचगृहीत्वा॥ समस्तसंपत्समवाप्तिहेतवःसमुत्थि तापत्कुलधूमकेतवः ॥ अपारसंसारसमुद्रसेतवःपुनंतुमांब्राह्मणपादपांसवः ॥ आपद्घनध्वांतसहस्रभानवःसमीहितार्थार्पणकाम धेनवः ॥ समस्ततीर्थांबुपवित्रमूर्तयोरक्षंतुमांब्राह्मणपादपांसवः ॥ विप्रौघदर्शनात्क्षिप्रंक्षीयंतेपापराशयः ॥ वंदनान्मंगलावाप्तिर र्चनादच्युतंपदं ॥ आधिव्याधिहरंनॄणांमृत्युदारिद्र्यनाशनं॥ श्रीपुष्टिकीर्तिदंवंदेविप्रश्रीपादपंकजं॥ यावंतीर्वैदेवतास्ताःसर्वावेद विदिब्राह्मणेवसंतितस्माद्ब्राह्मणेभ्योवेदविद्भ्योदिवेदिवेनमस्कुर्यान्नाश्लीलंकीर्तयेदेताएवदेवताःप्रीणाति॥ अपसव्यं॥ अक्रोधनैः शौचपरैःसततंब्रह्मचारिभिः ॥ भवितव्यंभवद्भिश्चमयाचश्राद्धकारिणा ॥ अद्यतिथौममपित्रादीनांसकृन्महालयापरपक्षिकंश्राद्धं कर्तुंममाधिकारसंपदस्त्वितिभवंतोब्रुवंतु॥अस्तुश्राद्धाधिकारसंपत्॥ सव्यं॥कालोयंमुख्यकालोस्त्वितिभवंतोब्रुवंतु ॥ कालोयंमु ख्यकालोस्तु ॥ नमोदेवेभ्यः॥ प्राचीनावीती॥स्वधापितृभ्यः॥ सव्यं ॥ धुरि० विश्वेदेवस्थानेक्षणंदत्वाभवद्भिःप्रसादःकर्तव्यः ॥ सुकर्तव्यः॥ एवंद्वितीयेपि॥ अपसव्यं॥अ० पितृपितामहप्रपितामहस्थानेक्षणंदत्वाभवद्भिःप्रसादःकर्तव्यः॥अ०मातृपितामहीप्र पितामहीस्थाने०अ०सापत्नमातृस्थाने०अ०मातामहमातुःपितामहमातुःप्रपितामहस्थाने० अ०मातामहींमातुःपितामहींमातुः प्रपितामहीस्थाने०अ०पत्नीस्थाने० अ० सुतस्थाने० अस० दुहितृस्थाने० अ० पितृव्यसपत्नीकसापत्यस्थाने अ० मातुलसपत्नी कसापत्यस्थाने० अ०भ्रातृसपत्नीकसापत्यस्थाने० अ०पितृभगिनीसभर्तृकसापत्यस्थाने० अ० मातृभगिनीसभर्तृकसापत्यस्था

ने० आत्मभगिनीसभर्तृकसापत्यस्थाने० अ० श्वशुरसपत्नीकसापत्य० अ० गुरुसपत्नीकसापत्यस्था० अ० शिष्य० आप्त० ॥ सुकर्त
व्यः॥सव्यं॥सर्वेषांस्वागतं॥सुस्वागतं ॥ देवाःसमाध्वं ॥ सुसमास्महे ॥ अपसव्यं ॥ पित्रादयःसमाध्वं ॥ सुसमास्महे॥ सव्यं ॥ उप
क्रांतंसकृन्महालयापरक्षिकश्राद्धाख्यंकर्मकरिष्ये ॥ कुरुष्व ॥ अपसव्यं॥श्राद्धस्यकर्मणःसिद्धिरस्त्वितिभवंतोब्रुवंतु ॥ अस्तुश्राद्ध
स्यकर्मणःसिद्धिः ॥ सव्यं ॥ विश्वेषांदेवानांश्राद्धस्यकर्मणःसिद्धिरस्त्वितिभवंतोब्रुवंतु ॥ अस्तुश्राद्धस्यकर्मणःसिद्धिः ॥ आगच्छंतु
महाभागाविश्वेदेवामहाबलाः ॥ येअत्रविहिताःश्राद्धेसावधानाभवंतुते ॥भवामः॥ अपोदत्वा॥धुरिलोचनसंज्ञकानांविश्वेषांदेवा
नांभूर्भुवःस्वःइदमासनं२ ॥स्वासनं॥ अत्रास्यतां ॥धर्मोसि॥ सकृन्महालया० श्राद्धेदैवेक्षणःक्रियतां ॥ ॐतथा प्राप्नोतुभवान् ॥
प्राप्नवानि ॥ प्रोक्षितायांभुविदर्भानास्तीर्य पात्रमेकंनिधायप्रोक्ष्य उद्धृत्यपुनःप्रोक्ष्यप्रागग्रकूर्चंनिधायजलमासिच्ययवान्विकीर्य
यवान्वामहस्तेगृहीत्वा ॥ धुरिलोचनसंज्ञकान्विश्वान्देवान्भवत्सुयथायथंआवाहयिष्ये ॥ आवाहय॥विश्वेदेवाऋतावृधऋतुभि
र्हवनश्रुतः ॥ जुषंतांयुज्यंपयः ॥ विश्वान्देवान्आवाहयामि ॥ विश्वेदेवाःशृणुतेमꣳहवंमेयेअंतरिक्षेयउपद्यविष्ठ ॥ येअग्निजि
ह्वाउतवायजत्राआसद्यास्मिन्बर्हिषिमादयध्वं ॥ आगच्छंतुविश्वेदेवाविश्वेदेवाः ॥ विश्वेभ्योदेवेभ्योवोजुष्टंगृह्णामि ॥ इतिद्विः
अपःप्रदाय॥शंनोदेवीरभिष्टयआपोभवंतुपीतये॥शंयोरभिस्रवंतुनः ॥ अर्घ्यपात्रेइदंगंधपुष्पतुलसीपत्रंसर्वेउपचाराःयवैःसंपूर्णाः
संतु ॥ देवार्घ्यपात्रंसंपन्नं ॥ सुसंपन्नं ॥ देवेभ्यःस्वाहार्घ्याः ॥ हस्तार्चनविधेरुदकेनसर्वस्यपरिपूर्णता ॥ यादिव्याआपःपय
सासंबभूवुः ॥ याअंतरिक्षउतपार्थिवीर्याः॥ तासांत्वासर्वासाꣳरुचा ॥ अभिषिंचामिवर्चसा॥धुरिलोचनसंज्ञकाविश्वेदेवाःभूर्भुवः

१ इतउत्तरमत्रैवमंडलकरणविप्रपादक्षालनादिस्मार्तप्रयोगंकेचित्कुर्वंतिपरंतुहिरण्यकेशीयेष्वस्याचारोनैवदृश्यतइतिनोन्यस्तः ।

सुवः इदंवोर्घ्यस्वाहानमः २ ॥ अस्त्वर्घ्यं ॥ तूष्णींयवोदकं इदमर्घ्यंदत्तंनमम ॥ अस्तुदत्तं ॥ धुरिलोचन० देवाःयथाभागशःअ
मीवो गंधाःस्वाहानमः ॥ सुगंधाः ॥ पूजार्थेइमानिवःपुष्पाणितुलसीपत्राणिचस्वाहा० ॥ सुपत्राणिसुपुष्पाणि ॥ एषवोधूपः
स्वाहान० ॥ एषवोदीपःस्वाहानमः ॥ आच्छादनार्थेइदंवार्द्धस्पत्यंवासःस्वाहान० ॥ स्वाच्छादनं ॥ पवित्रार्थेइमौकुशौस्वाहा
न० ॥ सुपवित्रं ॥ धारणार्थेयज्ञोपवीतं ॥ अनुलेपनार्थेगोपीचंदनं ॥ फलार्थेपूगीफलं ॥ सर्वालंकारार्थेव्यावहारिकद्रव्यं
स्वाहान० ॥ युवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः ॥ तंधीरासःकवयउन्नयंतिस्वाधियोमनसादेवयंतः ॥
भोदेवाःएतेआसनाद्युपचाराःसर्वेपरिपूर्णाभवंतु ॥ न्यूनंतद्विधिवदस्तु ॥ यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु ॥
न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतं ॥ अच्युतान० गयायैन० गदधरायनमः पुंडरीकाक्षाय नमः ॥ युष्मदनुज्ञया
पित्राद्यर्चनंकरिष्ये ॥ कुरुष्व ॥ कुरुक्षेत्रंगयांगंगांप्रभासंपुष्कराणिच ॥ एतानिमनसाध्यात्वाश्राद्धकालेसदापठेत् ॥
अपसव्यं ॥ अपोदत्वा अस्मत्पितृपितामहप्रपितामहानांशर्मणांगोत्राणांवसुरुद्रादित्यस्वरूपाणांभूर्भुवःसुवरिदमासनं ॥ स्वास
नं ॥ अस्मन्मातृपितामहीप्रपितामहीनांदानांगोत्राणां वसुरुद्रादित्यस्वरूपाणांब्रह्मणेइदमासनं ॥ एवंषष्ठ्यासर्वत्रआसनंदद्यात् ॥
अत्रास्यतां ॥ धर्मोसि ॥ सकृन्महालयापरपक्षिकश्राद्धेपित्र्येक्षणःक्रियतां ॥ ॐतथा ॥ प्राप्नोतुभवान् ॥ प्राप्नवानि ॥ अर्घ्य
मासाद्य ॥ प्रोक्षितायांभुविदर्भानास्तीर्यपात्रमेकंनिधायप्रोक्ष्यउद्धृत्यपुनःप्रोक्ष्यदक्षिणाग्रकूर्चंनिधायजलमासिच्य तिलान्वि
कीर्य ॥ अस्मत्पितृपितामहप्रपितामहान्शर्मणःगोत्रान्वसुरुद्रादित्यस्वरूपान् ॥ अ०मातृपितामहीप्रपितामहीःदाःगोत्राःव
सुरुद्रादित्यस्वरूपाः ॥ अ०सापत्नमातरंदांगोत्रांवसुरूपां अस्मन्मातामहमातुःपितामहमातुःप्रपितामहान्शर्मणःगोत्रान्वसुरु०

अस्मन्मातामहीमातुःपितामहीमातुःप्रपितामहीःदाःगोत्राःवसु० अ० पत्नींदांगोत्रांवसुरूपां अ० पुत्रंशर्माणंगोत्रंसपत्नीकंवसुरूपं० अ० दुहितरंदांगोत्रांसभर्तृकांवसुरूपां अ० पितृव्यंशर्माणंगोत्रंसपत्नीकंसापत्यंवसुरूपं अ० मातुलंशर्माणंगोत्रंसपत्नीकंसापत्यंवसुरूपं अ० भ्रातरंशर्माणंगोत्रंसपत्नीकंसापत्यंवसुरूपं अ० पितृभगिनींदांगोत्रांसभर्तृकांसापत्यांवसुरूपां अस्मन्मातृभगिनींदांगोत्रांसभर्तृकांसापत्यांव० अस्मदात्मभगिनींदांगोत्रांसभर्तृकांसापत्यां० अ० श्वशुरंशर्माणंगोत्रंसपत्नीकंसापत्यं० अ० गुरुंशर्माणंगोत्रंसपत्नीकंसापत्यं० अ० शिष्यंशर्माणंगोत्रंसपत्नीकंसापत्यं० अ० दासंस० सा० व० भवत्सुयथायथंआवाहयिष्ये ॥ आवाहय ॥ उ॒शंत॑स्त्वाहवामहउ॒शंत॒ःसमि॑धीमहि ॥ उ॒शन्नु॑श॒तआव॑हपि॒तॄन्ह॒वि॑षे॒अत्त॑वे ॥ पितृपितामहप्रपितामहानावाहयामि ॥ एवंद्वितीयांतंआवाहनं ॥ उप॑हूताःपि॒तर॑ःसो॒म्यासो॑ब॒र्हि॒ष्ये॑षुनि॒धिषु॑प्रि॒येषु ॥ तआग॑मंतु॒तइ॒हश्रु॑वं॒त्वाधि॑ब्रुवंतु॒तेअ॑वंत्व॒स्मान् ॥ आगच्छंतुपितरः ॥ पितृभ्योवोजुष्टंगृह्णामि एवंसर्वेषां ॥ अपःप्रदाय ॥ शंनो॑दे॒वीर॒भिष्ट॑य॒०तुनः ॥ तिलोसिसोमदेवत्योगोसवे०नमः ॥ पित्रर्घ्यपात्रेइदंगंधंतुलसीपत्रंसर्वेउपचाराःतिलैःसंपूर्णाःसंतु ॥ पित्रर्घ्यपात्रंसंपन्नं ॥ सुसंपन्नं ॥ पितृभ्यःस्वधाअर्घ्याः ॥ अपोदत्वा ॥ यादि॒व्याआप॒ः० ॥ अस्मत्पितरिदंतेर्घ्यंस्वधा ॥ एवंपितामहादीनामपि ॥ इदमर्घ्यंदत्तंनमम ॥ स्थानमसिप्रणीतायैइदमासनं ॥पितृणांस्वधेयंस्थानमसि ॥ स्थानमसिदेवतायैइदंगंधंतुलसीपत्रंसर्वेउपचाराःतिलैःसंपूर्णाःसंतु ॥ स्थानमसिप्रच्छाद्य ॥ संक॑ल्पोद्दिष्टपितरःयथानामगोत्ररूपाःयथाभागशःअमीवोगंधाःस्वधानमः ॥ सुगंधाः ॥ इमानिवःपुष्पाणितुलसीभृंगराजसहितानिस्वधान० ॥ सुपुष्पाणि ॥ एषवोधूपःस्वधान० ॥ सुधूपः ॥ एषवोदीपःस्वधा० ॥ सुदीपः ॥

---

१ अत्राग्रेपिप्रत्युपचारंसंबुद्ध्यापित्रादीनांनामान्युक्त्वाउपचारांतेस्वधानमइतिवदेत् । २ एकस्मिन्विप्रेएकपित्रावाहनेअमीतेगंधाइतिवदेत् ।

आच्छादनार्थेइदंबार्हसत्यंवासःस्वधा० ॥ स्वाच्छादनं ॥ पवित्रार्थेइमेकुशाः ॥ सुपवित्रं ॥ धारणार्थेयज्ञोपवीतं ॥ अनुले
पनार्थेगोपीचंदनं ॥ फलार्थेपूगीफलं ॥ सर्वालंकारार्थेव्यावहारिकंद्रव्यं ॥ स्वलंकारः ॥ इदंपितृभ्योनमोअस्त्वद्ययेपूर्वासोय
उपरासईयुः ॥ येपार्थिवेरजस्यानिषत्तायेवानूनंसुवृजनासुविक्षु ॥ भोपितरःएतेआसनाद्युपचाराःसर्वेपरिपूर्णाभवंतु ॥
॥ न्यूनंतद्विधिवदस्तु ॥ यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु० ॥ तमच्युतं ॥ अच्युतायनमः ॥ गयायै० ॥ गदा
धराय० ॥ सव्यं ॥ युष्मदनुज्ञयामंडलादिकरिष्ये ॥ कुरुष्व ॥ तत्रदेवपात्रेचतुरस्रंमंडलं ॥ ब्रह्माविष्णुश्चरुद्रश्चश्रीर्हुताशन
एवच ॥ मंडलान्युपजीवंतितस्मात्कुर्वीतमंडलं ॥ अपसव्यं ॥ पितृपात्रेवर्तुलाकारंमंडलमप्रदक्षिणंकुर्यात् ॥ आदित्यावसवो
रुद्राविश्वेदेवाःसपैतृकाः ॥ मंडलेचोपतिष्ठंतितस्मात्कुर्वीतमंडलं ॥ सव्यं पात्राण्यासाद्य ॥ अपसव्यं ॥ बृहत्सामक्षत्रभृद्वृद्धवृष्णि
यंत्रिष्टुभौजःशुभितमुग्रवीरं ॥ इंद्रस्तोमेनपंचदशेनमध्यमिदंवातेनसगरेणरक्ष ॥ एवंपितामहादिपात्रे ॥ सव्यं ॥ रक्षोहणोव
लगहनोवैष्णवान्खनामीदमहंतंवलगमुद्वपामियन्नःसमानोयमसमानोनिचखानेदमेनमधरंकरोमियोनःसमानोयोसमानोराती
यतिंगायत्रेणछंदसावबाढोवलगःकिमत्रभद्रंतन्नौसहविराडसिसपत्नहासम्राडसिभ्रातृव्यहास्वराडस्यभिमातिहाविश्वाराडसिवि
श्वासांनाष्ट्राणांहंता ॥ यथाचक्रधरोविष्णुस्त्रैलोक्यंपरिरक्षति ॥ एवंमंडलभस्मांकःसर्वभूतानिरक्षतु ॥ सर्वेषांपापदृष्टीनांच
क्षुर्बध्नातिकेशवः ॥ भस्मनामंडलंकुर्यात्पंक्तिदोषोनविद्यते ॥ अपसव्यं ॥ पितृणांकरशुद्धिः ॥ सव्यं ॥ देवानांकरशुद्धिः ॥
मूर्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतायजातमग्निं ॥ कविंसम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाः ॥ इतिपात्रशुद्धिः ॥
अपसव्यं ॥ उद्धरिष्याम्यग्नौचकरिष्यामि ॥ काममुद्ध्रियतांकाममग्नौचक्रियतां ॥ सव्यं ॥ युष्मदनुज्ञयाअग्नावग्नौकरणंकरिष्ये ॥

कव्यवाहननामानमग्निंप्रतिष्ठापयामि ॥ चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहो
देवोमर्त्याँआविवेश ॥ सप्तहस्तश्चतुःशृंगःसप्तजिह्वोद्विशीर्षकः ॥ त्रिपात्प्रसन्नवदनःसुखासीनःशुचिस्मितः ॥ स्वाहांतुदक्षिणे
पार्श्वेदेवींवामेस्वधांतथा॥बिभ्रद्दक्षिणहस्तैस्तुशक्तिमन्नंस्रुचंस्रुवं ॥ तोमरंव्यजनंवामैर्घृतपात्रंचधारयन् ॥ आत्माभिमुखमासी
नएवंरूपोहुताशनः ॥ अग्नेवैश्वानरशांडिल्यगोत्रमेषध्वजप्राङ्मुखममसंमुखोवरदोभव ॥ यथाहुतद्वसवोगौर्यंचित्पदिषितामर्मु
चतायजत्राः ॥एवात्वमस्मत्प्रमुंचाव्यँहःप्रातार्यग्नेप्रतरान्नआयुः॥परिसमुह्य ॥ दक्षिणाग्रैःकुशैःपरिस्तीर्य ॥ अदितेनुमन्यस्व ॥
अनुमतेनुमन्यस्व ॥ सरस्वतेनुमन्यस्व ॥ देवसवितःप्रसुव ॥ आज्येनान्नमभिघार्यकुशेनभागंकुर्यात् ॥ हस्तेकुशंगृहीत्वा ॥
अपसव्यं ॥ सोमायपि[1]तृमतेस्वधानमः ॥ सोमायपितृमतइदंनमम ॥ यमायांगिरस्वतेपितृमतेस्वधानमः ॥ यमायांगिरस्वते
पितृमतइदंन० ॥ अग्नयेकव्यवाहनायस्विष्टकृतेस्वधानमः ॥ अग्नयेकव्यवाहनायस्विष्टकृतइदं० ॥ सव्यं ॥ यथाहुतद्वसवो
गौर्यंचित्पदिषितामर्मुंचतायजत्राः ॥ एवात्वमस्मत्प्रमुंचाव्यँहःप्रातार्यग्नेप्रतरान्नआयुः ॥ इतिपरिषिच्यपरिस्तरणादिविसृज्य
अदितेन्वमँस्थाः॥ अनुमतेन्वमँस्थाः ॥ सरस्वतेन्वमँस्थाः ॥ देवसवितःप्रासावीः ॥ यज्ञनमस्तेयज्ञ॥ नमोनमश्चतेयज्ञ ॥
शिवेनमेसंतिष्ठस्व ॥ स्योनेनमेसंतिष्ठस्व ॥ सुभूतेनमेसंतिष्ठस्व ॥ ब्रह्मवर्चसेनमेसंतिष्ठस्व ॥ यज्ञस्यर्धिमनुसंतिष्ठस्व ॥ उपंते
यज्ञनमः ॥ उपंतेनमः ॥ उपंतेनमः ॥ अनेनाग्नौकरणहोमाख्येनकर्मणाश्रीयज्ञनारायणःप्रीयतां ॥ अग्नयेनमःगंधाद्युपचारा
न्समर्पयामि ॥ अपसव्यं॥ आमासुपक्कमैरयआसूर्यँरोहयोदिवि॥घर्मनसामन्तपतासुवृक्तिभिर्जुष्टंगिर्वणसेगिरः ॥ सोमोधेनुँ



१ अत्रसोमायपितृपीतायस्वधानमःइत्येवकेचनपठंतिसचमुख्यःपाठः ।

सोमोअर्वंतमाशुं ॥ सोमोवीरंकर्मण्यंददातु ॥ साद॒न्यंविद॒थ्यं॑सभेयं॥पितुःश्रवणंयोददाशदस्मै॥सव्यंउपह्वयेसुदुघां० इतिसूक्तं त्रिसुपर्णंचपठेत् ॥ ततोऽन्नंगायत्र्याभ्युक्ष्यदक्षिणंजान्वाच्यपात्रंहस्तेनधृत्वा ॥ सत्यंत्वर्तेनपरिंषिंचामि ॥ पृथिवीतेपात्रंद्यौ रपिधानंब्राह्मणस्यमुखेमृतेमृतंजुहोमिस्वाहाब्राह्मणानांत्वाविद्यावतांप्राणापानयोर्जुहोम्यक्षितमसिमादेवानांक्षेष्ठाअमुत्रामुष्मि न्लोके इदंविष्णुर्विचक्रमेत्रेधानिदंधेपदं ॥ समूढमस्यपांसुरे ॥ धुरिलोचनसंज्ञकाविश्वेदेवादेवताइदंवोअन्नंविष्णोहव्यंर क्षस्व ॥ धुरिलोचनसंज्ञकेभ्योविश्वेभ्योदेवेभ्यःइदमन्नंसोपस्करंपरिविष्टंपरिवेक्ष्यमाणंचअस्यब्राह्मणस्यआतृप्तिपर्यंतंअमृतरूपे णसंपद्यतांस्वाहाहव्यंनमम ॥ तत्सद्गयायांविष्णुपदादिचतुर्दशपदेषुदत्तमन्नमक्षय्यमस्तु ॥ गयागदाधरःप्रीयतां ॥ प्रीतोभवतु गयागदाधरः ॥ येदेवादिव्येकादशस्थपृथिव्यामध्येकादशस्थाप्सुषदोमहिनैकादशस्थतेदेवायज्ञमिमंजुषध्वं ॥ देवानुज्ञया पित्राद्यन्ननिवेदनंकरिष्ये ॥ कुरुष्व ॥ अपसव्यं ॥ सव्यंजान्वाच्य ॥ पितृपात्रे सत्यंत्वर्तेनपरिंषिंचामि ॥ पृथिवीते पात्रंद्यौरपिधानंब्राह्मणस्यमुखेमृतेमृतंजुहोमिब्राह्मणानांत्वाविद्यावतांप्राणापानयोर्जुहोम्यक्षितमसिमापितॄणांक्षेष्ठाअमुत्रामु ष्मिन्लोके पृथिव्यंतरिक्षंद्यौःसमातस्याग्निर्वायुरादित्यउपद्रष्टादत्तस्याप्रमादाय ॥ प्राणेनिविश्यामृतंजुहोमि ॥ इदंविष्णुर्विच क्रमेत्रेधानिदंधेपदं ॥ समूढमस्यपांसुरे ॥ पितृपितामहप्रपितामहादेवताइदंवोअन्नंविष्णोकव्यंरक्षस्व ॥ पितृपितामहप्र पितामहेभ्यःशर्मभ्यःगोत्रेभ्यःवसुरुद्रादित्यस्वरूपेभ्यःइदमन्नंसोपस्करंपरिविष्टंपरिवेक्ष्यमाणंचअस्यब्राह्मणस्यआतृप्तिपर्यंतंअमृ

१ उपह्वयेइतिसूक्तंत्रिसुपर्णंचैतत्प्रयोगांतेद्रष्टव्यं । २ पितॄणांपृथग्विप्रत्वेतु–पृथ्वीसमातस्याअग्निरुपद्रष्टा–अंतरिक्षंसमंतस्यवायुरुपद्रष्टा–द्यौः समातस्याआदित्यउपद्रष्टा–इतिपृथगुच्चारःपार्वणेकार्यः । एकोद्दिष्टेतुनकिमपि ।

तद्रूपेणसंपद्यतांस्वधाकव्यंनमम ॥ तत्सद्गयायांरुद्रपदादिचतुर्दशपदेषुदत्तमन्नमक्षय्यमस्तु ॥ गयागदाधरःप्रीयतां ॥ प्रीतोभवतुगयागदाधरः ॥ एवंमात्रादीनां ॥ येचे॒हपि॒तरो॒येच॒नेह॒यांश्च॑वि॒द्मयाँ२उँच॒नप्र॑वि॒द्म ॥ अग्ने॒तान्वे॑त्थ॒यति॒तेजा॑तवे दु॒स्तया॑प्र॒त्तंस्व॒धया॒मदं॑तु॒स्वधा॒नमः॑ ॥ सव्यं ॥ मधुमतीःश्रावयिष्ये ॥ श्रावय ॥ मधु॒वाता॑ऋता॒य॒तेमधु॑क्षरंति॒सिंध॑वः ॥ माध्वी॑र्नः॒सं॒त्वोष॑धीः ॥ मधु॒नक्त॑मु॒तोषसि॒मधु॑म॒त्पार्थि॑व॒ꣳरजः॑ ॥ मधु॒द्यौर॑स्तुनः॒पि॒ता ॥ मधु॑मान्नो॒वन॒स्पति॒र्मधु॑माँ२अस्तु॒सूर्यः॑ ॥ माध्वी॒र्गावो॑भवंतुनः ॥ मधुमधुमधु ॥ सुमधु ॥ सर्वान्नंमधु ॥ श्राद्धमच्छिद्रमस्त्विवतिभवंतोब्रुवंतु ॥ अच्छिद्रंभवतु ॥ गया श्राद्धमस्तु ॥ सप्तव्याधादशार्णेषुमृगाःकालांजनेगिरौ ॥ चक्रवाकाःशरद्वीपेहंसाःसरसिमानसे ॥ तेपिजाताःकुरुक्षेत्रेब्राह्मणावे दपारगाः ॥ प्रस्थितादीर्घमध्वानंयूयंकिमवसीदथ ॥ अमूर्तानांचमूर्तानांपितॄणांदीप्ततेजसां ॥ नमस्यामिसदातेषांध्यायिनांयो गचक्षुषां ॥ चतुर्भिश्चचतुर्भिश्चद्वाभ्यांपंचभिरेवच ॥ हूयतेचपुनर्द्वाभ्यांसमेविष्णुःप्रसीदतु ॥ ईशानःपितृरूपेणमहादेवोमहे श्वरः॥प्रीयतांभगवानीशःपरमात्मासदाशिवः ॥अपसव्यं॥ ईशानविष्णुकमलासनकार्तिकेयवह्नित्रयार्करजनीशगणेश्वराणां ॥ क्रौंचामरेंद्रकलशोद्भवकश्यपानांपादान्नमामिसततंपितृमुक्तिहेतून् ॥ सव्यं ॥ ब्रह्मार्पणंब्रह्महविर्ब्रह्माग्नौब्रह्मणाहुतं ॥ ब्रह्मैवते नगंतव्यंब्रह्मकर्मसमाधिना ॥ हरिर्दाताहरिर्भोक्ताहरिरन्नंप्रजापतिः ॥हरिर्विप्रशरीरस्थोभुंक्तेभोजयतेहरिः ॥ चतुर्भिश्चचतुर्भि श्चद्वाभ्यांपंचभिरेवच ॥ हूयतेचपुनर्द्वाभ्यांसमेविष्णुःप्रसीदतु ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ नैवेद्यसमर्पणं ॥ अपसव्यं ॥ एकोवि ष्णुर्महद्भूतंपृथग्भूतान्यनेकशः ॥ त्रीन्लोकान्व्याप्यभूतात्माभुंक्तेविश्वभुगव्ययः ॥ अनेनसकृन्महालयश्राद्धीयब्राह्मणसुवा सिनीभोजनेनपितृस्वरूपीजनार्दनवासुदेवःप्रीयतां ॥ सव्यं ॥ देवाःतत्सत्अमृतमस्तु ॥ अपसव्यं ॥ पितरःतत्सद्ब्रह्मार्पणमस्तु ॥

सव्यं ॥ यथासुखंजुषध्वं॥श्रद्धायाँप्राणेनिविँष्टोमृतँजुहोमि ॥ श्रद्धायामपानेनिविं० ॥ श्रद्धायाँव्यानेनिविं०॥ श्रद्धायामुदानेनिविँ
ष्टोमृ०॥श्रद्धायाꣳसमानेनिविँष्टोमृतँजुहोमि॥ब्रह्मणिमआत्मामृतत्वाय ॥ अपसव्यसव्याभ्यांपितृपूर्वकंअपोशनंदत्वा ॥ अमृतो
पस्तरणमसि॥ श्रद्धायाँप्राणेनिविँष्टोमृतँजुहोमि॥शिवोमाविशाप्रदाहाय ॥ प्राणायस्वाहा ॥ श्रद्धायामपानेनिविँष्टोमृतँजुहोमि ॥
शिवोमाविशाप्रदाहाय ॥ अपानायस्वाहा ॥ श्रद्धायाँव्यानेनिविँष्टोमृतँजुहोमि ॥ शिवोमाविशाप्रदाहाय ॥ व्यानायस्वाहा ॥
श्रद्धायामुदानेनिविँष्टोमृतँजुहोमि ॥ शिवोमाविशाप्रदाहाय ॥ उदानायस्वाहा ॥ श्रद्धायाꣳसमानेनिविँष्टोमृतँजुहोमि ॥
शिवोमाविशाप्रदाहाय ॥ समानायस्वाहा ॥ ब्रह्मणेस्वाहा ॥ अपसव्यसव्याभ्यांहस्तोदकंपितृपूर्वकंदत्वा ॥ दशवारंगायत्रींज
प्त्वाप्रार्थयेत् ॥ अपेक्षितंयाचितव्यंत्याज्यंचैवानपेक्षितं ॥ उपविश्यसुखेनैवभोक्तव्यंस्वस्थमानसैः ॥ विद्यमानशाकपाकादिप
दार्थेषुयद्रोचतेतद्ग्राह्यंयन्नरोचतेतत्त्याज्यं ॥ सुखेनैवभोक्तव्यं ॥ जुषामहे ॥ राक्षोघ्नसूक्तानिपितृसूक्तान्याश्रावयिष्ये ॥ आश्रा
वय ॥ सूक्तानिपठेत् ॥ भोजनांते ॥ अपेक्षितं ॥ संपूर्णं ॥ सिद्धस्यहविषोमध्येयद्रोचतेतद्याचयध्वं ॥ अलं ॥ मधुमतीःश्रा
वयिष्ये ॥ श्रावय ॥ मधुवाताऋतायते० ३ ॥ अपसव्यं॥ अक्षन्नमीमदंतह्यवप्रियाअधूषत॥ अस्तोषतस्वभानवोविप्रानविष्ठया
मतीयोजान्विंद्रतेहरी ॥ श्राद्धंसंपन्नं ॥ सुसंपन्नं ॥ सव्यं॥ विश्वेदेवाःतृप्ताःस्थ ॥ तृप्ताःस्मः ॥ अपसव्यं॥ पित्रादयःतृप्ताःस्थ ॥
तृप्ताःस्मः ॥ शेषमन्नंकिंक्रियतां ॥ इष्टैःसहभुज्यतां ॥ सव्यं ॥ असोमपाश्चयेदेवायज्ञभागविवर्जिताः ॥ तेषामन्नंप्रदास्यामि
विकिरंवैश्वदेविकं ॥ देवपात्राग्रेअन्नंविकिरेत् ॥ असोमपेभ्योविश्वेभ्योदेवेभ्यःइदंविकिरान्नंदत्तंनमम ॥ अपसव्यं ॥ असं
स्कृतप्रमीतायेत्यागिन्योयाःकुलस्त्रियः ॥दास्यामितेभ्योविकिरमन्नंताभ्यश्चपैतृकं ॥ येकुमाराःकुमार्योवायेचगर्भाद्विनिःसृताः ॥

तेषामन्नमिदंदत्तंतृप्यंतुचमदंतुच ॥पितृपात्राग्रे कुमारकुमारिकाभ्यः इदंविकिरान्नंदत्तंनमम ॥ येअग्निदग्धायेअनग्निदग्धाजीवा जाताःकुलेमम ॥ भूमौदत्तेनपिंडेनतृप्तायांतुपरांगतिं ॥ अग्निदग्धेभ्यःअनग्निदग्धेभ्यःअस्मत्कुलप्रसूतेभ्योजीवेभ्यःउच्छिष्टपिंडःस्वधा ॥ सव्यं ॥ पाणीपादौप्रक्षाल्य ॥ पवित्रेविसृज्य ॥ आचम्यपुनःपवित्रेधृत्वा ॥ उच्छिष्टभाग्भ्योन्नंदीयतां ॥ यजमानकुलेजातादासादास्योन्नकांक्षिणः ॥ तेसर्वेतृप्तिमायांतुमयादत्तेनभूतले ॥ अस्मिन्श्राद्धेपिंडप्रदानंकरिष्ये ॥ कुरुष्व ॥ अमृतापिधानमसि ॥ श्रद्धायांप्राणेनिविश्यामृतंहुतं ॥ प्राणमन्नेनाप्यायस्व ॥ श्रद्धायामपानेनिविश्यामृतंहुतं ॥ अपानमन्नेनाप्यायस्व ॥ श्रद्धायांव्यानेनिविश्यामृतंहुतं ॥ व्यानमन्नेनाप्यायस्व ॥ श्रद्धायामुदानेनिविश्यामृतंहुतं ॥ उदानमन्नेनाप्यायस्व ॥ श्रद्धायांसमानेनिविश्यामृतंहुतं ॥ समानमन्नेनाप्यायस्व ॥ अंगुष्ठमात्रःपुरुषोंगुष्ठंचसमाश्रितः॥ ईशःसर्वस्यजगतःप्रभुःप्रीणातिविश्वभुक् ॥ रौरवेपूयनिलयेपद्मार्बुदनिवासिनां ॥ अर्थिनामुदकंदत्तमक्षय्यमुपतिष्ठतु ॥ अपसव्यं ॥ सव्यंजान्वाच्य ॥ अपहताअसुरारक्षांसिवेदिषदः ॥ दर्भेणलेखांलिखति ॥ तामभ्युक्ष्य ॥ सकृदाच्छिन्नैर्दर्भैरवस्तीर्य ॥ सकृदाच्छिन्नंबर्हिरूर्णीमृदु ॥ स्योनंपितृभ्यस्त्वाभराम्यहं॥अस्मिन्त्सीदंतुमेपितरःसोम्याः॥ पितामहाःप्रपितामहाश्चानुगैःसह ॥ तेषुदर्भेष्ववाचीनपाणिरंजलिनात्रिरुदकंनिनयति ॥ मार्जयंतांपितरःसोम्यासोमार्जयंतांपितामहाःसोम्यासोमार्जयंतांप्रपितामहाःसोम्यासः मार्जयंतांसर्वेपितरः ॥ एतत्तेअस्मत्पितःशर्मन्गोत्रवसुरूपयेचत्वामनु ॥ पित्रेशर्मणेगोत्रायवसुरूपायअयंपिंडःस्वधानमस्तेभ्यश्च ॥ गयायांदत्तमस्तु ॥ एवंपितामहप्रपितामहयोः ॥ एतत्तेअस्मन्मातःअमुकदेगोत्रेवसुरूपेयेचत्वामनुअस्मन्मात्रेदायैगो

त्रायैवसुरूपायैअयंपिंडःस्वधा नमस्ते[2]भ्यश्च ॥ गयायांदत्तमस्तु ॥ एवंपितामहीप्रपितामह्योःएवंमातामहसपत्नीकस्त्रीपुत्रक न्यापितृव्यमातुलभ्रातृपितृभगिनीमातृभगिनीआत्मभगिन्योधवापत्ययुक्ताःश्वशुरगुरुशिष्या प्ताःतीर्थेमहालयेच ॥ आब्र ह्मणोयेपितृवंशजातामातुस्तथावंशभवामदीयाः ॥ वंशद्वयेस्मिन्ममदासभूताभृत्यास्तथैवाश्रितसेवकाश्च ॥ मित्राणिसख्यः पशवश्चवृक्षाद्दृष्टाश्चपृष्टाश्चकृतोपकाराः ॥ जन्मांतरंयेममसंगताश्चतेभ्यःस्वधापिंडमहंददामि ॥ १ ॥ पितृवंशेमृतायेचमातृवंशे तथैवच ॥ गुरुश्वशुरबंधूनांयेचान्येबांधवामृताः ॥ येमेकुलेलुप्तपिंडाःपुत्रदारविवर्जिताः ॥ क्रियालोपगताश्चैवजात्यंधाःपं गवस्तथा ॥ विरूपाआमगर्भाश्चज्ञाताज्ञाताःकुलेमम ॥ धर्मपिंडोमयादत्तोह्यक्षय्यमुपतिष्ठतु ॥ २ ॥ असिपत्रवनेघोरेकुंभी पाकेचयेगताः ॥ तेषामुद्धरणार्थायइमंपिंडंददाम्यहं ॥ ३ ॥ उत्सन्नकुलवंश्यानांयेषांदाताकुलेनहि ॥ धर्मपिंडोमयादत्तो ह्यक्षय्यमुपतिष्ठतु ॥४॥ शमीपत्रप्रमाणेनपिंडंदद्याद्गयाशिरे ॥ उद्धरेत्सप्तगोत्राणिकुलमेकोत्तरंशतं ॥ आंजनमांजन्यायअभ्यं जनमभ्यंजन्याययथाभागमेवैनान्प्रीणाति ॥ आंक्ष्वासावांक्ष्वासावितित्रिरांजनं ॥ पितःशर्मन्गोत्रवसुरूपआंक्ष्व ॥ एवं पितामहादिषु अभ्यंक्ष्वासावभ्यंक्ष्वासावितित्रिरभ्यंजनं ॥ ओष्मणोव्यावृतउपास्ते ॥ ऊष्मभागाहिपितरःवासश्चानुपिंडेददा तिदशामूर्णास्तुकांवछित्वा ॥ उत्तरआयुषिलोमछिंधीत ॥ नमस्करोति ॥ नमस्कारोहिपितृणां ॥ सव्यं पिंडपूजांकरिष्ये ॥ ( युक्तंत्वपसव्येन ) ॥ पिंडसंस्थाःपितरःपाद्यंस्वधा अर्घ्यं आचमनीयं स्नानं० वस्त्रं० अलंकारान्० गंधं०पुष्पंस्वधा धूपं स्वधा दीपंस्वधा नैवेद्यंस्वधा तांबूलंस्वधा दक्षिणां० फलंस्वधा ॥ अथनमस्कारैरुपतिष्ठते ॥ अपसव्यं ॥ नमोवःपित

---

१ मात्रादिद्वित्वेएतद्वामस्मन्मातरौ यज्ञदेश्रीदेयाश्चयुवामनुअस्मन्मातृभ्यामित्याद्युच्चार्यएकएवपिंडोदेयः बहुत्वेबहुवचनेनैकएव । २ तेभ्यः— अनुयायिभ्यः तेच ‘अनुयायिनश्च पुमांसश्चस्त्रियश्चेतिप्रतिभाति’ इतिबौधायनोक्तेः ‘पुमान्स्त्रिया’ इत्येकशेषात् तेभ्यश्चेति पुंस्त्वमवशिष्यते ।

रोरसायनमोवःपितरःशुष्मायनमोवःपितरोजीवायनमोवःपितरःस्वधायैनमोवःपितरोमन्यवेनमोवःपितरोघोरायपितरोनमो
वोयंएतस्मिंल्लोकेस्थयुष्मा॑स्तेनुयेस्मिंल्लोकेमांतेनुयएतस्मिंल्लोकेस्थयूयंतेषांवसिष्ठाभूयास्तयेस्मिंल्लोकेहंतेषांवसिष्ठोभूयासं ॥ ऊर्जं
स्वतीस्वधयावंदमानास्तावोगच्छंतिपितरःस्योनाः ॥ ऊर्जंवहंतीसततमक्षिकोदकाःक्षीरमुदकंघृतंमधुपयःकीलालंपरिस्रुत॑
स्वधास्थतर्पयतमेपितृन् स्वधास्थतृप्यततृप्यत ॥ इतिलेपोदकमप्रदक्षिणंपिंडोपरिक्षिपेत् ॥ ततःपाणीव्यत्यस्यदक्षिणमुत्तरमु
त्तरंचदक्षिणं ॥ परेतपितरःसोम्यागंभीरैःपथिभिःपूर्व्यैः ॥ अथापितृन्सुविदत्रा॑अपीतयमेनयेसधमादंमदंति ॥ मनोन्वाहु
वामहेनाराश॑सेनस्तोमेन पितॄणांचमन्मभिः ॥ आनंएतुमनःपुनःक्रत्वेदक्षायजीवसे ॥ ज्योक्सूर्यंदृशे ॥ पुनर्नःपितरोमनोद
दातुदैव्योजनः ॥ जीवंव्रात॑सचेमहि ॥ अग्निंविसर्जयेत् ॥ यदंतरिक्षंपृथिवीमुतद्यांयन्मातरंपितरंवाजिहिं॑सिम ॥ अग्नि
र्मातस्मादेनसःप्रमुंचतुदुरितायानिचकृमकरोतुमामनेनसं ॥ ततःसव्येनब्राह्मणहस्ते शिवाआपःसंतु ॥ संतुशिवाआपः ॥ सौम
नस्यमस्तु ॥ अस्तुसौमनस्यं ॥ अक्षतंचारिष्टंचास्तु ॥ अस्त्वक्षतमरिष्टंच ॥ दीर्घमायुःश्रेयःशांतिःपुष्टिस्तुष्टिश्चास्तु ॥ दीर्घ
मायुःश्रेयःशांतिःपुष्टिस्तुष्टिश्च ॥ अपसव्येनपितृहस्तेशिवाआपःसंतु ॥ संतुशिवाआपः ॥ सौमनस्यमस्तु ॥ अस्तुसौम
नस्यं ॥ तिलाःपांतु ॥ पांतुतिलाः ॥ दीर्घमायुःश्रेयःशांतिःपुष्टिस्तुष्टिश्चास्त्वितिभवंतोब्रुवंतु ॥ दीर्घमायुःश्रेयःशांतिःपुष्टिस्तु
ष्टिश्चास्तु ॥ ऋचेत्वारुचेत्वासमित्स्रवंतिसरितोनधेनाः ॥ अंतर्हृदामनसापूयमानाः ॥ घृतस्यधाराअभिचाकशीमि ॥ हिर
ण्ययोवेतसोमध्यआसां ॥ तस्मिन्सुपर्णोमधुकृत्कुलायीभजन्नास्तेमधुदेवताभ्यः ॥ तस्यासतेहरयःसप्ततीरेस्वधांदुहानाअमृत
स्यधारां ॥ पिंडोपरिजलधारांकृत्वा ॥ अस्मत्पितृपितामहप्रपितामहानांशर्मणांगोत्राणांवसुरुद्रा० एवंमात्रादिषष्ठ्यंतमुक्त्वा

यद्दत्तंआपरपक्षिकश्राद्धीयान्नोदकादितदक्षय्यमस्त्वितिभवंतोब्रुवंतु॥ अस्त्वक्षय्यं ॥ सव्यं॥ धुरिलोचन० श्राद्धीयमन्नमुदकादि तदक्षय्यम० ॥ अस्त्वक्षय्यं ॥ अस्यश्राद्धयज्ञाख्यस्यकर्मणःप्रतिष्ठाफलसंसिद्ध्यर्थंदेवानांसुवर्णंपितॄणांरजतंश्राद्धभोक्तृभ्यो ब्राह्मणेभ्यःइमांदक्षिणांयुष्मभ्यमहंसंप्रददे ॥ दक्षिणाःपांतु ॥ पांतुदक्षिणाः ॥ स्वधांवाचयिष्ये ॥ वाच्यतां ॥ अपसव्यं ॥ पित्रादिसमस्तपितृगणेभ्यःस्वधोच्यतां ॥ अस्तुस्वधा ॥ स्वधासंपद्यतामितिभवंतोब्रुवंतु ॥ संपद्यतांस्वधा ॥ सव्यं ॥ अग्निपुरोगाविश्वेदेवाःप्रीयंतामितिभवंतो० ॥ प्रीयंतांविश्वेदेवाः ॥ अपसव्यं ॥ वसुपुरोगाःपितरःप्रीयंतामितिभवंतोब्रुवंतु ॥ प्रीयंतांपितरः ॥ सव्यं ॥ सर्वेस्वस्तिभवंतोब्रुवंतु ॥ आयुष्मतेस्वस्ति ॥ शोभनंहविः ॥ आत्मालंकारः ॥ शाकपाकाः पितृप्रियाः ॥ उत्तमोत्तमाः ॥ पिंडान्नमस्कृत्य ॥ देवपितॄणामग्रेसहैवगोत्राशिषःप्रार्थयते ॥ अघोराःपितरःसंतु ॥ गोत्रं वर्धतां ॥ दातारोनोभिवर्धंतांवेदाःसंततिरेवनः ॥ श्रद्धाचनोमाव्यगमद्बहुदेयंचनोस्तु ॥ अन्नंचनोबहुभवेदतिथींश्चलभेमहि ॥ याचितारश्चनःसंतु माचयाचिष्मकंचन ॥ इतिप्रार्थ्य ॥ दातारोवोभिवर्धंतां वेदाःसंततिरेववः ॥ श्रद्धा चवोमाव्यगमत् बहुधेयंचवोस्तु ॥ अन्नंचवोबहुभवेदतिथींश्चलभध्वं ॥ याचितारश्चवःसंतु माचयाचिढ्वंकंचन ॥ स्वस्ति गोत्रंगोत्रस्याभिवृद्धिरस्तु ॥ एताःसत्याआशिषःसंतु ॥ देवपितृप्रसादोस्तु ॥ गयाकृतश्राद्धमस्तु ॥ पिंडानुद्वासयिष्ये ॥ उद्वासय ॥ तद्विष्णोःपरमंपदꣳसदापश्यंतिसूरयः ॥ दिवीवचक्षुराततं ॥ अयोध्यामथुरामायाकाशीकांचीअवंतिका ॥ पुरीद्वारवतीचैवसप्तैतामोक्षदायिकाः ॥ पिंडस्थानेशांतिःपुष्टिस्तुष्टिश्चास्त्वितिभवंतोब्रुवंतु ॥ पिंडस्थानेशांतिःपुष्टिस्तुष्टि श्चास्तु ॥ स्वस्थानेवासः ॥ देवान्पितॄन्सहैवविसर्जयिष्ये ॥ विसर्जय ॥ अपसव्यं ॥ वाजेवाजेवतवाजिनोनोधनेषुवि

प्राअमृताऋतज्ञाः ॥ अस्यमध्वःपिबतमादयध्वंतृप्तायातपथिभिर्देवयानैः ॥ उत्तिष्ठंतुपितरः ॥ सव्येन विश्वेदेवैःसह ॥ आमावाजस्यप्रसवोजगम्यादाद्यावापृथिवीविश्वशंभू ॥ आमागंतांपितरामातराचामासोमोअमृतत्वायगम्यात् ॥ स्वादुषं सदःपितरोवयोधाःकृच्छ्रेश्रितःशक्तीवंतोगभीराः ॥ चित्रसेनाइषुबलाअमृध्राःसतोवीराउरवोव्रातसाहाः ॥ ब्राह्मणासः पितरःसोम्यासःशिवेनोद्यावापृथिवीअनेहसा ॥ पूषानःपातुदुरितादृतावृधोरक्षामाकिर्नोअघशंसईशत ॥ ब्राह्मणाः ॥ इहैवस्तंमावियौष्टंविश्वमायुर्व्यश्नुतं ॥ क्रीळंतौपुत्रैर्नप्तृभिर्मोदमानौस्वेगृहे ॥ आयुःप्रजांधनंविद्यांस्वर्गंमोक्षंसुखानिच ॥ प्रयच्छंतुतथाराज्यंप्रीतानृणांपितामहाः ॥ एताःसत्याआशिषःसंतु ॥ श्राद्धंगयाकृतश्राद्धमस्तु ॥ पितृणामक्षय्यातृप्तिरस्तु ॥ यजमानः ॥ अद्यमेसफलंजन्मभवत्पादाब्जवंदनात् ॥ अद्यमेवंशजाःसर्वेयातावोनुग्रहादिवं ॥ यत्तुशाकादिदानेनक्लेशितायूयमीदृशाः ॥ तत्क्लेशजातंचित्तस्थंविस्मृत्यक्षंतुमर्हथ ॥ विस्मृत्यक्षमामहे ॥ मंत्रहीनंक्रियाहीनंभक्तिहीनंद्विजोत्तमाः ॥ श्राद्धंसंपूर्णतांयातुप्रसादाद्भवतांमम ॥ श्राद्धंसंपूर्णमस्तु ॥ यःकश्चिच्छ्राद्धयज्ञस्यप्रोक्तोमन्वादिभिर्विधिः ॥ असौयुष्मत्प्रसादेनसंपूर्णःसफलोस्तुमे ॥ अस्तुसंपूर्णःसफलः ॥ शेषोप्यस्ति ॥ हूयतां ॥ इष्टैःसहभुज्यतां ॥ वसिष्ठासःपितृवद्वाचमक्रतदेवाँईळानाऋषिवत्स्वस्तये ॥ प्रीताइवज्ञातयःकाममेत्यास्मेदेवासोवधूनुतावसु ॥ देवान्वसिष्ठोअमृतान्ववंदेयेविश्वाभुवनाभिप्रतस्थुः ॥ तेनोरासंतामुरुगायमद्ययूयंपातस्वस्तिभिःसदानः ॥ इदंपितृभ्योनमोअस्त्वद्येतिनमस्कारवतीमंततःशंसतितस्मादंततःपितृभ्योनमस्क्रियतेतदाहुर्व्याहावंपित्र्याःशंसेत् ॥ अव्याहावाँइति ॥ व्याहावमेवशंसेदसंस्थितंवैपितृयज्ञस्यसाध्वसंस्थितंवाएषपितृयज्ञंसंस्थापयतियोव्याहावंशंसतितस्माद्व्याहावमेवशंस्तव्यं ॥ होतास्वएवास्मांआयतनइंद्रियंवीर्यमवरुंधेद्वाद

शोपदधातिद्वादशाक्षराजगतीजागताःपशवोजगत्यैवास्मैपशूनवरुंधेष्टावष्टावन्येषुधिष्णियेषूपदधात्यष्टाशफाःपशवःपशूनेवाव
रुंधेषण्मार्जालीयेषड्वाऋतवऋतवःखलुवैदेवाःपितरऋतूनेवदेवान्पितॄन्प्रीणाति ॥ जपच्छिद्रंतपश्छिद्रंयच्छिद्रंश्राद्धकर्मणि ॥
सर्वभवतुमेऽच्छिद्रंब्राह्मणानांप्रसादतः ॥ सर्वमच्छिद्रंभवतु ॥ अनेनाग्नौकरणब्राह्मणभोजनपिंडप्रदानकर्मत्रयात्मकेनश्राद्धेन
पितृस्वरूपीजनार्दनवासुदेवःप्रीयतां ॥ एषपितृयज्ञःतत्सद्ब्रह्मार्पणमस्तु ॥ द्विराचामेत् ॥ तर्पणंकुर्यात् ॥ अद्येत्यादि० पितृ
णांमहालयश्राद्धांगभूतंपरेहनिक्रियमाणमपिसद्योपकर्षेणदेवपूर्वकंतर्पणंकरिष्ये ॥ विश्वान्देवांस्तर्पयामि २ ॥ प्राचीनावीती ॥
पितरंशर्माणमित्यादिसर्वान्पितॄंस्तर्पयेत् ॥ स्वयंभुंजीत ॥ इतिमहालयश्राद्धम् ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ६० ॥ अन्नसूक्तानि ॥

उपह्वयेसुदुघांधेनुमेतांसुहस्तोगोधुगुतदोहदेनां ॥ श्रेष्ठंसवंसवितासाविषन्नोभीद्धोघर्मस्तदुषुप्रवोचं ॥ हिंकृण्वतीवसुपत्नीवसूनां
वत्समिच्छंतीमनसाभ्यागात् ॥ दुहामश्विभ्यांपयोअघ्न्येयंसावर्धतांमहतेसौभगाय ॥ इंद्रद्दह्यंयामकोशाअभूवन्यज्ञायशिक्षगृ
णतेसखिभ्यः ॥ दुर्मायवोदुरेवामर्त्यासोनिषंगिणोरिपवोहंत्वासः ॥ वाशीमंतऋष्टिमंतोमनीषिणःसुधन्वानइषुमंतोनिषंगिणः ॥
स्वश्वास्थसुरथाःपृश्निमातरःस्वायुधामरुतोयाथनाशुभं ॥ चतुष्कपर्दायुवतिःसुपेशाघृतप्रतीकावयुनानिवस्ते ॥ तस्यांसुपर्णावृष
णानिषेदतुर्यत्रदेवादधिरेभागधेयं ॥ एकःसुपर्णःससमुद्रमाविवेशसइदंविश्वंभुवनंविचष्टे ॥ तंपाकेनमनसापश्यमंतितस्तंमातारे
ळ्हिसउरेळ्हिमातरं ॥ सुपर्णंविप्राःकवयोवचोभिरेकंसंतंबहुधाकल्पयंति ॥ छंदांसिचदधतोअध्वरेषुग्रहान्त्सोमस्यमिमतेद्वादश ॥
पितुंनुस्तोषंमहोधर्माणंतविषीं ॥ यस्यत्रितोव्योजसावृत्रंविपर्वमर्दयत् ॥ स्वादोपितोमधोपितोवयंत्वाववृमहे ॥ अस्माकमवि

ताभव॥ उपनःपितुवाचरशिवःशिवाभिरूतिभिः॥ मयोभुरद्विषेण्यःसखासुशेवोअद्वयाः॥ तवत्येपितोरसारजांस्यनुविष्ठिताः ॥ दिविवाताइवश्रिताः ॥ तवत्येपितोददतस्तवस्वादिष्ठतेपितो ॥ प्रस्वाझानोरसोनांतुविग्रीवाइवेरते ॥ त्वेपितोमहानांदेवानां मनोहितं ॥ अकारिचारुकेतुनातवाहिमवसावधीत् ॥ यददोपितोअजगन्विवस्वपर्वतानां ॥ अत्राचिन्नोमधोपितोरंभक्षायग म्याः ॥ यदपामोषधीनांपरिंशमारिशामहे॥ वातापेपीवइद्भव ॥ यत्तेसोमगवाशिरोयवाशिरोभजामहे ॥ वातापेपीवइद्भव ॥ करंभओषधेभवपीवोवृक्कउदारथिः ॥ वातापेपीवइद्भव ॥ तंत्वावयंपितोवचोभिर्गावोनहव्यासुषूदिम ॥ देवेभ्यस्त्वासधमाद मस्मभ्यंत्वासधमादं ॥ कयानश्चित्रआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ कस्त्वासत्योमदानांमंहिष्ठोमत्सदंधसः ॥ दृढाचिदारुजेवसु ॥ अभीषुणःसखीनामविताजरितॄणां ॥ शतंभवास्यूतिभिः ॥ ॥ ततआब्रह्मन्नित्यनुवाकंपठंति ॥ छ ॥ आब्रह्मन्ब्राह्मणोब्रह्मवर्चसीजायतामास्मिन्राष्ट्रेराजन्यइषव्यःशूरोमहारथोजायतांदोग्ध्रीधेनुर्वोढानड्वानाशुःसप्तिःपुरंधिर्योषा जिष्णूरथेष्ठाःसभेयोयुवास्ययजमानस्यवीरोजायतांनिकामेनिकामेनःपर्जन्योवर्षतुफलिन्योनओषधयःपच्यंतांयोगक्षेमोनःक ल्पतां ॥ आब्रह्मन्ब्राह्मणोब्रह्मवर्चसीजायतामित्याह ॥ ब्राह्मणएवब्रह्मवर्चसंदधाति ॥ तस्मात्पुराब्राह्मणोब्रह्मवर्चस्यजा यत ॥ आस्मिन्राष्ट्रेराजन्यइषव्यःशूरोमहारथोजायतामित्याह॥ राजन्यएवशौर्यंमहिमानंदधाति ॥ तस्मात्पुराराजन्यइषव्यः शूरोमहारथोजायत॥ दोग्ध्रीधेनुरित्याह ॥ धेन्वामेवपयोदधाति ॥ तस्मात्पुरादोग्ध्रीधेनुरजायत॥ वोढानड्वानित्याह ॥ अन डुह्येववीर्यंदधाति ॥ तस्मात्पुरावोढानड्वानजायत॥ आशुःसप्तिरित्याह ॥ अश्वएवजवंदधाति ॥ तस्मात्पुराशुरश्वोजायत ॥ पुरंधिर्योषेत्याह ॥ योषित्येवरूपंदधाति ॥ तस्मात्स्त्रीयुवतिःप्रियाभावुका॥ जिष्णूरथेष्ठाइत्याह ॥ आहुवैतत्रंजिष्णूरथेष्ठाजा

यते ॥ यत्रैतेनयज्ञेनयजंते ॥ सभेयोयुवेत्याह ॥ योवैपूर्ववयसी ॥ ससभेयोयुवा ॥ तस्माद्युवापुमान्प्रियोभावुकः ॥ आस्य
यजमानस्यवीरोजायतामित्याह ॥ आहवैतत्रयजमानस्यवीरोजायते ॥ यत्रैतेन० ॥ निकामेनिकामेनःपर्जन्योवर्षत्वित्याह ॥
निकामेनिकामेहवैतत्रपर्जन्योवर्षति ॥ यत्रैतेनय० ॥ फलिन्योनओषधयःपच्यंतामित्याह ॥ फलिन्योहवैतत्रौषधयःपच्यंते ॥
यत्रैतेन० ॥ योगक्षेमोनःकल्पतामित्याह ॥ कल्पतेहवैतत्रप्रजाभ्योयोगक्षेमः ॥ यत्रैतेनयज्ञेनयजंते ॥ ॥ नमःककुभायनि
षंगिणेस्तेनानांपतयेनमः ॥ नमोनिषंगिणइषुधिमतेतस्कराणांपतयेनमः ॥ नमोनिषंगिणेचेषुधिमतेच ॥ येतीर्थानिप्रचरंति
सृकावंतोनिषंगिणः ॥ तेषांꣳसहस्रयोजनेवधन्वानितन्मसि ॥ सइषुहस्तैःसनिषंगिभिर्वशीसꣳस्रष्टासयुधइंद्रोगणेन ॥ सꣳसृष्ट
जित्सोमपाबाहुशर्ध्यूर्ध्वधन्वाप्रतिहिताभिरस्ता ॥ ॥ ततस्त्रिसुपर्णंपठेत् ॥ ॥ ७ ॥ ॥ ७ ॥

## ॥ ६१ ॥ त्रिसुपर्णम् ॥

श्रीः ॥ ॐ शांतिःशांतिःशांतिः ॥ ॐ ब्रह्ममेतुमां ॥ मधुमेतुमां ॥ ब्रह्ममेवमधुमेतुमां ॥ यास्तेसोमप्रजावत्सोभिसोअहं ॥
दुःष्वप्नहंदुरुःषह ॥ यास्तेसोमप्राणाꣳस्तान्जुहोमि ॥ त्रिसुपर्णमयाचितंब्राह्मणायदद्यात् ॥ ब्रह्महत्यांवाएतेघ्नंति ॥ येब्राह्मणा
स्त्रिसुपर्णंपठंति ॥ तेसोमंप्राप्नुवंति ॥ आसहस्रात्पंक्तिंपुनंति ॥ ॐ ब्रह्ममेधया ॥ मधुमेधया ॥ ब्रह्ममेवमधुमेधया ॥ अद्यानो
देवसवितःप्रजावत्सावीःसौभगं ॥ परादुःष्वप्नियꣳसुव ॥ विश्वानिदेवसवितर्दुरितानिपरासुव ॥ यद्भद्रंतन्मआसुव ॥ मधुवा
ताऋतायतेमधुक्षरंतिसिंधवः॥ माध्वीर्नःसंत्वोषधीः ॥ मधुनक्तमुतोषसिमधुमत्पार्थिवꣳरजः ॥ मधुद्यौरस्तुनःपिता ॥ मधुमा
न्नोवनस्पतिर्मधुमाꣳअस्तुसूर्यः ॥ माध्वीर्गावोभवंतुनः ॥ यइमंत्रिसुपर्णमयाचितंब्राह्मणायदद्यात् ॥ भ्रूणहत्यांवाएतेघ्नंति ॥

येब्राह्मणास्त्रिसुपर्णंपठंति ॥ तेसोमंप्राप्नुवंति ॥ आसहस्रात्पंक्तिंपुनंति ॥ ॐब्रह्ममेधवा ॥ मधुमेधवा ॥ ब्रह्ममेवमधुमेधवा ॥
ब्रह्मादेवानांपदवीःकवीनामृषिर्विप्राणांमहिषोमृगाणां ॥ श्येनोगृध्राणांस्वधितिर्वनानांसोमःपवित्रमत्येतिरेभन् ॥ हंसः
शुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतंबृहत् ॥ ऋचेत्वारुचे
त्वासमित्स्रवंतिसरितोनधेनाः ॥ अंतर्हृदामनसापूयमानाः ॥ घृतस्यधाराअभिचाकशीमि ॥ हिरण्ययोवेतसोमध्यआसां ॥ तस्मि
न्त्सुपर्णोमधुकृत्कुलायीभजन्नास्तेमधुदेवताभ्यः ॥ तस्यासतेहरयःसप्ततीरेस्वधांदुहानाअमृतस्यधारां ॥ यइदंत्रिसुपर्णमयाचि
तंब्राह्मणायदद्यात् ॥ वीरहत्यांवाएतेघ्नंति ॥ येब्राह्मणास्त्रिसुपर्णंपठंति ॥ तेसोमंप्राप्नुवंति ॥ आसहस्रात्पंक्तिंपुनंति ॥ ॐतस्यैवं
विदुषोयज्ञस्यात्मायजमानःश्रद्धापत्नीशरीरमिध्ममुरोवेदिर्लोमानिबर्हिर्वेदःशिखाहृदयंयूपःकामआज्यंमन्युःपशुस्तपोग्निर्दमः
शमयितादक्षिणावाग्घोताप्राणउद्गाताचक्षुरध्वर्युर्मनोब्रह्माश्रोत्रमग्नीद्यावद्ध्रियतेसादीक्षायदश्नातितद्धविर्यत्पिबतितदस्यसोम
पानंयद्रमतेतदुपसदोयत्संचरत्युपविशत्युत्तिष्ठतेचसप्रवर्ग्योयन्मुखंतदाहवनीयोयाव्याहृतिराहुतिर्यदस्यविज्ञानंतज्जुहोतियत्सा
यंप्रातरत्तितत्समिधंयत्प्रातर्मध्यंदिनंसायंचतानिसवनानियेअहोरात्रेतेदर्शपूर्णमासौयेर्धमासाश्चमासाश्चतेचातुर्मास्यानियऋ
तवस्तेपशुबंधायेसंवत्सराश्चपरिवत्सराश्चतेहर्गणाःसर्ववेदसंवाएतत्सत्रंयन्मरणंतदवभृथएतद्वैजरामर्यमग्निहोत्रंसत्रंयएवंवि
द्वानुदगयनेप्रमीयतेदेवानामेवमहिमानंगत्वादित्यस्यसायुज्यंगच्छत्यथयोदक्षिणेप्रमीयतेपितृणामेवमहिमानंगत्वाचंद्रमसःसायु
ज्यंसलोकतामाप्नोत्येतौवैसूर्याचंद्रमसोर्महिमानौब्राह्मणोविद्वानभिजयतितस्माद्ब्रह्मणोमहिमानमाप्नोतितस्माद्ब्रह्मणोमहिमा
नं ॥ सहनाववतु ॥ सहनौभुनक्तु ॥ सहवीर्यंकरवावहै ॥ तेजस्विनावधीतमस्तुमाविद्विषावहै ॥ ॐ शांतिःशांतिःशांतिः ॥ ॥

## ॥ ६२ ॥ अभिश्रवणसूक्तानि ॥

ॐ युंजतेमनउतयुंजतेधियोविप्राविप्रस्यबृहतोविपश्चितः ॥ विहोत्रादधेवयुनाविदेकइन्महीदेवस्यसवितुःपरिष्टुतिः ॥ सुवाग्देवदु
र्याꣳआवददेवश्रुतौदेवेष्वाघोषेथामानोवीरोजायतांकर्मण्योयꣳसर्वेनुजीवामयोबहूनामसद्वशी॥इदंविष्णुर्विचक्रमेत्रेधानिदधेप
दं॥समूढमस्यपाꣳसुरइरावतीधेनुमतीहिभूतꣳसूयवसिनीमनवेयशस्ये॥व्यस्कभ्नाद्रोदसीविष्णुरेतेदाधारपृथिवीमभितोमयूखैः॥
प्राचीप्रेतमध्वरंकल्पयंतीऊर्ध्वंयज्ञंनयतमाजीह्वरतमत्ररमेथांवर्ष्मन्पृथिव्यादिवोवाविष्णवुतवापृथिव्यामहोवाविष्णवुतवांतरि
क्षाद्धस्तौपृणस्वबहुभिर्वसव्यैराप्रयच्छदक्षिणादोतसव्यात्॥ विष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजाꣳसियोअस्कभाय
दुत्तरꣳसधस्थंविचक्रमाणस्त्रेधोरुगायोविष्णोरराटमसिविष्णोःपृष्ठमसिविष्णोश्श्यप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवमसिवैष्णवम
सिविष्णवेत्वा॥१॥ कृणुष्वपाजःप्रसितिंनपृथ्वींयाहिराजेवामवाꣳइभेन॥२॥ रक्षोहणोवलगहनोवैष्णवान्खनामीदमहंतंवलगमु
द्वपामियन्नःसमानोयमसमानोनिचखानेदमेनमधरंकरोमियोनःसमानोयोसमानोरातीयतिगायत्रेणच्छंदसावबाढोवलगःकिम
त्रंभद्रंतन्नौसहविराडसिसपत्नहासम्राडसिभ्रातृव्यहास्वराडस्यभिमातिहाविश्वाराडसिविश्वासांनाष्ट्राणाꣳहंतारक्षोहणोवलगह
नःप्रोक्षामिवैष्णवान्रक्षोहणोवलगहनोवनयामिवैष्णवान्यवोसियवयास्मद्द्वेषोयवयारातीरक्षोहणोवलगहनोवस्तृणामिवैष्णवा
न्रक्षोहणोवलगहनोभिजुहोमिवैष्णवान्रक्षोहणौवलगहनावुपदधामिवैष्णवीरक्षोहणौवलगहनौपर्यूहामिवैष्णवीरक्षोहणौवल
गहनौपरिस्तृणामिवैष्णवीरक्षोहणौवलगहनौवैष्णवीबृहन्नसिबृहद्ग्रावाबृहतीमिंद्रायवाचंवद॥३॥सोमायपितृमतेपुरोडाशꣳषट्
कपालंनिर्वपतिपितृभ्योबर्हिषद्भ्योधानाःपितृभ्योग्निष्वात्तेभ्योभिवान्यायैदुग्धेमंथमेतत्तेततयेचत्वामन्वेतत्तेपितामहप्रपितामह

येचत्वामन्वत्रपितरोयथाभागंमंदध्व॑ऽसुसंदृशंत्वावयंमघवन्मंदिषीमहि॥प्रनूनंपूर्णवंधुरस्तुयोयासिवशा॑ऽअनु॥ योजान्विंद्रतेह
री॥अक्षन्नमीमदंतह्यवप्रियाअधूषत॥अस्तोषतस्वभानवोविप्रानविष्ठयामती॥योजान्विंद्रतेहरी॥ अक्षन्पितरोमीमदंतपितरोती
तृपंतपितरोमीमृजंतपितरः॥ परेतपितरःसोम्यागंभीरैःपथिभिःपूर्व्यैः॥ अथापितृन्सुविदत्रा॑ऽअपीतयमेनयेसधमादंमदंति ॥ म
नोन्वाहुवामहेनाराश॑ऽसेनस्तोमेनपितृणांचमन्मभिः॥आनएतुमनःपुनःक्रत्वेदक्षायजीवसे॥ज्योक्चसूर्यंदृशे॥पुनर्नःपितरोमनो
ददातुदैव्योजनः॥जीवंव्रात॑ऽसचेमहि ॥ यदंतरिक्षंपृथिवीमुतद्यांयन्मातरंपितरंवाजिहिं॑ऽसिम ॥ अग्निर्मातस्मादेनसोगार्हपत्यः
प्रमुंचतुदुरितायानिचकृमकरोतुमामनेनसं ॥ ४ ॥ उशंतस्त्वाहवामहउशंतःसमिधीमहि॥ उशन्नुशतआवहपितृन्हविषेअत्तवे ॥
त्व॑ऽसोमप्रचिकितोमनीषात्व॑ऽरजिष्ठमनुनेषिपंथां ॥ तवप्रणीतीपितरोनइंदोदेवेषुरत्नमभजंतधीराः ॥ त्वयाहिनःपितरःसोमपू
र्वेकर्माणिचक्रुःपवमानधीराः ॥ वन्वन्नवातःपरिधी॑ऽरपोर्णुवीरेभिरश्वैर्मघवाभवानः ॥ त्व॑ऽसोमपितृभिःसंविदानोनुद्यावापृ
थिवीआततंथ ॥ तस्मैतइंदोहविषाविधेमवय॑ऽस्यामपतयोरयीणां ॥ अग्निष्वात्ताःपितरएहगच्छतसदःसदःसदतसुप्रणीतयः ॥
अत्ताहवी॑ऽषिप्रयतानिबर्हिष्यथारयि॑ऽसर्ववीरंदधातन॥ बर्हिषदःपितरऊत्यर्वागिमावोहव्याचकृमाजुषध्वं ॥ तआगतावसाशं
तमेनाथास्मभ्य॑ऽशंयोररपोदधात ॥ आहंपितृन्सुविदत्रा॑ऽअवित्सिनपातंचविक्रमणंचविष्णोः ॥ बर्हिषदोयेस्वधयासुतस्यभजं
तपित्वस्तइहागमिष्ठाः ॥ उपहूताःपितरःसोम्यासोबर्हिष्येषुनिधिषुप्रियेषु ॥ तआगमंतुतइहश्रुवंत्वधिब्रुवंतुतेअवंत्वस्मान् ॥
उदीरतामवरउत्परासउन्मध्यमाःपितरःसोम्यासः ॥ असुंयईयुरवृकाऋतज्ञास्तेनोवंतुपितरोहवेषु ॥ इदंपितृभ्योनमोअस्त्वद्यये
पूर्वासोयउपरासईयुः ॥ येपार्थिवेरजस्यानिषत्तायेवानून॑ऽसुवृजनासुविक्षु ॥ अधायथानःपितरःपरासःप्रत्नासोअग्नऋतमाशु

षाणाः ॥ शुचीदयंदीधितिमुक्थशासःक्षामाभिंदंतोअरुणीरपव्रन् ॥ यदंग्नेकव्यवाहनपितॄन्यक्ष्यृतावृधः ॥ प्रचहव्यानिव
क्ष्यसिदेवेभ्यश्चपितृभ्यऽआ ॥ त्वमंग्नईडितोजातवेदोवाड्ढव्यानिसुरभीणिकृत्वा ॥ प्रादाःपितृभ्यःस्वधयातेअंक्षन्नद्धित्वंदेवप्र
यताहवीꣳषि ॥ मातलीकव्यैर्यमोअंगिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः ॥ याꣳश्चदेवावावृधुर्येचदेवान्त्स्वाहान्येस्वधयान्येम
दंति ॥ इमंयमप्रस्तरमाहिसीदांगिरोभिःपितृभिःसंविदानः ॥ आत्वामंत्राःकविशस्तावहन्त्वेनाराजन्हविषामादयस्व ॥ अंगि
रोभिरागहियज्ञियेभिर्यमवैरूपैरिहमादयस्व ॥ विवस्वंतꣳहुवेवःपितातेस्मिन्यज्ञेबर्हिष्यानिषद्य ॥ अंगिरसोनःपितरोनवग्वाअ
थर्वाणोभृगवःसोम्यासः ॥ तेषांवयꣳसुमतौयज्ञियानामपिभद्रेसौमनसेस्याम ॥५॥ भक्षेहिमाविशदीर्घायुत्वायशंतनुत्वायराय
स्पोषायवर्चसेसुप्रजास्त्वायेहिवसोपुरोवसोप्रियोमेहृदोस्यश्विनोस्त्वाबाहुभ्याꣳसघ्यासंनृचक्षसंत्वादेवसोमसुचक्षाअवख्येषंमं
द्राविभूतिःकेतुर्यज्ञानांवाग्जुषाणासोमस्यतृप्यतुमंद्रास्वर्वाच्यदितिरनाहतशीर्ष्णीवाग्जुषाणासोमस्यतृप्यत्वेहिविश्वचर्षणेशंभू
र्मयोभूःस्वस्तिमाहरिवर्णप्रचरक्रत्वेदक्षायरायस्पोषायसुवीरतायैमामाराजन्विबीभिषोमामेहार्दित्विषावधीः॥वृषणेशुष्मायायुषे
वर्चसे ॥ वसुमद्गणस्यसोमदेवतेमतिविदःप्रातःसवनस्यगायत्रछंदसइंद्रपीतस्यनराशꣳसपीतस्यपितृपीतस्यमधुमतउपहूतस्योप
हूतोभक्षयामिरुद्रवद्गणस्यसोमदेवतेमतिविदोमाध्यंदिनस्यसवनस्यत्रिष्टुपछंदसइंद्रपीतस्यनराशꣳसपीतस्यपितृपीतस्यमधुमतउ
पहूतस्योपहूतोभक्षयाम्यादित्यवद्गणस्यसोमदेवतेमतिविदस्तृतीयस्यसवनस्यजगतीछंदसइंद्रपीतस्यनराशꣳसपीतस्यपितृपीत
स्यमधुमतउपहूतस्योपहूतोभक्षयामि ॥ आप्यायस्वसमेतुतेविश्वतःसोमवृष्णियं ॥ भवावाजस्यसंगथे ॥ हिन्वमेगात्राहरिवोग
णान्मेमाविततृषः॥शिवोमेसप्तर्षीनुपतिष्ठस्वमामेवाङ्नाभिमतिगाः ॥ अपामसोमममृताअभूमादर्मज्योतिरविदामदेवान् ॥

हि. ब्रह्म. ॥१०६॥ | अभिश्रव. ॥ ६२ ॥

किमस्मान्कृणवदरातिः किमुधूर्तिरमृतमर्त्यस्य॥यन्मआत्मनोमिंदाभूदग्निस्तत्पुनराहार्जातवेदाविचर्षणिः ॥ पुनरग्निश्चक्षुरदात्पुन
रिंद्रोबृहस्पतिः॥पुनर्मेअश्विनायुवंचक्षुराधत्तमक्ष्योः ॥ इष्टयंजुषस्तेदेवसोमस्तुतस्तोमस्यशस्तोक्थस्यहरिवतइंद्रपीतस्यमधुमतउ
पहूतस्योपहूतोभक्षयामि॥आपूर्याःस्थामापूरयतप्रजयाचधनेनच॥एतत्तेततयेचत्वामन्वेतत्तेपितामहप्रपितामहयेचत्वामःवत्रपि
तरोयथाभागंमदध्वंनमोवःपितरोरसायनमोवःपितरःशुष्मायनमोवःपितरोजीवायनमोवःपितरःस्वधायैनमोवःपितरोमन्यवेन
मोवःपितरोघोरायपितरोनमोवोयएतस्मिंल्लोकेस्थयुष्मांस्तेनुयेस्मिन्लोकेमांतेनुयएतस्मिंल्लोकेस्थयूयंतेषांवसिष्ठाभूयास्तयेस्मिंल्लो
केहंतेषांवसिष्ठोभूयासं॥प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरितावभूव॥यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणां
॥ देवकृतस्यैनसोवयजनमसिमनुष्यकृतस्यैनसोवयजनमसिपितृकृतस्यैनसोवयजनमस्यप्सुधौतस्यसोमदेवतेनृभिःसुतस्येष्टयंजुष
स्तुतस्तोमस्यशस्तोक्थस्ययोभक्षोअश्वसनिर्योगोसनिस्तस्यतेपितृभिर्भक्षंकृतस्योपहूतस्योपहूतोभक्षयामि ॥६॥ प्रजापतिर्मनसांधो
छेतोधातादीक्षायांसविताभृत्यांपूषासोमक्रयण्यांवरुणउपनद्धोसुरःक्रीयमाणोमित्रःक्रीतश्शिपिविष्टआसादितोनरंधिषःप्रोह्य
माणोभिपतिरागतःप्रजापतिःप्रणीयमानोग्निराग्नीध्रेबृहस्पतिराग्नीध्रात्प्रणीयमानइंद्रोहविर्धानेदितिरासादितोविष्णुरुपावह्रिय
माणोथर्वोपोत्तोयमोभिषुतोपूतपाआधूयमानोवायुःपूयमानोमित्रःक्षीरश्रीमंथीसक्तुश्रीवैश्वदेवउन्नीतोरुद्रआहुतोवायुरावृत्तोनृ
चक्षाःप्रतिख्यातोभक्षआगतःपितृणांनाराशंसोसुरात्तःसिंधुरवभृथमवप्रयन्त्समुद्रोवगतःसलिलःप्रप्लुतःसुवरुदचंगतः॥७॥ अ
ग्नंउदधेयातइषुर्युवानामतयानोमृडतस्यास्तेनमस्तस्यास्तउपजीवंतोभूयास्माग्नेदुध्रगह्यकिंशिलवन्ययातइषुर्युवानामतयानोमृ
डतस्यास्तेनमस्तस्यास्तउपजीवंतोभूयास्मपंचत्वाएतेग्नयोयच्चितयउदधिरेवनामंप्रथमोदध्रोद्वितीयोगह्यस्तृतीयःकिंशिलश्चतुर्थो

॥१०६॥

वन्यः पंचमः॥८॥शिरोवाएतद्यज्ञस्ययद्धविर्धानंप्राणाउंपरवाहविर्धानेखायंतेतस्माच्छीर्षन्प्राणाअधस्तात्खायंतेतस्मादधस्ताच्छी
र्ष्णःप्राणारक्षोहणोवलगहनोवैष्णवान्खनामीत्याहवैष्णवाहिदेवतयोपरवाअसुरावैनिर्यंतोदेवानांप्राणेषुवलगान्न्यखनंतान्बाहु
मात्रेन्वविंदन्तस्माद्बाहुमात्राःखायंतइदमहंतंवलगमुद्वपामियन्नःसमानोयमसमानोनिचखानेत्याहद्वौवावपुरुषौयश्चैवसमानोय
श्चासमानोयमेवास्मैतौवलगंनिखनतस्तमेवोद्वपतिसंतृणत्तितस्मात्संतृण्णाअंतरतःप्राणानसंभिनत्तितस्मादसंभिन्नाःप्राणाअपो
वनयतितस्मादार्द्राअंतरतःप्राणायवमतीरवनयति॥ऊर्ग्वैयवःप्राणाउंपरवाःप्राणेष्वेवोर्जंदधातिबर्हिरवस्तृणातितस्माल्लोमशा
अंतरतःप्राणाआज्येनव्याघारयतितेजोवाआज्यंप्राणाउंपरवाःप्राणेष्वेवतेजोदधातिहनूवाएतेयज्ञस्ययदधिषवणेनसंतृणत्त्यसं
तृण्णेहिहनूअथोखलुदीर्घसोमेसंतृद्येधृत्यैशिरोवाएतद्यज्ञस्ययद्धविर्धानं ॥ प्राणाउंपरवाहनूअधिषवणेजिह्वाचर्मग्रावाणोदंतामु
खमाहवनीयोनासिकोत्तरवेदिरुदरंसदोयदाखलुवैजिह्वयादत्स्वधिखादत्यथमुखंगच्छतियदामुखंगच्छत्यथोदरंगच्छतितस्मा
द्धविर्धानेचर्मन्नधिग्रावभिरभिषुत्याहवनीयेहुत्वाप्रत्यंचःपरेत्यसदसिभक्षयंतियोवैविराजोयज्ञमुखेदोहंवेददुहएवैनामियंवैविरा
ट्तस्यैत्वक्कर्मोधोधिषवणेस्तनाउंपरवाग्रावाणोवत्साऋत्विजोदुहंतिसोमःपयोयएवंवेददुहएवैनां॥९॥असावादित्योस्मिंल्लोकआ
सीत्तंदेवाःपृष्ठैःपरिगृह्यसुवर्गंलोकमगमयन्परैरवस्तात्पर्यगृह्णन्दिवाकीर्त्येनसुवर्गेलोकेप्रत्यस्थापयन्परैःपरस्तात्पर्यगृह्णन्पृष्ठैरुपावा
रोहन्त्सवाअसावादित्योमुष्मिन्लोकेपरैरुभयतःपरिगृहीतोयत्पृष्ठानिभवंतिसुवर्गमेवतैर्लोकंयजमानायंतिपरैरवस्तात्परिगृह्णंति
दिवाकीर्त्येन॥सुवर्गेलोकेप्रतितिष्ठंतिपरैःपरस्तात्परिगृह्णंतिपृष्ठैरुपावरोहंतियत्परेपरस्तान्नस्युःपरांचःसुवर्गाल्लोकान्निष्पद्येरन्यदव
स्तान्नस्युःप्रजानिर्दहेयुरभितोदिवाकीर्त्यंपरःसामानोभवंतिसुवर्गएवैनांल्लोकउंभयतःपरिगृह्णंतियजमानावैदिवाकीर्त्यंसंवत्स

रःपरंःसामानोभितोदिवाकीर्त्यंपरंःसामानोभवंतिसंवत्सरएवोभयतःप्रतितिष्ठंतिपृष्ठंवैदिवाकीर्त्यंपार्श्वेपरंःसामानोभितोदिवा
कीर्त्यंपरंःसामानोभवंतितस्मादभितःपृष्ठंपार्श्वेभूयिष्ठाग्रहागृह्यंतेभूयिष्ठꣳशस्यतेयज्ञस्यैवतन्मध्यतोग्रंथिंग्रंथंत्यविस्रꣳसायसप्तगृ
ह्यंतेसप्तवैशीर्षण्याःप्राणाःप्राणानेवयजमानेषुदधतियत्पराचीनानिपृष्ठानिभवंत्यमुमेवतैर्लोकमभ्यारोहंतियदिमंलोकंनप्रत्यव
रोहेयुरुद्वामाद्येयुर्यजमानाःप्रवामीयेरन्यत्प्रतीचीनानिपृष्ठानिभवंतीममेवतैर्लोकंप्रत्यवरोहंत्यथोअस्मिन्नेवलोकेप्रतितिष्ठंत्यनु
न्मादायेंद्रोअप्रतिष्ठितआसीत्सप्रजापतिमुपाधावत्तस्माएतमेकविꣳशतिरात्रंप्रायच्छत्तमाहरत्तेनायजततोवैसप्रत्यतिष्ठद्येबहुया
जिनोप्रतिष्ठिताःस्युस्तएकविꣳशतिरात्रमासीरन्द्वादशमासाःपंचर्तवस्त्रयइमेलोकाअसावादित्यएकविꣳशएतावंतोवैदेवलोका
स्तेष्वेवयथापूर्वंप्रतितिष्ठंत्यसावादित्योनव्यरोचतसप्रजापतिमुपाधावत्तस्माएतमेकविꣳशतिरात्रंप्रायच्छत्तमाहरत्तेनायजततो
वैसोरोचतयएवंविद्वाꣳसएकविꣳशतिरात्रमासतेरोचंतएवैकविꣳशतिरात्रोभवतिरुग्वाएकविꣳशोरुचमेवगच्छंत्यथोप्रतिष्ठामेव
प्रतिष्ठाह्येकविꣳशोतिरात्रावभितोभवतोब्रह्मवर्चसस्यपरिगृहीत्यै॥ १०॥किꣳस्विदासीत्पूर्वचित्तिःकिꣳस्विदासीद्बृहद्वयः ॥ किꣳ
स्विदासीत्पिशंगिलाकिꣳस्विदासीत्पिलिप्पिला ॥ द्यौरासीत्पूर्वचित्तिरश्वआसीद्बृहद्वयः ॥ रात्रिरासीत्पिशंगिलाविरासीत्पिलि
प्पिला ॥ कःस्विदेकाकीचरतिकउस्विज्जायतेपुनः ॥ किꣳस्विद्धिमस्यभेषजंकिꣳस्विदावपनंमहत् ॥ सूर्यएकाकीचरतिचंद्रमाजा
यतेपुनः ॥ अग्निर्हिमस्यभेषजंभूमिरावपनंमहत् ॥ पृच्छामित्वापरमंतंपृथिव्याःपृच्छामित्वाभुवनस्यनाभिं ॥ पृच्छामित्वावृष्णो
अश्वस्यरेतःपृच्छामिवाचःपरमंव्योम ॥ वेदिमाहुःपरमंतंपृथिव्यायज्ञमाहुर्भुवनस्यनाभिं ॥ सोममाहुर्वृष्णोअश्वस्यरेतोब्रह्मै
ववाचःपरमंव्योम ॥ ११ ॥ आब्रह्मन्ब्राह्मणोब्रह्म० ॥ १२ ॥ ॥ ७ ॥ ॥ ७ ॥

## ॥ ६३ ॥ दर्शश्राद्धपार्वणप्रयोगः ॥

पार्वणश्राद्धानुक्रमकारिकाः ॥ आरंभःपाकशुद्धिःसुरपितृसदनेकव्यवाहाग्निसिद्धिःप्रज्ञातंस्यात्पवित्रंद्विजपरिगमनादुद्धरिष्या मिचोक्त्वा ॥ शम्याधानादिचक्षुष्युपरिदिविषदावाहनंपैतृकंचापांसेकोमुख्यहोमोघृतबहुघृतमिश्रौदनाभ्यांपृथक्क ॥ १ ॥ कव्यंस्विष्टंपुरोत्राप्युपरितउदकैःसेचनंतुप्रसव्यमन्नस्पर्शांतमर्घ्यंपुनरपिकुसुराचांतमेषुप्रदद्यात् ॥ हस्तार्चादक्षिणाक्षय्यकमुख करणंप्रार्थ्यविप्रान्विसृज्यपिंडान्दद्यादथांजल्युदकनिनयनंवैजयंतीक्रमोयं ॥२॥ अथप्रयोगः॥ तत्रयद्यग्निविच्छेदस्तदापुनराधाने नाग्निंसंपाद्य आचम्य पवित्रवंतःपरि० ऊर्ध्वकेशि० अपक्रामंतु० श्राद्धकर्मसमारभे॥प्राणायामः ॥ निहन्मिस० अपसव्यं तिला रक्षंत्वसुरान्० सव्यं अपवित्रःपवित्रोवा० ॥ अपसव्यं ॥ श्राद्धभूमौ० उदीरता० आगच्छंतुश्राद्धकालेविश्वेदेवैःसहपितरः ॥ सव्यं॥ विष्णुर्विष्णुः० प्राप्त्यर्थंपुरूरवार्द्रवसंज्ञकानांविश्वेषांदेवानांप्राचीनावीती ॥ अस्मत्पितृपितामहप्रपितामहानांशर्मणांगो त्राणांसपत्नीकानांवसुरुद्रादित्यस्वरूपाणांअस्मन्मातामहमातुःपितामहमातुःप्रपितामहानांशर्मणांगोत्राणांसपत्नीकानांवसुरुद्रा दित्यस्वरूपाणांसव्यंश्रेयोर्थंमोक्षार्थंतृप्त्यर्थंपित्रादीनांदर्शश्राद्धंदेशकालाद्यनुसारतःपार्वणेनविधिनाअन्नेनहविषासद्यःकरिष्ये ॥ कुरुष्व ॥ तदंगंगृहभांडभाजनशुद्ध्यर्थंयवोदकतिलोदकाभिमंत्रणंक्षणादिचकरिष्ये ॥ कुरुष्व॥ इमंमे०भवंतु ॥ पाकप्रोक्षणं॥ यद्देवादेवहेळनंइत्यादिपाकप्रोक्षणंविधिवदस्तुअस्तुविधिवत् ॥ अग्निमुपसमाधाय ॥ युष्मदनुज्ञयाअग्नौकरणंकरिष्ये ॥ दक्षिणाग्रान्दर्भानासनेकल्पयित्वा ॥ कव्यवाहननामानमग्निंप्रतिष्ठापयामि ॥ चत्वारिशृंगाइत्यादिममसंमुखोवरदोभव ॥

१ अत्रकेचनआसनादिकरिष्यइत्येवसंकल्प्ययवतिलोदकेपाकप्रोक्षणंचद्वितीयसंकल्पोत्तरंकुर्वंति ।

समित्त्रयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वा॥अग्नौकरणहोमकर्मणियायक्ष्यमाणादेवतास्ताःसर्वाःपरिग्रहीष्यामि ॥ जात वेदसमग्निमिध्मेनेत्यादिव्याहृत्यंतमुक्त्वा ॥ वैशेषिकप्रधानहोमे ॥ प्राचीनावीती ॥ सोमंपितृमंतंयममंगिरस्वंतंपितृमंतं पितरं पितामहंप्रपितामहंअमुकशर्माणं ३ पितरंपितामहंप्रपितामहं पितॄन्द्भिः पितॄन्पितामहान्प्रपितामहांश्चाज्येन ॥ सोमंपितृमंतं यममंगिरस्वंतंपितृमंतंपितरंपितामहंप्रपितामहंअमुकशर्माणंत्रिः ३ पितरंपितामहंप्रपितामहं पितॄन्द्भिः पितॄन्पितामहान् प्रपितामहांश्चान्नेन ॥ सोमंपितृमंतंयममंगिरस्वंतंपितृमंतं मातरंपितामहींप्रपितामहींअमुकदां ३ मातरंपितामहींप्रपितामहीं पितॄन्द्भिः मातॄःपितामहीःप्रपितामहीश्चाज्येन ॥ सोमंपितृमंतंयममंगिरस्वंतंपितृमंतंमातरंपितामहींप्रपितामहींअमुकदां ३ मातरंपितामहींप्रपितामहीं पितॄन्द्भिः मातॄःपितामहीःप्रपितामहीश्चान्नेन॥सोमंपितृमंतंयममंगिरस्वंतंपितृमंतंमातामहंमातुःपि तामहंमातुःप्रपितामहंअमुकशर्माणं ३ मातामहंमातुःपितामहंमातुःप्रपितामहं पितॄन्द्भिः मातामहान्मातुःपितामहान्मातुः प्रपितामहांश्चाज्येन ॥ सोमंपितृमंतंयममंगिरस्वंतंपितृमंतंमातामहंमातुःपितामहंमातुःप्रपितामहंअमुकशर्माणं ३ माता मंहमातुःपितामहंमातुःप्रपितामहं पितॄन्द्भिःमातामहान्मातुःपितामहांन्मातुःप्रपितामहांश्चान्नेन ॥ सोमंपितृमंतंयममंगि रस्वंतंपितृमंतंमातामहींमातुःपितामहींमातुःप्रपितामहींअमुकदां ३ मातामहींमातुःपितामहींमातुःप्रपितामहींपितॄन्द्भिःमा तामहीःमातुःपितामहीःमातुःप्रपितामहीश्चाज्येन ॥ सोमंपितृमंतंयममंगिरस्वंतंपितृमंतंमातामहींमातुःपितामहींमातुःप्रपिताम हींअमुकदां ३ मातामहींमातुःपितामहींमातुःप्रपितामहीं पितॄन्द्भिः मातामहीःमातुःपितामहीःमातुःप्रपितामहीश्चान्नेन ॥ अग्निंकव्यवाहनंस्विष्टकृतमाज्येन ॥ यज्ञोपवीती ॥ प्रायश्चित्तहोमे ॥ अग्निंत्रिः अग्नीवरुणौद्भिः इंद्रंद्भिः त्र्यंबकंविष्णुं अग्निं

वायुंसूर्यंबृहस्पतिंवरुणमिंद्रंविश्वान्देवांश्चाज्येन ॥ सꣳस्रावहोमेवसूनरुद्रानादित्यान्सꣳस्रावाज्येन ॥ एतादेवताःसद्योयक्ष्ये ॥
ॐ भूर्भुवःसुवःस्वाहा ॥ प्रजा० म ॥ अन्वाधाय ॥ एषहि० मुखः ॥ यथा० आयुः ॥ दक्षिणाग्रान्दर्भान्परिस्तीर्य ॥ इध्मवं
धनं ॥ दक्षिणतःब्रह्मणेइदमासनं ॥ उत्तरतःब्रह्मप्रणीतायैइदमासनं ॥ दर्भाग्रद्वयंगृहीत्वाहृदयमालभ्य मयिगृह्णा० गात् ॥ पा
त्राण्यासादयति ॥ दर्वींस्रुवंआज्यस्थालींप्रणीतांप्रोक्षणींइध्मंबर्हिःउपवेषंसंमार्गदर्भान्अवज्वलनदर्भान्अर्घ्यपात्रेद्वेउद्धरणपात्रं
मेक्षणंदर्भमुष्टिमन्नमाज्यंचासादयामि ब्रह्मसदनात्तृणंनिरस्यअपउपस्पृश्यअग्निमभिमुखउपविशति ॥ समावप्रच्छिन्नाग्रौदर्भौप्रा
देशमात्रौपवित्रेकृत्वेत्यादित्रिःसर्वाभिःप्रोक्षतीत्यंतंकृत्वादर्वींस्रुवौनिष्टप्यनिदधाति ॥ आज्यंविलाप्यएकदर्भपवित्रांतर्हितायामा
ज्यस्थाल्यामाज्यंनिरुप्येत्यादिउपवेषनिरसनांतंकृत्वा ॥ अपउपस्पृश्य ॥ अपरेणाग्निमित्याद्याज्योत्पवनांतंकृत्वा ॥ पवित्रंप्रज्ञातं
निधाय ॥ कुतुपकालेब्राह्मणान्प्रदक्षिणीकुर्यात् ॥ भूर्भुवःसुवः ॥ समस्तसंपत्० यावतीर्वै०प्रीणाति ॥ अपसव्यं ॥ अक्रोधनैरित्या
दिश्राद्धाधिकारंवाचयित्वा ॥ सव्यं कालोयंमुख्यः कालो० ॥ नमोदेवेभ्यःअपसव्यं स्वधापितृभ्यः सव्यं पुरूरवार्द्रवसंज्ञकविश्वेदे
वस्थानेक्षणंदत्वाभवद्भिःप्रसा०प्राचीना०पितृपितामहप्रपितामहसपत्नीकस्थानेक्षणंदत्वाभव० अस्मन्मातामहमातुःपितामहमा
तुःप्रपितामहसपत्नीकस्थानेक्षणंदत्वाभ०सव्यं सर्वेषांस्वागतं सु० देवाःसमाध्वं सुस० अपसव्यं पित्रादयःसमाध्वं सुसमा०
सव्यं उपक्रांतंपित्रादीनांदर्शश्राद्धाख्यंकर्मकरिष्ये ॥ अपसव्यं श्राद्धस्यकर्मणःसिद्धिरस्त्वितिभवंतो० सव्यं विश्वेषांदेवानां
श्राद्धस्यकर्मणःसिद्धि० ॥ आगच्छंतुमहाभागा०अपोदत्वा ॥ पुरूरवार्द्रव०विश्वेषांदेवानांभूर्भुवःसुवरिदमासनं ॥ स्वा० ॥ अत्रास्यतां

१ इदंपवित्रंपित्रर्घ्यपात्रेनिदध्यात् देवपात्रेतुदर्भद्वयात्मकमपरंलौकिकंनिदध्यात् ।

धर्मोसि ॥ अस्मिन्श्राद्धेदैवेक्षणःक्रियताम् ०वानि ॥ पूर्वासादितमर्घ्यपात्रमादाय ॥ प्रागग्रकूर्चंनिधायउदकमासिच्ययवान्वि कीर्य ॥ विश्वेभ्योदेवेभ्योवोजुष्टंगृह्णामि ॥ २ ॥ अपःप्रदाय ॥ शंनो० तुनः ॥ देवार्घ्यपात्रंसं० सुसंपन्नं ॥ दक्षिणेनाग्निंदर्भेषु सादयित्वाब्राह्मणहस्तेगंधपुष्पाक्षतान्दत्वा ॥ यवोसियवयास्मद्वेषोयवयारातीः ॥ इदंवि०सुरे ॥ यादिव्याआ० र्चसा ॥ पुरू० भ्योविश्वेभ्योदेवेभ्यःइदमर्घ्यंदत्तंन० ॥ तूष्णींयवोदकंइदंवोर्घ्यंदत्तंनमम ॥ पुरूर० गंधाःइत्यादिपुष्पपत्रधूपदीपाच्छादनादि यथावद्दत्त्वा युष्मदनुज्ञयापित्राद्यर्चनंकरिष्ये ॥ कुरुष्व ॥ अपसव्यं पितृपितामहप्रपितामहानांशर्मणांगोत्राणांसपत्नीकानां० रूपाणांमातामहमातुःपितामहमातुःप्रपितामहानांशर्मणांगोत्राणांसप०रूपाणांइदमासनं॥ अत्रास्यतां ॥ धर्मोसि ॥ अत्रास्यामः दर्शश्राद्धेपित्र्येक्षणःक्रियतां ॥ प्राप्नो०वानि ॥ पूर्वासादितंपात्रमादायउदकमासिच्यतिलान्विकीर्य ॥ पितृभ्यःसपत्नीकेभ्यः वोजुष्टंगृह्णामि पिता० प्रपिता०मि ॥ अपःप्रदाय ॥ शंनो० तुनः ॥ पित्रर्घ्यपात्रंसं०संतु ॥ दक्षिणेनाग्निंदर्भेषुसादयि त्वाब्राह्मणहस्तेगंधपुष्पाक्षतान्दत्वा ॥ अपहतासुरारक्षाꣳसिवेदिषदः ॥ इदंवि० रे ॥उदीर०वेषु ॥ यादिव्या०र्चसा ॥ पित्रे अ०इदमर्घ्यंस्वधानमः ॥ पिता०मः ॥ पितृ०धाः ॥ पि०गंधाद्युपचारान्दत्वायस्यस्मृत्येत्युक्त्वा सव्यं मंडलादिकरिष्ये ॥ ब्र० लं ॥ आ०लं ॥ बृह०रक्ष ॥ सव्यं ॥ रक्षो०हंता ॥ यथा०विद्यते ॥ मूर्धा०देवाः ॥ अपसव्यं ॥ उद्धरिष्या०क्रियतां ॥ सव्यं शम्याभिःपरिदधाति ॥ अपरे० शति० अदि०भ्यादधाति ॥ अयंतइ०स्वाहा ॥ जातवे०म ॥ अथदर्व्याजुहोति ॥ प्रजापत०नम ॥ इंद्रा०स्वाहा ॥ इंद्रा०मम ॥ अग्नयेस्वा० अ०मम ॥ सोमायस्वाहा० सो०म ॥ आज्यभागांतंकृत्वा ॥ येदेवादिवीतिदेवानावाहयति ॥ येदेवादिव्येका०सर्वं ॥ पुरूरवा०यामि ॥ प्राचीनावीती ॥ आयातपितरःसोम्यागंभीरैः

पथिभिःपूर्व्यैः ॥ प्रजामस्मभ्यंददतोरयिंचदीर्घायुत्वंचशतशारदंच ॥ दक्षिणस्यांदिश्यावाहनं ॥ आपोदेवीःप्रहिणुताग्निमेतं यज्ञंपितरोनोजुषंताम् ॥ मासीमामूर्जमूतयेभजंतेतेनोरयिंँसर्ववीरंनियंतु ॥ यज्ञोपवीती ॥ युक्तोव० स्वाहा ॥ भू० ॥ प्रजापतयइदं ॥ प्राचीनावीती ॥ सोमायपितृमतेस्वधानमः ॥ सोमायपितृमतइदं ॥ यमायांगिरस्वतेपितृमतेस्वधानमः ॥ यमायांगिरस्वतेपितृमतइदं ॥ याःप्राचीःसंभवंत्यापउत्तरतश्चयाः ॥ अद्भिर्विश्वस्यभुवनस्यधर्त्रीभिरंतरन्यंपितुर्दधेस्वधानमः ॥ पित्रइदं ॥ अंतर्दधेपर्वतैरंतर्मह्यापृथिव्या ॥ दिवादिग्भिरनंताभिरूतिभिरंतरन्यंपितामहाद्दधेस्वधानमः ॥ पितामहायेदं ॥ अंतर्दधऋतुभिरहोरात्रैःसुसंधिभिः ॥ अर्धमासैश्चमासैश्चांतरन्यंप्रपितामहाद्दधेस्वधानमः ॥ प्रपितामहायेदं ॥ अथनामधेयैर्जुहोति ॥ अमुकशर्मणेस्वधानमः ३ ॥ यन्मेमाताप्रलुलोभचरत्यननुव्रता ॥ तन्मेरेतःपितावृंक्तामाभुरन्योपपद्यताँस्वधानमः ॥ पित्रइदं ॥ यन्मेपितामहीप्रलु०व्रत ॥ तन्मेरेतःपितामहोवृंक्तामाभुरन्योपपद्यताँस्वधानमः ॥ पितामहायेदं ॥ यन्मेप्रपितामहीप्रलु०व्रत ॥ तन्मेरेतःप्रपितामहोवृंक्तामाभुरन्योपपद्यताँस्वधानमः ॥ प्रपितामहायेदं ॥ येचेहपितरोयेचनेहयाँश्चविद्मयाँउचनप्रविद्म ॥ अग्नेनान्वेत्थयदितेजातवेदस्तयाप्रत्तँस्वधयामदंतुस्वधानमः ॥ पितृभ्यइदं ॥ यद्वःक्रव्यादंगमदहल्लोकानयंप्रणयंजातवेदाः ॥ तद्वोहंपुनरावेशयाम्यरिष्टाःसर्वैरंगैःसंभवतपितरःस्वधानमः ॥ पितृभ्यइदं ॥ वहाज्यंजातवेदःपितृभ्योयत्रैतान्वेत्थनिहितान्पराके ॥ आज्यस्यकूल्याउपतान्क्षरंतुसत्याएषामाशिषःसंतुकामैःस्वधानमः ॥ पितृभ्यइदं ॥ वहाज्यंजातवेदःपितामहेभ्योयत्रै०नमः ॥ पितामहेभ्यइदं ॥ वहाज्यंजातवेदःप्रपितामहेभ्योयत्रै०नमः ॥ प्रपितामहेभ्यइदं ॥ एवमन्नस्यजुहोति ॥ यथा ॥ सोमायपितृमतेस्व० ॥ सोमायपितृमतइदं ॥ यमायांगिरस्वतेपितृमतेस्वधा० ॥ यमायांगिरस्वतेपि

पितामहायेदं ॥ अंतर्द
तृमतइदं ॥ याःप्राचीः०पिदर्तुधेस्वधानमः ॥ पित्रइदं ॥ अंतर्दधेपर्वतै० पितामहाद्दधेस्वधानमः ॥ यन्मेमाताप्रलु
धऋतुभिः० ॥ प्रपितामहाद्दधेस्वधानमः ॥ प्रपितामहायेदं ॥ अथनामधेयैः ॥ अमुकशर्मणेस्वधानमः ३ ॥ यन्मेप्रपितामही०
लोभ०तन्मेरेतःपितावृंक्ता० ॥ पित्रइदं० ॥ यन्मेपितामही० ॥ तन्मेरेतःपितामहोवृंक्ता० ॥ पितामहायेदं ॥ वहान्नं
तन्मेरेतःप्रपितामहोवृंक्ता० ॥ प्रपितामहायेदं ॥ येचेहपितरो० ॥ पितृभ्यइदं ॥ यद्वःक्रव्यादंगम० ॥ पितृभ्यइदं ॥ पितामहे
जातवेदःपितृभ्यो० ॥ अन्नस्यकूल्याउप० पितृभ्यइदं ॥ वहान्नंजातवेदःपितामहेभ्यो० ॥ अन्नस्यकूल्याउप० ॥ यमायां
भ्यइदं ॥ वहान्नंजातवेदःप्रपितामहेभ्यो० अन्नस्य० ॥ प्रपितामहेभ्यइदं ॥ सोमायपितृमतेस्वधानमः ॥ सो० म ॥ पितामह्यादधेस्वधा
गिरस्वतेपितृमतेस्वधानमः १ य०म ॥ याःप्राचीःसंभवं० मातुर्दधेस्वधानमः मात्रइदं ॥ अंतर्दधेपर्व० अमुकदायैस्वधानमः ३ ॥
नमः पितामह्याइदं ॥ अंतर्दधऋतुभि० प्रपितामह्यादधेस्वधानमः ॥ प्रपितामह्याइदं० ॥ येचेहपि
मात्रेस्वधानमः ॥ मात्रइदं ॥ पितामह्यैस्वधानमः पितामह्याइदं ॥ प्रपितामह्यैस्वधानमः ॥ प्रपितामह्याइदं ॥ पराके ॥
तरो०स्वधानमः ॥ पितृभ्यइदं ॥ यद्वःक्रव्या०स्वधानमः॥पितृभ्यइदं ॥ वहाज्यंजातवेदोमातृभ्योयत्रैतावेत्थनिहिताः
आज्यस्यकूल्याउपताःक्षरंतुसत्याआसामाशिषःसंतुकामैःस्वधानमः ॥ मातृभ्यइदं ॥ वहाज्यंजातवेदःपितामहीभ्योयत्रैतावे
त्थनिहिताःपराके ॥ आज्यस्यकूल्याउपताःक्षरंतुसत्याआसामाशिषःसंतुकामैःस्वधानमः ॥ पितामहीभ्यइदं ॥ वहाज्यंजात
वेदःप्रपितामहीभ्योयत्रैतावेत्थनिहिताःपराके॥ आज्यस्यकूल्याउपताःक्षरंतुसत्याआसामाशिषःसंतुकामैःस्वधानमः ॥ प्रपिता
महीभ्यइदं ॥ एवमन्नस्यजुहोति ॥ सोमायपितृमतेस्वधा०इदं ॥ यमायांगिरस्वतेपितृ०इदं ॥ याःप्राचीःसंभवं० मातुर्दधेस्वधा

नमःमात्रइदं ॥ अंतर्दधेपर्वतै० पितामह्यादधेस्वधानमःपितामह्याइदं ॥ अंतर्दधऋतुभि० प्रपितामह्यादधेस्वधानमः प्रपिताम ह्याइदं॥ अमुकदायैस्वधानमः ३ ॥ मात्रेस्वधानमः मात्रइदं ॥ पितामह्यैस्वधानमःपितामह्याइदं ॥ प्रपितामह्यैस्वधानमः प्र पितामह्याइदं ॥ येचेहपितरो०स्वधानमः पितृभ्यइदं॥यद्वःकव्या०स्वधानमः पितृभ्यइदं ॥ वहान्नंजातवेदोमातृभ्यो० अन्न स्यकूल्याउप० मातृभ्यइदं ॥ वहान्नंजातवेदःपितामहीभ्यो० अन्नस्यकूल्याउप०पितामहीभ्यइदं॥ वहान्नंजातवेदःप्रपितामही भ्यो० अन्नस्यकूल्याउप० प्रपितामहीभ्यइदं ॥ सोमायपितृमतेस्वधानमः ॥ सोमा० इदं॥यमायांगिरस्वतेपितृमतेस्वधानमः ॥ यमा०दं ॥ याःप्राचीःसंभ० मातामहाद्दधेस्वधानमः ॥ मातामहायेदं ॥ अंतर्दधेपर्व०मातुःपितामहाद्दधेस्वधानमः ॥ मातुः पितामहायेदं ॥ अंतर्दधऋतुभिः० मातुःप्रपितामहाद्दधेस्वधानमः ॥ मातुःप्रपितामहायेदं ॥ अमुकशर्मणेस्वधानमः३ ॥ यन्मे मातामहीप्रलु०व्रता ॥ तन्मेरेतोमातामहोवृंक्तामाभुरन्योपपद्यतांस्वधानमः ॥ मातामहायेदं ॥ यन्मेमातुःपितामहीप्रलु० व्रत ॥ तन्मेरेतोमातुःपितामहोवृंक्ता०नमः ॥ मातुःपितामहायेदं ॥ यन्मेमातुःप्रपितामहीप्रलु० व्रत ॥ तन्मेरेतोमातुःप्रपिता महोवृंक्ता०नमः ॥ मातुःप्रपिता०दं ॥ येचेहपितरो०नमः ॥ पितृभ्यइदं ॥ यद्वःक्रव्यादं० नमः ॥ पितृभ्यइदं० ॥ वहाज्यं जातवेदोमातामहेभ्योयत्रै०नमः ॥ मातामहेभ्यइदं॥ वहाज्यंजातवेदोमातुःपितामहेभ्योयत्रै०नमः ॥ मातुःपितामहेभ्यइदं ॥ वहाज्यंजातवेदोमातुःप्रपितामहेभ्योयत्रै०नमः ॥ मातुःप्रपितामहेभ्यइदं ॥ एवमन्नस्यजुहोति॥ सोमायपितृमतेस्वधा० इदं ॥ यमायांगिरस्वतेपितृ०इदं ॥ याःप्राचीःसंभवंति०मातामहाद्दधेस्वधानमः मातामहायेदं ॥ अंतर्दधेपर्व०मातुःपितामहाद्दधे स्वधानमःमातुःपितामहायेदं ॥ अंतर्दधऋतुभिः०मातुःप्रपितामहाद्दधेस्वधानमः मातुःप्रपितामहायेदं ॥ अमुकशर्मणेस्वधा

नमः ३ ॥ यन्मेमातामहीप्रलुलोभ० तन्मेरेतोमातामहोवृंक्तामाभु०मातामहायेदं ॥ यन्मेमातुःपितामहीप्रलुलोभ० तन्मेरेतो मातुःपितामहो० मातुःपितामहायेदं ॥ यन्मेमातुःप्रपितामहीप्रलुलोभ० तन्मेरेतोमातुःप्रपितामहोवृंक्ता० मातुःप्रपितामहा येदं० ॥ येचेहपितरो० पितृभ्यइद ॥ यद्वःक्रव्यादं० पितृभ्यइदं ॥ वहान्नंजातवेदोमातामहेभ्योयत्रै० अन्नस्यकूल्याउप० मातामहेभ्यइदं ॥ वहान्नंजातवेदोमातुःपितामहेभ्यो० अन्नस्यकूल्या०मातुःपितामहेभ्यइदं ॥ वहान्नंजातवेदोमातुःप्रपिताम हेभ्यो० अन्नस्यकूल्या० मातुःप्रपितामहेभ्यइदं ॥ सोमायपितृमतेस्वधानमः ॥ सो० म० ॥ यमायांगिरस्वतेंपितृमतेस्वधा नमः ॥ य०म० ॥ याःप्राचीःसंभवंत्या०मातामह्यादधेस्वधानमः ॥ मातामह्याइदं ॥ अंतर्दधेपर्व०मातुःपितामह्यादधेस्वधानमः॥ मातुःपितामह्याइदं ॥ अंतर्दधऋतुभिः० मातुःप्रपितामह्यादधेस्वधानमः ॥ मातुःप्रपितामह्याइदं ॥ अमुकदायैस्वधानमः३॥ मातामह्यैस्वधानमः ॥ मातुःपितामह्यैस्वधानमः ॥ मातुःप्रपितामह्यैस्वधानमः ॥ येचेहपितरोये०स्वधानमः ॥ पितृभ्यइदं ॥ यद्वःक्रव्यादंग०स्वधानमः ॥ पितृभ्यइदं ॥ वहाज्यंजातवेदोमातामहीभ्योयत्रैतावेत्थनिहिताःपराके ॥ आज्यस्यकूल्याउप ताःक्षरंतुसत्याआसामाशिषःसंतुकामैःस्वधानमः ॥ मातामहीभ्यइदं ॥ वहाज्यंजातवेदोमातुःपितामहीभ्योयत्रैतावेत्थनिहि ताःपराके ॥ आज्यस्यकूल्याउपताःक्षरंतुसत्याआसामाशिषःसंतुकामैःस्वधानमः ॥ मातुःपितामहीभ्यइदं ॥ वहाज्यंजातवेदो मातुःप्रपितामहीभ्योयत्रैतावेत्थनिहिताःपराके॥ आज्यस्यकूल्याउपताःक्षरंतुसत्याआसामाशिषःसंतुकामैःस्वधानमः ॥ मातुःप्र पितामहीभ्यइदं ॥ एवमन्नस्यजुहोति ॥ सोमायपितृमतेस्वधा०इदं ॥ यमायांगिरस्वते०इदं ॥ याःप्राचीःसंभवंत्या० माता मह्यादधेस्वधानमः मातामह्याइदं ॥ अंतर्दधेपर्व०मातुःपितामह्यादधेस्वधानमःमातुःपितामह्याइदं ॥ अंतर्दधऋतुभिः०मातुः

प्रपितामह्यादधे० मातुःप्रपितामह्याइदं ॥ अमुकदायैस्वधानमः २ ॥ मातामह्यैस्वधानमः ॥ मातुःपितामह्यैस्वधानमः ॥ मातुः
प्रपितामह्यैस्वधानमः ॥ येचेहपितरो० पितृभ्यइदं ॥ यद्धः क्रव्यादंग० पितृभ्यइदं ॥ वहान्नंजातवेदोमातामहीभ्योयत्रैता०
अन्नस्यकूल्याउप०मातामहीभ्यइदं ॥ वहान्नंजातवेदोमातुःपितामहीभ्यो० अन्नस्यकूल्याउप०मातुःपितामहीभ्यइदं ॥ वहान्नं
जातवेदोमातुःप्रपितामहीभ्यो० अन्नस्यकूल्याउप०मातुःप्रपितामहीभ्यइदं ॥ अग्नयेकव्यवाहनायस्विष्टकृतेस्वधानमः॥अग्नये०
इदं० ॥ यज्ञोपवीती ॥ शुल्वप्रहरणादिसंस्थाजपांतंकर्मसमापयेत् ॥ आमासुपक्कमैरय० सोमोधेनुं० दस्मै ॥ परिविष्टमन्नंगाय
त्र्याप्रोक्ष्यसत्यंत्वर्तेनप०दाय ॥ ब्राह्मणानुपस्पर्शयति ॥ ब्राह्मणहस्तेगंधपुष्पाक्षतान्दत्वा ॥ यवोसि०तीः ॥ इदंवि० सुरे ॥
यादिव्याआ०र्चसा ॥ पुरूरवार्द्रवसंज्ञकाविश्वेदेवाःइदंवोअर्घ्यं ॥ तूष्णींयवोदकं० म ॥ सुदत्तं ॥ प्राणेनिविश्यामृतंजुहो
मिइदं०करिष्ये॥सव्यंजान्वाच्य ॥ सत्यंत्व०लोके ॥ पृथिव्यंतरिक्षंद्यौःसमातस्थाग्निर्वायुरादित्यउपद्रष्टादत्तस्याप्रमादाय ॥
ब्राह्मणानुपस्पर्शयति ॥ ब्राह्मणहस्तेगंधपुष्पाक्षतान्दत्वा ॥ अपहतेदंविष्णुरुदीरतेतियादिव्या० ॥ पित्रेइदमर्घ्यंस्वधानमः ॥
पितामहायइद०नमःप्रपितामहायइद०मः ॥ तूष्णींतिलोदकं ॥ प्राणेनिविश्यामृतंजुहोमि ॥ इदं० ॥ शेषमन्नंकिंक्रियतां ॥
आचांतेष्वनाचांतेषुवा ॥ असोमपा० ॥ आचम्यपवित्रेधृत्वा ॥ ब्राह्मणहस्तेअपोदत्वा ॥ पूर्वइदमर्घ्यंदत्वा ॥ शिवाआपःसंतु ॥
पितॄन्प्रीणातिभुक्तवतोनुप्रव्रज्यशेषमनुज्ञाप्योदकुंभंदर्भमुष्टिंचादाय ॥ दक्षिणपूर्वमवांतरदेशंगत्वादक्षिणाग्रान्दर्भान्सं स्तीर्य
तेष्ववाचीनपाणिर्दक्षिणापवर्गांस्त्रीनुदकांजलीन्निनयति ॥ मार्जयंतांपितरःसोम्यासो०सोम्यासः ॥ एतत्तेपितःअमुकशर्मन्अ
सुकगोत्रवसुरूपयेचत्वामनु ॥ एवंसर्वत्र ॥ अत्रपितरोमादयध्वं० ॥ लोकउपवक्षरंतु ॥ प्रसव्यंपरिषिच्य ॥ कुलाभिवृद्ध्यर्थं

सव्येनपिंडपूजांकरिष्ये ॥ पिंडस्थाःपितरःपाद्यंस्वधा०प्रीयतां ॥ पिंडोपस्थानंकरिष्ये ॥ प्राचीनावीती ॥ पाणीव्यत्यस्यदक्षिणमुत्तरमुत्तरंचदक्षिणं ॥ नमोवःपितरोरसायपितरोनमोवोयएतस्मिन्लोकेस्थयुष्मा॑स्तेनुयेस्मिन्लोकेमांतेनुयएतस्मिन्लोकेस्थयूयंतेषांवसिष्ठाभूयास्तयेस्मिन्लोकेहंतेषांवसिष्ठोभूयासं ॥ नमोवःपितरःशुष्मायपितरोन०भूयासं ॥ नमोवःपितरोजीवायपितरो०भूयासं ॥ नमोवःपितरःस्वधायैपितरो०भूयासं ॥ नमोवःपितरोमन्यवेपितरोन० भूयासं ॥ नमोवःपितरोघोरायपितरोन०भूयासं ॥ नमस्कारैरुपतिष्ठते ॥ ऊर्जंवहंती० तृन्०स्व०त०परेत०सोम्या०मनेनसं ॥ वीरंमेदत्तपितरः ॥ एषतेततमधुमा॑ऊर्मिःसरस्वान्यावानग्निश्चपृथिवीचतावत्यस्यमात्रातावानस्यमहिमातावंतमेनंभूतंददामियथाग्निरक्षितोनुपदस्तएवंमह्यंपित्रेक्षितोनुपदस्तस्वधाभवतांत॑स्वधामक्षितंतैःसहोपजीवअमुकशर्मन्ऋचस्तेमहिमा ॥ एषतेपितामहमधुमा॑ऊर्मिःसरस्वान्यावान्वायुश्चांतरिक्षंचतावत्यस्यमात्रातावानस्यमहिमातावंतमेनंभूतंददामियथावायुरक्षितोनुपदस्तएवंमह्यंपितामहायाक्षितोनुपदस्तस्वधाभवतांत॑स्वधामक्षितंतैःसहोपजीवअमुकशर्मन्यजू॑षितेमहिमा ॥ एषतेप्रपितामहमधुमा॑ऊर्मिःसरस्वान्यावानादित्यश्चद्यौश्चतावत्यस्यमात्रातावानस्यमहिमातावंतमेनंभूतंददामियथादित्योक्षितोनुपदस्तएवंमह्यंप्रपितामहायाक्षितोनुपदस्तस्वधाभवतांत॑स्वधामक्षितंतैःसहोपजीवप्रपितामहअमुकशर्मन् ॥ सामानितेमहिमा ॥ एषतेमातुःपितामहमधुमा॑सरःस्वान्०पजीवमातामहअमुकशर्मन्ऋचस्तेमहिमा ॥ एषतेमातुःपितामहमधुमा॑ऊर्मिःसरस्वा०पजीवमातुःपितामहअमुकशर्मन्यजू॑षितेमहिमा ॥ एषतेमातुःप्रपितामहमधुमा॑ऊर्मिःसरस्वा०पजीवमातुःप्रपितामहअमुकशर्मन्सामानितेमहिमा ॥ परायातपि

तरःसोम्यागंभीरैःपथिभिःपूर्व्यैः ॥ अथमासिपुनरायातनोगृहान्हविरत्तुंसुप्रजसःसुवीराः ॥ वाजेवाजे०यानैः ॥ आमावाज स्यप्र०भवंतोन्नुवंतु ॥ जपच्छिद्रं०भवतु एषपितृयज्ञःतत्सद्ब्रह्मार्पणमस्तु ॥ इतिपार्वणदर्शश्राद्धप्रयोगः ॥ ॥ छ ॥

## ॥ ६४ ॥ श्राद्धदिनेवैश्वदेवादिनिर्णयः ॥

तत्राहिताग्नेर्वैश्वदेवःपिंडपितृयज्ञात्पूर्वमेवभवति ॥ गृह्याग्निमतापिंडपितृयज्ञात्पूर्वंश्राद्धांतेवाकार्यः ॥ श्वोभूतेस्थालीपाकइति धर्मसूत्राद्यदापर्वदिनेपरिस्तरणांतंक्रियतेतदापरिस्तरणोत्तरमेववैश्वदेवंकृत्वापिंडपितृयज्ञःकर्तव्यइतिद्रष्टव्यं ॥ सांवत्सरिकादि श्राद्धेषुवैश्वदेवोऽग्नौकरणानंतरंउच्छिष्टपिंडदानोत्तरमेववापृथक्पाकेनैवकार्यःश्रौताग्निमता ॥ गृह्याग्निमताश्राद्धारंभात्प्रागे वपृथक्पाकेनैवकर्तव्यः ॥ एकादशाहिकेतुएतयोरप्यंतरएव ॥ अग्नौकरणानंतरंबलिदानोत्तरंवावैश्वदेवानुष्ठानपक्षेपृथक्पाके नैववैश्वदेवहोममात्रंकृत्वाश्राद्धंसमाप्यानंतरंवैश्वदेवार्थान्नेनैवबलिहरणादिकर्तव्यं ॥ यदात्वंतेतदाश्राद्धशेषेणैव ॥ सचवैश्वदे वोमासिश्राद्धमध्येमासिकश्राद्धमध्येवाकार्यः ॥ ॥ एतदन्यतरांतेवासमवदायाश्नीयादित्यनेनशेषस्याशनंविहितं ॥ तच्चदि वैवकार्यंनरात्रौ ॥ तस्मिन्दिनेआवश्यकोपवासप्राप्तौशेषाघ्राणंकार्यं ॥ शेषनाशेभोजनलोपइतिकेचित् ॥ प्रतिनिधिभूतेनान्नेन भोजनंकार्यमित्यन्ये ॥ ॥ कर्तृभोक्तृनियमाः ॥ दंतधावनतांबूलंतैलाभ्यंगमभोजनं ॥ रत्यौषधपरान्नानिश्राद्धकर्ताविवर्ज येत् ॥ पुनर्भोजनमध्वानंभारमध्यायसंगमं ॥ दानंप्रतिग्रहोहोमःश्राद्धभुग्वर्जयेद्द्विजः ॥ इत्यादयःकर्तृभोक्तृनियमाः ॥ ॥ श्राद्ध भोक्तृप्रायश्चित्तं षट्प्राणायामाःदशवारावर्तितगायत्र्यभिमंत्रितजलप्राशनंचेतिज्ञेयं ॥ विशेषविस्तरोग्रंथांतरआलोचनीयः ॥

## ॥ ६५ ॥ सांकल्पिकश्राद्धविधिः ॥

श्रीः ॥ उक्तापराह्णेयथाधिकारंकृतनित्यक्रियस्तिलतर्पणंविधायदेशकालौसंकीर्त्यप्राचीनावीती करिष्यमाणश्राद्धविहितपितॄणां षष्ठ्यंतप्रयोगेणोत्कीर्तनंकृत्वामुकश्राद्धंसांकल्पिकविधिनाकरिष्यइतिसंकल्प्य पूर्ववद्विप्रनिमंत्रणादिकृत्वापूर्ववदुपवेश्यआवाहनार्घ्यदानवर्ज्यआसनाच्छादनांतैरुपचारैःपूजयेत् अथवातूष्णीमावाहनं ॥ ततोग्नौकरणवर्जमपोशनदानांतंकुर्यात् ॥ ब्राह्मणाबलिदानंवर्जंविधिनाभुंजीयुः ॥ भोजनांतेतृप्तिप्रश्नंकृत्वामधुमतीःअक्षन्नमीमदंतेतिचश्रावयित्वासंपन्नप्रश्नंकृत्वाशेषमन्नंकिंक्रियतामित्यादिउच्छिष्टभाग्भ्योन्नदानांतंकृत्वाअघोराःपितरःसंत्वित्यादितत्रोच्छिष्टपिंडदाने॥ नचात्रस्वधासंपद्यंतामितिभवंतोब्रुवंतुइतिस्वधोच्यतामितिचस्वधावाचनं॥ ततोवाजेवाजेइति कर्मेश्वरार्पणांतेसंकल्पात्सिद्धिरस्त्वितिभवंतोब्रुवंतुइतिविप्रान्वदेत् ॥ तथास्त्वितितैरुक्तेविष्णुंसंस्मृत्यपवित्रग्रंथिंविसृज्यत्यक्त्वाचमनंकृत्वाबंधुभिःसहश्राद्धशेषंभुंजीत ॥ इत्थमपिकरणाशक्तौसंकल्पंकृत्वादेवपितृपूजांविधायान्नत्यागंकृत्वाभुक्तवद्भ्यस्तांबूलंदक्षिणांचदत्वासंकल्पात्सिद्धिरस्त्वितिभवंतोब्रुवंत्वितिवाचयित्वाकर्मेश्वरायार्पयेत् ॥ वैश्वदेवकालव्यवस्थापूर्ववदेव ॥ इतिसांकल्पिकश्राद्धप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ६६ ॥ आमश्राद्धविधिः ॥

श्रीः ॥ केनचित्संकटेनपाकासंभवेजातकर्मणिचग्रहणनिमित्तकश्राद्धेचामश्राद्धंकार्यं ॥ सपिंडीश्राद्धंमासिकंप्रतिवार्षिकंमहालयाष्टकादिश्राद्धंचामेनकार्यं ॥ शूद्रस्यतुदशाहपिंडादिश्राद्धमात्रमामेनकदापिपाकेन ॥ तत्रयथाधिकारंप्रातःकृतनित्यक्रियः

श्रौताग्निमान्गृह्याग्निमान्वायेनकेनचिद्द्रव्येणकृतवैश्वदेवःपितॄनुद्दिश्यतिलतर्पणंकृत्वापूर्वाह्णएवदेशकालकथनांतेप्राचीनावीती षष्ठ्यापितॄनुद्दिश्यामुकश्राद्धंसदैवंसपिंडमामेनहविषाकरिष्ये ॥ इतिसंकल्पः ॥ तिलोदकादिदैवपित्र्यविप्रनिमंत्रणादि अन्यः प्रयोगःपूर्वोक्तएव ॥ पाकप्रोक्षणस्थानेआमप्रोक्षणं॥ आवाहनेउशंतस्त्वेतिमंत्रेहविषेअत्तवेइत्यत्रहविषेस्वीकर्तवेइत्यूहः ॥ भस्म मर्यादांतंप्राग्वत्॥ अग्नौकरणकालेसकृदाच्छिन्नच्छेदनादिपिंडपितृयज्ञवत्तंडुलाद्यन्यतमेनसंप्रदेयेनहविष्यद्रव्येणहुत्वा॥ अन्ना च्चतुर्गुणंद्विगुणंसमंवातत्तदामंपात्रेषुसंस्थाप्यपाणिहोमशेषंपिंडार्थंसंस्थाप्यपात्रेषुदत्वागायत्र्याप्रोक्ष्यपृथ्वीतेपात्रमित्यादि० इद मामंसोपस्करंहव्यंकव्यमित्यादिइदमाममममृतरूपंस्वाहेत्यादियथाधर्ममध्वित्यंतंप्राक्कृतं ॥ यथासुखंजुषध्वमित्यस्यापोशनप्राणा हुतितृप्तिप्रश्नानांलोपः॥ मधुमतीश्रावणंसंपन्नवाचनांतेन्नशेषप्रश्नलोपः॥ सर्वमतेतंडुलैःसक्तुभिर्वापूर्ववत्पिंडदानं ॥ केचिद्गृहसि द्धान्नेनपायसेनवापिंडदानमाहुः॥ अपोदेवीरित्याद्यध्युपस्थानांतंकृत्वाअतिप्रणीताग्निमेलनादितदक्षय्यमस्त्वितिभवंतोब्रुवंत्वि तिअक्षय्येऊहःस्वस्तीतिब्रूतेतिवर्ज्यंवाजेवाजेइतिमंत्रेतृप्तायातेतिस्थानेतर्प्स्यथयातपथिभिर्देवयानैरित्यूहः॥ ततःप्राग्वच्छेषंसमा पयेत् ॥ आमश्राद्धंद्विजैःपूर्वाह्णेकार्यंशूद्रैरपराह्णएव ॥ इत्यामश्राद्धविधिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ६७ ॥ हिरण्यश्राद्धं ॥

हिरण्यश्राद्धमप्येवमेवसंकल्पादौहिरण्यपदमामस्थानेयोज्यं ॥ कृतनित्यक्रियोदेशकालकथनांतेषष्ठ्यापितॄनुद्दिश्यामुकश्राद्धं हिरण्येनसांकल्पविधिनाकरिष्यइतिसंकल्प्यतिलोदकविप्रावाहनादिप्रकृतिवत् ॥ आमवद्धेमप्रोक्षणं ॥ अत्तवइत्यादिमंत्रत्रयो हःप्राग्वदेव॥तंडुलादिभिर्हस्तेग्नौकरणं ॥ हिरण्यमन्नादष्टगुणंचतुर्गुणंद्विगुणंसमंवादेयं ॥ हिरण्यश्राद्धेपिदक्षिणास्त्येव ॥ श्राद्धी

यमामंहेमंवाद्विजदत्तंयथेष्टंविनियोज्यं शूद्रदत्तंतुभोजनादन्यत्रविनियोज्यं श्राद्धीयामेनपंचयज्ञाःश्राद्धंचनकार्यं ॥ हेमश्राद्धे आमश्राद्धेचपिंडदानविकल्पात्सांकल्पविधिनाप्येतद्द्वयं ॥ अत्रपिंडदानेविकल्पः ॥ नमोवःपितरोरसायेत्यत्रहिरण्यायेत्यूहः ॥ सांकल्पिकेचसमंत्रकावाहनार्घ्याग्नौकरणपिंडदानविकिराक्षय्यस्वधावाचनप्रश्नाइत्येतत्सप्तकंवर्ज्यं ॥ शूद्रगृहेऽन्यदीयमपि क्षीराद्यपिनभक्ष्यंकिमुततदीयमामादितद्गृहेपक्कान्नंनभोक्ष्यमिति ॥ तस्माच्छूद्राल्लब्धंचगृहेपक्त्वाभक्ष्यं ॥ इत्यामश्राद्धविधिः ॥

## ॥ ६८ ॥ एकोद्दिष्टश्राद्धं ॥

तच्चापुत्रपितृव्यमातुलभ्रातृसापत्नमातृणामाब्दिकमेकोद्दिष्टविधिनाकार्यं ॥ मध्याह्नएवदेशकालकीर्तनांतेअस्मत्पितृव्यस्यश र्मणोगोत्रस्यवसुरूपस्याब्दिकश्राद्धमेकोद्दिष्टविधिनाकरिष्यइतिसंकल्प्यपित्रर्थमेवविप्रान्विप्रंवानिमंत्र्ययथाचारंपादप्रक्षालना दिकृत्वाएकमर्घ्यपात्रंसंस्थाप्यएकदर्भयुतेतस्मिन्पात्रेजलमासिच्येत्यादिआवाहनवर्जमर्घ्यदानांतंकृत्वातत्पात्रस्थापनादिअग्नौ करणवर्जअन्नत्यागांतंकृत्वा यस्योद्देशस्तस्याक्षय्यातृप्तिरस्त्वित्युक्त्वापोशनोदकदानादि पिंडदानकालेएकएवपिंडःअन्यत्सर्वं पूर्ववत् ॥ द्वितीयेहनिश्राद्धांगंसतिलमेवतर्पणं एषांपार्वणश्राद्धपक्षेपितृव्यपितामहप्रपितामहानांभ्रातृपितृपितामहानामित्यु च्चारः ॥ जीवत्पितृकस्यत्वेकोद्दिष्टमेव ॥ मातुलमातामहमातुःपितामहानां—सापत्नमातृपितामहीप्रपितामहीनांइत्यादियथा यथमूहोज्ञेयः ॥ कनिष्ठभ्रात्रादीनांब्रह्मचारिस्नातकावस्थायांमृतौतदाब्दिकश्राद्धेएकोद्दिष्टप्रयोगएव ॥ इत्येकोद्दिष्टश्राद्धं ॥

## ॥ ६९ ॥ अनुपनीत—स्त्रीकर्तृकश्राद्धं ॥

देशकालकथनांतेअस्मद्भर्तृतत्पितृतत्पितृणांशर्मणांगोत्राणांवसुरुद्रादित्यस्व० आब्दिकश्राद्धमद्यकरिष्यइतिस्वयंसंकल्पंकृत्वा

कंचिद्ब्राह्मणंऋत्विक्त्वेपरिपृच्छ्यतंब्रूयात्ममाज्ञयात्वमिदंकर्मकुरुइति कर्ताओमित्यंगीकृत्यसर्वमपिविधिंकुर्यात्॥तत्रविशेषः॥ अनुज्ञात्र्याःभर्तुःशर्मणोगोत्रस्यवसु० अनुज्ञात्र्याःभर्तृपितुःशर्मणोगोत्रस्यरुद्र० अनुज्ञात्र्याःभर्तृपितामहस्यशर्मणोगोत्र० आदित्य० इत्यादिस्तत्तद्विभक्त्यूहेनप्रयोगः ॥ यत्रपितृशब्दवत्पितामहशब्दोपिबहुवचनांतोदृश्यतेतत्रैवपितृशब्देप्यूहोनान्यत्र ॥ सचबहुवचनांतएव—यथामार्जयंतांपितरःसोम्यासइत्यादिषु॥ आपोदेवीःस्वधया०अत्रपितरोयथाभागंमंदध्वं अमीमदंतपितरः एतानिवःपितरः नमोवःपितरोरसाय ऊर्जस्वतीःस्वधया उत्तिष्ठतपितरः यंतुपितरः मनोन्वाहुवामहे० पुनर्नःपितरो० अभून्नोदूतो० येसमानाःसमनसः० इत्येतेषुमंत्रेषुतुनोहः बहुवचनांतपितामहादिशब्दप्रयोगदर्शनाभावात् ॥ एकोद्दिष्टपक्षेतुतद्धर्मेण श्राद्धंकुर्यात्यथाचारंव्यवस्थाइतिस्त्र्यनुज्ञातेविशेषः॥ अथवास्वयमेववैदिकमंत्रवर्जंविधिंकुयात् मंत्रसाध्यकर्मापितूष्णींकर्तव्यमेव ब्राह्मणद्वाराश्राद्धेपिमंत्रवर्जमेवप्रयोगइतिबहवः॥ अनुपनीतानुज्ञातेप्येवं शूद्रानुज्ञातेतुमंत्रवर्जएवविधिः ज्वरादिनाकर्तुरसामर्थ्येप्येषएवविधिः श्राद्धकर्तृनियमास्तुऋत्विग्यजमानयोरुभयोरपिसमानाः उत्तरीयवस्त्रेणप्राचीनावीती अनुज्ञात्रानुपनीतेनअनुज्ञात्र्यास्त्रियाचकर्तव्येश्राद्धेतर्पणंतुअनुज्ञातृकर्तृकमेव ॥ इतिअनुपनीतकर्तृकं—स्त्रीकर्तृकंचश्राद्धं ॥ ॥ ६९ ॥

## ॥ ७० ॥ विधवाकर्तृकश्राद्धं ॥

आचम्यदेशकालावुत्कीर्त्यअस्मद्भर्तृसपत्नीकतत्पितृतत्पितॄणांशर्मणांगोत्राणांवसुरुद्रादित्यस्वरूपाणां ( पितृत्रयीमातृत्रयीपृथग्ग्राह्येतिद्वितीयपुस्तके )॥ अस्मन्मातामहमातुःपितामहमातुःप्रपितामहानांशर्मणांगोत्राणांवसु० सपत्नीकानांएतेषामित्यादिमहालयश्राद्धंकरिष्यइतिसंकल्पंकुर्यात् ॥ विभवेसतिभर्तृपार्वणोत्तरंश्वश्रूतच्छ्वश्वोःदयोःगोत्रयोःवसुरुद्ररूपयोः इत्येवंपृथक्पृथगे

कोद्दिष्टवद्वा ॥ भर्तुरेकोद्दिष्टत्वपक्षेश्वश्रूतच्छ्वश्रूतच्छ्वश्रूणांइतितिसृणामुद्देशः ॥ अत्रसपत्नीकपक्षएवऋजुः ॥ मातामहपार्वणो त्तरंमातामहीपार्वणंचसंकीर्तयेत् ॥ अस्मिन्कल्पेभर्तृशब्दोत्तरंमातामहपार्वणेचनसपत्नीकशब्दोच्चारणं ॥ ततःस्वपितृव्यादीना मपिशक्तौसत्यांकीर्तनं ॥ एवंयथाधिकारंसंकल्पंकृत्वाकंचिद्ब्राह्मणमृत्विक्त्वेनविभाव्यतद्द्वारासर्वंकारयेत् ॥ तदभावेस्वयमेववै दिकमंत्रवर्जंसर्वंविधिमाचरेत् ॥ स्वमात्रादिपार्वणचतुष्टयमपुत्रविषयकमितिनवीनाः ॥ परेद्युस्तर्पणं ॥ इति ॥ ॥

## ॥ ७१ ॥ अविधवानवमीश्राद्धं ॥

उक्तापराह्णेजीवत्पितृकःमृतमातृकःश्रौताग्निमान्स्मार्ताग्निमान्वाचेत्पृथक्पाकेनवैश्वदेवंकृत्वाआप्रकोष्ठात्प्राचीनावीतंकृत्वाअ स्मन्मातृपितामहीप्रपितामहीनांअमुकदानांगोत्राणांवसु० अस्मत्सापत्नमातुःदायाःगोत्रायाःवसु० अविधवानवमीश्राद्धमहंक रिष्यइतिसंकल्प्यवैश्वदेवार्थंद्वावेकंवाविप्रंनिमंत्र्यमातृपार्वणार्थंविप्रत्रयंसापत्नमात्रर्थमेकंसर्वार्थमेकंवानिमंत्र्य इतरत्सर्वंपार्व णवत् सापत्नमातुरेकोद्दिष्टवत् प्रपितामह्यनंतरंसापत्नमातुःकीर्तनं आसनादिपिंडदानांतेषुपदार्थेषुइत्येकःपक्षः अपरस्तुमात्रा सहैवसापत्नमातरमुत्कीर्त्यपितामहीप्रपितामह्योरुत्कीर्तनमिति ॥ अस्मिन्पक्षेअस्मन्मात्रोःअमुकदयोःगोत्रयोःवसुरूपयोःपिता महीप्रपितामह्योःदयोःगोत्रयोःरुद्रादित्यरूपयोःइति अस्मन्मातृसापत्नमातृपितामहीप्रपितामहीनांदानांगोत्राणांवसुरुद्रादित्य स्व० इत्येवंवोत्कीर्तनंसर्वत्र ॥ अस्मिन्पक्षेमात्रोःस्थानेक्षणःकरणीयःपितामहीस्थानेप्रपितामहीस्थानेच ॥ अर्घ्यदानंमात्रेसापत्न मात्रेचपृथगेव ॥ गंधादिषुअस्मन्मातरौअमुकदेगोत्रेरूपेएषयुवांगंधःइत्याद्यूहः ॥ अन्नदानेअस्मन्मातृभ्यांगोत्राभ्यांव० इदम न्नमित्याद्यूहः ॥ पिंडदानेएतद्वामस्मन्मातरौअमुकदेयेचयुवामनु इतिद्वयोरुद्देशएकएवपिंडः अंजाथांअभ्यंजाथांइत्यंजना

भ्यंजने ॥ वहुत्वेतुबहुवचनं ॥ अमुकदाःगोत्राः येचवोनुइतिपिंडदाने ॥ अङ्ध्वमभ्यङ्ध्वमित्यंजनाभ्यंजनेइतिविशेषः ॥
तदहरेवशुक्लतिलैस्तर्पणं ॥ इत्यविधवानवमीश्राद्धं ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ७२ ॥ दौहित्रप्रतिपच्छ्राद्धं ॥

आश्विनशुक्लप्रतिपदिउक्तापराह्णेसंगवेवाजीवत्पितृकोमृतमातामहकःश्रौताग्निमान्स्मार्ताग्निमान्वाचेत्पृथक्पाकेनवैश्वदेवंकृत्वा आचम्यपवित्रपाणिःप्राणानायम्यदेशकालोत्कीर्तनांतेअस्मन्मातामहमातुःपितामहमातुःप्रपितामहानांशर्मणांगोत्राणांवसुरुद्रादित्यस्वरूपाणां ( मातामह्याअपिमृतौ सपत्नीकानां) तृप्त्यर्थंआश्विनशुक्लप्रतिपच्छ्राद्धंसांकल्पिकविधिनाकरिष्येइतिसंकल्प्यपूर्वोक्तसांकल्पविधानेनसर्वंकृत्वातद्वर्गमात्रस्यशुक्लतिलैस्तदहरेवतर्पणंकृत्वाश्राद्धशेषमिष्टैःसहभुंजीत॥ इतिदौहित्रप्रतिपच्छ्राद्धं॥

## ॥ ७३ ॥ तीर्थश्राद्धं ॥

काश्यादितीर्थप्राप्तौस्नानादिकंविधायतिलतर्पणंकृत्वादेशकालौसंकीर्त्यपुरूरवार्द्रवसं० प्राचीनावीतीपित्राद्याप्तांतान्महालयवदुच्चार्यतीर्थश्राद्धंकरिष्यइतिसंकल्प्य क्षेत्रवासिनोन्यान्वाब्राह्मणान्महालयवन्निमंत्र्य अर्घ्यावाहनांगुष्ठनिवेशनतृप्तिप्रश्नविकिरविसर्जनवर्जंमहालयश्राद्धवत्सर्वंकुर्यात् ॥ दृग्दोषदिग्बंधावत्रनस्तइतिकश्चित् ॥ अत्राग्नौकरणंकृताकृतं ॥ तत्रकरणपक्षेग्नावेवहोमः॥ पिंडांस्तुतीर्थजलएवक्षिपेत्॥ महालयपदस्थानेतीर्थश्राद्धपदोच्चारणं॥ एवंगयाश्राद्धादावपियथायथमूहोद्रष्टव्यः॥

---

१ अर्घ्यमावाहनंचैवद्विजांगुष्ठनिवेशनं । तृप्तिप्रश्नंचविकिरंतीर्थेपंचविवर्जयेत् ।

## ॥ ७४ ॥ यात्रारंभेघृतश्राद्धं ॥

उक्तापराह्णेश्रौताग्निमान्स्मार्ताग्निमान्वाचेत्पृथक्पाकेनवैश्वदेवंकृत्वातिलतर्पणंविधायदेशकालकीर्तनांतेमहालयवत्पितृनुद्दिश्य अमुकतीर्थयात्रांकर्तुमादौतदंगत्वेनविहितंसमस्तपितृनुद्दिश्यघृतश्राद्धंकरिष्यइतिसंकल्प्यक्षणादिअर्घ्यावाहनवर्जंपरिवेषणांतं कुर्यात् ॥ अग्नौकरणंकृताकृतं ॥ करणपक्षेघृतेनाग्नौकरणं तस्यैवमुख्यत्वात् ॥ पात्रेघनीभूतंघृतंप्रधानं भक्ष्यभोज्यादिकंव्यं जनत्वेनेतिद्रष्टव्यं ॥ अन्नशब्दस्थानेघृतशब्दप्रयोगोदानेकार्यः ॥ अन्यत्सर्वंतीर्थश्राद्धवत् ॥ ततोबंधून्संभोज्यघृतशेषमादाय ग्रामंप्रदक्षिणीकृत्यक्रोशमात्रंगत्वातत्रपाकंविधायसर्वस्मादन्नात्किंचित्किंचिद्ग्रासमात्रंसमवदायघृतप्लुतमग्नौकिंचित्प्रक्षिप्यानी तश्राद्धशिष्टघृतेनसहभोजनंकुर्यात् ॥ इतिघृतश्राद्धं ॥ ॥ यात्रांकृत्वागृहप्रवेशेश्राद्धंपूर्वोक्तवत्सर्वंकुर्यात् ॥ तत्रसर्वान्पि तृनुच्चार्यअमुकतीर्थात्प्रत्यागमननिमित्तंघृतश्राद्धंकरिष्येइतिसंकल्पवाक्येविशेषः ॥ अन्यत्समानं ॥ केचिद्दधिश्राद्धमाहुःतत्र संकल्पादौमध्येमध्येचघृतपदस्थानेदधिश्राद्धमित्यूहोज्ञेयः ॥ इतियात्रोत्तरंघृतश्राद्धम् ॥ ॥ छ ॥

## ॥ ७५ ॥ युगादिश्राद्धं ॥



उक्तापराह्णेश्रौताग्निमान्स्मार्ताग्निमान्वाचेद्वैश्वदेवंकृत्वासपत्नीकपितृवर्गस्यसपत्नीकमातामहवर्गस्यचतिलतर्पणंकृत्वादेशकाल कीर्तनांतेपुरूरवार्द्रव० प्राचीनावीतीअस्मत्पितृपितामहप्रपितामहानांशर्मणांगोत्राणांवस्वादिरूपाणांसपत्नीकानांमातामहमा तुःपितामहमातुःप्रपितामहानांशर्मणांगोत्राणांवस्वादिरूपाणांसपत्नीकानांयुगादिनिमित्तंश्राद्धंसांकल्पविधिनासद्यःकरिष्यइति

संकल्प्यसांकल्पविधिनासर्वंकुर्यात् ॥ एवंमन्वादि–अयनद्वय–संक्रमण–ग्रहण–व्यतीपात–वैधृत्यादिनिमित्तंश्राद्धंकरिष्येइति तत्रतत्रतत्तदूहःकार्यः ॥ एवमर्धोदय–गजच्छाया–कपिलाषष्ठीषुतत्तदूहेनश्राद्धंकुर्यात् ॥ इतियुगादिश्राद्धानि ॥ ॥ छ ॥

## ॥ ७६ ॥ अक्षय्यतृतीया ॥

अत्रयुगादिश्राद्धमुपरिनिर्दिष्टवत्सपत्नीकपित्रादित्रयसपत्नीकमातामहादित्रयेतिषद्दैवतंसांकल्पविधिनाकार्यं इदमपिंडकमेवे तिधर्मसिंधौ ॥ श्राद्धासंभवेतिलतर्पणमप्यत्रकार्यं ॥ अत्रदेवतोद्देशेनपित्रुद्देशेनचोदकुंभदानमुक्तंतत्रसंकल्पः ॥ श्रीपरमेश्वरप्री तिद्वाराउदकुंभदानकल्पोक्तफलावाप्त्यर्थं ब्राह्मणायोदकुंभदानमहंकरिष्ये ॥ तदंगंकुंभपूजनंचकरिष्येइतिसंकल्प्य सूत्रवेष्टितं गंधफलयवाद्युपेतंजलपूर्णकुंभंब्राह्मणंचगंधादिपंचोपचारैःसंपूज्य ॥ एषधर्मघटोदत्तोब्रह्मविष्णुशिवात्मकः अस्यप्रदानात्स कलाममसंतुमनोरथाः ॥ इतिमंत्रेणदद्यात् ॥ पित्रुद्देशेतुपितॄणामक्षय्यतृप्त्यर्थंउदकुंभदानंकरिष्ये ॥ उदकुंभब्राह्मणौसंपूज्य कुंभेगंधतिलफलादिनिक्षिप्य ॥ एषधर्मघटोदत्तोब्रह्मविष्णुशिवात्मकः ॥ अस्यप्रदानात्तृप्यंतुपितरोपिपितामहाः ॥ गंधोदक तिलैर्मिश्रंसान्नंकुंभंफलान्वितं ॥ पितृभ्यःसंप्रदास्यामिअक्षय्यमुपतिष्ठतु ॥ इतिमंत्रेणदद्यात् ॥ अत्रसमुद्रस्नानंमहाफलं ॥ इति ॥

## ॥ ७७ ॥ नित्यश्राद्धप्रयोगः ॥

॥ श्रीः ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यअस्मपितृपितामहप्रपितामहानांशर्मणांगोत्राणांवसुरु० सपत्नीकानांअस्मन्मा तामहमातुःपितामहमातुःप्रपितामहानांशर्मणांगोत्राणांवसुरु० सपत्नीकानांतृप्त्यर्थंनित्यश्राद्धंकरिष्येइतिसंकल्प्यआसनेतत्तद्ध

गोंदेशेनविप्रद्वयमेकंवोपवेश्यगंधादिभिःसंपूज्य इदंपरिविष्टंपरिवेक्ष्यमाणंसोपस्करमन्नंपितृपितामहप्रपितामहानांसपत्नीकाना मातृस्तेःस्वधासंपद्यतांकव्यंनममइतिनिवेदयेत् ॥ एवंमातामहवर्गे ॥ विप्रभोजनोत्तरंयथासंभवंदक्षिणांदत्त्वानमस्कृत्यविसर्जयेत् ॥ नात्रब्रह्मचर्यादिनियमाः नतर्पणंनविश्वेदेवाः ॥ दक्षिणादानेविकल्पः ॥ अथसर्वथाविप्रालाभेकिंचिदन्नमुद्धृत्यपितृभ्य इदमन्नंस्वधानममइतिपित्रुद्देशेनत्यक्त्वागोभ्योदद्यात् ॥ गवामलाभेअग्नौक्षिपेत् ॥ यस्मिन्दिनेपितुर्दर्शश्राद्धंनांदीश्राद्धंमहालयान्वष्टक्यादिश्राद्धादिकंवापतेत्तदातत्रपित्रादीनांतृप्तत्वात् नित्यश्राद्धस्यलोपएव पत्न्यादिसांवत्सरिकादिषुएताननित्यश्राद्धदेवतास्तत्रतत्कर्तव्यमितिव्यवस्थाज्ञेया ॥ इतिनित्यश्राद्धं ॥ ॥ इतिनित्यश्राद्धप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ७८ ॥ श्राद्धसंपातेतंत्रप्रयोगः ॥

श्रीः ॥ वर्गचतुष्टयस्यैकदिनमरणेनश्राद्धसंपातेपृथक्पाककरणाशक्तावेकपाकेनतंत्रेणश्राद्धप्रयोगः ॥ यद्यपिवर्गचतुष्टयश्राद्धंपृथगेवकर्तव्यंतथापिएकस्मिन्दिनेमुख्यकालेपृथकपृथक्कर्तुमशक्यत्वात्तंत्रमेव॥देशकालोत्कीर्तनांतेपितृवर्गस्य अपुत्रश्चेन्मातामहस्तद्वर्गस्य मातामहीवर्गस्यचषष्ठ्यंतमुच्चारणंकृत्वाएतेषामाब्दिकश्राद्धंदर्शश्राद्धविधिनाद्यकरिष्यइतिसंकल्प्य वर्गचतुष्टयार्थंतंत्रेणैववैश्वदेवविप्रनिमंत्रणंकृत्वाप्रतिवर्गंत्रयंत्रयंएकमेकमेकमेववाविप्रंनिमंत्र्यपादप्रक्षालनादिसर्वंदर्शश्राद्धवत्कुर्यात् ॥ श्वोभूते तिलतर्पणं॥पितृव्यादीनामप्येकस्मिन्दिवसेचेन्मरणंतदातेषामेकोद्दिष्टविधिपक्षेपृथगेवमरणक्रमेणतदज्ञानेसंबंधासत्तिक्रमेणोल्लेखंकृत्वातंत्रेणैवश्राद्धंमध्याह्नकालत्वात्पित्रादिश्राद्धात्पूर्वमेवकार्यं पार्वणपक्षेतुवर्गचतुष्टयेनसहैव ॥ अत्रपित्रादिवर्गचतुष्टयोल्लेखोत्तरमेवसर्वत्रोल्लेखः स्त्रियाअप्येतद्दिनेमरणेएकोद्दिष्टपक्षेपृथगेव पितृव्यादीनामप्येतस्मिन्दिनेश्राद्धंचेत्तेषामप्येकोद्दिष्टपक्षे

तैःसाकमेवपत्न्याअप्येकोद्दिष्टंकार्यं पार्वणपक्षेसर्वेषांसहैवेतिद्रष्टव्यं ॥ यदिसमतंत्राणांश्राद्धानामेकस्मिन्दिनेसंपातस्तदातानि सर्वाण्युत्कीर्त्यतंत्रेणकरिष्यइत्युल्लिखेत् यदिमहातंत्राल्पतंत्रयोःसमासस्तदामहातंत्रस्यैवोल्लेखंकृत्वाश्राद्धंकुर्यात् ॥ अल्पतंत्रस्यतु तेनैवसिद्धिः प्रसंगसिद्धस्यतर्पणंविरोधेसमसंख्यत्वेआदावंतेवाविषमसंख्यत्वेबह्वनुरोधः ॥ इतिश्राद्धसंपातेप्रयोगः ॥ ॥

## ॥ ७९ ॥ प्रौष्ठपदीश्राद्धप्रयोगः ॥

भाद्रपदपौर्णमास्यांकृतनित्यक्रियःउक्तापराह्णेप्रपितामहात्परांस्त्रींस्तिलमिश्रोदकेनतर्पयित्वादेशकालौसंकीर्त्यधुरिलोचनसंज्ञ कानांविश्वेषांदेवानांप्राचीनावीतीअस्मत्प्रपितामहपितृपितामहप्रपितामहानांशर्मणांगोत्राणांवसुरुद्रादित्यस्वरूपाणांप्रौष्ठपदी श्राद्धमद्यकरिष्ये धुरिसंज्ञकविश्वदेवार्थंलोचनसंज्ञकदेवार्थंचविप्रद्वयमेकंवानिमंत्र्यअस्मत्प्रपितामहपितुःशर्मणःगोत्रस्यवसुरूप स्यस्थानेत्वांनिमंत्रयेइतिनिमंत्र्यत्वयाक्षणःकरणीयःअस्मत्प्रपितामहपितामहस्यशर्मणोगोत्रस्यरुद्र०स्थानेत्वां०अस्मत्प्रपितामह प्रपितामहस्यशर्मणोगोत्रस्यादित्यरूपस्यस्थानेत्वां० इतिविप्रत्रयमेकंवानिमंत्रयेत् विप्रैकत्वपक्षेधुरिलोचनसंज्ञकानांविश्वेषांदेवा नांइतिदेवविप्रनिमंत्रणेतत्तत्कर्मणितत्तद्विभक्त्योहःअस्मत्प्रपितामहपितृपितामहप्रपितामहानांशर्मणांगोत्राणांवसुरुद्रादित्यस्व रूपाणांइत्यादिपितृकर्मणितत्तद्विभक्त्योहः॥ मार्जयंतांप्रपितामहपितरःसोम्यासःमार्जयंतांप्रपितामहपितामहाःसोम्यासःमार्ज यंतांप्रपितामहप्रपितामहाःसोम्यासःएतत्तेप्रपितामहपितरमुकशर्मन्येचत्वामनुएतत्तेप्रपितामहपितामहामुकशर्मन्येचत्वामनु एतत्तेप्रपितामहप्रपितामहामुकशर्मन्येचत्वामनुआंक्ष्वप्रपितामहपितरमुकशर्मन्आंक्ष्वप्रपितामहपितामहामुकशर्मन्आंक्ष्वप्र पितामहप्रपितामहामुकशर्मन्एवमभ्यंक्ष्वेत्यत्राप्यूहः नात्रचतुर्थःपिंडोलेपनिमार्जनंवा ॥ अन्यत्सर्वंदर्शश्राद्धवत् ॥ इतिप्रौ० ॥

## ॥ ८० ॥ श्राद्धानुकल्पाः ॥

तत्रद्विजाद्यभावेदर्भबटुविधानेनपिंडदानमात्रमुक्तं ॥ अथवाद्रव्यविप्रयोरभावेपक्वान्नस्यपैतृकसूक्तेनहोमःकार्यः ॥ यद्वाश्राद्ध दिनेप्राप्तेभवेन्निरशनःपुमान् ॥ किंचिद्दद्यादशक्तोवाउदकुंभादिकंद्विजे ॥ तृणानिवागवेदद्यात्पिंडान्वाप्यथनिर्वपेत् ॥ तिल दर्भैःपितृन्वापितर्पयेत्स्नानपूर्वकं ॥ अथवातृणभारंदहेत् ॥ धान्यंवातिलान्वास्वल्पांदक्षिणांवादद्यात् ॥ अथवासंकल्पादिस र्वंश्राद्धप्रयोगंपठेत् ॥ सर्वाभावेवनंगत्वोर्ध्वबाहुःस्वकक्षंदर्शयन्निदंपठेत् ॥ नमेस्तिवित्तंनधनंनचान्यच्छ्राद्धोपयोगिस्वपितॄन्न तोस्मि ॥ तृप्यंतुभक्त्यापितरोमयैतौभुजौकृतौवर्त्मनिमारुतस्य ॥ इति ॥ प्रभासखंडेन्येपिमंत्राउक्ताः इतिश्राद्धानुकल्पाः ॥

## ॥ ८१ ॥ यतेःसमाराधनप्रयोगः ॥

श्रीः ॥ समाराधनप्रयोगःपार्वणश्राद्धानंतरंश्वःसद्योवाकार्यः ॥ कृतनित्यक्रियोयजमानःप्रातःआचम्यप्राणानायम्यदेशकाला द्युत्कीर्त्यश्रीनारायणप्रीत्यर्थंब्रह्मीभूतस्यगुरोःसमाराधनंकरिष्ये ॥ तदंगंक्षणादिकरिष्ये ॥ ब्रह्मीभूतस्यगुरोःसमाराधनेगुर्वर्थे भवद्भिःक्षणःकर्तव्यः ॥ परमगुर्वर्थे परमेष्ठीगुर्वर्थे परात्परगुर्वर्थेभवद्भिःक्षणःकर्तव्यः ॥ शुक्लेकेशवार्थेक्षणःकर्तव्यः एवंनारा यणार्थे माधवार्थे गोविंदार्थे विष्णवर्थे मधुसूदनार्थे त्रिविक्रमार्थे वामनार्थे श्रीधरार्थे हृषीकेशार्थे पद्मनाभार्थे दामोदरार्थेक्षणः कर्तव्यः ॥ कृष्णेतु संकर्षणार्थे वासुदेवार्थे प्रद्युम्नार्थे अनिरुद्धार्थे पुरुषोत्तमार्थे अधोक्षजार्थे नारसिंहार्थे अच्युतार्थे जनार्दनार्थे उपेंद्रार्थे हर्यर्थे श्रीकृष्णार्थेइति ॥ एवंषोडशअष्टौचतुरोवाब्राह्मणान्निमंत्र्य ( यतीन्निमंत्र्य ) ॥ गंधाक्षततुलसीदलकर्पूरमिश्र

जलेनवरणक्रमेणतेषांपादप्रक्षालनंकृत्वामंत्रान्पठेत् ॥ अस्मिन्राष्ट्रेश्रियमावेशयाम्यतोदेवीःप्रतिपश्याम्यापः ॥ दक्षिणंपाद मवनेनिजेस्मिन्राष्ट्रइंद्रियंदधामि ॥ सव्यंपादमवनेनिजेस्मिन्राष्ट्रइंद्रियंवर्धयामि ॥ पूर्वमन्यमपरमन्यंपादाववनेनिजे ॥ देवा राष्ट्रस्यगुप्त्याअभयस्यावरुध्यै ॥ आपःपादावनेजनीर्द्विषंतंनिर्दहंतुमे ॥ चरणंपवित्रंविततंपुराणं ॥ येनपूतस्तरतिदुष्कृतानि ॥ ते नपवित्रेणशुद्धेनपूताः ॥ अतिपाप्मानमरातिंतरेम ॥ लोकस्यद्वारमर्चिमत्पवित्रं ॥ ज्योतिष्मद्भ्राजमानंमहस्वत् ॥ अमृतस्यधाराब हुधादोहमानं ॥ चरणंनोलोकेसुधितांदधातु ॥ तीर्थमेवसमानानांभवतिइत्यादिसूक्तंपठेत् ॥ गुरुस्वरूपिणेब्राह्मणायइदंपाद्यं ॥ ततःतानाचमय्यस्वयंचद्विराचम्यपादप्रक्षालनोदकंपात्रांतरेगृहीत्वातत्पादौसाक्षतगंधपुष्पतुलसीदलैरभ्यर्च्य ॥ आनंदमानंद करंप्रसन्नंज्ञानस्वरूपंनिजबोधरूपं ॥ योगींद्रमीड्यंभवरोगवैद्यंश्रीमद्गुरुंनित्यमहंनमामि ॥ इतिनमस्कुर्यात् ॥ एवंसर्वेषांपूजां गंधादिभिःकृत्वातत्पादोदकपात्रंगंधादिभिरलंकृत्यदेवसंनिधौसंस्थाप्य कुशासनेषुप्राङ्मुखानुदङ्मुखान्वागुरवेइदमासनंपरम गुरवेइदमासनमित्यादिक्रमेणअथवागुर्वादिभ्यइदमासनमित्याद्युपवेश्यपुरुषसूक्तेनप्रत्यृचं ॐनमोनारायणायेतिमंत्रसहितेन आवाहनादिषोडशोपचारैःपदार्थानुसमयेनाभ्यर्चयेत् ॥ अथवागंधपुष्पधूपदीपाच्छादनांतापूजाकर्तव्या ॥ ॐ सहस्रशीर्षा० ॐ नमोनारायणायगुरुभ्योनमः ॥ संकर्षणादिश्रीकृष्णांतेभ्योनमःआवाहनंस० इति ॥ ततश्चतुरस्राणिमंडलानिकृत्वातेषुपात्राण्या साद्यतेषुपायसादिविशिष्टद्रव्यंसाज्यंव्यंजनसहितंचपरिविष्यगायत्र्याप्रोक्ष्यगुरवेइदमन्नंपरिविष्टंपरिवेक्ष्यमाणंचातृप्तेःस्वाहा ॥ हव्यंनमम एवंसर्वेषां ॥ परमगुरवेपरमेष्ठिगुरवे परात्परगुरवे केशवाय० इत्यादिसंकर्षणायेदमन्नं ॥ इतिसर्वेभ्योनिवेद्य( एको

---

१ पादप्रक्षालनकालेअथातःपुरोधायाइत्यादीनिब्राह्मणखंडानिपठंति ।

विष्णुर्महद्भूतं० अनेनगुर्वाराधनेनभगवान्नारायणःप्रीयतां ॥ सर्वेषामापोशनंदत्वा ) ॐतद्ब्रह्म ॐतद्वायुः ॐतदात्मा ॐतत्सत्यं ॐतततत्सर्वं ॐतत्पुरोर्नमः अंतश्चरतिभूतेषुगुहायांविश्वमूर्तिषु ॥ त्वंयज्ञस्त्वंवषट्कारस्त्वमिंद्रस्त्वꣳरुद्रस्त्वंविष्णुस्त्वं ब्रह्मत्वंप्रजापतिः ॥ त्वंतदापआपोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम् ॥ भोक्तुमुपविष्टेषुउपनिषन्मंत्रान्श्रावयेत् ॥ तृप्तेषुपुनरोंत द्ब्रह्मेत्यनुवाकंजपित्वा उत्तरापोशनमाचांतेषुविशिष्टतांबूलदक्षिणावस्त्रादिभिरभ्यर्च्य उपविष्टेष्वेवतेषुगुर्वाराधनांगभूतंतीर्थ पूजनंकरिष्येइतिसंकल्प्य चतुरस्रंमंडलंगोमयेनोपलिप्यतत्ररंगवल्ल्यादिभिरलंकृत्यतन्मंडलेधान्योपरिपादोदककलशंसंस्थाप्य तत्रगंगादिसर्वतीर्थानिभावयित्वा पुरुषसूक्तेनप्रत्यृचंतीर्थराजायनमइत्यनेनषोडशोपचारैरभ्यर्च्यतत्पात्रंशिरसिधृत्वा ॥ लोकः सरस्वत्यायांत्येषवैदेवयानःपंथास्तमेवान्वारोहंत्याक्रोशंतोयांत्यवर्तिमेवान्यस्मिन्प्रतिषज्यप्रतिष्ठांगच्छंतियदादशशतंकुर्वंत्यथैक मुत्थानꣳशतायुःपुरुषःशतेंद्रियआयुष्येवेंद्रियेप्रतितिष्ठंतियदाशतꣳसहस्रंकुर्वंत्यथैकमुत्थानꣳसहस्रसंमितोवाअसौलोकोमुमेव लोकमभिजयंतियदेषांप्रमीयेतयदावाजीयेरन्नथैकमुत्थानंतद्धितीर्थं ॥ १ ॥ भीषास्माद्वातःपवते ॥ भीषोदेतिसूर्यः ॥ भीषास्माद ग्निश्चेंद्रश्च ॥ मृत्युर्धावतिपंचमइति ॥ सैषानंदस्यमीमाꣳसाभवति ॥ युवास्यात्साधुयुवाध्यायकः ॥ आशिष्ठोदृढिष्ठोबलिष्ठः ॥ तस्येयंपृथिवीसर्वावित्तस्यपूर्णास्यात् ॥ सएकोमानुषआनंदः ॥ तेयेशतंमानुषाआनंदाः ॥१॥ सएकोमनुष्यगंधर्वाणामानंदः ॥ श्रोत्रियस्यचाकामहतस्य ॥ तेयेशतंमनुष्यगंधर्वाणामानंदाः ॥ सएकोदेवगंधर्वाणामानंदः ॥ श्रोत्रियस्य० ॥ तेयेशतंदेवगंध र्वाणामानंदाः ॥ सएकःपितृणांचिरलोकलोकानामानंदः ॥ श्रोत्रियस्य० ॥ तेयेशतंपितृणांचिरलोकलोकानामानंदाः ॥ सएक आजानजानांदेवानामानंदः ॥ श्रोत्रियस्य० ॥२॥ तेयेशतमाजानजानांदेवानामानंदाः ॥ सएकःकर्मदेवानांदेवानामानंदः ॥

येकर्मणादेवानपियंति ॥ श्रोत्रियस्य० ॥ तेयेशतंकर्मदेवानांदेवानामानंदाः ॥ सएकोदेवानामानंदः ॥ श्रोत्रियस्य० ॥ तेये शतंदेवानामानंदाः ॥ सएकइंद्रस्यानंदः ॥ ३ ॥ श्रोत्रियस्य० ॥ तेयेशतमिंद्रस्यानंदाः ॥ सएकोबृहस्पतेरानंदः ॥ श्रोत्रि यस्य० ॥ तेयेशतंबृहस्पतेरानंदाः ॥ सएकःप्रजापतेरानंदः ॥ श्रोत्रियस्य० ॥ तेयेशतंप्रजापतेरानंदाः ॥ सएकोब्रह्मणआ नंदः ॥ श्रोत्रियस्य० ॥ सयश्चायंपुरुषे ॥ यश्चासावादित्ये ॥ सएकः ॥ सयएवंवित् ॥ अस्माल्लोकात्प्रेत्य ॥ एतमन्नमयमात्मा नमुपसंक्रामति ॥ एतंप्राणमयमात्मानमुपसंक्रामति ॥ एतंमनोमयमात्मानमुपसंक्रामति ॥ एतंविज्ञानमयमात्मानमुपसंक्रा मति ॥ एतमानंदमयमात्मानमुपसंक्रामति ॥ तदप्येषश्लोकोभवति ॥ ४ ॥ यतोवाचोनिवर्तंते ॥ अप्राप्यमनसासह ॥ आनंदं ब्रह्मणोविद्वान् ॥ नबिभेतिकुतश्चनेति ॥ एतꣳहवावनतपति ॥ किमहꣳसाधुनाकरवं ॥ किमहंपापमकरवमिति ॥ सयएवं विद्वानेतेआत्मानꣳस्पृणुते ॥ उभेह्येवैषएतेआत्मानꣳस्पृणुते ॥ यएवंवेद ॥ इत्युपनिषत् ॥ इतिजपित्वाहरिकीर्तनपुरःसरंसहर्ष नृत्यंकृत्वातत्पात्रंपुनःमंडलेसंस्थाप्यचंदनाक्षतपुष्पाणिपूजावशिष्टानिबंधुभिःसहस्वयंधृत्वाविप्रान्प्रदक्षिणीकृत्य आनंदमानंद करंप्रसन्नंज्ञानस्वरूपंनिजबोधरूपं ॥ योगींद्रमीड्यंभवरोगवैद्यंश्रीमद्गुरुंनित्यमहंनमामि ॥ गुरुर्ब्रह्मागुरुर्विष्णुर्गुरुर्देवोमहेश्वरः ॥ गुरुःसाक्षात्परंब्रह्मतस्मैश्रीगुरवेनमः इतिमंत्रैर्द्विजांस्तीर्थराजंचनमस्कृत्य ॥ गुर्वर्थविप्रहस्तेपादोदकपात्रंदत्वातदाज्ञयातत्तीर्थं मंत्रेणगृह्णीयात् ॥ तन्मंत्रः ॥ अविद्यामूलशमनंसर्वपापप्रणाशनं ॥ गुरोःपादोदकंतीर्थंसंसारद्रुमनाशनं ॥ पुत्रादिकामनायांतु ॥ शोषणंपापपंकस्यदीपनंज्ञानतेजसः ॥ गुरोःपादोदकंचित्रंपुत्रपौत्रप्रवर्धनं ॥ इतिगृह्णीयात् ॥ तान्पुनःप्रणम्यतानन्यांश्चद क्षिणादिभिस्तोषयित्वासन्मानपुरःसरंताननुव्रज्य ॥ अनेनब्रह्मीभूतस्यगुरोःसमाराधनेनश्रीभगवान्नारायणस्वरूपीपरमेश्वरः

प्रीयतांनममेति ॥ कर्मेश्वरार्पणंकृत्वासुहृद्युतोभुंजीत ॥ ततःप्राप्तदर्शमहालयतीर्थप्रयुक्तानिश्राद्धानिकुर्यात् ॥ प्रतिमास मेवमेवाराधनं ॥ प्रत्यब्दंपार्वणोत्तरंचैवमेव ॥ इत्थंकरणाशक्तौयथाशक्तिब्राह्मणानाहूयपादप्रक्षालनपूर्वकंगंधादिभिरभ्यर्च्यभो जयेत् ॥ इतिनागरखंडानुसार्याचारानुगृहीतआराधनप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

इतिहिरण्यकेशीयब्रह्मकर्मसमुच्चयेप्रथममाह्निकप्रकरणम् ॥

# अथसंस्कारप्रकरणंद्वितीयम् ॥

## ॥ ८२ ॥ षोडशसंस्काराः ॥

श्रीगणेशायनमः ॥ प्रणम्यगोपालमनंतमाद्यंनेत्रांचलानंदितगोपवृंदं ॥ स्मार्तप्रयोगंविदधातियत्नाद्धिरण्यकेशीयविधौमहेशः ॥ १ ॥ सत्याषाढमुनिंवंदेस्वर्णकेशसमन्वितं ॥ योऽनुष्ठेयपदार्थानांक्रमकल्पमकल्पयत् ॥ २ ॥ यत्कृतांवेदवद्वृत्तिमाद्रियंते विपश्चितः ॥ मातृदत्तश्चिरंजीयाद्वृत्तिरूपेणतत्त्ववित् ॥ २ ॥ माहेश्वर्यामुक्तान्संस्कारान्षोडशापिसंगृह्य ॥ तदनुक्तानप्यंतः संगृह्णीमोऽत्ररत्नमालातः ॥ ४ ॥ जन्मनाजायतेशूद्रःसंस्काराद्द्विजउच्यतइतिमनुस्मरणादभ्यर्हितद्विजत्वाधायकानिषोडश कर्माण्यप्यखिलविप्राणामावश्यकान्येवेतिनिर्विवादं ॥ षोडशकर्माणिच—गर्भाधानपुंसवनसीमंतोन्नयनजातकर्मनामकर्मान्नप्राशनचौलोपनयनवेदव्रतचतुष्टयगोदानसमावर्तनविवाहपितृमेधाख्यानि ॥ तत्रसंस्कारेषुगर्भाधानसंस्कारस्यप्राथम्यादनुष्ठान सौकर्यार्थंचसौत्रमुपनयनादिक्रममुत्सृज्यगर्भाधानादिक्रमेणसंस्काराणांप्रयोगाउच्यंतेइतिमहेश्वरभट्टप्रतिज्ञा ॥ तत्रतत्रांतरा तीवोपयुक्ताअपितदनुपात्ताविशेषप्रयोगाःसंस्काररत्नमालास्थाअपियथाक्रमंसंगृह्यंते ॥ ॥ छ ॥

## ॥ ८३ ॥ गणपतिपूजनम् ॥

श्रीः॥ कर्ताकृताभ्यंगस्नानःकृतमंगलतिलकःपत्न्यासहोपविश्याचम्यप्राणानायम्यइष्टदेवतांगुर्वादींश्चनमस्कृत्यदेशकालौनिर्दि

श्यामुककर्मकरिष्यइतितत्कंर्मप्रयोगाद्यथावत्संकल्प्यतदंगत्वेनगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्ये ॥
ॐ गणानांत्वागणपतिंहवामहेकविंकवीनामुपमश्रवस्तमं ॥ ज्येष्ठराजंब्रह्मणांब्रह्मणस्पतआनःशृण्वन्नूतिभिःसीदसादनं ॥
अस्मिन्पूगीफले ॐ भूर्भुवःसुवःसिद्धिबुद्धिसहितंमहागणपतिंसांगंसपरिवारंसायुधंसशक्तिकंआवाहयामि ॥ ॐ भूर्भुवःसुवःमहा
गणपतयेनमइतिनाममंत्रेण वाऽऽवाहनासनपाद्यार्घ्याचमनस्नानवस्त्रगंधाक्षतपुष्पधूपदीपनैवेद्यफलतांबूलदक्षिणाप्रदक्षिणान
मस्काराइतिषोडशोपचारैः गंधपुष्पधूपदीपनैवेद्याइतिपंचोपचारैर्वागणपतिंसंपूज्यगणानांत्वेतिपुष्पांजलिंदत्वा ॥ वक्रतुंडमहा
कायकोटिसूर्यसमप्रभ ॥ निर्विघ्नंकुरुमेदेवसर्वकार्येषुसर्वदा ॥ अथवा कार्यंमेसिद्धिमायातुप्रसन्नेत्वयिधातरि ॥ विघ्नानिनाश
मायांतुसर्वाणिसुरनायक ॥ अनयाविघ्नेश्वरपूजयासकलविघ्नहर्तामहागणपतिःप्रीयतां ॥ इतिगणपतिपूजा ॥छ॥ ॥छ॥

## ॥ ८४ ॥ पुण्याहवाचनेपृथग्देवताः ॥

श्रीः ॥ तत्रगर्भाधानादिसर्वकर्मसुआदावंतेचकेषुचित्पुण्याहवाचनंविहितं ब्राह्मणानन्नेनपरिविष्यपुण्याहंस्वस्त्ययनमृद्धि
मितिवाचयित्वेत्यादिनासूत्रकृता ॥ तत्रदेवताकांक्षायांशास्त्रांतरोक्तादेवताउच्यंते ॥ गर्भाधानस्यादावंतेचब्रह्मा ॥ पुंसवन
स्योभयत्रप्रजापतिः ॥ सीमंतस्योभयत्रधाता ॥ जातकर्मण्युभयत्रमृत्युः ॥ नामकरणस्यादौसविताअंतेप्रजापतिः ॥ आयुर्वर्धा
पनस्योभयत्राग्निरायुष्मान् ॥ अन्नप्राशनस्योभयत्रसविता ॥ चौलस्यादौकेशिनःअंतेप्रजापतिः ॥ उपनयनस्यादाविंद्रःअंतेश्र
द्धामेधे ॥ उपनयनचतुर्थदिवसीयपुण्याहवाचनेसुश्रवाः ॥ पुनरुपनयनस्योभयत्राग्निः ॥ ब्रह्मचारिव्रतोपाकरणविसर्गयोरुभ
यत्रसविता ॥ ब्रह्मचारिव्रतलोपप्रायश्चित्तस्योभयत्रसविता ॥ वेदोपाकरणोत्सर्गयोरुभयत्रसविता ॥ समावर्तनस्योभयत्रश्री

रिंद्रोवा ॥ विवाहस्योभयत्राग्निः ॥ औपासनस्योपक्रमेंऽतेचाग्निसूर्यप्रजापतयः ॥ दर्शपूर्णमासस्थालीपाकयोरुभयत्राग्निः ॥
वास्तुहोमस्यादौवास्तोष्पतिरंतेप्रजापतिः ॥ शूलगवस्योभयत्रेशानः ॥ प्रदोषव्रतस्योभयत्रेशानः ॥ नक्षत्रहोमेचोभयत्रनक्ष
त्रदेवताः ॥ आग्रयणस्योभयत्राग्रयणदेवताः ॥ प्रत्येकंनवग्रहमखेउभयत्रक्रमेणादित्यादिग्रहाः ॥ तंत्रेणग्रहमखेब्रह्मादयश्चो
भयत्र ॥ कूष्मांडहोमेचांद्रायणेचोभयत्राग्न्यादयः ॥ सर्पबलेरुभयत्रसर्पाः ॥ नक्षत्रेष्टावुभयत्रनक्षत्रदेवताः ॥ तडागाद्युत्सर्गेउ
भयत्रवरुणः ॥ एकोद्दिष्टस्योभयत्रप्रजापतिः ॥ सूतकांतेप्रधामा ॥ अग्न्याधेयेउभयत्राग्न्यादयः ॥ अग्निष्टोमउभयत्रेंद्रः ॥ अना
दिष्टकर्मसुसर्वत्रप्रजापतिः ॥ यद्यपिप्रकृतप्रकरणेकासांचिदेवदेवतानामुपयोगस्तथापिप्रकरणांतरेपिकासांचिदुपयोगोभविष्य
तीतिप्रसंगतःसर्वानिरूपिताइत्यभिधेयं ॥ इतिबौधायनोक्ताःपुण्याहवाचनदेवताः ॥ छ ॥ ॥ छ ॥

## ॥ ८५ ॥ पुण्याहवाचनम् ॥

श्रीः॥कर्ताब्राह्मणानन्नादिनासंतर्प्यगंधादिनासंपूज्यतान्पुण्याहंवाचयेत् ॥ ॐमहीद्यौःपृथिवीचनइमंयज्ञंमिमिक्षतां ॥ पिपृतां
नोभरीमभिः ॥ इतिमंत्रावृत्त्यादक्षिणोत्तरतोभूमिंस्पृष्ट्वा ॥ ॐ ओषधयःसंवदंतेसोमेनसहराज्ञा ॥ यस्मैकरोतिब्राह्मणस्तꣳराज
न्पारयामसि ॥ तंडुलपुंजौकृत्वा ॥ ॐ आजिघ्रकलशंमह्युरुधाराप‌र्यस्वत्यात्वाविशंत्विंदवःसमुद्रमिवसिंधवःसामासहस्रआभज
प्रजयापशुभिःसहपुनर्माविशताद्रयिः ॥ कलशौनिधाय ॥ ॐ इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमꣳसचतापरुष्णिया ॥ असि
क्रियामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया । तीर्थजलेनपूरयित्वा । ॐ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरीꣳ
सर्वभूतानांतामिहोपह्वयेश्रियं ॥ गंधंप्रक्षिप्य॥चंदनपुष्पादिनाभूषितौकृत्वा॥ॐकांडात्कांडात्प्ररोहंतीपरुषःपरुषःपरि ॥ एवानो

दूर्वेप्रतनुसहस्रेणशतेनच ॥ दूर्वानिक्षिप्य ॥ ॐअश्वत्थेवोनिषदनंपर्णेवोवसतिःकृता ॥ गोभाजइत्किलासथयत्सनवथपूरुषं ॥
पंचपल्लवान्कलशेनिक्षिप्य ॥ ॐयाःफलिनीर्याअफलाअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुंचंत्वꣳहसः ॥ फलं ॥
ॐअग्नेरेतश्चंद्रꣳहिरण्यं॥अद्भ्यःसंभूतममृतंप्रजासु॥तत्संभरन्नुत्तरतोनिधाय ॥ अतिप्रयच्छन्दुरितिंतिरेयं ॥ हिरण्यंनिक्षिप्य ॥
ॐबृहस्पतेजुषस्वनोहव्यानिविश्वदेव्य ॥ रास्वरत्नानिदाशुषे ॥ रत्नानि ॥ ॐयुवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजा
यमानः ॥ तंधीरासःकवयउन्नयंतिस्वाधियोमनसादेवयंतः ॥ वस्त्रं ॥ ॐपूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणाव
हाइषमूर्जꣳशतक्रतो ॥ इतितंडुलपूरितफलसहितपात्राभ्यामाननेपिदध्यात् ॥ सर्वत्रप्रतिकलशंमंत्रावृत्तिःउत्तरसंस्थताच ॥
ॐतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानआयुःप्रमोषीः ॥ ( अस्मिन्क
लशेवरुणंसांगंसपरिवारंसायुधंसशक्तिकमावाहयामि ॥ इतिउत्तरकलशेअक्षतैर्वरुणमावाह्य ॥ ॐभूर्भुवःसुवःवरुणायनमइति
गंधपुष्पधूपदीपनैवेद्यादिभिःसंपूज्यदक्षिणांदत्वा तत्त्वायामीतिमंत्रपुष्पंसमर्प्यनमस्कृत्य ) ॥ अनेनकृतपूजनेनश्रीवरुणःप्री
यतां ॥ ततःकलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः ॥ मूलेतत्रस्थितोब्रह्मामध्येमातृगणाःस्मृताः ॥ कुक्षौतुसागराःसर्वेसप्त
द्वीपावसुंधरा ॥ ऋग्वेदोथयजुर्वेदःसामवेदोह्यथर्वणः ॥ अंगैश्चसहिताःसर्वेकलशंतुसमाश्रिताः ॥ अत्रगायत्रीसावित्रीशांतिः
पुष्टिकरीतथा ॥ आयांतुममशांत्यर्थंदुरितक्षयकारिकाः॥ सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः ॥ आयांतुममशांत्यर्थंदुरित
क्षयकारकाः ॥ उत्तरकलशेअक्षतान्क्षिपेत् ॥ मातृदेवोभव ॥ पितृदेवोभव ॥ आचार्यदेवोभव ॥ अतिथिदेवोभव ॥ सर्वे
भ्योदेवेभ्यःनमः॥ सर्वेभ्योब्राह्मणेभ्योनमोनमः॥ अवनिकृतजानुमंडलःकमलमुकुलसदृशमंजलिंशिरस्याधायदक्षिणेनपाणिना

सुवर्णपूर्णकलशं धारयित्वाऽऽशिषः प्रार्थयते ॥ प्रार्थनामाह ॥ एताःसत्याआशिषःसंतु ॥ दीर्घानागानद्योगिरयस्त्रीणिविष्णु पदानिचतेनायुःप्रमाणेनपुण्याहंदीर्घमायुरस्तु ॥ शिवाआपःसंतु ॥ संतुशिवाआपः ॥ सौमनस्यमस्तु ॥ अस्तुसौमनस्यं ॥ अक्षतं चारिष्टंचास्तु ॥ अस्त्वक्षतमरिष्टंच ॥ गंधाःपांतु=सुमंगल्यंचास्तु ॥ अक्षताःपांतु=आयुष्यमस्तु ॥ पुष्पाणिपांतु=सौश्रि यमस्तु ॥ तांबूलानिपांतु=ऐश्वर्यमस्तु ॥ दक्षिणाःपांतु=बहुदेयंचास्तु ॥ दीर्घमायुःश्रेयःशांतिःपुष्टिस्तुष्टिश्चास्तु ॥ श्रीर्यशो विद्याविनयोवित्तंबहुपुत्रंचायुष्यंचास्तु ॥ ( सर्वत्रब्राह्मणैरस्त्वितिप्रतिवचनंदेयं ) ॥ यंकृत्वासर्ववेदयज्ञक्रियाकरणकर्मारंभाः शुभाःशोभनाःप्रवर्तंते ॥ तमहमोंकारमादिंकृत्वाऋग्यजुःसामाशीर्वचनंबह्वृषिमतंसंविज्ञातंभवद्भिरनुज्ञातःपुण्यंपुण्याहंवाच यिष्ये ॥ वाच्यतामितिविप्रावदेयुः ॥ उत्तरत्रचयथायोग्यंप्रत्युत्तरंदद्युः ॥ यजमानः ॥ ॐभद्रंकर्णेभिःशृणुयामदे वाभद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितंयदायुः ॥ ॐद्रविणोदाद्रविणसस्तुरस्यद्रविणोदाः सनरस्यप्रयंसत् ॥ द्रविणोदावीरवतीमिषंनोद्रविणोदारासतेदीर्घमायुः ॥ ॐसवितापश्चातात्सवितापुरस्तात्सवितोत्तरात्तात्स विताधरात्तात् ॥ सवितानःसुवतुसर्वतातिंसवितानोरासतांदीर्घमायुः ॥ ॐनवोनवोभवतिजायमानोह्नांकेतुरुषसामेत्यग्रं ॥ भागंदेवेभ्योविदधात्यायन्प्रचंद्रमास्तिरतिदीर्घमायुः ॥ ॐउच्चादिविदक्षिणावंतोअस्थुर्येअश्वदाःसहतेसूर्येण ॥ हिरण्यदाअ मृतत्वंभजंतेवासोदाःसोमप्रतिरंतआयुः ॥ ॐआपउंदंतुजीवसेदीर्घायुत्वायवर्चसे ॥ यस्त्वाहृदाकीरिणामन्यमानोमर्त्यमर्त्योजोह वीमि ॥ जातवेदोयशोअस्मासुधेहिप्रजाभिरग्नेअमृतत्वमश्यां ॥ यस्मैत्वँसुकृतेजातवेदउलोकमग्नेकृणवःस्योनं ॥ अश्विनँसपु

१ अत्रस्वर्णःपूर्णकलशंधारयित्वेतिपाठःश्रेयान् । २ अत्रसर्वत्र गंधाःपांतुसुमंगल्यंचास्त्वितिभवंतोब्रुवंत्वितिविप्रान्वाचयेत् ।

त्रिणं॑वी॒रव॑तं॒गोम॑त॒ꣳर॒यिं॑न॑शतेस्व॒स्ति॥ ॐसंत्वा॑सिंचामि॒यजु॑षाप्र॒जामायु॑र्धनं॑च॥व्रतनियमतपःस्वाध्यायक्रतुदमदानविशिष्टानां ब्राह्मणानांमनःसमाधीयतां ॥ ( विप्राः ) समाहितमनसःस्मः ॥( यजमानः ) प्रसीदंतुभवंतः॥ ( विप्राः ) प्रसन्नाःस्मः ॥( यजमानः ) शांतिरस्तु ॥ पुष्टिरस्तु ॥ तुष्टिरस्तु ॥ वृद्धिरस्तु ॥ अविघ्नमस्तु ॥ आयुष्यमस्तु ॥ आरोग्यमस्तु ॥ शिवंकर्मास्तु ॥ कर्मसमृद्धिरस्तु ॥ धर्मसमृद्धिरस्तु ॥ वेदसमृद्धिरस्तु ॥ शास्त्रसमृद्धिरस्तु ॥ पुत्रसमृद्धिरस्तु ॥ धनधान्यसमृद्धिरस्तु ॥ इष्टसंपदस्तु ॥ ( वाक्यद्वयेनवहिर्देशेअपःक्षिपेत् ) ॥ सर्वारिष्टनिरसनमस्तु ॥ यत्पापंतत्प्रतिहतमस्तु ॥ यच्छ्रेयस्तदस्तु ॥ उत्तरेकर्मण्यविघ्नमस्तु॥ उत्तरोत्तरमहरहरभिवृद्धिरस्तु ॥ उत्तरोत्तराःक्रियाःशुभाःशोभनाःसंपद्यंतां॥ इष्टाःकामाःसंपद्यंतां ॥ तिथिकरणमुहूर्तनक्षत्रसंपदस्तु ॥ तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताःप्रीयंतां ॥ तिथिकरणेमुहूर्तनक्षत्रेसग्रहेसदैवतेप्रीयेतां ॥ दुर्गापांचाल्यौप्रीयेतां ॥ अग्निपुरोगाविश्वेदेवाःप्रीयंतां ॥ इंद्रपुरोगामरुद्गणाःप्रीयंतां ॥ ब्रह्मपुरोगाःसर्वेवेदाःप्रीयंतां ॥ विष्णुपुरोगाःसर्वेदेवाःप्रीयंतां॥ माहेश्वरीपुरोगाउमामातरःप्रीयंतां ॥ वसिष्ठपुरोगाऋषिगणाःप्रीयंतां ॥ अरुंधतीपुरोगाएकपत्न्यःप्रीयंतां ॥ ऋषयश्छंदांस्याचार्यावेदादेवायज्ञाश्चप्रीयंतां ॥ ब्रह्मचब्राह्मणाश्चप्रीयंतां॥ श्रीसरस्वत्यौप्रीयेतां ॥ श्रद्धामेधेप्रीयेतां ॥ भगवतीकात्यायनीप्रीयतां ॥ भगवतीमाहेश्वरीप्रीयतां॥ भगवतीपुष्टिकरीप्रीयतां ॥ भगवतीतुष्टिकरीप्रीयतां ॥ भगवतीऋद्धिकरीप्रीयतां ॥ भगवतीवृद्धिकरीप्रीयतां ॥ भगवंतौविघ्नविनायकौप्रीयेतां ॥ भगवान्स्वामीमहासेनःसपत्नीकःससुतःसपार्षदःसर्वस्थानगतःप्रीयतां॥ हरिहरहिरण्यगर्भाःप्रीयंतां ॥ सर्वाग्रामदेवताःप्रीयंतां ॥ सर्वाःकुलदेवताःप्रीयंतां ॥ सर्वावास्तुदेवताःप्रीयंतां ॥ ( सप्तभिर्वाक्यैर्बहिरपःक्षिपेत् ) ॥ हताब्रह्मद्विषः ॥ हताःपरिपंथिनः ॥ हताअस्यकर्मणोविघ्नकर्तारः ॥

शत्रवःपराभवंयांतु ॥ शाम्यंतुघोराणि ॥ शाम्यंतुपापानि ॥ शाम्यंत्वीतयः ॥ शुभानिवर्धंतां ॥ शिवाआपःसंतु ॥ शिवाऋ
तवःसंतु ॥ शिवाअग्नयःसंतु ॥ शिवाआहुतयःसंतु ॥ शिवाओषधयःसंतु ॥ शिवावनस्पतयःसंतु ॥ शिवाअतिथयःसंतु ॥
अहोरात्रेशिवेस्यातां ॥ निकामेनिकामेनःपर्जन्योवर्षतुफलिन्योनओषधयःपच्यंतांयोगक्षेमोनःकल्पतां ॥ शुक्रांगारकबुधबृह
स्पतिशनैश्चरराहुकेतुसोमसहिताआदित्यपुरोगाःसर्वेग्रहाःप्रीयंतां ॥ भगवान्नारायणःप्रीयतां ॥ भगवान्पर्जन्यःप्रीयतां ॥ भग
वान्त्स्वामीमहासेनःप्रीयतां ॥ पुण्याहकालान्वाचयिष्ये ॥ वाच्यतां ॥ ॐउद्गातेवशकुनेसामगायसिब्रह्मपुत्रइवसवनेषुशंससि ॥
वृषेववाजीशिशुमतीरपीत्यासर्वतोनःशकुनेभद्रमावदविश्वतोनःशकुनेपुण्यमावद ॥ याज्ययायजतिप्रत्तिर्वैयाज्यापुण्यैवलक्ष्मीः
पुण्यामेवतल्लक्ष्मींसंभावयतिपुण्यांलक्ष्मींसंस्कुरुते ॥ ॐयत्पुण्यंनक्षत्रं ॥ तद्बद्कुर्वीतोपव्युषं ॥ यदावैसूर्यउदेति ॥ अथनक्षत्रं
नैति ॥ यावंतितत्रसूर्योगच्छेत् ॥ यत्रजघन्यंपश्येत् ॥ तावतिकुर्वीतयत्कारीस्यात् ॥ पुण्याहएवकुरुते ॥ तानिवाएतानिय
मनक्षत्राणि ॥ यान्येवदेवनक्षत्राणि ॥ तेषुकुर्वीतयत्कारीस्यात् ॥ पुण्याहएवकुरुते ॥ मह्यंसकुटुंबायमहाजनान्नमस्कुर्वाणाया
शीर्वचनमपेक्षमाणायामुककर्मकारिणेपुण्याहंभवंतोब्रुवंतुइतित्रिर्यजमानः ॥ ॐपुण्याहमितित्रिर्विप्रावदेयुः ॥ अत्रपुण्याहाद
यःशब्दाःप्रतिवचनेप्रथमैकवचनांताएवप्रयोक्तव्याः ॥ तेषांस्वपरत्वात् ॥ ॐस्वस्तयेवायुमुपब्रवामहैसोमंस्वस्तिभुवनस्यय
स्पतिः ॥ बृहस्पतिंसर्वगणंस्वस्तयेस्वस्तयआदित्यासोभवंतुनः ॥ आदित्यउदयनीयःपथ्ययैवेतःस्वस्त्याप्रयंतिपथ्यांस्वस्तिमभ्यु
द्यंतिस्वस्त्येवेतःप्रयंतिस्वस्त्युद्यंतिस्वस्त्युद्यंति ॥ ॐस्वस्तिनइंद्रोवृद्धश्रवाः ॥ स्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योअरिष्ट
नेमिः ॥ स्वस्तिनोबृहस्पतिर्दधातु ॥ अष्टौदेवावसवःसोम्यासः ॥ चतस्रोदेवीरजराःश्रविष्ठाः ॥ तेयज्ञंपांतुरजसःपरस्तात् ॥

संवत्सरीणंममृतꣳस्वस्ति ॥ मह्यमित्यादिअमुककर्मकारिणेस्वस्तिभवंतोब्रुवंत्वितितिर्यजमानः ॥ ॐस्वस्तीतिप्रतिवचनंत्रिः ॥ ॐऋध्यामस्तोमंसनुयामवाजमानोमंत्रैःसरथेहोपयातं ॥ यशोनपक्वंमधुगोष्वंतराभूतांशोअश्विनोःकाममप्राः ॥ सर्वामृद्धिमृध्नु यामितितंवैतेजसैवपुरस्तात्पर्यभवच्छंदोभिर्मध्यतोक्षरैरुपरिष्टाद्गायत्र्यासर्वतोद्वादशाहंपरिभूयसर्वामृद्धिमाध्नोत्सर्वामृद्धिमृध्नो तियएवंवेद ॥ ॐऋध्यास्महव्यैर्नमसोपसद्य ॥ मित्रंदेवंमित्रधेयंनोअस्तु ॥ अनूराधान्हविषावर्धयंतः ॥ शतंजीवेमशरदःसवीराः ॥ त्रीणित्रीणिवैदेवानामृद्धानि ॥ त्रीणिछंदांꣳसि ॥ त्रीणिसवनानि ॥ त्रयइमेलोकाः ॥ ऋध्यामेवतद्वीर्यएषुलोकेषुप्रतितिष्ठति ॥ मह्यमित्यादिअमुककर्मकारिणेऋद्धिंभवंतोब्रुवंतुइतितिर्यजमानः ॥ ॐऋध्यतामितिप्रतिवचनंत्रिः ॥ ॐश्रियेजातःश्रियआ निरियायश्रियंवयोजरितृभ्योदधाति ॥ श्रियंवसानाअमृतत्वमायन्भवंतिसत्यासमिथामितद्रौ ॥ श्रियएवैनंतच्छ्रियामादधाति संततमृचावषट्कृत्यंसंतत्यैसंधीयतेप्रजयापशुभिर्यएवंवेद ॥ ॐयस्मिन्ब्रह्माभ्यजंयत्सर्वमेतत् ॥ अमुंचलोकमिदमूचसर्वं ॥ तन्नो नक्षत्रमभिजिद्विजित्यं ॥ श्रियंदधात्वहृणीयमानं ॥ अहेर्बुध्नियमंत्रंमेगोपाय ॥ यमृषयस्त्रयिविदाविदुः ॥ ऋचःसामानियजूꣳ षि ॥ साहिश्रीरमृतासतां ॥ ( एभिर्मंत्रैःसुवासिनीभिर्नीराजनंकारयंति ) ॥ मह्यमित्यादिअमुककर्मकारिणेश्रीरस्त्वितिभवंतो ब्रुवंतुइतितिर्यजमानः ॥ ॐअस्तुश्रीरितिप्रतिवचनंत्रिः ॥ वर्षशतंपूर्णमस्तु ॥ शिवंकर्मास्तु ॥ गोत्राभिवृद्धिरस्तु ॥ ब्रह्माप्री यतां ॥ ( कर्मांतरेपुण्याहवाचनेयथोक्तादेवताग्राह्याः ) ॥ ॐशुक्रेभिरंगैरजआततन्वान्क्रतुंपुनानःकविभिःपवित्रैः ॥ शोचिर्व सानःपर्यायुरपांश्रियोमिमीतेबृहतीरनूनाः ॥ तदप्येषश्लोकोभिगीतोमरुतःपरिवेष्टारोमरुत्तस्यावसन्गृहे ॥ आविक्षितस्यकाम

१ पूर्वोक्ततत्तत्कर्मार्हदेवतोच्चारेणैवप्रीयतामितिवदेत् ।

प्रेर्विश्वेदेवाःसभासदइति ॥ ततउत्तरकलशंदक्षिणहस्तेनदक्षिणकलशंवामहस्तेनगृहीत्वाताभ्यांधाराद्वयंसंततंपात्रेनिषिंचेदेभि
र्मंत्रैः ॥ ॐवास्तोष्पतेप्रतिजानीह्यस्मान्त्स्वावेशोअनमीवोभवानः ॥ यत्त्वेमहेप्रतितन्नोजुषस्वशंनोभवद्विपदेशंचतुष्पदे ॥
वास्तोष्पतेप्रतरणोनएधिगयस्फानोगोभिरश्वेभिरिंदो ॥ अजरासस्तेसख्येस्यामपितेवपुत्रान्प्रतिनोजुषस्व ॥ वास्तोष्पतेशग्मया
संसदातेसक्षीमहिरण्वयागतुमत्या ॥ पाहिक्षेमउतयोगेवरंनोयूयंपातस्वस्तिभिःसदानः ॥ अमीवहावास्तोष्पतेविश्वारूपाण्या
विशन् ॥ सखासुशेवएधिनः ॥ शिवंशिवंशिवं ॥ ततःकर्तुर्वामतःपत्नीमुपवेश्य पात्रपातितजलेनपल्लवदूर्वाभिरुदङ्मुखाविप्रा
अभिषिंचेयुस्तिष्ठंतः ॥ ॐसमुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविशमानाः ॥ इंद्रोयावज्रीवृषभोरराद‌ताआपोदेवीरिह
मामवंतु ॥ याआपोदिव्याउतवास्रवंतिखनित्रिमाउतवायाःस्वयंजाः ॥ समुद्रार्थायाःशुचयःपावकास्ताआपोदेवीरिहमामवंतु ॥
यासांराजावरुणोयातिमध्येसत्यानृतेअवपश्यन्जनानां ॥ मधुश्चुतःशुचयोयाःपावकास्ताआपोदेवीरिहमामवंतु ॥ यासुराजावरु
णोयासुसोमोविश्वेदेवायासूर्जंमदंति ॥ वैश्वानरोयास्वग्निःप्रविष्टस्ताआपोदेवीरिहमामवंतु ॥ ॐत्रायंतामिहदेवास्त्रायंतांमरुतां
गणः ॥ त्रायंतांविश्वाभूतानियथायमरपाअसत् ॥ आपइद्वाउभेषजीरापोअमीवचातनीः ॥ आपःसर्वस्यभेषजीस्तास्तेकृण्वंतु
भेषजं॥हस्ताभ्यांदशशाखाभ्यांजिह्वावाचःपुरोगवी॥ अनामयित्नुभ्यांत्वाताभ्यांत्वोपस्पृशामसि॥ ॐइमाआपःशिवतमाइमाः
सर्वस्यभेषजीः ॥ इमाराष्ट्रस्यवर्धनीरिमाराष्ट्रभृतोमृताः ॥ याभिरिंद्रमभ्यषिंचत्प्रजापतिःसोमंराजानंवरुणंयमंमनुं ॥ ताभिर
द्भिरभिषिंचामित्वामहंराज्ञांत्वमधिराजोभवेह॥महांतंत्वामहीनांसम्राजंचर्षणीनां॥देवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत् ॥
ॐदेवस्यत्वासवितुःप्रसवे ॥ अश्विनोर्बाहुभ्यां ॥ पूष्णोहस्ताभ्यां ॥ अश्विनोर्भैषज्येन ॥ तेजसेब्रह्मवर्चसायाभिषिंचामि ॥

देवस्यत्वासवितुःप्रसवे ॥ अश्विनोर्बाहुभ्यां ॥ पूष्णोहस्ताभ्यां ॥ सरस्वत्यैभैषज्येन ॥ वीर्यायान्नाद्यायाभिषिंचामि ॥ देवस्य
त्वासवितुःप्रसवे ॥ अश्विनोर्बाहुभ्यां ॥ पूष्णोहस्ताभ्यां ॥ इंद्रस्येंद्रियेण ॥ श्रियैयशसेबलायाभिषिंचामि ॥ देवस्यत्वासवितुः
प्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याᳪसरस्वत्यैवाचोयंतुर्यंत्रेणाग्नेस्त्वासाम्राज्येनाभिषिंचामींद्रस्यबृहस्पतेस्त्वासाम्राज्येनाभिषिं
चामि ॥ पुराणोक्तमंत्रैः ॥ सुरास्त्वामभिषिंचंतुब्रह्मविष्णुमहेश्वराः ॥ वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः ॥ प्रद्युम्नश्चानि
रुद्धश्चभवंतुविजयायते ॥ आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा ॥ वरुणःपवनश्चैवधनाध्यक्षस्तथाशिवः ॥ ब्रह्मणासहिताः
सर्वेदिक्पालाःपांतुतेसदा ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिःश्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुःशांतिःकांतिस्तुष्टिश्चमातरः ॥ एता
स्त्वामभिषिंचंतुदेवपत्न्यःसमागताः ॥ आदित्यश्चंद्रमाभौमोबुधजीवसितार्कजाः ॥ ग्रहास्त्वामभिषिंचंतुराहुःकेतुश्चपूजिताः ॥
देवदानवगंधर्वायक्षराक्षसपन्नगाः ॥ ऋषयोमनवोगावोदेवमातरएवच ॥ देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः ॥ अस्त्रा
णिसर्वशस्त्राणिराजानोवाहनानिच ॥ औषधानिचरत्नानिकालस्यावयवाश्चये ॥ सरितःसागराःशैलास्तीर्थानिजलदानदाः ॥
एतेत्वामभिषिंचंतुसर्वकामार्थसिद्धये ॥ ॐभूर्भुवःसुवः ॥ अमृताभिषेकोस्तु ॥ शांतिःपुष्टिस्तुष्टिश्चास्तु ॥ ततआचामेत् ॥
ॐआमूरजप्रत्यावर्तयेमाःकेतुमद्दुंदुभिर्वावदीति॥समश्वपर्णाश्चरंतिनोनरोस्माकमिंद्ररथिनोजयंतु ॥पुण्याहवाचनफलसमृद्धिर
स्त्वितिभवंतोब्रुवंतु ॥ पुण्याहवाचनफलसमृद्धिरस्तु ॥ ततआचारप्राप्तंवस्त्रादिदानंतत्परिधानंच ॥ ॐयुवासुवासाःपरिवीत
आगात् ॥ सउश्रेयान्भवतिजायमानः ॥ तंधीरासःकवयउन्नयंति ॥ स्वाधियोमनसादेवयंतः ॥ ॐकुर्वाणाचीरमात्मनः ॥ वा
साᳪसिममगावश्च ॥ अन्नपानेचसर्वदा ॥ ततोमेश्रियमावह ॥ इतिपुण्याहवाचनप्रयोगः ॥

## ॥ ८६ ॥ मातृकापूजनम् ॥

श्रीः ॥ गौरीपद्माशचीमेधासावित्रीविजयाजया॥ देवसेनास्वधास्वाहामातरोलोकमातरः ॥ धृतिःपुष्टिस्तथातुष्टिरात्मनःकुल
देवता॥ ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा ॥ वाराहीचतथेंद्राणीचामुंडासप्तमातरः ॥ एताःगणपतिदुर्गाक्षेत्रपालवास्तो
ष्पतिसहिताःसप्तविंशत्यक्षतपुंजेष्वावाह्य ॥ नर्यंप्रजांमेगोपाय ॥ अमृतत्वायजीवसे ॥ जातांजनिष्यमाणांच ॥ अमृतेसत्येप्र
तिष्ठितां ॥ इतिप्रतिष्ठाप्य ॥ नाममंत्रैःषोडशोपचारैःपंचोपचारैर्वासंपूज्य ॥ ॐगौरीर्मिमायसलिलानितक्षत्येकपदीद्वि
पदीसाचतुष्पदी ॥ अष्टापदीनवपदीबभूवुषीसहस्राक्षरापरमेव्योमन् ॥ इतिपुष्पांजलिंदद्यात् ॥ छ ॥ ॥ छ ॥

## ॥ ८७ ॥ नांदीश्राद्धम् ॥

सदूर्वांकुरानक्षतान्जलंचादाय ॥ सत्यवसुसंज्ञकाविश्वेदेवानांदीमुखाःभूर्भुवःसुवःइदंवःपाद्यंस्वाहानमइयंचवृद्धिः ॥ मातृपि
तामहीप्रपितामह्यःनांदीमुख्यःभूर्भुवःसुवःइदंवःपाद्यंस्वाहानमइयंचवृद्धिः॥ पितृपितामहप्रपितामहाःनांदीमुखाःभूर्भुवःसुवः
इदंवःपाद्यंस्वाहानमइयंचवृद्धिः ॥ मातामहमातुःपितामहमातुःप्रपितामहाःपत्नीसहितानांदीमुखाःभूर्भुवःसुवःइदंवःपाद्यंस्वा
हानमइयंचवृद्धिः ॥ सत्यवसुसंज्ञकाविश्वेदेवानांदीमुखाःभूर्भुवःसुवःइदंवआसनगंधाद्युपचारकल्पनंस्वाहानमइयंचवृद्धिः ॥
मातृपितामहीप्रपितामह्यःनांदीमुख्यःभूर्भुवःसुवःइदंवआसनगंधाद्युपचारकल्पनंस्वाहानमइयंचवृद्धिः ॥ पितृपितामहप्रपि
तामहानांदीमुखाःभूर्भुवःसुवरिदंवआसनगंधाद्युपचारकल्पनंस्वाहानमइयंचवृद्धिः ॥ मातामहमातुःपितामहमातुःप्रपिताम

हाःपत्नीसहितानांदीमुखाःभूर्भुवःसुवरिदंवआसनगंधाद्युपचारकल्पनंस्वाहानमइयंचवृद्धिः ॥ गौर्यादिषोडशमातरःब्राह्म्या
दिसप्तमातरःगणपत्यादिसहिताःभूर्भुवःसुवरिदंवोयुग्मब्राह्मणभोजनपर्याप्तामनिष्क्रयीभूतंकिंचिद्व्यावहारिकद्रव्यंस्वाहानमइ
यंचवृद्धिः ॥ सत्यवसुसंज्ञकाविश्वेदेवानांदीमुखाःभूर्भुवःसुवरिदंवोयुग्मब्राह्मण० ॥ मातृपितामहीप्रपितामह्योनांदीमुख्योभू
र्भुवःसुवरिदंवोयुग्म०पितृपितामहप्रपितामहानांदीमुखाःभूर्भुवःसुवरिदंवोयुग्म० ॥ मातामहमातुःपितामहमातुःप्रपितामहाः
पत्नीसहितानांदीमुखाःभूर्भुवःसुवरिदंवोयुग्म० ॥ ततः उपास्मैगायतानरःपवमानायेंदवे ॥ अभिदेवाँइयक्षते ॥ अभितेमधु
नापयोथर्वाणोअशिश्रयुः ॥ देवंदेवायदेवयु ॥ सनःपवस्वशंगवेशंजनायशमर्वते ॥ शंराजन्नोषधीभ्यः ॥ बभ्रवेनुस्वतवसे
रुणायदिविस्पृशे ॥ सोमायगाथमर्चत ॥ हस्तच्युतेभिरद्रिभिःसुतंसोमंपुनीतन ॥ मधावाधावतामधु ॥ कृतस्यनांदीश्राद्धस्य
प्रतिष्ठाफलसिद्ध्यर्थंद्राक्षामलकानितन्निष्क्रयीभूतंवायथाशक्तिहिरण्यंदक्षिणात्वेनस्वाहानमइयंचवृद्धिः ॥ प्रजापतेनत्वदेता
न्यन्योविश्वाजातानिपरितावभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयꣴस्यामपतयोरयीणां ॥ मातापितामहीचैवतथैवप्रपिता
मही ॥ पितापितामहश्चैवतथैवप्रपितामहः ॥ मातामहस्तत्पिताचप्रमातामहकादयः ॥ एतेभवंतुसुप्रीताःप्रयच्छंतुचमंगलं ॥
इतिसंप्रार्थ्य ॥ इडामग्नेपुरुदꣳसꣳसनिंगोःशश्वत्तमꣳहवमानायसाध ॥ स्यान्नःसूनुस्तनयोविजावाग्नेसातेसुमतिर्भूत्वस्मे ॥ नाण
कमादायपात्रेवादयेत् ॥ अनेननांदीश्राद्धेननांदीमुखदेवताःप्रीयंतांवृद्धिः ॥ ततःकृतस्यकर्मणःसांगतासिद्ध्येनानानामगोत्रा
न्ब्राह्मणान्गंधादिभिःपूजयिष्ये ॥ तेभ्योभूयसींदक्षिणांदातुमहमुत्सृज्यइतिसंकल्प्य ॥ प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुय
त् ॥ स्मरणादेवतद्विष्णोःसंपूर्णस्यादितिश्रुतिः ॥ इतिकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ इतिनांदीश्राद्धम् ॥ ॥ छ ॥

## ॥ ८८ ॥ नांदीश्राद्धेजीवत्पितृकनिर्णयः ॥

नांदीमुखेकर्मणिसंप्रवृत्तेपितर्यथोजीवतियस्यपुंसः ॥ येषांचकुर्यात्स्वपितास्वयंचतेषांहिकुर्यादितिशास्त्रसिद्धं ॥ वृद्धौतीर्थेच संन्यस्तेतातेचपतितेसति ॥ येभ्यएवपितादद्यात्तेभ्योदद्यात्स्वयंसुतः ॥ पितरिजीवतितुस्वमातरिमृतायामपिपितुरेवमातृमा तामह्योःकुर्यात् ॥ अग्निपुराणे ॥ गणशःक्रियमाणानांमातृणांपूजनंसकृत् ॥ सकृदेवभवेच्छ्राद्धमादौनपृथगादिषु ॥ ॥छ॥

## ॥ ८९ ॥ अंकुरारोपणम् ॥

श्रीः॥कर्ताआचम्यप्राणानायम्यदेशकालौसंकीर्त्यामुककर्मसाफल्यनिरंतरशुभतासिद्धिद्वाराश्रीपर० अंकुरारोपणंकरिष्यइति संकल्प्यगणपतिंसंपूज्यषटप्रभृतिसमसंख्यान्ब्राह्मणान्संपूज्यान्नेनपरिविष्यअंकुरारोपणकर्मणःपुण्याहंभवंतोब्रुवंतुस्वस्तिभवं तो० ऋद्धिं० इतितिस्त्रिस्त्रिर्विप्रान्वाचयेत् ॥ॐपुण्याहं ॐस्वस्ति ॐऋद्धिःॐमृध्यतामितिवाविप्रास्त्रिस्त्रिर्ब्रूयुः॥ततःकर्ताब्रह्मादयः प्रीयंतामितिपात्रेजलंक्षिप्त्वाशुचौदेशेगोचर्ममात्रंचतुरस्रंस्थंडिलंगोमयेनविधायरंगवल्ल्यादिभिरलंकृत्यश्वेताक्षतान्संप्रकीर्या द्भिरभ्युक्ष्यसुवर्णरजतताम्रान्यतमनिर्मिताअभावेमृन्मयीर्वापंचपालिकास्तत्रसंस्थापयेत्॥ अत्रगोचर्मशब्दोयौगिकएवग्राह्यःन तुवृषभैकशतंयत्रगवांतिष्ठतिसंवृतं॥बालवत्साशतंचैवगोचर्मेतिबुधाविदुरितिपारिभाषिकःएतस्यदानविषयत्वात्प्रकृतेएतस्या संभवाच्च ॥ एवंचगोर्यावत्प्रमाणंचर्मतदनुसारेणैवचतुरस्रस्थंडिलकरणमत्र ॥ ततोवल्मीकमृदंह्रदमृदंशुष्कगोमयचूर्णंचैकीकृ

१ अंकुरारोपणस्यकचिदकरणमप्युक्तं ॥ निषेकंगर्भसंस्कारंजातकर्मचनामच ॥ हित्वांकुरारोपणंस्यादन्यत्रशुभकर्मसुइति ॥ निषेकोगर्भाधानं।

त्यमध्यमायांपालिकायांप्रक्षिप्यप्रागादिषुक्रमेणप्रक्षिपति ॥ ततस्तासामधोभागेषुदूर्वांकुराश्वत्थशिरीषविल्वपत्राणिप्रक्षिप्यश्वे
तसूत्रेणपालिकाआवेष्ट्यतासुक्रमेणदेवताआवाहयेत् ॥ ॐभूर्ब्रह्माणमावाहयामि ॐभुवश्चतुर्मुखंब्रह्माण० ॐसुवःप्रजापतिंब्र
ह्माण० ॐभूर्भुवःसुवर्हिरण्यगर्भंब्रह्माणमा०इतिमध्यमपालिकायांब्रह्माणमावाह्य ॥ ॐभूर्वज्रिणमा० ॐभुवःशचीपतिमा०
ॐसुवरिंद्रमा० ॐभूर्भुवःसुवःशक्रमा० इतिपूर्वस्यांपालिकायांवज्रिणं ॥ ॐभूर्यममा० ॐभुवोवैवस्वतमा० ॐसुवःपितृप
तिमा० ॐभूर्भुवःसुवःप्रेतपतिमा०इतिदक्षिणस्यांपालिकायांयमं ॥ ॐभूर्वरुणमा० ॐभुवःप्रचेतसमा० ॐसुवःसुरूपिणमा०
ॐभूर्भुवःसुवरपांपतिमा० इतिपश्चिमायांपालिकायांवरुणं ॥ ॐभूःशशिनमा० ॐभुवइंदुमा० ॐसुवर्निशाकरमा० ॐभूर्भु
वःसुवःसोममा०इत्युत्तरस्यांपालिकायांसोमं॥ ततस्तत्तन्मंत्रैर्नाममंत्रैर्वाकांडानुसमयेनपदार्थानुसमयेनवापूजयेत्॥ तत्रस्नापनं
आपोहिष्ठामयो० ३ हिरण्यवर्णाःशुचयः ४ पवमानःसुवर्जनः०मोर्जयंत्यापुनातुइत्येतैःसर्वांतेब्रह्मादीन्संस्नापयेत् प्रतिमंत्रमिति
केचित् ॥ पुष्पांजलिसमर्पणांते ॥ दिशांपतीन्नमस्यामिसर्वकामफलप्रदान् ॥ कुर्वंतुसफलंकर्मकुर्वंतुसततंशुभं ॥ इतिपालिका
नांपश्चात्तिष्ठन्प्राङ्मुखउपतिष्ठेतेतिपूजनेविशेषः ॥ ततउपविश्यव्रीहियवतिलमुद्गसर्षपान्मिश्रीकृत्यक्षीरेणमध्यमपालिकादिक्रमे
णनिवपति ॐब्रह्मजज्ञानंप्रथमंपु० हिरण्यगर्भःसमवर्ततताग्रे० विधेमइतिद्वाभ्यांमध्यमपालिकायांनिवपति ॥ ॐयतइंद्रभया
महे० स्वस्तिदाविशस्पतिं० इतिद्वाभ्यांपूर्वस्यांपालिकायांनिवपति ॥ ॐयोस्यकौष्ठ्यजगतःपृथिवीदृढाइतिद्वाभ्यांदक्षिणस्यांपा
लिकायांनिवपति ॥ ॐइमंमेवरुण०प्रमोषीःइतिद्वाभ्यांपश्चिमायांपालिकायांनिवपति॥ॐसोमोधेनुं० अषाढंयुत्सु०इतिद्वाभ्या
मुत्तरस्यांपालिकायांनिवपति ॥ व्रीहियवादीन्यथाक्रमेणैतद्व्यंपालिकासुनिवपेत् ॥ ततोयथाक्रमंशुद्धाभिः

सिकताभिःपालिकाःप्रच्छाद्यपंचगव्येनसंप्रोक्ष्य ॐइति महतापात्रेणपिधायकर्मसमाप्तिपर्यंतंसुरक्षितंकुर्यात् ॥ अग्निशब्दवा
च्यःपरमात्मादेवतेत्येवंवाप्रयोगः॥समाप्तेकर्मणिदेवताःसंपूज्यपूर्वोक्तैरोंभूर्ब्रह्माणमित्याद्यैर्मंत्रैरावाहयामीत्यस्यस्थानेउद्वासया
मीत्यूहितैर्यथाक्रमंदेवताउद्वास्यकर्मेश्वरायार्पयेत् ॥ इतिबौधायनानुसारेणांकुरारोपणं ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ९० ॥ ग्रहयज्ञप्रयोगः(मात्स्यक्रमः) ॥

श्रीः ॥ कर्तानित्यकर्मनिर्वर्त्यआचम्यप्राणानायम्यदेशकालावुत्कीर्त्यअमुकशर्मणोमम(अमुककर्मणिवा)ग्रहानुकूल्यसिद्धिद्वारा
श्रीपरमेश्वरप्रीत्यर्थंग्रहयज्ञंकरिष्ये ॥ तदंगत्वेनगणपतिपूजनादिसंकल्प्यकृत्वाआचार्यादीन्पूजनपूर्वकंवृत्वाप्रार्थयेत् ॥ अथाचा
र्यःकर्मसंकल्प्ययदत्रसंस्थितं० अपक्रामंतु० इतिसर्षपान्विकीर्य शुचीवो० अग्निःशुचि० इतिपंचगव्येनप्रोक्ष्यआपोहिष्ठेतिशुद्धोद
केनप्रोक्ष्यभद्रंकर्णेभिःस्वस्तिनइतिजप्त्वादेवाआयांतुयातुधानाअपयांतुविष्णोदेवयजनंरक्षस्वेत्यग्न्यायतनस्यपश्चाद्भूमिमभिमृशे
त् ॥ ततोग्न्यायतनादीशान्यांयथोक्तनिर्मितग्रहपीठमध्येवर्तुलेद्वादशांगुलेप्राङ्मुखंसूर्यंरक्तपुष्पाक्षतैः ॥ ॐआसत्येनरजसावर्तमा
नोनिवेशयन्नमृतंमर्त्यंच॥हिरण्ययेनसवितारथेनादेवोयातिभुवनाविपश्यन्॥ॐभूर्भुवःसुवः ॥कलिंगदेशोद्भवकाश्यपसगोत्रसूर्ये
हागच्छेहतिष्ठ सूर्यायनमःसूर्यमावाहयामि ॥ ततआग्नेयेचतुरस्रेचतुर्विंशांगुलेप्रत्यङ्मुखंसोमंश्वेतपुष्पाक्षतैः ॥ ॐआप्यायस्वस
मेतुतेविश्वतःसोमवृष्णियं॥भवावाजस्यसंगथे ॥ ॐभूर्भुवःसुवः॥ यमुनातीरोद्भवात्रेयसगोत्रसोमेहागच्छेह० सोमायनमःसोममा
वाहयामि ॥ ततोदक्षिणेत्रिकोणेत्र्यंगुलेदक्षिणाभिमुखंभौमंरक्तपुष्पाक्षतैः ॥ ॐअग्निर्मूर्धादिवःककुत्पतिःपृथिव्याअयं ॥

१ केवलग्रहयज्ञेप्यग्निस्थापनांतेग्रहस्थापनंकेचिद्वदंतितदपिग्रंथसंमतम् ।

अपाꣳरेताꣳसिजिन्वति ॥ ॐभूर्भु॰अवंतीसमुद्भवभारद्वाजसगोत्रभौमे॰भौमाय॰ भौमं॰ ॥ ततःईशान्येबाणाकारेचतुरंगुलउ
दङ्मुखंबुधंपीतपुष्पाक्षतैः ॥ ॐ उद्बुध्यस्वाग्नेप्रतिजागृह्येनमिष्टापूर्तेसꣳसृजेथामयंच ॥ पुनःकृण्वꣳस्त्वापितरंयुवानमन्वाताꣳ
सीत्वयितंतुमेतं॥ॐभूर्भु॰मगधदेशोद्भवात्रेयसगोत्रबुधेहा॰बुधाय॰बुधं॰॥ततःउत्तरेदीर्घचतुरस्रेचतुर्विंशांगुलउदङ्मुखंबृहस्प
तिंपीतपुष्पाक्षतैः॥ॐबृहस्पतेअतियदर्योअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसर्तप्रजाततदस्मासुद्रविणंधेहिचित्रं ॥
ॐभूर्भु॰ सिंधुदेशोद्भवांगिरससगोत्रबृहस्पतइहागच्छे॰ बृह॰ बृहस्पतिं॰ ॥ ततःपूर्वेपंचकोणेनवांगुलेप्राङ्मुखंशुक्रंशुक्लपुष्पा
क्षतैः॥ॐशुक्रंतेअन्यद्यजतंतेअन्यद्विषुरूपेअहनीद्यौरिवासि॥ विश्वाहिमायाअवसिस्वधावोभद्रातेपूषन्निहरातिरस्तु॥ ॐभूर्भु॰
भोजकटदेशोद्भवभार्गवसगोत्रशुक्रेहागच्छ॰ शुक्राय॰ शुक्रं॰ ॥ततःपश्चिमेधनुषिद्व्यंगुलेप्रत्यङ्मुखंशनिंकृष्णपुष्पाक्षतैः॥ ॐशं
नोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ ॐभूर्भुवः॰ सौराष्ट्रदेशोद्भवकाश्यपसगोत्रशनैश्चरेहा॰ शनैश्चराय॰
शनैश्चरं॰ ॥ ततःनैर्ऋत्येशूर्पाकारेद्वादशांगुलेदक्षिणामुखंराहुंकृष्णपुष्पाक्षतैः ॥ ॐकयानश्चित्रआभुवदूतीसदावृधःसखा ॥
कयाशचिष्ठयावृता॥ ॐभूर्भुवः॰राठिनापुरोद्भवपैठीनसिसगोत्रराहविहागच्छ॰ राहवे॰राहुमा॰ ॥ ततःवायव्येध्वजाकारेषडं
गुलेदक्षिणाभिमुखंकेतुंधूम्रपुष्पाक्षतैः ॥ ॐकेतुंकृण्वन्नकेतवेपेशोमर्याअपेशसे ॥ समुषद्भिरजायथाः ॥ ॐभूर्भु॰अंतर्वेदिसमुद्भ
वजैमिनिसगोत्रकेतविहाग॰केतवे॰केतुं॰ ॥ अथाधिदेवताः॥ ॐ[1]त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्यो
र्मुक्षीयमामृतात् ॥ ॐभूर्भु॰ईश्वरेहागच्छेहतिष्ठसूर्यदक्षिणपार्श्वेईश्वरायनमःईश्वरमा॰ ॥ ॐगौरीर्मिमायसलिलानितक्षत्ये

१ अत्रयेषामीशेपशुपतिरितिमंत्रंकेचिदिच्छंति ।

कंपदीद्विपदीसाचतुष्पदी ॥ अष्टापदीनवपदीवभूवुषीसहस्राक्षरापरमेव्योमन् ॐभूर्भुवःसुवः उमइहागच्छ० सोमदक्षिण
पार्श्वेउमायैन०उमांआ० ॥ ॐयदक्रंदःप्रथमंजायमानउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूउपस्तुत्यंमहि
जातंतेअर्वन् ॥ ॐभूर्भु० स्कंदेहा० ॥ भौमदक्षिणपार्श्वेस्कंदाय०स्कंदमा० ॥ ॐविष्णोरराटमसिविष्णोःपृष्ठमसिविष्णोःश्नप्त्रे
स्थोविष्णोःस्यूरसिविष्णोर्ध्रुवमसिवैष्णवमसिविष्णवेत्वा ॥ ॐभूर्भु० नारायणेहा० बुधदक्षिणपार्श्वेनाराय० नारा० ॥ ॐब्रह्मादे
वानांपदवीःकवीनामृषिर्विप्राणांमहिषोमृगाणां ॥ श्येनोगृध्राणांस्वधितिर्वनानांसोमःपवित्रमत्येतिरेभन् ॥ ॐभूर्भु०ब्रह्मन्नि
हागच्छ०बृहस्पतिदक्षिणपार्श्वेब्रह्मणे० ब्रह्माणमा० ॥ ॐसजोषाइंद्रसगणोमरुद्भिःसोमंपिववृत्रहञ्छूरविद्वान् ॥ जहिशत्रूं
रपमृधोनुदस्वाथाभयंकृणुहिविश्वतोनः ॥ ॐभूर्भु०इंद्रे० शुक्रदक्षिणपार्श्वेइंद्राय०इंद्रमा० ॥ ॐइमंयमप्रस्तरमाहिसीदांगिरोभिः
पितृभिःसंविदानः ॥ आत्वामंत्राःकविशस्तावहन्त्वेनाराजन्हविषामादयस्व ॥ ॐभूर्भु०यमेहा० ॥ शनिदक्षिणपार्श्वेयमायन०
यममा० ॥ ॐकार्षिरस्यपापांमृध्रं ॥ ॐभूर्भु० कालेहा० राहुदक्षिणपार्श्वेकालायनमःकालमा० ॥ ॐचित्रावसोःस्वस्तितेपारम
शीय ॥ ॐभूर्भु० चित्रगुप्तेहा० राहुदक्षिणपार्श्वेचित्रगुप्ताय० चित्रगुप्तमा० ॥ अथप्रत्यधिदेवताः ॥ ॐअग्निंदूतंवृणीमहेहो
तारंविश्ववेदसं ॥ अस्ययज्ञस्यसुक्रतुं ॥ ॐभूर्भु० अग्नइहा० सूर्यवामपार्श्वेअग्नये० अग्निमा० ॥ ॐअप्सुमेसोमोअब्रवीदंतर्वि
श्वानिभेषजा ॥ अग्निंचविश्वशंभुवमापश्चविश्वभेषजीः ॥ ॐभूर्भु० आपःइहागच्छत० सोमवामपार्श्वेअद्भ्योनमःअपः
आवा० ॥ ॐस्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ ॐभूर्भु० भूमइहा० भौम वामपार्श्वे

१ अत्रभूमिर्भूम्नेतिमंत्राचारोदृश्यते ।

भूम्यैनमः भूमिमा॰ ॥ ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूढमस्यपाꣳसुरे ॥ ॐभूर्भु॰ विष्णविहा॰ बुधवामपार्श्वेवि
ष्णवेन॰ विष्णुमा॰ ॥ ॐइंद्रंवोविश्वतस्परिहवामहेजनेभ्यः ॥ अस्माकमस्तुकेवलः ॥ ॐभूर्भु॰ इंद्रेहा॰ बृहस्पतिवामपार्श्वे
इंद्राय॰ इंद्रं॰ ॥ ॐइंद्राणीमासुनारिषुसुपत्नीमहमश्रवं ॥ नह्यस्याअपरंचनजरसामरतेपतिः ॥ ॐभूर्भु॰ इंद्राणीहाग॰ शुक्र
वामपार्श्वेइंद्राण्यै॰ इंद्राणीमा॰ ॥ ॐप्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरितावभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुव
यꣳस्यामपतयोरयीणां ॥ ॐभूर्भु॰ प्रजापतइहाग॰ शनिवामपार्श्वेप्रजापतये॰ प्रजापतिं॰ ॥ ॐआयंगौःपृश्निरक्रमीदसनन्मा
तरंपुनः ॥ पितरंचप्रयन्त्सुवः ॥ ॐभूर्भु॰ सर्पाइहागच्छतेहतिष्ठत राहुवामपार्श्वेसर्पेभ्योन॰ सर्पान्॰ ॥ ॐब्रह्मजज्ञानंप्रथमंपुरस्ता
द्विसीमतःसुरुचोवेनआवः ॥ सबुध्नियाउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ ॐभूर्भु॰ ब्रह्मन्निहागच्छ॰ केतुवामपार्श्वे
ब्रह्मणेन॰ ब्रह्माणमा॰ ॥ अथक्रतुसंरक्षकदेवताः ॐगणानांत्वागणपतिꣳहवामहेकविंकवीनामुपमश्रवस्तमं ॥ ज्येष्ठराजंब्रह्मणां
ब्रह्मणस्पतआनःशृण्वन्नूतिभिःसीदसादनं ॥ ॐभूर्भु॰ गणपतइहाग॰ गणपतये॰ गणपतिमा॰ ॥ ॐजातवेदसेसुनवामसोमम
रातीयतोनिदहातिवेदः ॥ सनःपर्षदतिदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निः ॥ ॐभूर्भु॰ दुर्गायैनमः दुर्गामावा॰ ॥ ॐवायो
शतꣳहरीणांयुवस्वपोष्याणां ॥ उतवातेसहस्रिणोरथआयातुपाजसा ॥ ॐभूर्भु॰ वायविहागच्छ॰ वायवे॰ वायुमा॰ ॥
ॐघृतंघृतपावानःपिबतवसांवसापावानःपिबतांतरिक्षस्यहविरसिस्वाहात्वांतरिक्षाय ॥ ॐभूर्भु॰ आकाशेहा॰ आकाशाय॰
आकाशं॰ ॥ ॐयावांकशामधुमत्यश्विनासूनृतावती ॥ तयायज्ञंमिमिक्षतं ॥ ॐभूर्भु॰ अश्विनाविहागच्छतमिहतिष्ठतमश्वि
भ्यांनमःअश्विनावावा॰ ॥ ॐक्षेत्रस्यपतिनावयꣳहितेनेवजयामसि ॥ गामश्वंपोषयित्न्वासनोमृडातीदृशे ॥ ॐभूर्भु॰ क्षेत्रपा

लेहा० क्षेत्रपालायनमः क्षेत्रपालमा० ॥ ॐवास्तोष्पतेप्रतिजानीह्यस्मान्त्स्वावेशोअनमीवोभवानः ॥ यत्त्वेमहेप्रतितन्नोजुष
स्वशंनएधिद्विपदेशंचतुष्पदे ॥ ॐभूर्भु० वास्तोष्पतइहा० वास्तोष्पतयेन० वास्तोष्पतिं० ॥ ततःअष्टौलोकपालान् ॥ ॐत्रातार
मिंद्रमवितारमिंद्रꣳहवेहवेसुहवꣳशूरमिंद्रं ॥ हुवेनुशक्रंपुरुहूतमिंद्रꣳस्वस्तिनोमघवाधात्विंद्रः ॥ ॐभूर्भु० इंद्रेहागच्छ० पूर्व
स्यामिंद्राय० इंद्रमा० ॥ ॐअग्नेनयसुपथारायेअस्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठांतेनमउ
क्तिंविधेम ॥ ॐभूर्भु० अग्नइहा० आग्नेय्यांअग्नये० अग्निमा० ॥ ॐसुगंनःपंथामभयंकृणोतुयस्मिन्नक्षत्रेयमएतिराजा ॥ यस्मि
न्नेनमभ्यषिंचंतदेवास्तदस्यचित्रꣳहविषायजाम ॥ ॐभूर्भु० यमेहा० दक्षिणस्यांयमायन० यममा० ॥ ॐअसुन्वंतमयजमान
मिच्छस्तेनस्येत्यांतस्करस्यान्वेषि ॥ अन्यमस्मदिच्छसातइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ ॐभूर्भु० निर्ऋतइहा० नैर्ऋत्यांनि
र्ऋतये० निर्ऋतिमा० ॥ ॐतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमान
आयुःप्रमोषीः ॥ ॐभूर्भु० वरुणेहा० पश्चिमायांवरुणाय० वरुणमा० ॥ ॐवायोशतꣳहरीणांयुवस्वपोष्याणां ॥ उतवातेसह
स्रिणोरथआयातुपाजसा ॥ ॐभूर्भु० वायविहा० वायव्यांवायवे० वायुमा० ॥ ॐवयꣳसोमव्रतेतव ॥ मनस्तनूषुबिभ्रतः ॥
प्रजावंतोअशीमहि ॥ ॐभूर्भु० सोमेहा० उत्तरेसोमाय० सोममा० ॥ ॐअभित्वादेवसवितरीशानंवार्याणां ॥ सदावन्भागमी
महे ॥ ॐभूर्भु० ईशानेहा० ईशान्यांईशानाय० ईशानमा० ॥ ततःग्रहपीठादीशान्यांमहीद्यौरित्यादिमंत्रैः कलशंसंस्थाप्यत
त्रवरुणमावाह्यआवाहितदेवताःषोडशोपचारैःपूजयेत् ॥ वरुणप्रार्थना ॥ देवदानवसंवादेमथ्यमानेमहोदधौ ॥ उत्पन्नोसि

१ लोकपालावाहनादौबौधायनसूत्रेमहान्यासादौयेमंत्राउक्तास्तएवग्राह्याइतिकेषांचिन्मतम् ॥

तदाकुंभविष्णुनाविधृतःस्वयं ॥ त्वत्तोयेसर्वतीर्थानिदेवाःसर्वेत्वयिस्थिताः ॥ त्वयितिष्ठंतिभूतानित्वयिप्राणाःप्रतिष्ठिताः ॥ शिवःस्वयंत्वमेवासिविष्णुस्त्वंचप्रजापतिः ॥ आदित्यावसवोरुद्राविश्वेदेवाःसपैतृकाः॥ त्वयितिष्ठंतिसर्वेपियतःकामफलप्रदाः॥ त्वत्प्रसादादिमंयज्ञंकर्तुमीहेजलोद्भव॥ सांनिध्यंकुरुदेवेशप्रसन्नोभवसर्वदा ॥ इतिप्रार्थ्यग्रहयज्ञहोमंकर्तुमुद्धननादिकरिष्ये इति संकल्प्यग्रहपीठान्नैर्ऋत्यदिशिस्थंडिलेउद्धननादिनाभूसंस्कारंविधायवरदनामानमग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ श्रद्धएहीत्या दिव्याहृत्यंतमुक्त्वावैशेषिकप्रधानहोमेआदित्यंसोमंभौमंबुधंबृहस्पतिंशुक्रंशनैश्चरंराहुंकेतुंएताः प्रधानदेवताः अर्कादियथाल ब्धसमिच्चर्वाज्यद्रव्यैःप्रत्येकंप्रतिद्रव्यंअष्टाविंशतिसंख्याकाभिराहुतिभिः ईश्वरमुमांस्कंदंनारायणंब्रह्माणमिंद्रंयमंकालंचित्र गुप्तं ॥ अग्निमपोभूमिंविष्णुमिंद्रमिंद्राणींप्रजापतिंसर्पान्ब्रह्माणं एताःअधिदेवताःप्रत्यधिदेवताश्चतैरेवद्रव्यैः प्रत्येकंप्रतिद्रव्यं अष्टाष्टसंख्याकाभिराहुतिभिः ॥ गणपतिंदुर्गांवायुमाकाशमश्विनौक्षेत्रपालंवास्तोष्पतिमिंद्रमग्निंयमंनिर्ऋतिंवरुणंवायुंसोममी शानं एताःक्रतुसाद्गुण्यकरदेवताः क्रतुसंरक्षकदेवताश्चतैरेवद्रव्यैःप्रत्येकंप्रतिद्रव्यंचतुश्चतुःसंख्याकाभिराहुतिभिर्यक्ष्ये ॥ अंगहो मेवरुणंद्विरित्यादि सामान्यप्रधानांतंहुत्वा ॥गणाधिपतयेदेयाप्रथमातुवराहुतिरितिवाक्याच्चतुर्गृहीतेनाज्येनादौगणानांत्वेतिमं त्रेणवराहुतिंदत्वायक्ष्यमाणदेवताउद्दिश्यत्यागंकुर्यात् ॥इमानिउपकल्पितानिहवनीयद्रव्याणियायायक्ष्यमाणादेवतास्ताभ्यस्ता

१ ग्रहहोमस्तुसमिच्चर्वाज्यैःप्रतिद्रव्यंप्रतिग्रहमेकावराभिःसहस्रपराभिराहुतिभिर्निमित्तशक्त्यनुसारेणकार्यः । ग्रहाणांयदाऽष्टसहस्रपक्षोङ्गीक्रि यतेतदापार्श्वदेवतानामष्टशतमितरेषामष्टाविंशतिः । यदाग्रहाणामष्टशतंतदापार्श्वदेवतानामष्टाविंशतिरितरेषामष्टौ । ग्रहाणांयदाऽष्टाविंशतिस्त दापार्श्वदेवतानामष्टावितरेषांचतस्रः । यदाग्रहणामष्टौतदापार्श्वदेवतानांचतस्रइतरेषांद्वेइतिसंप्रदायःशिष्टसंमतः ।

भ्योमयापरित्यक्तानिनमम॥ यथादैवतमस्तु॥प्रधानहोमंतुसमिच्चर्वाज्यैःपूर्वोक्ततत्तन्मंत्रैरन्वाधानसंख्ययाआचार्यादयःकुर्युः॥
इमंमेवरुणेत्यादिप्रायश्चित्तहोमान्ते ॥ अद्यपूर्वोच्चरितवर्तमा० र्त्यर्थंग्रहयज्ञांगभूतंइंद्रादिलोकपालेभ्यआदित्यादिस्थापितदेव
ताभ्यश्चतत्तन्मंत्रैःसदीपमाषभक्तबलिप्रदानंकरिष्ये॥ॐ त्रातारमिंद्रं० ॐभूर्भुवःसुवःइंद्रायनमःसर्वोपचारार्थेगंधाक्षतपुष्पंसम
र्पयामि॥ इंद्रायसांगायसपरिवारायसायुधायसशक्तिकायइमंसदीपमाषभक्तबलिंसमर्पयामि॥ भोइंद्रदिशंरक्षबलिंभक्षममसकु
टुंबस्यसपरिवारस्यआयुःकर्ताक्षेमकर्ताशांतिकर्तापुष्टिकर्तातुष्टिकर्तावरदोभव॥अनेनबलिदानेनइंद्रःप्रीयतां॥ ॐ अग्नेनयसुपथा
रायेअस्मान्०ॐभूर्भु० अग्नये०सर्वो०गंधा०अग्नयेसांगाय०भोअग्नेदिशं०अनेनबलिदा०॥ ॐ इमंयमप्रस्तर०ॐभूर्भु०यमायन०
यमायसां० भोयमदिशंरक्ष० यमःप्रीयतां॥ ॐ असुंन्वंतमयंज०ॐभूर्भु० निर्ऋतयेन० निर्ऋतयेसांगा० भोनिर्ऋते दिशंरक्ष० नि
र्ऋतिःप्रीयतां॥ ॐतत्त्वायामिब्रह्मणा०ॐभूर्भु०वरुणायन०वरुणायसांगायस०भोवरुणदिशंरक्ष०अनेनबलि०वरुणःप्रीयतां०॥
ॐ वायोशतंहर० ॐभूर्भु० वायवे० वायवेसांगा०भोवायोदिशंरक्षब० वायुः०प्रीयतां॥ ॐ वयंसोमव्रते० ॐभूर्भु०सोमाय०
सोमायसांगा० भोसोमदिशंर० सोमःप्रीयतां॥ ॐ अभित्वादेवस०ॐभूर्भु० ईशानायसां०भोईशानदिशंरक्ष०ईशानःप्रीयतां॥
ॐ घृतंघृतपावानः० ॐभूर्भुव० आकाशाय० सक० भोआकाशअमुं० आकाशःप्रीयतां॥ ॐस्योनापृथिवि० भूम्यैनमःस०भोभू
मेअमुं०अनेन०भूमिःप्रीयतां॥ ॐ आसत्येनरज०ॐभूर्भु०सूर्यायनमःसर्वोप० सूर्यायसांगायसपरिवारायसायुधायसशक्तिकाय
ईश्वराग्निरूपाधिदेवताप्रत्यधिदेवतासहितायेमंसदीपमा० भोसूर्यअमुंबलिंगृहाणममसकुटुं० अनेनबलिदानेनसूर्यःप्रीयतां॥
ॐ आप्यायस्वसमेतुते० ॐभूर्भु० सोमायसां० उमारूपाधिदेवताप्रत्यधि० भोसोमअमुंब० सोमःप्रीयतां॥ॐ अग्निर्मूर्धादि०

ॐभूर्भु० अंगारकाय० स्कंदभूमिरूपाधिदेवताप्र० भोअंगारकअमुंव० अंगारकःप्रीयतां ॥ ॐउद्बुध्यस्वाग्ने० ॐ भूर्भु० बुधायसां गाय० नारायणविष्णुरूपाधिदेवताप्र० भोबुधअमुंवलिंगृ० बुधःप्रीयतां ॥ ॐ बृहस्पते० ॐभूर्भु० बृहस्पतयेसां० ब्रह्मेंद्ररूपा धिदेवताप्र० भोबृहस्पतेअमुंवलिं० बृहस्पतिःप्रीयतां ॥ ॐ शुक्रंतेअन्य० ॐभूर्भु० शुक्रायसांगा० इंद्रेंद्राणीरूपाधिदेवताप्रत्य० भोशुक्रअमुंवलिं० शुक्रःप्रीयतां ॥ ॐ शंनोदेवी० ॐभूर्भु० शनैश्चरायसां० यमप्रजापतिरूपाधिदेवताप्रत्य० भोशनैश्चरअमुंव० शनैश्चरःप्रीयतां ॥ ॐ कयानश्चित्र० ॐभूर्भु० राहवेसांगाय० कालसर्परूपाधिदेवताप्र० भोराहोअमुंव० राहुःप्रीयतां ॥ ॐ केतुं कृण्वन्न० ॐभूर्भु० केतवेसांगाय० चित्रगुप्तब्रह्मरूपाधिदेवताप्र० केतुःप्रीयतां० ॥ ॐ गणानांत्वा० ॐभूर्भु० गणपतयेसांगायस परिवारायसायुधायसशक्तिकायइमंस० भोगणपतेअमुंव० गणपतिःप्रीयतां० ॥ ॐ जातवेदसे० ॐभूर्भु० दुर्गायैन० सर्वोप० गंधाद्युप० दुर्गायैसांगायैसपरिवारायैसायुधायैसशक्तिकायैइमंसदी० भोदुर्गेअमुंवलिंगृहाणममसकुटुंवस्यआयुःकर्त्रीक्षे मकर्त्रीशांतिकर्त्रीपुष्टिकर्त्रीतुष्टिकर्त्रीवरदाभव ॥ अनेनबलिदानेनदुर्गाप्रीयतां ॥ ॐ वायोशत९०भूर्भु० वायवेसांगाय० भो वायोअमुंव० वायुःप्रीयतां ॥ ॐ घृतंघृतपा० भूर्भु० आकाशाय० भोआकाश० आकाशःप्रीयतां ॥ ॐ यावांकशाम० भूर्भु० अश्विभ्यांनमःसर्वोपचारार्थे० अश्विभ्यांसांगाभ्यांसपरिवाराभ्यांसायुधाभ्यांसशक्तिकाभ्यामिमं० भोअश्विनौअमुंवलिंगृह्णीतं ममस० आयुःक्षेमशांतिपुष्टितुष्टिकर्तारौवरदौभवतं ॥ अश्विनौप्रीयतां ॥ ॐ क्षेत्रस्यपतिना० भूर्भु० क्षेत्रपालाय० भोक्षेत्रपा० क्षेत्र पालःप्रीयतां ॥ ॐ वास्तोष्पतेप्रतिं० भूर्भु० वास्तोष्पतये० भोवास्तोष्पतेअ० वास्तोष्पतिःप्रीयतां ॥ अद्येत्यादि० सर्वारिष्टो पशांतयेदिव्यभौमांतरिक्षत्रिविधोत्पातशमनार्थंसपरिवारक्षेत्रपालप्रीत्यर्थंसार्वभौतिकबलिदानंकरिष्ये ॥ ॐक्षेत्रस्यपतिनेतिमंत्रे

णबलौक्षेत्रपालमावाह्यततःपूर्वादिक्रमेणचरक्याद्याआवाहयेत्॥ ॐचरक्यैनमःचरकींआवा० ॐविदार्यैनमःविदारींआवा० ॐ पूतनायै० पूतनांआ० ॐपापराक्षस्यैन०पापराक्षसींआ०ॐभूतजृंभाय०भूतजृंभमा०ॐविरूपाक्षाय० विरूपाक्षंआ० ॐधूम्रजिह्वाय०धूम्रजिह्वंआ० ॐ महोरगाय०महोरगंआ०सुप्रतिष्ठिताःसंतु॥ क्षेत्रपालाद्यावाहितदेवताःषोडशोपचारैःपूजयेत्॥ॐ क्षेत्रस्यपतिनाव० भूर्भुव० क्षेत्रपालाद्यावाहितदेवताभ्यःसांगा० सपरिवारा० सायुधा० सशक्तिकाभ्योभूतप्रेतपिशाचब्रह्मराक्षसशाकिनीडाकिनीवेतालादिपरिवारयुताभ्यअमुंसदीपमाष० भोभोक्षेत्रपालाद्यावाहितदेवताःअमुंबलिंगृह्णीतममस० आयुःकर्त्र्यःक्षेमकर्त्र्यःशांति० वरदाभवत ॥ अनेनबलिदानेनक्षेत्रपालाद्यावा० प्रीयंतां ॥ प्रार्थयेत् ॥ बलिंगृह्णंत्विमंदेवा आदित्यावसवस्तथा ॥ मरुतश्चाश्विनौरुद्राःसुपर्णाःपन्नगाग्रहाः ॥ असुरायातुधानाश्चपिशाचोरगराक्षसाः ॥ शाकिन्योयक्षवेतालायोगिन्यःपूतनाःशिवाः ॥ जृंभकाःसिद्धगंधर्वानागाविद्याधरास्तथा ॥ दिक्पालालोकपालाश्चयेचविघ्नविनायकाः ॥ जगतांशांतिकर्तारोब्रह्माद्याश्चमहर्षयः ॥ माविघ्नंमाचमेपापंमासंतुपरिपंथिनः ॥ सौम्याभवंतुतृप्ताश्चदेवाभूतगणास्तथा ॥ चरकीचविदारीचपूतनापापराक्षसी ॥ भूतजृंभोविरूपाक्षोधूम्रजिह्वोमहोरगः ॥ एतेरक्षंतुभवनंनगरंग्राममेवच ॥ येकेचिदिहयज्ञेस्मिन्नागताबलिकांक्षिणः ॥ तेभ्योबलिंप्रयच्छामिनमस्कृत्यपुनःपुनः ॥ भूतानियानीहवसंतितानिबलिंगृहीत्वाविधिवत्प्रयुक्तं ॥ अन्यत्रवासंपरिकल्पयंतुक्षमंतुतान्यत्रनमोस्तुतेभ्यः॥ ॐ अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः॥ सर्वेभ्यःसर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः ॥ उत्तिष्ठब्रह्मणस्पतेदेवयंतस्त्वेमहे॥ उपप्रयंतुमरुतःसुदानवइंद्रप्राशूर्भवासचा ॥ प्रक्षालितपादपाणिः आचम्य ॥ शांतापृथिवी० पृथिवीशांताइत्यादिजस्वाद्वादशाष्टचतुर्गृहीतेनाज्येनपूर्णाहुतिंजुहुयात्॥ अद्येत्यादिग्रहयज्ञांगभूतांसर्वकर्मप्रपू

रणींभद्रद्रव्यदांद्वादशगृहीतेनाज्येनपूर्णाहुतिंहोष्ये॥ अग्निंइलनामानंभावयामि। आचार्यः ॐ सप्ततेंअग्नेसमिधःसप्तजिह्वाःसप्तर्षयःसप्तधामप्रियाणि॥ सप्तहोत्राःसप्तधात्वायजंतिसप्तयोनीरापृणस्वाघृतेनस्वाहा॥ सप्तवतेग्नयइदं॰॥ पूर्णाहुतिर्मुत्तमांजुहोतीतिशंसनंकृत्वाआचार्यादयःसपत्नीकंयजमानंग्रहकलशोदकेनाभिषिंचेयुः ॥ ग्रहाणामुत्तरपूजांविधायआचार्यायधेनुंदत्वाअग्निपूजनंकृत्वामानस्तोकइतिविभूतिंधृत्वागच्छगच्छेत्यग्निंविसृज्यग्रहपीठंदत्वाब्राह्मणान्भोजयित्वाभूयसींदत्वायस्यस्मृत्येत्युक्त्वाविष्णुंस्मरेत्॥ इतिग्रहयज्ञप्रयोगःसमाप्तः॥ ॥ छ ॥ ॥ छ ॥

## ॥ ९१ ॥ अग्निनामानि ॥

श्रीः ॥ प्रयोगेषुतत्रतत्रतत्तन्नाम्नाहविर्भुजंस्थापयेदित्युक्तंतत्रकानिनामानीत्यपेक्षायांपारिजाते—पावकोलौकिकोह्यग्निःप्रथमःपरिकीर्तितः॥ अग्निस्तुमारुतोनामगर्भाधानेभिधीयते॥ पुंसवेपवमानस्तुशोभनःशुभकर्मसु ॥ सीमंतेमंगलोनामप्रबलोजातकर्मणि॥ नाम्निवैपार्थिवोह्यग्निःप्राशनेतुशुचिःस्मृतः॥ सभ्यनामातुचौलेस्याद्व्रतादेशेसमुद्भवः॥ गोदानेसूर्यनामाग्निर्विवाहेयोजकःस्मृतः॥ चतुर्थ्यांतुशिखीप्रोक्तोधृतिरग्निरथापिवा॥ आवसथ्येद्विजोज्ञेयोवैश्वदेवेतुरुक्मकः॥ प्रायश्चित्तेविटश्चैवपाकयज्ञेषुपावकः॥ देवानांहव्यवाहश्चपितॄणांकव्यवाहनः॥ शांतिकेवरदःप्रोक्तःपौष्टिकेबलवर्धनः॥ पूर्णाहुत्यामिडोनामक्रोधोग्निश्चाभिचारिके॥ वश्यार्थेकामदोनामवनदाहेतुदूषकः॥ कुक्षौतुजाठरोज्ञेयःक्रव्यादोमृतदाहने॥ वह्निनामालक्षहोमेकोटिहोमेहुताशनः॥ वृषोत्सर्गेऽध्वरोनामशुचयेब्राह्मणःस्मृतः॥ समुद्रेवाडवोह्यग्निःक्षयेसंवर्तकस्तथा॥ ब्रह्मावैगार्हपत्यश्चईश्वरो

१ लौकिकेपावकोह्यग्निरित्यपिपाठः। २ ततःपुंसवनेज्ञेयःपवमानस्तथैवच।

दक्षिणस्तथा ॥ विष्णुराहवनीयःस्यादग्निहोत्रेत्रयोग्नयः ॥ ज्ञात्वैवमग्निनामानिगृह्यकर्मसमारभेत् ॥ इमानिसर्वसंस्कारशांति
कपौष्टिकानुष्ठानोपयुक्तानितत्रतत्रयोज्यान्यग्निनामानि ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ९२ ॥ वसोर्धारानुवाकः ॥

ॐ वसोर्धारांजुहोतिवसोर्मेधारासदितिवाएषाहूयतेघृतस्यवाएनमेषाधारामुष्मिंल्लोकेपिन्वमानोपतिष्ठतआज्येनजुहोतितेजोवा
आज्यंतेजोवसोर्धारातेजसैवास्मैतेजोवरुंधेथोकामावैवसोर्धाराकामानेवावरुंधेयंकामयेतप्राणानस्यान्नाद्यंविच्छिंद्यामितिंविग्रा
हंतस्यंजुहुयात्प्राणानेवास्यान्नाद्यंविच्छिनत्तियंकामयेतप्राणानस्यान्नाद्यꣳसंतनुयामितिसंततांतस्यंजुहुयात्प्राणानेवास्यान्नाद्यꣳ
संतनोतिद्वादशद्वादशानिजुहोतिद्वादशमासाःसंवत्सरःसंवत्सरेणैवास्माऽअन्नमवरुंधेन्नंचमेक्षुच्चमइत्याहैतद्वाअन्नस्यरूपꣳरू
पेणैवान्नमवरुंधेग्निश्चमआपश्चमइत्याहैषावाअन्नस्ययोनिःसयोन्येवान्नमवरुंधेर्धेंद्राणिजुहोतिदेवताएवावरुंधेयत्सर्वेषामर्धमिंद्रः
प्रतितस्मादिंद्रोदेवतानांभूयिष्ठभाक्तमइंद्रमुत्तरमाहेंद्रियमेवास्मिन्नुपरिष्टाद्दधातियज्ञायुधानिजुहोतियज्ञोवैयज्ञायुधानियज्ञमे
वावरुंधेथोऽएतद्वैयज्ञस्यरूपꣳरूपेणैवयज्ञमवरुंधेवभृथश्चमेस्वगाकारश्चमइत्याहस्वगाकृत्याअग्निश्चमेघर्मश्चमइत्याहैतद्वैब्रह्मवर्च
सस्यरूपꣳरूपेणैवब्रह्मवर्चसमवरुंधऋक्चमेसामचमइत्याहैतद्वैछंदसाꣳरूपꣳरूपेणैवछंदाꣳस्यवरुंधेगर्भाश्चमेवत्साश्चमइत्याहैत
द्वैपशूनाꣳरूपꣳरूपेणैवपशूनवरुंधेकल्पान्जुहोत्यक्लृप्तस्यक्लृप्त्यैयुग्मदयुजेजुहोतिमिथुनत्वायोत्तरावतीभवतोभिक्रांत्याएकाचमे
तिस्रश्चमइत्याहदेवछंदसंवाएकाचतिस्रश्चमनुष्यछंदसंचतस्रश्चाष्टौचदेवछंदसंचैवमनुष्यछंदसंचावरुंधऽआत्रयस्त्रिꣳशतोजुहो
तित्रयस्त्रिꣳशद्वैदेवतादेवताएवावरुंधऽआष्टाचत्वारिꣳशतोजुहोत्यष्टाचत्वारिꣳशदक्षराजगतीजागताःपशवोजगत्यैवास्मैपशू

नवंरुंधेवाजंश्चप्रसवश्चेतिद्वादशंजुहोतिद्वादशमासाःसंवत्सरःसंवत्सरएवप्रतितिष्ठति ॥ इतिवसोर्धारानुवाकः ॥ १ ॥ ॥ छ ॥

## ॥ ९३ ॥ अग्न्युपघातेप्रायश्चित्तानि ॥

श्रीः ॥ तत्रपूर्वमग्न्युपघातेप्रायश्चित्तम् ॥ अस्मिन्कर्मणिस्वयंज्वलनादिनाग्न्युपघातजनितप्रत्यवायपरिहारार्थंउक्तप्रायश्चित्तंकरिष्ये ॥ ॐ पुनस्त्वादित्यारुद्रावसवःसमिंधतांपुनर्ब्रह्माणोवसुनीथयज्ञैः॥घृतेनत्वंतनुवोवर्धयस्वसत्याःसंतुयजमानस्यकामाः॥ इतिमंत्रेणाग्नौसमिधमाधायतेनैवमंत्रेणस्रुवाहुतिंजुहुयात् ॥ आदित्यरुद्रवसुब्रह्मभ्यइदंनमम ॥ ॥ अस्मिन्क० आसादितप्रणीतास्कंदनशोषणप्रस्रवणादिजनितप्रत्य० विहितप्राय० ॥ आपोहिष्ठेतितृचेनप्रणीतायामुदकमापूर्यस्रुवाहुतिंजुहुयात् ॥ ॐ तंतमआपस्तर्दुतायतेपुनःस्वादिष्ठाधीतिरुचथायशस्यते ॥ अयंसमुद्रउतविश्वभेषजःस्वाहाकृतस्यसमुतृप्णुतर्भुवःस्वाहा ॥ ऋभुभ्यइदं० ॥ ॥ अस्मिन्क० हवनीयद्रव्याणामग्नेश्चकेशनखकीटपिपीलिकामक्षिकाद्युपघातजनितप्रत्य० द्वेमिंदाहुतीहोष्ये ॥ ॐ यन्मआत्मनोमिंदाभूदग्निस्तत्पुनराहार्जातवेदाविचर्षणिःस्वाहा॥मिंदवतेग्नयइदं०॥ॐपुनरग्निश्चक्षुरदात्पुनरिंद्रोबृहस्पतिः॥ पुनर्मेअश्विनायुवंचक्षुराधत्तमक्ष्योःस्वाहा ॥ मिंदवतेग्नयइदं० ॥ ॥ अस्मिन्क० परिस्तरणबर्हिरादीनांदाहादिनाशजनितप्रत्यवाय० ॥ ॐ त्वमग्नेअयास्ययासन्मनसाहितः ॥ अयासन्हव्यमूहिषेयानोधेहिभेषजंस्वाहा ॥ अयसेग्नयइदं० ॥ ॐ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणांस्वाहा ॥ प्रजापतय० ॥ ॥

१ मिंदाहुतिद्वयंचैवव्याहृत्यःप्रणवादिकाः ॥ वारुण्यस्तंतुमत्यश्चमुख्याचैवमनस्वती ॥ महाव्याहृतयःसप्ततेप्रजापतएवच ॥ एषमंत्रसमूहःस्यान्मिंदादिगणसंज्ञकः ॥ जातवेदसआद्यःस्यान्मनोज्योतिर्द्वितीयकः ॥ महाव्याहृतयस्तिस्रएषदुर्गादिकोगणः ॥

अस्मिन्क० आयतनाद्बहिरंगारपतनजनितप्रत्यवाय०॥ ॐइदंतएकंपरऊंतएकंतृतीयेंनज्योतिषासंविंशस्व ॥ संवेशंनस्तनुवैचारु रेधिप्रियोदेवानांपरमेसधस्थें ॥ इतिमंत्रेणांगारानायतनेप्रक्षिप्य ॐभूर्भुवःसुवःस्वाहाइतिस्रुवाहुतिंजुहुयात् ॥ अस्मिन्क०स्व राक्षरपदवर्णभ्रेषजनितप्रत्यवायपरिहारार्थं आभिर्गीर्भिरित्येकामाज्याहुतिंहोष्ये ॥ ॐआभिर्गीर्भिर्यदतोनऊनमाप्यायहरि वोवर्धमानः ॥ यदास्तोतृभ्योमहिगोत्रारुजासिभूयिष्ठभाजोअधतेस्यामस्वाहा ॥ इंद्रायहरिवत० ॥ ॥ अस्मिन्क० स्वाहाका रप्रदानासमकालताजनितप्रत्यवाय० मनोज्योतिरित्येकामाज्याहुतिंहोष्ये ॥ ॐमनोज्योतिर्जुषतामाज्यंविच्छिन्नंयज्ञꣳसमिमं दधातु ॥ याइष्टाउषसोनिम्रुचश्चताःसंदधामिहविषाघृतेनस्वाहा ॥ मनसेज्योतिषइदं० ॥ ॥ अस्मिन्क० नियमासनवाग्लो पजनितप्रत्यवाय० इदंविष्णुस्त्र्यंबकमितिमंत्राभ्यांस्रुवाहुतीहोष्यामि ॥ ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूढमस्यपाꣳ सुरेस्वाहा ॥ विष्णवइदं० ॥ ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात्स्वाहा ॥ त्र्यंब कायेदं०॥ ॥ अस्मिन्कर्मणिहोम्यद्रव्याणांसमिदादीनांमध्येउक्तसंख्यातोन्यूनातिरिक्तत्वजनितप्रत्यवाय० प्रायश्चित्तंकरिष्ये ॥ ॐयत्पाकत्रामनसा० अग्नयइदं० ॥ अस्मिन्कर्मणिदेवताग्न्योर्मध्येऋत्विगग्निमध्येचपुरुषांतरगमनजनितप्रत्य० आग्नेयीं पाथिकृतींपूर्णाहुतिंहोष्ये ॥ जुह्वांचतुर्गृहीतमाज्यंगृहीत्वाजुहुयात् ॥ ॐअग्नयेपथिकृतेस्वाहा अग्नयेपथिकृतइदं० ॥ अस्मि न्क० प्रधानाहुत्युपरिस्विष्टकृदाहुतिप्रक्षेपजनितप्रत्यवाय० ॥ ॐयत्रवेत्थवनस्पतेदेवानांगुह्यानामानि ॥ तत्रहव्यानिगामय स्वाहा ॥ इत्यनेनसमिधंहुत्वासमस्तव्याहृत्याज्यंजुहुयात् ॥ ॥ अस्मिन्क० ऋक्तोयज्ञभ्रेषप्राय० ॥ ॐभूःस्वाहाअग्नयइदं ॥ यजुष्टोयज्ञभ्रेषप्रा०॥ ॐभुवःस्वाहा वायवइदं० ॥ अ० सामतोयज्ञ० ॥ ॐꣳसुवःस्वाहा सूर्या०॥ ॥ अविज्ञातप्रायश्चित्तं०॥

ॐभूर्भुवःसुवःस्वाहा प्रजापतयइदं० ॥ चरौश्रप्यमाणेतापादुत्सिक्ते चरूत्सेकजनितप्र० यदिपूर्वस्यांतदाइंद्रायस्वाहेतिस्रुवा
हुतिः ॥ दक्षिणस्यांयमायस्वा० ॥ पश्चिमायांवरुणाय० ॥ उत्तरस्यांसोमाय० ॥ विदिक्षुभूर्भुवःसुवःस्वाहेति ॥ एवंहुत्वा
स्रुवगृहीतेनाज्येनचरुमाप्याययति॥आप्यायस्वसंतेपयांसीत्याभ्यां॥ततोमिंदाहुती॥ॐयन्मआत्मनो० ॐपुनरग्निरितिद्वाभ्यां॥
ततःसर्वप्रायश्चित्तं ॐ भूर्भुवःसुवःस्वाहेति ॥ ॥ अस्मिन्क०हूयमानाहुतिस्कंदनजनितप्रत्यवाय० ॥ स्कन्नंहविरभिमृशेत् ॥ भू
पतयेस्वाहा ॥ भुवनपतयेस्वाहा॥भूतानांपतयेस्वाहा॥यज्ञस्यत्वाप्रमयोन्मयाभिमयाप्रतिमया॥ ततः॥ ॐद्रप्सश्चस्कंदपृथिवीम
नुद्यामिमंचयोनिमनुयश्चपूर्वः॥समानंयोनिमनुसंचरंतंद्रप्संजुहोम्यनुसप्तहोत्राःस्वाहाइत्याज्याहुतिंहुत्वाव्याहृतिभिश्च॥ ततःस्क
न्नमग्नौक्षिपेत् ॥ व्रतलोप० व्रतपतिदेवताकांपूर्णाहु० ॥ चतुर्गृहीतमाज्यं० ॐअग्नयेव्रतपतयेस्वाहा ॥ अग्नयेव्रतपतयइ० ॥
अग्नेरुक्तस्थानादन्यत्रनासाकर्णादौकृताहुतिप्रक्षेपजनितप्रत्यवाय०मूलेनपंचविंशतिसंख्याज्याहुतीर्होष्ये॥मूलमंत्रेणजुहुयात्॥
अस्मिन्कर्मणिमंत्रविपर्यासादिप्रत्यवायपरिहारार्थंत्वंनःसत्वंनइतिद्वेआज्याहुतीहोष्यामि ॥ ॐत्वंनोअग्नेवरुणस्यविद्वान्देवस्य
हेडोवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषांꣳसिप्रमुमुग्ध्यस्मत्स्वाहा॥ अग्नयइदं॥ ॐसत्वंनोअग्नेवमोभवोतीने
दिष्ठोअस्याउषसोव्युष्टौ ॥ अवयक्ष्वनोवरुणꣳरराणोवीहिमृडीकꣳसुहवोनएधिस्वाहा ॥ अग्नय० ॥ अस्मिन्क० वेदिकाकुं
डकलशप्रतिमादीनामुक्तप्रमाणाद्धीनाधिकताजनितप्रत्यवायपरि०अष्टाविंशतिवारंसमस्तव्याहृत्याज्याहुतीर्होष्यामि ॥ ॐभू
र्भुवःसुवःस्वाहा प्रजापतयइदंनमम ॥ सांगतासिद्ध्यर्थेसर्वप्रायश्चित्तंकरिष्ये ॥ ॐभूर्भुवःसुवःस्वाहा प्रजापतयइदंनमम ॥
इतिसर्वसाधारणान्यग्न्युपघातकप्रायश्चित्तानि ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १४ ॥ पुनराधानप्रयोगः ॥

श्रीः ॥ यजमानःपत्न्यासहकृतनित्यक्रियोदेशकालौसंकीर्त्यममप्रमादादेतावत्कालपर्यंतंगृह्याग्नित्यागजन्यदोषपरिहारद्वाराश्री परमेश्वरप्रीत्यर्थंप्रत्यब्दंप्राजापत्यप्रायश्चित्तंयथाशक्तिगोमूल्यप्रत्याम्नायेन० तथाअग्निविच्छेदेनलुप्तानांसायंप्रातर्होमानांदर्शपूर्णमासस्थालीपाकानांचपर्याप्तंव्रीह्यादिद्रव्यमाज्यंचतन्निष्क्रयीभूतंद्रव्यंवाब्राह्मणेभ्योदास्ये॥प्रायश्चित्तीयद्रव्यत्यागांते पुनर्देशकालौनिर्दिश्यममविच्छिन्नस्यगृह्याग्नेःपुनःसंधानंकरिष्ये॥गणपतिपूजनंपंचवाक्यैःपुण्याहवाचनंस्थंडिलादिसकलंकर्मकरिष्ये॥ गणपतिपूजनादिकृत्वास्थंडिलंगोमयेनोपलिप्येतिस्वयोनितउत्पन्नमग्निमाहृत्यमृच्छरावेकृत्वाभूर्भुवःसुवरोमित्यायतनेप्रतिष्ठाप्यप्रज्वाल्यअग्निध्यानांतंकृत्वासमित्त्रयमादाय ॥ ॐअग्न्एहीत्यादिप्राणायामांतंकृत्वापुनराधानहोमकर्मणियक्ष्यमाणादेवताः परिग्रहीष्यामि ॥ जातवेदसमग्निमिध्मेनेत्यादिव्याहृत्यंतमुक्त्वा प्रधानहोमेमिंदवंतमग्निंद्विराज्येन तंतुमंतमग्निंत्रिराज्येनअभ्यावर्तिनमग्निंचतुराज्येन अग्निंवायुंसूर्यंप्रजापतिंप्रत्येकमाज्येनअयासमग्निमाज्येन मनस्वंतमग्निमाज्येनप्रजापतिमाज्येनसप्तवंतमग्निमाज्येनदशहोतारंवाचस्पतिंब्रह्माणमाज्येन अंगहोमेवरुणंद्विरित्यादिअग्निंॅस्विष्टकृतंहुतशेषेणेत्यंतमुक्त्वात्रिवृदन्नहोमेअग्निंत्रिवृदन्नेनसोमंत्रिवृदन्नेनअग्निमन्नादंत्रिवृ० अग्निमन्नपतिंत्रिवृ० प्रजापतिंत्रिवृ० विश्वान्देवांस्त्रिवृ० सर्वादेवतास्त्रिवृ० अग्निंॅस्विष्टकृतंत्रिवृदन्नेनवास्तुपतिंबलीकरणेनयक्ष्ये प्रायश्चित्तहोमेअग्निंत्रिरित्यादिसमिधोग्नावाधायपरिसमूहनादिव्याहृतिहोमांतंतंत्रंविधायप्रधानहोमःकार्यः॥ॐयन्मआत्मनोमिंदाभूदग्निस्तत्पुनराहार्जातवेदाविचर्षणिःस्वाहा॥ मिंदवतेग्नयइदं॥ॐपुनरग्निश्चक्षुरदात्पुनरिंद्रोबृहस्पतिः॥पुनर्मेअश्विनायुवंचक्षुराधत्तमक्ष्योःस्वाहा ॥ मिंदवतेग्नयइदं ॥ ॐतंतुंतन्वन्रजसोभानुमन्विहिज्यो

तिष्मतः पथोरक्षधियाकृतान् ॥ अनुल्बणंवयतजोगुवामपोमनुर्भवजनयादैव्यंजनᳫंस्वाहा ॥ तंतुमतेग्नयइदं० ॥ ॐउद्बुध्यस्वाग्नेप्रतिजागृह्येनमिष्टापूर्तेसᳫंसृजेथामयंच ॥ पुनःकृण्वᳫंस्त्वापितरंयुवानमन्वाताᳫंसीत्त्वयितंतुमेतᳫंस्वाहा ॥ तंतुमतेग्नयइदं ॥ ॐत्रयस्त्रिᳫंशत्तंतवोयेवितत्निरेयइमंयज्ञᳫंस्वधयाददंतेतेषांछिन्नंप्रत्येतद्धामिस्वाहाघर्मोदेवाᳫंअप्येतुस्वाहा ॥ तंतुमतेग्नयइदं० ॥ ॐअग्नेभ्यावर्तिन्नभिनआवर्तस्वायुषावर्चसासन्यामेधयाप्रजयाधनेनस्वाहा ॥ अभ्यावर्तिनेग्नयइदं० ॥ ॐअग्नेअंगिरःशतंतेसंत्वावृतःसहस्रंतउपावृतः ॥ तासांपोषस्यपोषेणपुनर्नोनष्टमाकृधिपुनर्नोरयिमाकृधिस्वाहा ॥ अभ्यावर्तिनेग्नयइदं० ॥ पुनरूर्जानिवर्तस्वपुनरग्नइषायुषा ॥ पुनर्नःपाहिविश्वतःस्वाहा ॥ अभ्यावर्तिनेग्नयइदं० ॥ ॐसहरय्यानिवर्तस्वाग्नेपिन्वस्वधारया ॥ विश्वप्स्नियाविश्वतस्परिस्वाहा ॥ अभ्यावर्तिनेग्नयइदं० ॥ ॐभूःस्वाहा अग्नयइदं०॥ ॐभुवःस्वाहा वायवइदं० ॥ ॐसुवःस्वाहा सूर्यायेदं०॥ॐभूर्भुवःसुवःस्वाहा प्रजापतयइदं० ॥ ॐअयाश्चाग्नेस्यनभिशस्तीश्चसत्यमित्त्वमयाअसि ॥ अयसामनसाधृतोयसाहव्यमूहिषेयानोधेहिभेषजᳫंस्वाहा ॥ अयासेग्नयइदं० ॥ ॐमनोज्योतिर्जुषतामाज्यंविच्छिन्नंयज्ञᳫंसमिमंदधातु॥ याइष्टाउषसोनिम्रुचश्चताःसंदधामिहविषाघृतेनस्वाहा ॥ मनसेज्योतिषइदं०॥ॐप्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयᳫंस्यामपतयोरयीणाᳫंस्वाहा ॥ प्रजापतयइदं० ॥ ॐसप्ततेअग्नेसमिधःसप्तजिह्वाः सप्तर्षयःसप्तधामप्रियाणि ॥ सप्तहोत्राःसप्तधात्वायजंतिसप्तयोनीरापृणस्वाघृतेनस्वाहा ॥ सप्तवतेग्नयइदं० ॥ ॐचित्तिःस्रुक् ॥ चित्तमाज्यं ॥ वाग्वेदिः ॥ आधीतंबर्हिः ॥ केतोअग्निः ॥ विज्ञातमग्निः ॥ वाक्पतिर्होता ॥ मनउपवक्ता ॥ प्राणोहविः ॥ सामाध्वर्युः ॥ इतिदशहोतारंमनसानुद्धृत्य ॥ वाचस्पतेविधेनामन् ॥ विधेमंतेनाम ॥ विधेस्त्वमस्माकंनाम ॥ वाचस्पतिः

सोमँपिवतु ॥ आस्मासुनृम्णंधात्स्वाहा ॥ इतिपठन्जुहोति ॥ वाचस्पतयेब्रह्मणइदं० ॥ इत्यष्टादशप्रधानाहुतीर्हुत्वा ॥ ततः इमंमेवरुणेत्यादिस्विष्टकृदंतंसमाप्यत्रिवृदन्नंसर्पिर्मिश्रंदर्व्यासकृत्सकृदवदायजुहोति ॥ ॐअग्नयेस्वाहा अग्नयइदं० ॥ ॐसोमायस्वाहा सोमायेदं० ॥ ॐ अग्नयेन्नादायस्वाहा अग्नयेन्नादायेदं० ॥ ॐअग्नयेन्नपतयेस्वाहा अग्नयेन्नपतयइदं० ॥ ॐप्रजापतयेस्वाहा प्रजापतयइदं०॥ॐविश्वेभ्योदेवेभ्यःस्वाहा विश्वेभ्योदेवेभ्यइदं०॥ॐसर्वाभ्योदेवताभ्यःस्वाहा सर्वाभ्योदेवताभ्यइदं०॥ ॐअग्नयेस्विष्टकृतेस्वाहा अग्नयेस्विष्टकृतइदं०॥ततोग्नेरुत्तरतःप्रागग्रान्कुशानास्तीर्यतूष्णीमुदकमासिच्यहुतशेषंत्रिवृदन्नंकिंचिद्धस्तेनादायबलिंकरोति ॥ ॐवास्तुपतयेस्वाहा वास्तुपतयइदं० ॥ तूष्णींसकृदंतेपरिषेकः ॥ ततःशुल्बप्रहरणं ॥ ॐरुद्रायपशुपतयेस्वाहा रुद्रायपशुपतयइदं० ॥ दर्व्यापरिधीननक्तीत्यादिकर्मशेषंसमापयेत् ॥ त्रिवृदन्नहोमशेषादिनाब्राह्मणान्संतोष्यपुण्याहंवाचयेत् ॥ मह्यंसकुटुंबायमहाजनान्नमस्कुर्वाणायाशीर्वचनमपेक्षमाणायपुनराधानकर्मकारिणेपुण्याहंभवंतोब्रुवंतु ३ मह्यं० स्वस्ति० ३ मह्यं० ऋद्धिं० ३ ॥ इत्यादि ॥ ततआचम्यप्राणानायम्यदेशकालौस्मृत्वाश्रीपरमेश्वरप्रीत्यर्थंपुनराधानांगभूताग्नेयस्थालीपाकेनयक्ष्ये ॥ तथाचअग्निध्यानादिक० ॥ ॐचत्वारिशृंगा० ॥ सप्तहस्त० ॥ समिद्वयमादायाग्नेयस्थालीपाकहोमकर्मणियक्ष्यमाणादेवताःपरिग्रहीष्यामि ॥ तूष्णीमिध्मेनअग्निंचरुणाअग्निंॅस्विष्टकृतंचरुणा प्रायश्चित्तहोमेऽग्निंवायुंसूर्यंप्रजापतिंचाज्येनएतादेवताःसद्योयक्ष्ये ॥ ॐभूर्भुवःसुवःस्वाहा ॥ ॐयथाहृतद्व०उत्तरेणकुशानास्तीर्यपात्रासादनंकार्यं ॥ दर्वीं आज्यस्थालीं चरुस्थालीं प्रोक्षणीं इध्मं बर्हिः उपवेषं संमार्गदर्भान् अवज्वलनदर्भान् उलूखलं मुसलं शूर्पं कृष्णाजिनं तंडुलान् उद्धरणपात्रं मेक्षणं आज्यंचासाद्यप्रोक्षणीःसंॅस्कृत्यासादितानिप्रोक्ष्यउलूखलेव्रीहीनोप्यपत्न्यावघा

त्यप्रक्षाल्योत्तरेणाग्निमासादितचरुस्थाल्यांतानोप्याग्नौश्रपयति॥ ततोदर्वींनिष्टप्याज्यंसंस्कृत्यशृतंचरुमभिघार्योदगुद्वास्यो द्धरणपात्रेमेक्षणेनोद्धृत्याग्नेःपश्चान्निधायपरिषिच्य ॥ ॐअदिते० समिद्व्यात्मकमिध्ममंक्त्वातूष्णीमग्नावाधायचरुंदर्व्यासकृद वदायजुहोति ॥ ॐअग्नयेस्वाहाअग्नयइदं० ॥ ॐअग्नयेस्विष्टकृतेस्वाहाअग्नयेस्विष्टकृतइदं० ॥ ॐभूःस्वाहा अग्नयइदं० ॥ ॐभुवःस्वाहा वायवइदं० ॥ ॐसुवःस्वाहासूर्यायेदं० ॥ ॐभूर्भुवःसुवःस्वाहा प्रजापतयइदं० ॥ ॐअदितेन्व० ब्राह्मणभो जनंसंकल्प्यविष्णुंस्मरेत्वृषभदानंचकुर्यात् ॥ इतिविच्छिन्नस्याग्नेःपुनराधानंसंपूर्णं ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ९५ ॥ ऋतुशांतिः ॥

श्रीः ॥ यजमानःकृतमंगलस्नानतिलकआचम्यप्राणानायम्यदेशकालौस्मृत्वाममपत्न्याःप्रथमरजोदर्शनेऽमुकदुष्टमासादिसूचि तसकलारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंसग्रहमखांबौधायनोक्तांऋतुशांतिंकरिष्ये ॥ तदंगंगणपतिपूजनंपुण्याहवाचनंआ चार्यादिवरणंचकरिष्ये अत्रनांदीश्राद्धंकृताकृतं ॥ अमुकगोत्रोत्पन्नोमुकशर्माहं अमुकगोत्रोत्पन्नममुकशर्माणंअमुकशाखा ध्यायिनंऋतुशांत्याख्येकर्मणिआचार्यत्वामहंवृणेइतिवृत्वा ॥ आचार्यस्तुयथास्वर्गेशक्रादीनांबृहस्पतिः ॥ तथात्वंममयज्ञेस्मि न्नाचार्योभवसुव्रतएवमेवब्रह्मादीन्वृत्वा ॥ अस्ययागस्यनिष्पत्तौभवंतोभ्यर्चितामया ॥ सुप्रसन्नैःप्रकर्तव्यंशांतिकंविधिपूर्वकं ॥ ततोगंधवस्त्रादिभिःयथाशक्तितानभ्यर्च्य ॥ ततःआचार्यःपवित्रपाणिःदेशकालौसंकीर्त्ययजमानेनवृतोहमाचार्यकर्मकरिष्येइ तिसंकल्प्य ॥ ततःसंभारान्संपाद्य पुरुषसूक्तेनशरीरशुद्धिंविधायसर्षपान्गृहीत्वा ॥ यदत्रसंस्थितंभूतंस्थानमाश्रित्यसर्वदा ॥ स्थानंत्यक्त्वातुतत्सर्वंयत्रस्थंतत्रगच्छतु॥इतिप्राच्यादिदिक्षुप्रादक्षिण्येनविकीर्य ॥ शुचीवइतिपंचगव्येनयज्ञभूमिंप्रोक्ष्य॥आपोहि

ष्ठेतितृचेनशुद्धाद्भिश्चप्रोक्ष्य ॥ कृतांजलिस्तिष्ठन् भद्रंकर्णेभिः स्वस्तिनइंद्रोवृद्धश्रवाः इतिमंत्रद्वयंपठेत् ॥ देवाआयांतु यातुधाना अपयांतु भूमौप्रादेशंकुर्यात् ॥ ततोदेशकालौनिर्दिश्यक्रतुशांत्यंगभूतंमुख्यदेवतास्थापनंकरिष्येइतिसंकल्प्य ॥ गृहादीशान्यां गोमयेनोपलिप्तभूमौमहीद्यौःपृथिवीचनइतिभूमिंस्पृष्ट्वाओषधयःसंवदंतइतिप्रस्थाष्टमितैर्व्रीहिभिस्तदर्धैस्तंडुलैस्तदर्धैस्तिलैश्चपरि भावेनअरत्निमात्रांसमांचतुरस्रांवेदिंकृत्वा ॥ अशक्तश्चेद्यथाशक्तिवावेदिमध्येष्टदलंकमलमुल्लिख्यकुशैर्दूर्वाभिर्वेदींप्रच्छाद्यवेद्युप रिआजिघ्रकलशमितितंतुवेष्टितंनवमव्रणंसुदृढंकुंभंनिधायकांडात्कांडादितिकूर्चमंतर्धायतस्मिन्आपोवाइदं सर्वमित्यनुवा केनआपोहिष्ठेतितिसृभिःकुंभेउदकंपूरयित्वामंत्रावृत्त्योपरिअश्वत्थेवइतिपंचपल्लवान्निक्षिप्य ॥ तेनैवमंत्रेणकपित्थाश्वत्थपलाश बिल्वोदुंबराणांत्वचश्चनिक्षिप्य ॥ बृहस्पतेजुषस्वनइतिपंचरत्नानियुवासुवासाइतिनववस्त्रयुग्मेनकलशंवेष्टयित्वायाःफलिनी र्याइतिनारीकेलफलंकुंभेनिधायतंकुंभंबिल्वपल्लवैश्चूतपल्लवैश्चावकीर्यगंधाक्षतपुष्पमालाभिःकलशंभूषयित्वा ॥ पुरुषंपुंडरीका क्षंध्यात्वाइतिबौधायनाचार्यःतदुपरितंदुलपूरितपूर्णपात्रंपूर्णादर्विपरापतेतिसंस्थाप्यशिष्टाचाराद्यथाशक्तिसुवर्णादिनिर्मितां विष्णुप्रतिमांअश्मन्नूर्जमित्येतेनानुवाकेनाग्न्युत्तारणप्राणप्रतिष्ठापनपूर्वकंतद्विष्णोःपरममितिमंत्रेणप्रतिष्ठाप्ययथा ॥ एतत्कर्मा गप्रतिमानांतापताडनादिदोषोपशांतिपूर्वकंतासुदेवतासांनिध्यार्थमग्न्युत्तारणपूर्वकंप्राणप्रतिष्ठांकरिष्ये ॥ ॐअश्मन्नूर्जंपर्वतेशि श्रियाणांवातेपर्जन्येवरुणस्यशुष्मे ॥ अद्भ्यओषधीभ्योवनस्पतिभ्योधिसंभृतांतांनइषमूर्जंधत्तमरुतःसꣳरराणाः ॥ अश्मꣳस्तेक्षुद मुंतेशुगृच्छतुयंद्विष्मः॥समुद्रस्यत्वावाकयाग्नेपरिव्ययामसि॥पावकोअस्मभ्यꣳशिवोभव॥हिमस्यत्वाजरायुणाग्नेपरिव्ययामसि॥

---

१ मंत्रावृत्त्याइत्यनेनप्रतिपल्लवप्रक्षेपेअश्वत्थेवइतिमंत्रोच्चारःकार्यइत्याशयोदृश्यते ॥ २ हवनत्रयसूक्तस्थाद्यमंत्रैरावाहनमितिप्रचुरआचारः ॥

पावकोअ०॥ उप॑ ॥१॥ ज्मन्नुपवेतसेवत्तरंनदीष्वा॥अग्नेपित्तमपामसि ॥ मंडूकिताभिरागहिसेमंनोयज्ञं॥पावकवर्णशिवंकृधि ॥ पावकआचितयंत्याकृपा॥क्षामन्रुरुचउषसोनभानुना ॥ तूर्वंनयामन्नेतशस्यनूरणआयोघृणे॥नततृषाणोअजरः ॥ अग्नेपावकरोचिषामंद्रयादेवजिह्वया॥ आदेवान् ॥२॥ वक्षियक्षिच ॥ सनःपावकदीदिवोग्नेदेवाइहावह ॥ उपयज्ञंहविश्चनः ॥ अपामिदंन्ययनंसमुद्रस्यनिवेशनं ॥ अन्यंतेअस्मत्तपंतुहेतयःपावकोअस्मभ्यंशिवोभव॥ नमस्तेहरसेशोचिषेनमस्तेअस्त्वर्चिषे ॥ अन्यंतेअस्मत्तपंतुहेतयःपावकोअस्मभ्यंशिवोभव ॥ नृषदेवट् ॥३॥ अप्सुषदेवड्वनसदेवड्वर्हिषदेवट्सुवर्विदेवट् ॥ येदेवादेवानांयज्ञियायज्ञियानांसंवत्सरीणमुपभागमासते ॥ अहुतादोहविषोयज्ञेअस्मिन्त्स्वयंजुहुध्वंमधुनोघृतस्य ॥ येदेवादेवेष्वधिदेवत्वमायन्येब्रह्मणःपुरएतारोअस्य ॥ येभ्योनर्तेपवतेधामकिंचननतेदिवोनपृथिव्याअधिस्नुषु ॥ प्राणदाः ॥ ४ ॥ अपानदाव्यानदाश्चक्षुर्दावर्चोदावरिवोदाः ॥ अन्यंतेअस्मत्तपंतु० ॥ अग्निस्तिग्मेनशोचिषायंसद्विश्वन्यत्रिणं ॥ अग्निर्नोवंसतेरयिं ॥ सैनानीकेनसुविदत्रोअस्मेयष्टादेवाआयजिष्ठस्वस्ति ॥ अदब्धोगोपाउतनःपरस्पाअग्नेद्युमदुतरेवद्दिदीहि ॥ ५ ॥ उपदेवान्वट्प्राणदाश्चतुश्चत्वारिंशच्च ॥१॥ (अस्यश्रीप्राणप्रतिष्ठेतिप्रतिष्ठांविधाय ) तद्दक्षिणतोब्रह्मजज्ञानमितिब्रह्माणंतदुत्तरतस्त्र्यंबकमितिरुद्रंचपूर्ववत्प्रतिष्ठाप्यप्रतिष्ठामंत्रैरुक्तक्रमेणदेवतात्रयंकांडानुसमयेनपदार्थानुसमयेनवाषोडशोपचारैःसंपूज्य॥ ऋत्विग्भिःसहाचार्यःकुंभमन्वारभ्य ॥ ॐनारायणायविद्महेवासुदेवायधीमहि ॥ तन्नोविष्णुःप्रचोदयात् ॥ इतिवैष्णवींगायत्रींअष्टोत्तरसहस्रंअष्टोत्तरशतंवाजपेत् ॥ तदंतेतत्सवितुरितिगायत्रींवेदादीनग्निमीळइत्येकामृचंइषेत्वोर्जेत्वेत्यनुवाकंअग्नआयाहिवीतयइत्येकांशंनोदेवीरित्येकांजप्त्वापोहिष्ठामयोभुवइतित्रीन्हिरण्यवर्णाःशुचयःपावकाइत्यनुवाकंयददइत्यनुवाकंपवमानःसुवर्जनइत्यनु

वाकंसहस्रशीर्षापुरुषइत्यनुवाकंऋचांप्राचीमहतीदिगुच्यतेइत्यनुवाकंचसकृत्पठेत् ॥ ॐयदृदःसंप्रयतीरहावनदताहते ॥ तस्मा दानद्योनामस्थतावोनामानिसिंधवः ॥ यत्प्रेषितावरुणेनताःशीभंॅसमवल्गत ॥ तदाप्नोदिंद्रोवोयतीस्तस्मादापोअनुस्थन ॥ अपकामॅस्यंदमानाअवीवरतवोहिकं ॥ इंद्रोवःशक्तिभिर्देवीस्तस्माद्वार्णामवोहितं ॥ एकोदेवोअप्यतिष्ठत्स्यंदमानायथावशं ॥ उदानिषुर्महीरितितस्मादुदकमुच्यते ॥ आपोभद्राघृतमिदापआसुरग्नीषोमौविभ्रत्यापइत्ताः ॥ तीव्रोरसोमधुपृचामरंगमआमा प्राणेनसहवर्चसागन् ॥ आदित्पश्याम्युतवाशृणोम्यामाघोषोगच्छतिवाङ्नआसां ॥ मन्येभेजानोअमृतस्यतर्हिहिरण्यवर्णाअतृ पंयदावः ॥ आपोहिष्ठा३आपोजनयथाचनः ॥ दिविश्रयस्वांतरिक्षेयतस्वपृथिव्यासंभवब्रह्मवर्चसमसिब्रह्मवर्चसायत्वा ॥ इत्यनुवाकं ॥ ॐऋचांप्राचीमहतीदिगुच्यते ॥ दक्षिणामाहुर्यजुषामपारां ॥ अथर्वणामंगिरसांप्रतीचीं ॥ साम्नामुदीचीमह तीदिगुच्यते ॥ ऋग्भिःपूर्वाह्णेदिविदेवईयते ॥ यजुर्वेदेतिष्ठतिमध्येअह्नः ॥ सामवेदेनास्तमयेमहीयते ॥ वेदैरशून्यस्त्रिभिरे तिसूर्यः ॥ ऋग्भ्योजातांॅसर्वशोमूर्तिमाहुः ॥ सर्वागतिर्याजुषीहैवशश्वत् ॥ १ ॥ सर्वंतेजःसामरूप्यॅहशश्वत् ॥ सर्वॅहेदं ब्रह्मणाहैवसृष्टं ॥ ऋग्भ्योजातंवैश्यंवर्णमाहुः ॥ यजुर्वेदंक्षत्रियस्याहुर्योनिं ॥ सामवेदोब्राह्मणानांप्रसूतिः ॥ पूर्वेपूर्वेभ्योवचएत दूचुः ॥ आदर्शमग्निंचिन्वानाः ॥ पूर्वेविश्वसृजोमृताः ॥ शतंवर्षसहस्राणि ॥ दीक्षिताःसत्रमासत ॥ २ ॥ तपआसीद्गृहपतिः ॥ ब्रह्मब्रह्माभवत्स्वयं ॥ सत्यॅहहोतैषामासीत् ॥ यद्विश्वसृजआसत ॥ अमृतमेभ्यउदगायत् ॥ सहस्रंपरिवत्सरान् ॥ भूतॅह प्रस्तोतैषामासीत् ॥ भविष्यत्प्रतिचाहरत् ॥ प्राणोअध्वर्युरभवत् ॥ इदंॅसर्वॅसिषासतां ॥ ३ ॥ अपानोविद्वानावृतः ॥ प्रति प्रातिष्ठदध्वरे ॥ आर्तवाउपगातारः ॥ सदस्याऋतवोभवन् ॥ अर्धमासाश्चमासाश्च ॥ चमसाध्वर्यवोभवन् ॥ अशॅसद्ब्रह्मण

स्तेजः ॥ अच्छावाकोभवद्यशः ॥ ऋतमेषांप्रशास्तासीत् ॥ यद्विश्वसृजआसत ॥ ४ ॥ ऊर्ग्राजानमुदवहत् ॥ ध्रुवगोपःसहो भवत् ॥ ओजोभ्यष्टौद्राव्णः ॥ यद्विश्वसृजआसत ॥ अपचितिःपोत्रीयामयजत् ॥ नेष्टीयामयजत्त्विषिः ॥ आग्नीध्राद्विदुषी सत्यं ॥ श्रद्धाहैवायजत्स्वयं ॥ इरापत्नीविश्वसृजां ॥ आकूतिरपिनद्धविः ॥ ५ ॥ इध्मँ॒ह्क्षुचैभ्यउग्रे ॥ तृष्णाचावहतामुभे ॥ वागेषाँ॒सुब्रह्मण्यासीत् ॥ छंदोयोगान्विजानती ॥ कल्पतंत्राणितन्वानाहः ॥ सँ॒स्थाश्चसर्वशः ॥ अहोरात्रेपशुपाल्यौ ॥ मुहूर्ताःप्रेष्याअभवन् ॥ मृत्युस्तदभवद्धाता ॥ शमितोग्रोविशांपतिः ॥ ६ ॥ विश्वसृजःप्रथमाःसत्रमासत ॥ सहस्रसमंप्रसुतेन यंतः ॥ ततोहजज्ञेभुवनस्यगोपाः ॥ हिरण्मयःशकुनिर्ब्रह्मनाम ॥ येनसूर्यस्तपतितेजसेद्धः ॥ पितापुत्रेणपितृमान्योनियोनौ ॥ नावेदविन्मनुतेतंबृहंतं ॥ सर्वानुभुमात्मानँ॒संपराये ॥ एषनित्योमहिमाब्राह्मणस्य ॥ नकर्मणावर्धतेनोकनीयान् ॥ ७ ॥ तस्यैवात्मापदविर्त्तविदित्वा ॥ नकर्मणालिप्यतेपापकेन ॥ पंचपंचाशतस्त्रिवृतःसंवत्सराः ॥ पंचपंचाशतःपंचदशाः ॥ पंचपंचाशतःसप्तदशाः ॥ पंचपंचाशतएकविँ॒शाः ॥ विश्वसृजाँ॒सहस्रसंवत्सरं ॥ एतेनवैविश्वसृजइदंविश्वमसृजंत ॥ यद्विश्वमसृजंत ॥ तस्माद्विश्वसृजः ॥ ८ ॥ विश्वमेनाननुप्रजायते ॥ ब्रह्मणःसायुज्यँ॒सलोकतांयंति ॥ एतासामेवदेवतानाँ॒सायुज्यं ॥ सार्ष्टिताँ॒समानलोकतांयंति ॥ यएतदुपयंति ॥ येचैनत्प्राहुः ॥ येभ्यश्चैनत्प्राहुः ॥ ९ ॥ ततःकुंभस्योत्तरतःमहतितृणमयेविष्टरेनववस्त्रकंचुक्यादिनालंकृतयावामभागस्थयापत्न्यासहितंप्राङ्मुखंयजमानंसऋत्विगुदङ्मुखआचार्यःस्थापितकलशोदकंपात्रांतरेगृहीत्वातत्स्थपंचपल्लवैःकुशदूर्वाभिश्चाशीर्वादपुरःसरंअभिषिंचेदेभिर्मंत्रैः ॥ तद्यथा ॥ ॐआपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ शिवमस्तुकल्याणंचास्त्विवतिवाक्यंमंत्रांतेयोजनीयंइतिसर्वत्र ॥ आपोहिष्ठेतितिसृभिःहिरण्यवर्णाइति

प्रतिमंत्रंशिवमस्तुकल्याणंचास्त्विति मंत्रपरिगणनम् ॥

| | | |
|---|---|---|
| आपोहिष्ठा० क्षसे शिवमस्तु० १ | पुनंतुमा० पुनंतुम० आयवः शि० ९ | यःपा० ऋषिभि० श्वना शि० १७ |
| योवःशिव० तरः शिव० २ | जातवेदः० पवित्रे० शुक्रेण० रनु शि० १० | पावमा० ऋ० दकं शि० १८ |
| तस्माअरं० चनः शिव० ३ | यत्तेपवित्र० अग्ने० नीमहे शि० ११ | पावमानीः० सुदु० हितं शि० १९ |
| हिरण्यवर्णाः० भवंतु शिव० ४ | उभाभ्यां० पवित्रे० इदं० महे शि० १२ | पावमानीः० भृताः शि० २० |
| यासाꣳराजा० भवंतु शिव० ५ | वैश्वदेवी० यस्यै० यीणां शि० १३ | पाव० हितं शि० २१ |
| यासांदेवा० भवंतु शिव ६ | वैश्वानरो० वातः० द्या० नीतां शि० १४ | येनदेवाः० तुमा शि० २२ |
| शिवेनमा० धत्त शि० ७ | बृहद्भिः० वर्षि० हिमा शि० १५ | प्राजापत्यं० महे शि० २३ |
| पवमानः० यःपोता० शि० ८ | येनदेवा० येनापो० महे शिव०१६ | इंद्रःसु० नातु० शि० २४ |
| | | सुरास्त्वा० प्रतिश्लोके शिव० २५ |

चतसृभिःपवमानःसुवर्जनइत्येतेनानुवाकेनसुरास्त्वामभिषिंचंत्वितिपौराणिकैर्मंत्रैश्च॥ततःकलशोदकेनान्येनचोष्णोदकेनतैला भ्यंगपूर्वकंसुस्नातौदंपतीअभिषेककालीनवासांसिपरित्यज्याहतशुक्लवाससीपरिधायश्वेतचंदनकुंकुमपुष्पमालादिधारणंकुर्या तां॥ त्यक्तवासांस्याचार्यायदद्यात्॥ ततआचार्योविधिवत्पंचगव्यंकृत्वायजमानपत्न्यैदद्यात्॥ साच॥ यत्त्वगस्थिगतंपापंदेहेति ष्ठतिमामके॥ प्राशनात्पंचगव्यस्यदहत्यग्निरिवेंधनं॥ इतिप्राश्यआचामेत्॥ अथाभिषेकानंतरंपत्न्यासहयजमानान्वारब्धआचा र्योवेद्याःपश्चिमतःस्थंडिलंकृत्वा तत्रभूसंस्काराद्यग्निप्रतिष्ठापनांतंविधायस्थापितकुंभस्येशान्यांवेद्यादौनवग्रहाणांतदधिदेवताप्र त्यधिदेवतानांचतत्तन्मंत्रैरावाहनपूजनादिपूर्वोक्तग्रहयज्ञरीत्याकुर्यात्॥ अथान्वाधानं॥ श्रद्धएहीत्यादिऋतुशांतिहोमाख्येकर्म

णियायायक्ष्यमाणादेवताइत्यादिव्याहृत्यंतमुक्त्वातत्रादौआदित्यादिनवग्रहाणांयथासंभवंयथालाभसमिच्चर्वाज्यैरित्यादिप्रागुक्तरीत्यान्वाधानंकुर्यात् ॥ वैशेषिकप्रधानहोमे ॥ विष्णुसूक्तेनविष्णुंअष्टोत्तरशतसंख्याकाभिःपलाशसमिदाहुतिभिर्यक्ष्ये ॥ ब्रह्मसूक्तेनब्रह्माणंअष्टोत्तरशतसंख्याकाभिःगृहसिद्धान्नाहुतिभिर्यक्ष्ये ॥ रुद्रसूक्तेनरुद्रंअष्टोत्तरशतसंख्याकाभिःआज्याहुतिभिर्यक्ष्ये ॥ घृतसूक्तेनप्रत्यृचमेकावृत्त्याआयुष्यदेवतामाज्येनयक्ष्ये ॥ कृत्तिकानक्षत्रदेवतामग्निंअष्टाविंशतिसंख्याकाभिःसमिच्चर्वाज्याहुतिभिर्यक्ष्ये ॥ त्र्यंबकंअष्टोत्तरशतसंख्याकाभिस्तिलाज्याहुतिभिर्यक्ष्ये ॥ ततःइमंमेवरुणेत्यादिआज्यसंस्कारांतेसिद्धमन्नमग्नावधिश्रित्याद्भिःप्रोक्षेत्तदेवपवित्रमित्याचक्षतेइतिधर्मेस्मरणात् ॥ ततःपरिधिपरिधानाद्यन्वाधानक्रमेणग्रहहोमांतेप्रधानहोमःकार्यः ॥यथा॥ ॐ विष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजांꣳसियोअस्कभायदुत्तरꣳसधस्थंविचक्रमाणस्त्रेधोरुगायःस्वाहा ॥ १ ॥ ॐ तदस्यप्रियमभिपाथोअश्यांनरोयत्रदेवयवोमदंति ॥ उरुक्रमस्यसहिबंधुरित्थाविष्णोःपदेपरमेमध्वउत्सःस्वाहा ॥२॥ ॐ प्रतद्विष्णुंस्तवतेवीर्यायमृगोनभीमःकुचरोगिरिष्ठाः ॥ यस्योरुषुत्रिषुविक्रमणेष्वधिक्षियंतिभुवनानिविश्वास्वाहा ॥ ३ ॥ ॐ परोमात्रयातनुवावृधाननतेमहित्वमन्वश्नुवंति ॥ उभेतेविद्मरजसीपृथिव्याविष्णोदेवत्वंपरमस्यवित्सेस्वाहा ॥ ४ ॥ ॐ विचक्रमेपृथिवीमेषएतांक्षेत्रायविष्णुर्मनुषेदशस्यन् ॥ ध्रुवासोअस्यकीरयोजनासउरुक्षितिꣳसुजनिमाचकारस्वाहा ॥ ५ ॥ ॐ त्रिर्देवःपृथिवीमेषएतांविचक्रमेशतर्चसंमहित्वा ॥ प्रविष्णुरस्तुतवसस्तवीयान्त्वेषꣳह्यस्यस्थविरस्यनामस्वाहा ॥ ६ ॥ एवंसूक्तस्याष्टादशावृत्तिभिरष्टोत्तरशतमाहुतयोभवंति ॥ एवमेवब्रह्मसूक्तेनान्नं ॥ ॐ ब्रह्मजज्ञानंप्रथमंपुरस्ता



---

१ यस्मिन्नक्षत्रेप्रथमरजोदर्शनंतस्योहः होमकालेतत्तन्नक्षत्रस्यअष्टवाक्यात्मकेनमंत्रेणहोमः । सचमंत्रःवाक्यद्वयंसंधायपठनीयः ।

द्विसींमतःसुरुचोंवेनआंवः॥सबुध्नियांउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः स्वाहा॥१॥ ॐ पिताविराजांमृषभोरंयीणामंत रिक्षंविश्वरूपआविवेश ॥ तमर्कैरभ्यर्चंतिवत्संब्रह्मसंतंब्रह्मणावर्धयंतः स्वाहा ॥ २॥ ॐ ब्रह्मदेवानजनयद्ब्रह्म विश्वमिदंजगत् ॥ ब्रह्मणःक्षत्रंनिर्मितंब्रह्मब्राह्मणआत्मनास्वाहा॥ ३॥ ॐ अंतरस्मिन्निमेलोकाअंतर्विश्वमिदंजगत्॥ ब्रह्मैवभूतानांज्येष्ठंतेनकोर्हति स्पर्धितुंस्वाहा ॥ ४ ॥ ॐ ब्रह्मन्देवास्त्रयस्त्रिंशद्ब्रह्मन्निंद्रप्रजापती ॥ ब्रह्मन्हविश्वाभूतानिनावीवांतःसमाहितास्वाहा॥५॥ ॐ चतस्रआशाःप्रचरंत्वग्नयइमंनोयज्ञंनयतुप्रजानन्॥घृतंपिन्वन्नजरंसुवीरंब्रह्मसमिद्भवत्याहुतीनांस्वाहा ॥६॥ एवमेवरुद्र सूक्तेनाज्यं॥ॐ परिणोरुद्रस्यहेतिर्वृणक्तुपरित्वेषस्यदुर्मतिरघायोः॥ अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृडयस्वाहा १ ॐ स्तुहिश्रुतंगर्तसदंयुवानंमृगंनभीममुपहत्नुमुग्रं ॥ मृडाजरित्रेरुद्रस्तवानोअन्यंतेअस्मन्निवपंतुसेनाःस्वाहा २ ॐ मीढुष्टम शिवतमशिवोनःसुमनाभव ॥ परमेवृक्षआयुधंनिधायकृत्तिंवसानआचरपिनाकंबिभ्रदागहिस्वाहा ३ ॐ अर्हन्बिभर्षिसायका निधन्वार्हन्निष्कंयजतंविश्वरूपं ॥ अर्हन्निदंदयसेविश्वमभ्भुवंनवाओजीयोरुद्रत्वदस्तिस्वाहा ४ ॐ त्वमग्नेरुद्रोअसुरोमहोदिव स्त्वंशर्धोमारुतंपृक्षईशिषे ॥ त्वंवातैररुणैर्यासिशंगयस्त्वंपूषाविधतःपासिनुत्मनास्वाहा ५ ॐ आवोराजानमध्वरस्यरुद्रंहो तारंसत्ययजंरोदस्योः॥ अग्निंपुरातनयित्नोरचित्ताद्धिरण्यरूपमवसेकृणुध्वंस्वाहा ६ ॥ अथायुष्यहोमंघृतसूक्तेनप्रत्यृचंजु हुयात्॥ ॐ योब्रह्माब्रह्मणउज्जभारप्राणैश्वरःकृत्तिवासाःपिनाकी॥ईशानोदेवःसनआयुर्दधातुतस्मैजुहोमिहविषाघृतेनस्वाहा१ ॐ विभ्राजमानःसरिरस्यमध्याद्रोचमानोघर्मरुचिर्यआगात्॥ समृत्युपाशानपनुद्यघोरानिहायुषेनोघृतमत्तुदेवःस्वाहा२ ॐ ब्रह्म ज्योतिर्ब्रह्मपत्नीषुगर्भंयमादधात्पुरुरूपंजयंतं ॥ सुवर्णरंभग्रहमर्कमर्च्यंतमायुषेवर्धयामोघृतेनस्वाहा ३ ॐ श्रियंलक्ष्मीमंबिकामो

पलांगांषष्ठींजयामिंद्रसेनेत्युदाहुः ॥ तांविद्यांब्रह्मयोनिꣳसरूपामिहायुषेतर्पयामोघृतेनस्वाहा ४ ॐदाक्षायण्यःसर्वयोन्यःसयोन्यःसहस्रशोविश्वरूपाविरूपाः ॥ ससूनवःसपतयःसयूथ्याआयुषेनोघृतमिदंजुषंताꣳस्वाहा ५ ॐदिव्यागणाबहुरूपाःपुराणाआयुश्छिदोनःप्रमथंतुवीरान् ॥ तेभ्योजुहोमिवहुधाघृतेनमानःप्रजाꣳरीरिषोमोतवीरान्स्वाहा ६ ॐएकःपुरस्ताद्यइदंवभूवयतोवभूवभुवनस्यगोपाः ॥ तमेष्यतिभुवनꣳसांपरायेसनोहविर्घृतमिहायुषेतुदेवःस्वाहा ७ ॐवसून्रुद्रानादित्यान्मरुतोथसाध्यानृभून्यक्षान्गंधर्वांश्चपितॄंश्चविश्वान् ॥ भृगून्त्सर्पाꣳश्चांगिरसोथसर्वान्घृतंहुत्वास्वायुष्यामहयामशश्वत्स्वाहा ८ ॥ अथनक्षत्रहोमः

कृत्तिकादिनक्षत्रदेवतानांमंत्रप्रतीकानि।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ | कृत्तिका | ॐअग्निर्नःपातुकृत्ति० | १० | उत्तरा | ॐश्रेष्ठोदेवानांभगवो० | १९ | उत्तराषा० | ॐतन्नोविश्वेउपशृण्वं० |
| २ | रोहिणी | ॐप्रजापतेरोहिणीवें० | ११ | हस्तः | ॐआयातुदेवःसवि० | २० | अभिजित् | ॐयस्मिन्ब्रह्माभ्यजं० |
| ३ | मृगः | ॐसोमोराजामृगशी० | १२ | चित्रा | ॐत्वष्टानक्षत्रमभ्येति० | २१ | श्रवणः | ॐशृण्वंतिश्रोणाम० |
| ४ | आर्द्रा | ॐआर्द्रयारुद्रःप्रथ० | १३ | स्वाती | ॐवायुर्नक्षत्रमभ्येति० | २२ | धनिष्ठा | ॐअष्टौदेवावसंव:० |
| ५ | पुनर्वसुः | ॐपुनर्नोदिव्यदिति० | १४ | विशाखा | ॐदूरमस्मच्छत्रवोयं० | २३ | शतभिषा | ॐक्षत्रस्यराजावरुणो० |
| ६ | पुष्यः | ॐबृहस्पतिःप्रथमं० | १५ | अनूराधा | ॐऋद्ध्यास्महव्यैर्नमं० | २४ | पूर्वाभा० | ॐअजएकपादुदगा० |
| ७ | आश्लेषा | ॐइदꣳसर्पेभ्योहवि० | १६ | ज्येष्ठा | ॐइंद्रोज्येष्ठामनुनक्ष० | २५ | उत्तराभा० | ॐअहिर्बुध्नियःप्र० |
| ८ | मघा | ॐउपहूताःपितरोये० | १७ | मूलं | ॐमूलंप्रजांवीरवतीं० | २६ | रेवती | ॐपूषारेवत्यन्वेतिपं० |
| ९ | पूर्वा | ॐगवांपतिःफल्गु० | १८ | पूर्वाषाढा | ॐयादिव्याआपःपय० | २७ | अश्विनी | ॐतदश्विनावश्वयु० |
| | | | | | | २८ | भरणी | ॐअपपाप्मानंभरणी० |

समिदन्नाज्यैःकार्यः ॥ यथा ॥ ॐ अग्निर्नःपातुकृत्तिकानक्षत्रंदेवमिंद्रियं ॥ इदमासांविचक्षणꣳहविरासंजुहोतन ॥ यस्यभांतिर
श्मयोयस्यकेतवोयस्येमाविश्वाभुवनानिसर्वा ॥ सकृत्तिकाभिरभिसंवसानोअग्निर्नोदेवःसुवितेदधातुस्वाहा ॥ १ ॥ ततस्तिलैः ॥
ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात्स्वाहेतिअष्टोत्तरशतंजुहुयात् ॥ इमंमेवरुणेत्या
दिराष्ट्रभृदंतंहुत्वाहुतशेषद्रव्येणस्विष्टकृतंजुहुयात् ॥ हव्यवाहमितिपुरोनुवाक्यामनूच्ययाज्ययाजुहोति ॥ ॐ (हव्यवाहमभि
मा० इतिपुरोनुवा० ॐ स्विष्टमग्नेअभि० इतियाज्या)॥ ततइध्मसंनहनाद्युत्तरपरिषेकांते दिक्पालेभ्यःसदीपमाषभक्तबलीन्संक
ल्प्ययजमानद्वाराकारयेत् ॥ अग्न्यायतनस्यसमंतात्पूर्वादिदिक्षुप्रादक्षिण्येनदिक्पालेभ्यःत्रातारमिंद्रमित्यादिभिर्मंत्रैर्बली
न्दद्यात् ॥ ततआदित्यादिस्थापितग्रहदेवताभ्यःपीठदेवताभ्यश्चतत्तन्मंत्रैस्तदुद्देशेनबलीन्समर्प्य ॥ ॐ क्षेत्रस्यपतिनावयꣳहिते
नेवजयामसि ॥ गामश्वंपोषयित्न्वासनोमृडातीदृशेइतिक्षेत्रपालायभूतप्रेतपिशाचशाकिनीडाकिनीवेतालपरिवारयुतायइमंब
लिमित्यादिसार्वभौतिकंबलिंदद्यात् ॥ ततःशूद्रादिनाबलिनयनेकृतेपृथिवीशांतिरितिप्रोक्ष्य ॥ ॐ पृथिवीशांतासाग्निनाशांता
सामेशांताशुचꣳशमयतु॥ अंतरिक्षꣳशांतंतद्वायुनाशांतंतन्मेशांतꣳशुचꣳशमयतु॥द्यौःशांतासादित्येनशांतासामेशांताशुचꣳ
शमयतु॥पृथिवीशांतिरंतरिक्षꣳशांतिर्द्यौःशांतिर्दिशःशांतिरवांतरदिशाःशांतिरग्निःशांतिर्वायुःशांतिरादित्यःशांतिश्चंद्रमाःशां
तिर्नक्षत्राणिशांतिरापःशांतिरोषधयःशांतिर्वनस्पतयःशांतिर्गौःशांतिरजाशांतिरश्वःशांतिःपुरुषःशांतिर्ब्रह्मशांतिर्ब्राह्मणःशां
तिःशांतिरेवशांतिःशांतिर्मेअस्तुशांतिः॥तयाहꣳशांत्यासर्वशांत्यामह्यंद्विपदेचतुष्पदेचशांतिंकरोमिशांतिर्मेअस्तुशांतिः॥एहश्री

१ बौधायनसूत्रस्थप्रधानमात्रग्रहणात्स्वसूत्रानुसारिस्विष्टकृतंजुहुयादित्येकंमतं ।

श्चह्रीश्चधृतिश्चतपोमेधाप्रतिष्ठाश्रद्धासत्यंधर्मश्चैतानिमोत्तिष्ठंतमनूत्तिष्ठंतुमामा॑श्रीश्चह्रीश्चधृतिश्चतपोमेधाप्रतिष्ठाश्रद्धासत्यंधर्म श्चैतानिमामाहासिषुः॥उदायुषास्वायुषोदोषधीना॑रसेनोत्पर्जन्यस्यशुष्मेणोदस्थाममृता॑अनु॥ तच्चक्षुर्देवहितंपुरस्ताच्छुक्रमुच्चरत्॥ पश्येमशरदः शतंजीवेमशरदःशतंनंदामशरदःशतंमोदामशरदःशतंभवामशरदःशत॑शृणवामशरदःशतंप्रब्रवामशरदः शतमजीताःस्यामशरदःशतंज्योक्चसूर्यंदृशे ॥ ५ ॥ यउदगान्महतोर्णवाद्विभ्राजमानःसरिरस्यमध्यात्समावृषभोलोहिताक्षः सूर्योविपश्चिन्मनसापुनातु ॥ ब्रह्मणश्चोतन्यसिब्रह्मणआणीस्थोब्रह्मणआवपनमसिधारितेयंपृथिवीब्रह्मणामहीधारितमेनेनम हदंतरिक्षंदिवंदाधारपृथिवी॑सदेवांयदहंवेदतदहंधारयाणिमामद्वेदोधिविस्रसत्॥ मेधामनीषेमाविशता॑समीचींभूतस्यभव्य स्यावरुध्यैसर्वमायुरयाणिसर्वमायुरयाणि ॥ आभिर्गीर्भिर्यदतोनऊनमाप्यायहरिवोवर्धमानः॥ यदास्तोतृभ्योमहिगोत्रारुजा सिभूयिष्ठभाजोअधतेस्याम॥ ब्रह्मप्रावादिष्मतन्नोमाहासीत्॥ ॐ॑शांतिःशांतिःशांतिः॥ इतिजप्त्वा सयजमानआचार्यःप्रक्षा लितपाणिपादआचांतःस्रुचिद्वादशगृहीतमष्टगृहीतंवाआज्यंगृहीत्वातदुपरिचंदनादिभूषितंफलंनिधाय ॐ सप्ततेअग्नेसमिधः० घृतेनस्वाहेतिपूर्णाहुतिंजुहुयात् ॥ ततःप्रणीताःपर्याहृत्येत्यादिपूर्णपात्रविमोकांतेआचार्योयजमानश्चसंस्थाजपेनोपस्थायाग्नेः पश्चात्सपत्नीकोयजमानउपविश्यविभूतिधारणंकुर्यात्॥ आचार्यायसवत्सांगांतदभावेयथाशक्तिसुवर्णंऋत्विग्भ्योयथाशक्तिद क्षिणांचदद्यात्॥ ततोदेवतानामुत्तरपूजांविधायविसर्जनांतेआचार्यहस्तेसोपस्करांप्रतिमांप्रतिपाद्य अग्निपूजांतेगच्छगच्छेत्यग्निं विसृज्यपुण्याहंवाचयेत्॥ कर्मांगदेवतामुद्दिश्यदशाधिकान्ब्राह्मणान्भोजयिष्येइतिसंकल्प्यभूयसींदक्षिणांदद्यात्॥ नीराजना दिशांतिपाठंब्राह्मणैःसहपठेत्॥ कर्मसंपूर्णमस्त्वितिवाचयित्वाप्रमादात्कुर्वतांकर्मेतिविष्णुंस्मरेत्॥ इतिसंस्का०ऋतुशांतिः॥

## ॥ १६ ॥ गर्भाधानम् ॥

श्रीः ॥ सपत्नीकोयजमानआचम्यप्राणानायम्यदेशकालौसंकीर्त्यअस्याःममभार्यायाःप्रतिगर्भसंस्कारातिशयद्वाराअस्यांजनिष्यमाणसर्वगर्भाणांबीजगर्भसमुद्भवैनोनिबर्हणद्वाराक्षेत्रसंस्कारद्वाराचाद्यगर्भाधानसंस्काराख्यंकर्मकरिष्ये ॥ तदंगभूतंगणपतिपूजनंस्वस्तिपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्ये ॥ इतिसंकल्प्यकुर्यात् ॥ अत्रनांदीश्राद्धेक्रतुदक्षसंज्ञकाविश्वेदेवाः ॥ ततःरात्रौकृतावश्यकक्रियआचम्यस्वलंकृतांस्वच्छवस्त्रपरिधानांभार्यांसम्यगास्तृतेपर्यंकेशयनार्थमुपह्वयतेनवभिर्मंत्रैः ॥ ॐ विष्णुर्योनिंकल्पयतुत्वष्टारूपाणिपिंशतु ॥ आसिंचतुप्रजापतिर्धातागर्भंदधातुते ॥ १ ॥ गर्भंधेहिसिनीवालिगर्भंधेहिसरस्वति ॥ गर्भंतेअश्विनावुभावाधत्तांपुष्करस्रजौ ॥ २ ॥ हिरण्ययीअरणीयंनिर्मंथतोअश्विना ॥ तंतेगर्भंहवामहेदशमास्यायसूतवे ॥ ॥ ३ ॥ यथाग्निगर्भापृथिवीद्यौर्यथेंद्रेणगर्भिणी ॥ वायुर्यथादिशांगर्भएवंगर्भंदधामिते ॥ ४ ॥ यस्ययोनिंप्रतिरेतोगृहाणपुमान्पुत्रोजायतांगर्भोअंतः ॥ तंमातादशमासोबिभर्तुसजायतांवीरतमःस्वानां ॥ ५ ॥ आतेगर्भोयोनिमेतुपुमान्बाणइवेषुधिं ॥ आवीरोअत्रजायतांपुत्रस्तेदशमास्यः ॥ ६ ॥ करोमितेप्राजापत्यमागर्भोयोनिमेतुते ॥ अनूनःपूर्णोजायतामनंधोश्लोणोपिशाचधीरः ॥ ७ ॥ यानिप्रभूणिवीर्याण्यृषभाजनयंतिनः ॥ तैस्त्वंगर्भिणीभवसजायतांवीरतमःस्वानां ॥ ८ ॥ योवशायांगर्भोयश्चवेहतींद्रस्तंनिदधेवनस्पतौ ॥ तेनत्वंगर्भिणीभवसाप्रसूर्धेनुगाभव ॥ ९ ॥ ततउपयच्छते ॥ सन्नास्नःसंहृदयानिसन्नाभिःसंत्वचः ॥ संत्वाकामस्ययोक्त्रेणयुंजान्यविमोचनायेति ॥ ततस्तांपर्यालिंगयति ॥ मामनुव्रताभवसहचर्यामयाभव ॥ यातेपतिघ्नीतनूर्जारघ्नींत्वेताकरोमिशिवात्वंमह्यमेधिक्षुरपविर्जारेभ्यःइति ॥ अथास्यैमुखेनमुखमीप्सते मधुहेमध्विदंमधुजिह्वामेमधुवा

दिनी ॥ मुखेमेसारघंमधुदत्सुसंवननंकृतं ॥ चाक्रवाकंसंवननंयन्नदीभ्यउदाहृतं ॥ यद्युक्तोदेवगंधर्वस्तेनसंवनिनौस्वकइति ॥ ततोमंत्रत्रयेणवारत्रयंरेतोवस्कंदनंकार्यं ॥ भूःप्रजापतिनात्यृषभेणस्कंदयामिवीरंधत्स्वासौ ॥ भुवःप्रजापतिनात्यृषभेणस्कंदयामिवीरंधत्स्वासौ ॥ सुवःप्रजापतिनात्यृषभेणस्कंदयामिवीरंधत्स्वासौ ॥ अधिकंचेत्तूष्णीमेवयथेच्छमवस्कंदयेत् ॥ अत्रमंत्रेषुसर्वत्रासाविवितिपदंपरित्यज्यसंबुद्ध्यासंस्कार्यायानामग्राह्यं ॥ क्षेत्रसंस्कारत्वात्सकृदयंसंस्कारःकार्यः ( आशीर्मंत्रः ॥ ॐनेष्टः पत्नीमुदानयेत्याहाग्नीदेवनेष्टरिरेतोदधातिनेष्टापत्नियामुद्गात्रासंख्यापयतिप्रजापतिर्वाएषयदुद्गाताप्रजानांप्रजननायापउपप्रवर्तयतिरेतएवतत्सिंचत्यूरुणोपप्रवर्तयत्यूरुणाहिरेतःसिच्यतेनग्नंकृत्योरुमुपप्रवर्तयतियदाहिनग्नऊरुर्भवत्यथमिथुनीभवतोथरेतःसिच्यतेथप्रजाःप्रजायंते ॥ ) ॥ इतिगर्भाधानप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १७ ॥ नारायणबलिः ॥

श्रीः ॥ एवंकृतेपिगर्भाधानेयदिगर्भोनोत्पद्यतेतदातत्प्रतिबंधकीभूतप्रेतनिवृत्त्यर्थंनारायणबलिनागबलीकार्यौ॥तत्रयद्यपिबौधायनसूत्रस्यैवयजुर्वेदिनामभ्यर्हितत्वेनग्राह्यत्वंतथापिनागबलिसूत्रस्येदानीमत्रानुपलंभाद्वाहृच्यएवनागबलिप्रयोगःप्रदर्श्यते ॥ बौधायनोक्तनारायणबलिविधिसत्वेपिसंनियोगशिष्टत्वाद्वाहृच्यएवोचितः॥बौधायनसूत्रोक्तरीत्याक्रियमाणेतुअर्धजरतीयन्यायआपद्येतेति॥ कर्ताशुक्लैकादश्यांनदीतीरादौशुचौदेशेस्नानादिनित्यक्रियांतेआचम्यप्राणानायम्यदेशकालौसंकीर्त्य मदीयकुलाभिवृद्धिप्रतिबंधकप्रेतस्यप्रेतत्वनिवृत्त्यर्थंनारायणबलिंकरिष्यइतिसंकल्प्य महीद्यौरित्यादिविधिनास्थापितकलशद्वयेसुवर्णनिर्मितप्रतिमयोर्विष्णुमावाहयामियममावाहयामीतिक्रमेणावाह्यपुरुषसूक्तेनयमायसोममितिचक्रमेणषोडशोपचारैःपूजयेत्

पूर्वतोदर्भेणतूष्णींलेखामुल्लिख्यतत्रदक्षिणाग्रान्कुशानास्तीर्यतेषु शुंधतांविष्णुरूपीप्रेतइतिदशसुस्थानेषुदक्षिणसंस्थमपोनिनीय मधुघृतप्लुतान्दशपिंडान्सतिलान् काश्यपगोत्रअमुकप्रेतविष्णुदैवतायंतेपिंडइतिदक्षिणामुखःप्राचीनावीतीदक्षिणाग्रेषुकुशेषुप राचीनेनपाणिनासव्यंजान्वाच्यविष्णुरूपंप्रेतंध्यायन्दद्यात् ॥ ततोगंधादिभिस्तानभ्यर्च्यप्रवाहणांतंकृत्वानद्यादौक्षिपेत् ॥ तस्या मेवरात्रौश्वःकरिष्यमाणश्राद्धेक्षणःक्रियतामित्येवंपंचत्रीनेकंवेत्येवमयुग्मान्ब्राह्मणान्श्राद्धोद्देशेननिमंत्र्योपोषणंकुर्यात् ॥ श्वो भूतेमध्याह्नेविष्णुमभ्यर्च्यप्रेतंविष्णुरूपिणमुद्दिश्यएकोद्दिष्टविधिनापादप्रक्षालनादितृप्तिप्रश्नांतंकृत्वा ब्राह्मणसमीपेपिंडपितृय ज्ञवदुल्लेखनाद्युदकनिनयनांतंतूष्णींकृत्वा विष्णवे ब्रह्मणे शिवाय सपरिवाराययमायच नाममंत्रैःविष्णो अयंतेपिंडइतिचतुरः पिंडान्दत्वा विष्णोअयंतेपिंडइतिविष्णुरूपप्रेतंध्यायन्पंचमंपिंडंचदत्वार्चनादिप्रवाहणांतंतूष्णींकृत्वा आचांतान्ब्राह्मणान्द क्षिणादिभिःसंतोष्यतेष्वेकस्मैगुणवतेप्रेतबुद्ध्यावस्त्राभरणगोहिरण्यादीनिदत्वा एकपक्षेतस्माएवदत्वा भवंतःप्रेतायतिलोदकां जलिदानंकुर्वंत्वितिब्राह्मणान्वदेत् ॥ तेचपवित्रपाणयःसकुशतिलतुलसीपत्रयुततोयांजलिं प्रेतायकाश्यपगोत्रायअमुकशर्मणे विष्णुरूपिणेयंतिलोदकांजलिरितिदद्युः ॥ ततोब्राह्मणान्वाचयेत् अनेननारायणबलिकर्मणाभगवान्विष्णुरिमंप्रेतंशुद्धमपाप हंकरोत्विति ॥ ततोविप्रास्तथास्त्वितिप्रत्यूचुः ॥ ततःकर्तास्नात्वाभुंजीतेति॥ इतिसंस्काररत्नमालायांनारायणबलिः ॥ ॥छ॥

## ॥ ९८ ॥ नागबलिः ॥

श्रीः ॥ गुरुशुक्रास्तादिरहितेकालेअयनद्वयेपौर्णमास्याममावास्यायांपंचम्यामाश्लेषायुक्तदिनेवाकुर्यात् ॥ तत्राधिकारार्थंचतुर्द शकृच्छ्रात्मकंप्रायश्चित्तंचरेत् ॥ यथा ॥ उक्तदिनात्पूर्वेद्युस्तदहरेववासमस्तसंपदितिपर्षदंप्रदक्षिणीकृत्यनत्वागोवृषनिष्क्रयंनि

ष्कत्रयंनिष्कद्वयंनिष्कंवापापतारतम्येनपर्षदग्रेनिधाय अनुमत्यादिकर्तृत्वेनिष्कमर्धंतदर्धंवाशक्त्यनुसारेणनिधाय ॥ अमुकशर्मणामयाइहजन्मनिजन्मांतरेवाज्ञानादज्ञानाद्वाकृतेनसर्पवधेनजनितस्यदोषस्यपरिहारार्थंअनुग्रहंकृत्वाप्रायश्चित्तमुपदिशंतुभवंतः इतिप्रार्थयेत् ॥ तेचउपदिशामइतिप्रतिब्रूयुः ॥ ततः कर्तासर्वेधर्मविवेक्तारइतिश्लोकान्पठित्वामामनुगृह्णंतुभवंतइतिप्रणमेत् ॥ तैश्चतुर्दशकृच्छ्रप्रायश्चित्तेनामुकप्रत्याम्नायद्वारापूर्वोत्तरांगसहितेनाचरितेनतवशुद्धिर्भविष्यतीत्युपदिष्टोदेशकालौसंकीर्त्यपर्षदुपदिष्टंचतुर्दशकृच्छ्रप्रायश्चित्तंयथोक्तप्रत्याम्नायेनाचरिष्येइतिसंकल्पपूर्वकंवपनादिविधिनातदाचरेत् ॥ वपनासंभवेद्विगुणः कृच्छ्रप्रत्याम्नायः ॥ पूर्वोच्चरितएवंगुणविशिष्टायांपुण्यतिथौममसर्पवधदोषपरिहारार्थंब्राह्मणायलोहदंडदानंतन्मूल्यदानंवाकरिष्यइतिसंकल्प्यब्राह्मणंसंपूज्यस्वस्त्यस्तु इमंलोहदंडंसर्पवधदोषहरंसदक्षिणंअमुकगोत्रायामुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे प्रतिगृह्यतां ॥ देवस्यत्वासवितुः० प्रतिगृह्णामीतिविप्रः ॥ ततोदशदानान्यपिकुर्यात् ॥ इत्थंपूर्वदिनेविधायउक्तदिनेसर्पसंस्कारंकुर्यात् ॥ कर्ताप्रातःकृतनित्यक्रियःसंभृतसंभारःपुण्यतीर्थादिप्रशस्तदेशंगत्वासपत्नीकःपरिहितधौतवासाःप्राणानायम्यगुर्वाज्ञांलब्ध्वामिश्रितैःप्रियंगुव्रीहिगोधूमतिलपिष्टैरेतदन्यतमपिष्टेनवासर्पाकृतिंकृत्वाशूर्पेनिधायसर्पंप्रार्थयेत् ॥ एहिपूर्वमृतःसर्पअस्मिन्पिष्टेसमाविश ॥ संस्कारार्थमहंभक्त्याप्रार्थयामिसमाहितः ॥ ततः ॥ भुजंगेशायविद्महेसर्पजातायधीमहि ॥ तन्नोनागःप्रचोदयादितिभुजंगगायत्र्याऽऽवाहनादिषोडशोपचारैःपूजांकृत्वापुष्पांजलिंदत्वाप्रणिपत्यभोसर्पइमंबलिंगृहाणममाभ्युदयंकुरु इतिपायसादिनाबलिंसमर्प्यहस्तौपादौप्रक्षाल्याचामेत् ॥ ततःशुद्धभूमौस्थित्वाप्राणानायम्यसंकल्पंकुर्यात् ॥ सभार्यस्यममेहज

१ सर्वप्रायश्चित्तप्रयोगोमेंत्यप्रकरणारंभेदशदानादीन्यपिवक्ष्यंते ।

न्मनिजन्मांतरेवाज्ञानादज्ञानाद्वाकृतेनसर्पवधेनजनितस्यदोषस्यपरिहारार्थंसर्पसंस्कारकर्मंकरिष्येइतिसंकल्प्य उल्लेखनादिसं स्कृतेदेशेलौकिकाग्निंप्रतिष्ठाप्यप्रज्वाल्यसमित्त्रयमादाय श्रद्धएहीत्यादिप्राणायामांतंकृत्वासर्पसंस्कारहोमकर्मणियायक्ष्यमाणा इत्यादिप्रसाधनीदेव्यंतंव्याहृत्यंतंवोक्त्वा प्रधानहोमेअग्नौअग्निंवायुंसूर्यंचैकैकयाज्याहुत्यायक्ष्ये सर्पमुखेसमस्तव्याहृतिभिःप्रजा पतिमेकयाज्याहुत्यायक्ष्येइत्युक्त्वासमिधोग्नावाधायाग्नेराग्नेय्यांदिशिभूमिंप्रोक्ष्यतत्रचितिंकृत्वाग्निंचितिंचतूष्णींपरिषिच्यदक्षि णाप्रागग्रैर्दर्भैःपरिस्तीर्यअग्नेरुत्तरतोदर्भानास्तीर्यतत्रपात्राण्यासादयेत् दर्वीं आज्यस्थालीं प्रोक्षणीपात्रं उपवेषं इध्मं बर्हिः संमार्ग दर्भान् अवज्वलनदर्भान् आज्यमित्यासाद्यपवित्रेकृत्वाप्रोक्षणीःसंस्कृत्यपात्राणिप्रोक्ष्यदर्वींसंमृज्याज्यंसंस्कृत्यपरिधीन्परिधा यअदितइतिपरिषिच्यइध्मंमंत्रेणाभ्याधायआघारादिअन्वाधानोत्कीर्तनानुसारेणप्रसाधनीदेवीहोमांतंव्याहृतिहोमांतंवाकुर्या त्॥ततःसर्पंगृहीत्वाचित्यामारोप्यापःस्पृष्ट्वाश्रोत्रंचस्पृष्ट्वापउपस्पृश्यअग्निसमीपमेत्यप्रधानहोमंकुर्यात्ॐभूःस्वाहा अग्नयइदं॥ॐ भुवःस्वाहा वायवइदं ॥ ॐसुवःस्वाहा सूर्यायेदं॥इतिदर्व्याग्नौव्याहृतिभिराज्येनाहुतित्रयंजुहुयात् ॥ॐभूर्भुवःसुवःस्वाहाइति चतुर्थींसर्पमुखेजुहुयात् प्रजापतयइदं ॥ ऋष्यादिस्मरणंपूर्ववत्व्यस्तानांव्याहृतीनांहोमेविनियोगः समस्तव्याहृतीनांसर्पमुखेआ ज्यहोमेविनियोगःइतिविनियोगवाक्ये ॥ आज्यशेषंदर्व्यैवसर्पदेहेनिषिंचेत् ॥ ततःसमस्तव्याहृतीनांप्रजापतिःप्रजापतिर्बृहतीअ भ्युक्षणेवि०॥ हस्तगृहीतैश्चमसजलैःसमस्तव्याहृतिभिःपाणिनाभ्युक्ष्य ॥ अग्नेरक्षाणइत्यस्यविश्वेदेवारक्षोहाग्निर्गायत्रीचितावग्नि प्रक्षेपेवि० ॥ अग्नेरक्षाणोअंहसः प्रतिष्मदेवरीषतः ॥ तपिष्ठैरजरोदह ॥ इतिआयतनस्थमग्निंसर्वंचितौप्रक्षिपेत् ॥ ततोदर्वींपरि धीन्पात्राणिबर्हिश्चाग्नौप्रहृत्यतमग्निंप्रदक्षिणीकृत्यसर्पंनमस्कृत्यसर्पक्षमस्वेतिक्षमाप्यउपस्थानंकुर्यात् ॥ नमोअस्तुसर्पेभ्यइतिमं

न्त्रयस्याग्निःसर्पागायत्रीसर्पोपस्थानेवि०॥ॐनमोअस्तुसर्पेभ्योयेकेचपृथिवीमनु ॥ येअंतरिक्षेयेदिवितेभ्यःसर्पेभ्योनमः ॥ येदो रोचनेदिवोयेवासूर्यस्यरश्मिषु ॥ येषामप्सुसदःकृतंतेभ्यःसर्पे० ॥ याइषवोयातुधानानांयेवावनस्पतीँरनु ॥ येवावटेषुशेरंतेते भ्यःसर्पेभ्योनमः ॥ इतित्रिभिर्मंत्रैरुपतिष्ठते ॥ ज्ञानतोज्ञानतोवापिकृतःसर्पवधोमया ॥ पूर्वजन्मनिवासर्पतत्सर्वंत्वंक्षमस्वमे ॥ इतिप्रार्थयेत् ॥ ततःपौराणमंत्राः ॥ कर्कोटकनमस्तेस्तुशंखपालनमोस्तुते ॥ नागराजमहादेवदिव्यरूपायतेनमः ॥ अफणाः फणिनोयेचसविषानिर्विषाश्चये ॥ सर्वेवटेशयाःसर्पाःपुण्यमूर्तेनमोस्तुते ॥ त्वयेयंजगतीस्वामिन्स्वफणामंडलोपरि ॥ धृतैक देशेह्यणुवत्तस्मैतुभ्यंनमोनमः ॥ त्वयाभगवतेश्रीमद्वासुदेवायनिर्मितं ॥ स्वभोगेनैवपर्यंकमायतंभोगिनांवर ॥ इतिदह्यमानं सर्पमुपस्थाय ॥ त्राहित्राहिमहाभोगिन्सर्पोपद्रवदुःखतः ॥ संततिंदेहिमेपुण्यांनिर्दुष्टांदीर्घदेहिनीम् ॥ प्रपन्नंपाहिमांभक्त्याकृ पालोदीनवत्सल ॥ ज्ञानतोऽज्ञानतोवापिकृतःसर्पवधोमया ॥ जन्मांतरेतथैतस्मिन्मत्पूर्वैरथवाविभो ॥ तत्पापंनाशयक्षिप्रम पराधंक्षमस्वमे ॥ इतिप्रार्थ्यसचैलंस्नात्वाग्निसमीपमागत्यसमस्तव्याहृतीनांप्र० बृहती चित्यग्निप्रोक्षणेवि० ॥ ॐभूर्भुवःसुवरिति क्षीराज्येनाग्निंसंप्रोक्ष्यसर्पेहुतेजलेनतंशमयित्वाजलेप्रवाहयेत् ॥ नात्रास्थिसंचयनं ॥ ततःस्नात्वाचम्यगृहंव्रजेत् ॥ कर्ता सभार्यस्त्रिरात्रमाशौचंब्रह्मचर्यंचकुर्यात् ॥ बौधायनमतेत्वेकाहमाशौचमितिग्रंथकृतः ॥ अत्रकर्तुरेवाशौचं ॥ अस्मिन्कर्मणिनि प्राचीनावीतं ॥ ततश्चतुर्थेहनिएकाहपक्षेत्वपरेद्युःप्रातःसचैलंस्नातःकृतनित्यक्रियःसुस्नातानष्टौब्राह्मणानाहूय ॥ सर्पस्थानेक्ष णःक्रियतां ॥ ॐतथा ॥ प्राप्नोतुभवान् ॥ प्राप्नवानि ॥ एवमग्रेपि अनंतस्थाने० शेषस्थाने० कपिलस्थाने० नागस्थाने० कालिकस्थाने० शंखपालस्थाने० भूधरस्थाने०इतिक्षणंदत्वाचतुरस्रमंडलोपरिगंधाक्षतयुतजलेनएतैरेवनामभिःपाद्यंदद्यात् ॥

सर्पइदंपाद्यमित्यादि ॥ ततस्तेषुआचांतेषुस्वयमाचम्ययथाक्रमंप्राङ्मुखानुदक्संस्थानुपवेश्य भूर्भुवःसुवःसर्पइदमासनंआस्यता मित्यादिसर्वत्रदर्भद्वयरूपमेवासनंदत्वादर्भद्वयांतर्हितेष्वष्टसुपात्रेष्वपआसिच्यगायत्र्यायुगपदभिमंत्र्यतूष्णींयवान्गंधंपुष्पंच प्रक्षिप्यस्वाहार्घ्याइतिनिवेद्यसर्पइदंतेर्घ्यइतिअर्घ्योदकंदेवतीर्थेनदद्यात् ॥ एवंअनंतेदमर्घ्यमित्यादि॥सर्पएषतेगंधःअनंतएषतेगं धइत्यादि ॥ सर्पइमानिपुष्पाणिइत्यादि ॥ सर्पएषधूपइत्यादि ॥ सर्पएषदीपइत्यादि ॥ सर्पइदंवस्त्रमित्यादि ॥ ततःपात्रेषुअन्ना दिपरिविष्यपरिवेष्यवागायत्र्याप्रोक्ष्यकुशयवजलंगृहीत्वासर्पायइदमन्नंपरिविष्टंपरिवेक्ष्यमाणंचआतृप्तेर्दास्यमानंस्वाहासंपद्यतां नमम ॥ एवमनंतादिभ्यः ॥ ब्रह्मार्पणं० ॥ येषामन्नमुद्दिष्टंतेषामक्षय्यातृप्तिरस्तु ॥ अनेनब्राह्मणभोजनेनसर्पादयःप्रीयंतांन मम ॥ इतिसकुशयवजलमुत्सृजेत् ॥ ततोब्राह्मणाभुंजीरन् ॥ नात्रबलिदाननिषेधः ॥ ततःकर्ताआचांतेषुविप्रेषुप्रागग्रान्दर्भा न्संस्तीर्यतेषुदुग्धमिश्रौदनेनसर्पायइमंबलिंसमर्पयामि अनंतायइमंबलिमित्यादिपिंडरूपान्बलीन्दद्यात् ॥ ततोबलीन्गंधपुष्पव स्त्रादिभिःपूजयेत् ॥ ततोब्राह्मणेभ्यःतांबूलसुवर्णादिदक्षिणादानं ॥ ततस्तान्क्षमाप्यप्रणम्यानुव्रज्यअप्रतीक्षमेत्यसुवर्णनाग दानंकुर्यात् ॥ आचार्यसंपूज्यमहीद्यौरित्यादिविधिनास्थापितकलशोपरितनपूर्णपात्रेस्वर्णनागमावाहनादिषोडशोपचारैःसंपूज्य प्रार्थयेत् ॥ ब्रह्मलोकेचयेसर्पाःशेषनागपुरोगमाः ॥ नमोस्तुतेभ्यःसुप्रीताःप्रसन्नाःसंतुमेसदा ॥ विष्णुलोकेचयेसर्पावासुकिप्र मुखाश्चये ॥ नमोस्तुतेभ्यः० ॥ रुद्रलोकेचयेसर्पास्तक्षकप्रमुखास्तथा ॥ नमोस्तुतेभ्यः० ॥ खांडवस्यतथादाहेस्वर्गंयेचसमा श्रिताः ॥ नमोस्तुतेभ्यः० ॥ सर्पसत्रेचयेसर्पाआस्तिकेनाभिरक्षिताः ॥ नमोस्तुतेभ्यः० ॥ मलयेचैवयेसर्पाःकर्कोटप्रमुखाश्चये ॥ नमोस्तुतेभ्यः० ॥ धर्मलोकेचयेसर्पावैतरण्यांसमाश्रिताः ॥ नमोस्तुतेभ्यः० ॥ समुद्रेचैवयेसर्पाःपातालेचैवसंस्थिताः ॥ नमो

स्तुतेभ्यः० ॥ येसर्पाःपर्वतीयेषुदरीसंधिषुसंस्थिताः ॥ नमोस्तुतेभ्यः० ॥ ग्रामेवायदिवारण्येयेसर्पाःप्रचरंतिहि ॥ नमोस्तुते भ्यः० ॥ पृथिव्यांचैवयेसर्पायेसर्पाबिलसंस्थिताः ॥ नमोस्तुतेभ्यः० ॥ रसातलेचयेसर्पाअनंताद्यामहाबलाः ॥ नमोस्तु० ॥ एवंस्तुत्वादेशकालौसंकीर्त्यकृतस्यसर्पसंस्कारकर्मणःसांगतासिद्ध्यर्थंइमंसुवर्णनागंसकलशंसवस्त्रंसदक्षिणंतुभ्यमहंसंप्रददेनमम इतिदत्वा॥अनेनस्वर्णनागदानेनअनंतादयोनागाःप्रीयंतां॥ततआचार्यायगोदानंदेयं॥ गांआचार्यंचसंपूज्यइमांसवत्सांकृष्णां गांसुवर्णशृंगींरौप्यखुरांताम्रपृष्ठांकांस्यदोहांसवस्त्रांसदक्षिणांवृषभयुतांतुभ्यमहंसंप्रददेइत्याचार्यायदद्यात् ॥ अनेनानंतादयः प्रीयंतामितिवदेत् ॥ गोरभावेमूल्यंदेयं ॥ ततआचार्यःशुद्धोदकेनसकुटुंबंयजमानमभिषिंचेत् ॥ ततःकर्तामयायत्कृतंकर्मत त्सर्वमच्छिद्रमस्त्वितिभवंतोब्रुवंतुइतिप्रार्थ्यअच्छिद्रमस्त्वितितैःप्रत्युक्तेकृतस्यकर्मणःसांगतासिद्ध्येब्राह्मणभोजनंभूयसीदानंच विधाययस्यस्मृत्या०प्रमादादितिविष्णुंसंस्मृत्यअनेनसर्पसंस्काराख्येनकर्मणासर्पाधिनाथोनंतःप्रीयतामितिवदेत् ॥ ततःसुहृद्यु तोभोजनंकुर्यात् ॥ जीवत्पितृकस्यनारायणबलिनागबलीनभवतः ॥ इतिसंस्काररत्नमालायांनागबलिप्रयोगः ॥ ॥ छ ॥

## ॥ ९९ ॥ दत्तपुत्रविधानम् ॥

श्रीः ॥ पूर्वेद्युःकृतोपवासःवाससीकुंडलेअंगुलीयकंछत्रंउष्णीषंआचार्यंधर्मसंयुक्तंवेदपारगंकुशमयंबर्हिःपर्णमयमिध्मंअन्यांहोम सामग्रींचसंपाद्यशिष्टान्इष्टान्ज्ञातीन्बंधूंश्चाहूयतान्संपूज्यतत्समक्षंराज्ञिसभासत्सुचनिवेद्यतैरनुज्ञातःपवित्रपाणिराचम्यप्राणा नायम्यदेशकालौसंकीर्त्यममाप्रजत्वप्रयुक्तपैतृकर्णापाकरणपुंनामनरकत्राणसिद्धिद्वाराश्रीपरमे० पुत्रप्रतिग्रहंकरिष्यइतिसं कल्प्यतदंगत्वेनगणपतिंसंपूज्यबंधुवर्गेभ्योब्राह्मणेभ्यश्चान्नदानंकृत्वापुण्याहवाचनमातृकापूजननांदीश्राद्धाचार्यवरणमधुपर्का

र्हणानिकुर्यात् ॥ पुत्रप्रतिग्रहांगभूतहोमार्थमाचार्यत्वामहंवृणइतिआचार्यवरणवाक्येविशेषः ॥ स्त्रीकर्तृकप्रतिग्रहेतुमद्भर्तुर्मम
चेतिसंकल्पवाक्येविशेषः ॥ गणपतिपूजनाद्याचार्यवरणांतमन्येनकारयेत् ॥ ततआचार्यआचम्यप्राणानायम्यउल्लेखनादिसं
स्कारंविधायतत्रबलवर्धननामानंलौकिकमग्निंप्रतिष्ठाप्यप्रज्वाल्यध्यात्वासमित्त्रयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वापुत्र
प्रतिग्रहांगभूतहोमकर्मणियायक्ष्यमाणादेवताइत्यादिप्रसाधनीदेव्यंतंव्याहृत्यंतंवोक्त्वावैशेषिकप्रधानहोमेअग्निंचर्वाहुत्यायक्ष्ये
अग्निंवायुंसूर्यंप्रजापतिंचैकैकयाज्याहुत्यायक्ष्येअग्निंस्विष्टकृतंचरुशेषाहुत्यायक्ष्येइत्यादि अंगहोमेवरुणंद्वाभ्यामित्यादिवा॥पा
त्रासादनेस्रुवंदर्वीआज्यस्थालींप्रणीताप्रणयनंप्रोक्षणीपात्रंचरुस्थालींमेक्षणंशूर्पंकृष्णाजिनंउलूखलंमुसलंउपवेषंवासोद्वयंकुंडले
अंगुलीयकेछत्रंउष्णीषंसंमार्गदर्भानवज्वलनदर्भान्पर्णमयमेवेध्मंकुशमयमेवबर्हिराज्यंचसहैवासादयेत् ॥ ततःपवित्रकरणादिप्र
णीताप्रणयनांतंकृत्वाविरमति ॥ ततःप्रतिग्रहीताब्राह्मणैर्बंधुवर्गैश्चसहदातुःसमक्षंगत्वातत्समीपेतिष्ठन्पुत्रंमेदेहीतिभिक्षेत् ॥
ततोदातादादामीत्युक्त्वाचम्यप्राणानायम्यदेशकालौसंकीर्त्यश्रीपरमेश्वरप्रीत्यर्थंपुत्रदानमहंकरिष्येइतिसंकल्प्यगणपतिंसंपूज्य
यथाविभवंवस्त्रगंधादिभिःप्रतिग्रहीतारंसंपूज्यइमंपुत्रंतवपैतृकर्णापाकरणपुंनामनरकत्राणसिद्ध्यर्थंआत्मनश्चश्रीपरमे० तुभ्यमहं
संप्रददेनममप्रतिगृह्णातुपुत्रंभवान्इत्यंतेप्रतिग्रहीतृहस्तेसाक्षतंसतुलसीपत्रंजलंक्षिपेत्त्रिरितिकेचित् ॥ स्त्रियैदानेतुइमंपुत्रंत्व
द्भर्तुस्तवचेतिदानवाक्येदात्रोहःकार्यः ॥ ततःप्रतिग्रहीतादेवस्यत्वासवितुः० हस्ताभ्यांधर्मायत्वागृह्णामिसंतत्यैत्वागृह्णामिइति
हस्तद्वयेनप्रतिगृह्यस्वांकउपवेश्यमूर्ध्न्याजिघ्रेत् ॥ ततः ॥ युवंवस्त्राणिपीवसा० सचेथेइत्यासादितयोर्वाससोर्मध्येएकंपरिधाप्यै
तेनैवमंत्रेणद्वितीयमुत्तरीयंकारयित्वातूष्णीमुष्णीषंबध्वाकुंकुमादिनातिलकंकृत्वाकुंडलाभ्यामंगुलीयकेनचालंकृत्यसतिविभवे

न्यैरपिभूषयित्वाछत्रेणाच्छादितंबालंनृत्यगीतवाद्यैःस्वस्तिनइंद्रोवृद्ध० अष्टौदेवावसवः० इतिद्वाभ्यांस्वगृहमानीयहस्तपादान्प्रक्षाल्याचम्याग्नेःपश्चान्मातुरुत्संगउपवेशयेत् ॥ ततआचार्यःशूर्पेचतुरोमुष्टीन्निरुप्येत्यादिचरुकल्पेनचरुंश्रपयित्वाभिघार्योद्वास्य परिषेकादिअन्वाधानोत्कीर्तनानुसारेणप्रसाधनीदेवीहोमांतंव्याहृतिहोमांतंवाकृत्वाप्रधानहोमंकुर्यात् ॥ दर्व्यांस्रुवेणोपस्तीर्यचरुमवदानविधिनामेक्षणेनैवद्विरवदायावत्तमभिघार्यशिष्टंहविःप्रत्यज्य यस्त्वाहृदाकीरिणा० मन्यमानइतिपुरोनुवाक्यामनूच्ययस्मैत्वंसुकृतेजातवेद० नशतेस्वस्तिस्वाहाइतियाज्ययाजुहोति ॥अग्नयइदं॥ अथवाग्निद्वयसंसर्गोक्तेनपुरोनुवाक्यायाज्याधर्मेणहोमः॥ततआज्येनव्यस्तसमस्तव्याहृतिभिश्चतस्रआज्याहुतीर्जुहुयात् ॥ ततःस्विष्टकृदादिअंगहोमादिवाहोमशेषंसमाप्याचार्यायधेनुंपुत्रधृते एववाससीकुंडलेअंगुलीयकंचपुत्रधृतंदद्यात् ॥ ततोदशत्रीन्वाब्राह्मणान्भोजयेत् ॥ ततोग्निंसंपूज्यकर्मणःसंपूर्णतांवाचयित्वाकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ एवंदत्तपुत्र्याअपिस्वीकारउक्तविधिनाकार्यः ॥ दानपरिग्रहविधिषूद्देश्यगतपुंस्त्वाविवक्षणात्इतिहासपुराणेषुकुंत्यादीनांदत्तकत्वोक्तेश्च ॥ इतिबौधायनोक्तःपुत्रप्रतिग्रहविधिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १०० ॥ पुंसवनप्रयोगः ॥

श्रीः ॥ तृतीयेमासिशुक्लपक्षेपुनर्वसुपुष्याभिजिद्धस्तप्रोष्ठपादनूराधाश्विनीमूलश्रवणरेवतीरोहिणीमृगसंज्ञकान्यतमेपुंनक्षत्रेचंद्रानुकूल्येपुंसवनंकार्यं ॥ कर्ताकृतनित्यक्रियःप्राङ्मुखउपविश्यदक्षिणतोभार्यांचोपवेश्याचम्यप्राणानायम्यदेशकालौसंकीर्त्य ममास्यांभार्यायांविद्यमानगर्भस्यपुंस्त्वप्रतिपादनद्वाराबीजगर्भसमुद्भवैनोनिबर्हणद्वाराक्षेत्रसंस्कारद्वाराचश्रीपरमेश्वरप्रीत्यर्थंपुंसवनाख्यंकर्मकरिष्ये ॥ तदंगंगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्येइतिसंकल्प्यपूर्वोक्तरीत्यातानि

कुर्यात् ॥ ततःपुंसवनांगमुद्धननादिकरिष्येइतिसंकल्प्य ॥ शर्करास्थ्यादिरहितंहस्तमात्रायतंपंचप्रस्थमितसिकतादिनिर्मितं चतुरंगुलोच्छ्रायंसमचतुरस्रंप्रागुदग्वाप्रवणंसमंवास्थंडिलंहस्तमात्रंबाहुमात्रंवाविधायाभ्रिमादायतूष्णीमुद्धत्यसमंत्रंवाचारात् ॐउद्धन्यमानमस्याअमेध्यं ॥ अपपाप्मानंयजमानस्यहंतु ॥ शिवानःसंतुप्रदिशश्चतस्रः ॥ शंनोमातापृथिवीतोकसाता ॥ प्रागादिक्रमेणोद्धत्य ॥ ततस्तिस्रःप्राचीस्तिस्रउदीचीरेखाःकृत्वा ॥ ( रेखासाधनमुत्तरतःस्थंडिलेनिधाय ) ॐशंनोदेवीरभिष्टय आपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ इतिकृत्स्नमक्ष्यायतनंन्युब्जेनपाणिनाऽऽचारादवोक्ष्य(शकलमाग्नेय्यांनिरस्यापउप स्पृश्य )॥ ततःप्रागारभ्यैंद्राद्यष्टौलोकपालानावाहयति ॥ इंद्रायनमःअग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० सोमाय० ईशानायनमःइति ॥ मध्ये ॥ ॐवैश्वानरस्यरूपं ॥ पृथिव्यांपरिस्रसा ॥ स्योनमाविशंतुनः ॥ ॐभूर्भुवःसुवरों ३ ॥ पवमान नामानमग्निंप्रतिष्ठापयामीतिप्रतिष्ठाप्यप्रोक्षितेंधनानिनिक्षिप्यवेणुधमन्याप्रबोध्यध्यायेत् ॥( यत्राग्निमुपसमाधायेतिसूत्रकृदाह तत्रउद्धननाद्यग्निप्रतिष्ठांतोविधिरितिवृत्तिकृत् ॥ अन्यत्रायतनेपरिसमूहनपरिस्तरणादिकृत्वाकर्मकार्यं ॥ ) प्रज्वाल्यसमित्र यमादायश्रद्धए३ हिसत्येनत्वाह्वयामि ॥ इतित्रिरुच्चार्य ॥ ॐयाःपुरस्तात्प्रस्रवंत्युपरिष्टात्सर्वतश्चयाः ॥ ताभीरश्मिपवित्राभिःश्र द्धांयज्ञमारभे ॥ आकूत्यैत्वाकामायत्वासमृधेत्वा ॥ पुरोदधेअमृतत्वायजीवसे ॥ आकूतिमस्यावसेकाममस्यसमृध्यै ॥ इंद्रस्ययुं जतेधियः ॥ आकूतिंदेवींमनसःपुरोदधेयज्ञस्यमातासुहवामेअस्तु ॥ यदिच्छामिमनसासकामोविदेयमेनद्धृदयेनिविष्टं ॥ इति हृदयालंभः ॥ उदकस्पर्शः ॥ प्राणायामः ॥ पुंसवनहोमकर्मणियायक्ष्यमाणादेवतास्ताःसर्वाःपरिग्रहीष्यामि ॥ जातवेदसमग्निमि ध्मेन ॥ आघारहोमे ॥ प्रजापतिंमनुमिंद्रंचाज्येन ॥ आज्यभागहोमे ॥ अग्निंसोमंचाज्येन ॥ सामान्यप्रधानहोमे ॥ अग्निंजातवे

दस१ँस१ँराधनींस१ँराधनींदेवींप्रसाधनींदेवींव्याहृतीनामग्निंवायुंसूर्यंप्रजापतिंचाज्येन॥ वैशेषिकप्रधानहोमे॥धातारंचतुराज्येन॥ अंगहोमे॥ वरुणंद्विःअग्नीवरुणौद्विःअयासमग्निंप्रजापतिंचाज्येन॥जयहोमे॥चित्तं चित्तिं आकूतं आकूतिं विज्ञातं विज्ञानं मनः शक्करीः दर्शं पूर्णमासं बृहत् रथंतरं प्रजापतिं चाज्येन ॥ अभ्यातानहोमे ॥ अग्निंभूतानामधिपतिं इंद्रंज्येष्ठानामधिपतिं यमंपृथिव्याअधिपतिं वायुमंतरिक्षस्याधिपतिं सूर्यंदिवोधिपतिं चंद्रमसंनक्षत्राणामधिपतिं बृहस्पतिंब्रह्मणोधिपतिं मित्रंसत्यानामधिपतिं वरुणमपामधिपतिं समुद्रंस्रोत्यानामधिपतिं अन्न१ँसाम्राज्यानामधिपति सोममोषधीनामधिपतिं सवितारंप्रसवानामधिपतिं रुद्रंपशूनामधिपतिं ॥ उदकस्पर्शः ॥ त्वष्टारंरूपाणामधिपतिं विष्णुंपर्वतानामधिपतिं मरुतोगणानामधिपतीन् ॥ प्राचीनावीती ॥ पितॄन्पितामहान्परानवरांश्चप्रत्येकमाज्येन ॥ यज्ञोपवीत्यपउपस्पृश्य ॥ राष्ट्रभृद्धोमे ॥ अग्निंगंधर्वं ओषधीरप्सरसः सूर्यंगंधर्वं मरीचीरप्सरसः चंद्रमसंगंधर्वं नक्षत्राण्यप्सरसः यज्ञंगंधर्वं दक्षिणाअप्सरसः मनोगंधर्वं ऋक्सामान्यप्सरसः वातंगंधर्वं अपोप्सरसः भुवनस्यपतिंमृत्युंगंधर्वं विश्वमप्सरसः पर्जन्यंगंधर्वं विद्युतोप्सरसः अमृडयंमृत्युंगंधर्वं प्रजाअप्सरसः कामंगंधर्वं आधीरप्सरसः भुवनस्यपतिं प्रत्येकमाज्येन ॥ स्विष्टकृद्धोमे ॥ अग्नि१ँस्विष्टकृतं हुतशेषेण ॥ प्रायश्चित्तहोमे ॥ अग्निंत्रिः अग्नीवरुणौद्विः इंद्रंद्विः त्र्यंबकं विष्णुं अग्निं वायुं सूर्यं बृहस्पतिं वरुणं इंद्रं विश्वान्देवान् प्रत्येकमाज्येन ॥ स१ँस्रावहोमे ॥ वसून्रुद्रानादित्यान्तस१ँस्रावाज्येन ॥ एतादेवताःसद्योयक्ष्ये ॥ ॐभूर्भुवःसुवःस्वाहा ॥ अन्वाधानसमिधोग्नावाधाय ॥ प्रजापतयइदंनममेतित्यागः ॥ ॐएषहिदेवःप्रदिशोनुसर्वाःपूर्वोहिजातःसउगर्भेअंतः ॥ सविजायमानःसजनिष्यमाणःप्रत्यङ्मुखास्तिष्ठतिविश्वतोमुखः ॥ इत्यग्निमाचारात्संमुखीकृत्य ॥ ॐयथाहुतद्वसवोगौर्यैचित्पदिषिताममुंचतायजत्राः ॥ एवात्वमस्मत्प्रमुंचाव्य१ँहुःप्रातार्यग्नेप्रतरान्नआयुः ॥ इतिहस्तेनईशानीमारभ्यसर्वतःपरिसमुह्य ॥

प्रागादिक्रमेणसर्वतःप्रागग्रैर्दर्भैरग्निंपरिस्तीर्य ॥ अथवाप्राक्पश्चादुदगग्रान्दक्षिणतउत्तरतश्चप्रागग्रान् ॥ दक्षिणानुत्तरान्करो
त्युत्तरानधरांश्चकृत्वाप्रदक्षिणमग्निंपरिस्तीर्यदक्षिणतोब्रह्मायतनेकुशानास्तीर्य ॥ सकुशंदक्षिणहस्तंहृदिकृत्वात्मीयमग्निमात्मनि
ध्यायति ॥ ॐमयिगृह्णाम्यग्रेअग्निꣳरायस्पोषायसुप्रजास्त्वायसुवीर्याय ॥ मयिप्रजांमयिवर्चोदधाम्यरिष्टाःस्यामतनुवासुवी
राः ॥ योनोअग्निःपितरोहृत्स्वंतरमर्त्योमर्त्याꣳआविवेश ॥ तमात्मन्परिगृह्णीमहेवयंमासोअस्माꣳअवहायपरागात् ॥ तत
उत्तरेणाग्निंदर्भानास्तीर्यपात्रासादनंकार्यं ॥ अत्रस्थालीपाकसमावर्तनाष्टकादिदैवमानुषपित्र्यसर्वस्मार्तकर्मसुसकृदेवपात्राण्यु
दक्संस्थान्यासादयति ॥ येतुद्वंद्वंसहएकैकमितिदैवमानुषपित्र्यभेदेनविदधिरेतच्छ्रौतविषयमेव ॥ स्मार्तेतुसकृदेवसर्वाणीति ॥
एवकारसर्वशब्दयोर्विधानात्सहैव सर्वाणियथासंभवंवाउदक्संस्थान्यासादयति ॥ दर्वीमाज्यस्थालींप्रणीतांप्रोक्षणीमिध्मंबर्हि
रुपवेषंसंमार्गदर्भानवज्वलनदर्भानाज्यंचासादयामि ॥ इतिसाधारणानि प्रादेशमात्राःसमिधः यवसर्षपगोदधिद्रप्सवटां
कुररसादीनिप्रकृतोपयोगीनिचासाद्य ॥ ईशान्यांप्रवरगोत्रनामोपेतंयजुर्वेदस्यतैत्तिरीयशाखांतर्गतहिरण्यकेशिशाखाध्यायि
नममुकशर्माणममुककर्मणिब्रह्माणंत्वामहंवृणइतिवृणुयात् ॥ ब्रह्मावृतोसीत्युक्त्वाचम्योत्तरेणपात्राणिअपरेणाग्निंदक्षिणा
तिक्रम्यब्रह्मसदनात्तृणंनिरस्यापउपस्पृश्याग्निमभिमुखउपविशति ॥ ब्रह्माभावेकूर्चंयज्ञोपवीतंदंडंकमंडलुंवास्थापयेत् ॥ द्वौ
दर्भौसमौसाग्रौअंतर्गर्भरहितौप्रादेशपरिमितौपवित्रेकृत्वानखादन्येनछित्त्वाप्रणीतापात्रंत्रिःप्रक्षाल्यप्रागग्रपवित्रांतर्हितमद्भिः
पूरयित्वापवित्रमुदगग्रंकरयोरंगुष्ठोपकनिष्ठिकाभ्यांधृत्वात्रिरुत्पूयदक्षिणोत्तराभ्यांपाणिभ्यांसमंप्राणैर्धृत्वाअविषिंचन्नग्नेर्दक्षिण

१ यजुर्वेदस्यतैत्तिरीयशाखाहिरण्यकेशिसूत्राध्यायिनं इत्येववक्तुंयुक्तम् । शाखाहिवेदःसूत्राणिनवेदःइतिव्यवहारात् ॥

तोहृत्वाउत्तरेणाग्निंदर्भेषुनिधायदर्भैरपिधाय ॥ पवित्रेप्रोक्षणीपात्रेउदगग्रेन्यस्याद्भिरापूर्यपूर्ववत्त्रिरुत्पूयपात्राण्युत्तानानिकृत्वा
इध्मंविस्रस्यप्राक्संस्थंत्रिःसर्वाभिःप्रोक्षति ॥ तेपवित्रेआज्यपात्रेनिदध्यात् ॥ ततोदर्वीमग्नौनिष्टप्यसंमार्गकुशानादायदर्वींप्राची
मग्रैरंतरतोभ्याकारंप्रतीचींमध्यैर्वाह्यतोमूलैर्दंडंसंमृज्यपुनर्निष्टप्यापरेणाग्निंदर्भेषुनिधायसंमार्गकुशानभ्युक्ष्याग्नावाधायाज्यंवि
लाप्यपवित्रांतर्हितायामाज्यस्थाल्यामाज्यंनिरुप्योपवेषेणाग्न्यायतनादुत्तरतोंगारान्कृत्वातेष्वाज्यस्थालीमधिश्रित्यदर्भैराज्य
मवद्योत्यसजलंदर्भाग्रद्वयमाज्येन्यस्यप्रज्वालितैर्दर्भैरवाग्ज्वालैस्त्रिः पर्यग्निकृत्वाउल्मुकंनिरस्यापउपस्पृश्योत्तरतआज्यमुद्वास्यां
गारानायतनेप्रत्यूह्यापरेणाग्निंबर्हिरास्तीर्यतत्राज्यंनिधायउदगग्राभ्यांपवित्राभ्यांपुनराहारमाज्यंत्रिरुत्पूय ॥पश्चादारभ्यप्राङ्नी
त्वोत्पूयनिमज्यपश्चादानयतीत्येवंत्रिःकृत्वापवित्रेप्रोक्ष्याग्नावाधायपरिधिमपरेणाग्निंचतुस्त्रिंशदंगुलमुदगग्रंनिधाय ॥ दक्षिणेना
ग्निंषट्त्रिंशदंगुलंप्रागग्रंमध्यमेनसंस्पृष्टं ॥ उत्तरेणाग्निंद्वात्रिंशदंगुलंप्रागग्रंपरिस्तरणोपरिपरिस्तरणवत्परिदधाति॥इतिपरिधिपरि
धानांतंकृत्वा॥यजमानोभार्यान्वारब्धःसन्परिधिदेशाद्बहिःपरिषिंचति ॥ॐअदितेनुमन्यस्व॥दक्षिणतःप्राक्संस्थं ॥ॐअनुमतेनु
मन्यस्व ॥ पश्चादुदक्संस्थं ॥ ॐसरस्वतेनुमन्यस्व ॥ उत्तरतःप्राक्संस्थं ॥ ॐदेवसवितःप्रसुवेतीशान्यादीशान्यंतंसर्वतःप्रदक्षिणं
परिषिंचति ॥ ततोदर्व्याज्यमादायेध्ममभिघार्य ॥ ॐअयंतइध्मआत्माजातवेदस्तेनेध्यस्ववर्धस्वचेंधिवर्धयचास्मान्प्रजयापशु
भिर्ब्रह्मवर्चसेनान्नाद्येनसमेधयस्वाहा ॥ इतिहस्तेनेध्मंजुहोति ॥ जातवेदसेग्नयइदंनमम ॥ ततोदर्व्याज्यस्थालीस्थमाज्यमादा
योत्तरंपरिधिसंधिमभिलक्ष्यप्राग्दक्षिणापवर्गंसंततमग्न्यायतनेजुहोति ॥ ॐप्रजापतयेमनवेस्वाहेतिमनसामंत्रमुच्चारयेत् ॥ प्रजा
पतयेमनवइदं० ॥दक्षिणंपरिधिसंधिमभिलक्ष्यप्रागुदगपवर्गंसंततमग्न्यायतने ॐइंद्रायस्वाहेतिपठन्जुहोति ॥इंद्रायेदं० ॥ इत्या

घारौहुत्वा ॥ ततः अग्नेरुत्तरार्धपूर्वार्धे ॥ ॐअग्नयेस्वाहा ॥ अग्नयइदं० ॥ दक्षिणार्धपूर्वार्धे ॥ ॐसोमायस्वाहा ॥ सोमायेदं ॥
इत्याज्यभागौहुत्वा ॥ ततआज्यभागयोर्मध्येवक्ष्यमाणाआहुतीर्जुहोति ॥ अथसामान्यप्रधानहोमः ॥ ॐयुक्तोवहजातवेदःपुरस्ता
दग्नेविद्धिकर्मक्रियमाणंयथेदं ॥ त्वंभिषक्भेषजस्यासिकर्तात्वयागाअश्वान्पुरुषान्त्सनेमस्वाहा ॥ जातवेदसेग्नयइदं० ॥ ॐयातिर
श्चीनिपद्यसेहंविधरणीइति ॥ तांत्वाघृतस्यधारयाग्नौसᳪराधनींयजेस्वाहा ॥ सᳪराधन्याइदं ॥ ॐसᳪराधन्यैदेव्यैस्वाहा ॥
सᳪराधन्यैदेव्याइदं० ॥ ॐप्रसाधन्यैदेव्यैस्वाहा प्रसाधन्यैदेव्याइदं० ॥ ॐभूःस्वाहा ॥ अग्नयइदं० ॥ ॐभुवःस्वाहा ॥ वायव
इदं ॥ ॐᳪसुवःस्वाहा ॥ सूर्यायेदं० ॥ ॐभूर्भुवःसुवःस्वाहा ॥ प्रजापतयइदं० ॥ इतिसामान्यप्रधानहोमः ॥ अथप्रधानहोमः ॥
ॐधातादंदातुनोरयिमीशानोजगतस्पतिः ॥ सनःपूर्णेनवावनत्स्वाहा ॥ धात्रइदं० ॥ ॐधाताप्रजायाउतरायईशेधातेदंविश्वं
भुवनंजजान ॥ धातापुत्रंयजमानायदातातस्माउहव्यंघृतवद्विधेमस्वाहा ॥ धात्रइदं० ॥ ॐधातादंदातुनोरयिंप्राचींजीवातुम
क्षितां ॥ वयंदेवस्यधीमहिसुमतिᳪसत्यराधसःस्वाहा ॥ धात्रइदं० ॥ ॐधातादंदातुदाशुषेवसूनिप्रजाकामायमीढुषेदुरोणे ॥ तस्मै
देवाअमृताःसंव्ययंतांविश्वेदेवासोअदितिःसजोषाःस्वाहा ॥ धात्रइदं० ॥ इतिप्रधानाहुतिचतुष्टयंहुत्वा ॥ अथांगहोमः ॥ ॐइमं
मेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचकेस्वाहा ॥ वरुणायेदं० ॥ ॐतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्
भिः ॥ अहेडमानोवरुणेहबोध्युरुशᳪसमानआयुःप्रमोषीःस्वाहा ॥ वरुणायेदं० ॥ ॐत्वंनोअग्नेवरुणस्यविद्वान्देवस्यहेडोवयासिसी
ष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाᳪसिप्रमुमुग्ध्यस्मत्स्वाहा ॥ अग्नीवरुणाभ्यामिदं० ॥ ॐसत्वंनोअग्नेवमोभवोतीनेदि
ष्ठोअस्याउषसोव्युष्टौ ॥ अवयक्ष्वनोवरुणᳪरराणोवीहिमृडीकᳪसुहवोनएधिस्वाहा ॥ अग्नीवरुणाभ्यामिदं० ॥ ॐत्वमग्नेअयास्य

यासन्मनंसाहितः ॥ अयासन्हव्यमूहिषेयानोधेहिभेषजंस्वाहा ॥ अयसेग्नयइदं० ॥ ॐप्रजापतेनत्वदेतान्यन्योविश्वाजातानि परिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणांस्वाहा ॥ प्रजापतयइदं० । इत्यंगहोमः ॥ अथजयाद्यु पहोमः ॥ ॐचित्तंचस्वाहा ॥ चित्तायेदं० ॥ ॐचित्तिश्चस्वाहा चित्तयइदं० ॥ ॐआकूतंचस्वाहा ॥ आकूतायेदं० ॥ ॐआकूतिश्च स्वाहा ॥ आकूत्याइदं० ॥ ॐविज्ञातंचस्वाहा ॥ विज्ञातायेदं० ॥ ॐविज्ञानंचस्वाहा ॥ विज्ञानायेदं० ॥ ॐमनश्चस्वाहा ॥ मनस इदं० ॥ ॐशक्करीश्चस्वाहा ॥ शक्करीभ्यइदं० ॥ ॐदर्शश्चस्वाहा ॥ दर्शायेदं० ॥ ॐपूर्णमासश्चस्वाहा ॥ पूर्णमासायेदं० ॥ ॐबृहच्च स्वाहा ॥ बृहतइदं० ॥ ॐरथंतरंचस्वाहा ॥ रथंतरायेदं० ॥ ॐप्रजापतिर्जयानिंद्रायवृष्णेप्रायच्छदुग्रःपृतनाज्येषुतस्मैविशःसमन मंतसर्वाःसउग्रःसहिहव्योबभूवस्वाहा ॥ प्रजापतयइदं० ॥ इतिजयहोमः ॥ अथाभ्यातानहोमः ॥ ॐअग्निर्भूतानामधिपतिः समावत्वस्मिन्ब्रह्मंन्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मन्नस्यांदेवहूत्यांस्वाहा ॥ अग्नयेभूतानामधिपतयइदं० ॥ ॐइंद्रो ज्येष्ठानामधिपतिःसमावत्वस्मिन्ब्र० त्यांस्वाहा ॥ इंद्रायज्येष्ठानामधिपतयइदं० ॥ ॐयमःपृथिव्याअधिपतिःसमावत्वस्मिन्ब्र० त्यांस्वाहा ॥ यमायपृथिव्याअधिपतयइदं० ॥ ॐवायुरंतरिक्षस्याधिपतिःसमावत्वस्मिन्ब्र० त्यांस्वाहा ॥ वायवेंतरिक्षस्याधि पतयइदं० ॥ ॐसूर्योदिवोधिपतिःसमावत्वस्मिन्ब्र० त्यांस्वाहा ॥ सूर्यायदिवोधिपतयइदं० ॥ ॐचंद्रमानक्षत्राणामधिपतिःसमा वत्वस्मिन् · त्यांस्वाहा ॥ चंद्रमसेनक्षत्राणामधिपतयइद० ॥ ॐबृहस्पतिर्ब्रह्मणोधिपतिःसमावत्वस्मिन्० स्वाहा ॥ बृहस्पतयेब्रह्मणो धिपतयइदं० ॥ ॐमित्रःसत्यानामधिपतिःस० हा ॥ मित्रायसत्यानामधिपतयइदं० ॥ ॐवरुणोपामधिपतिःसमाव० हा ॥ वरुणाया पामधिपतयइदं० ॥ ॐसमुद्रःस्रोत्यानामधिपतिःस० हा ॥ समुद्रायस्रोत्यानामधिपतयइदं० ॥ ॐअन्नंसाम्राज्यानामधिपतित

न्मांव० हां ॥ अन्नायसाम्राज्यानामधिपतयइदं० ॥ ॐ सोमओषधीनामधिपतिःसमांव० हां ॥ सोमायओषधीनामधिपतयइदं० ॥
ॐ सविताप्रसवानामधिपतिःसमांव० हां ॥ सवित्रेप्रसवानामधिपतयइदं० ॥ ॐ रुद्रःपशूनामधिपतिःसमांवत्व० हां ॥ रुद्राय
पशूनामधिपतयइदं ॥ उदकस्पर्शः ॥ ॐ त्वष्टारूपाणामधिपतिःस० हां ॥ त्वष्ट्रेरूपाणामधिपतयइदं० ॥ ॐ विष्णुःपर्वतानामधिपतिः
समांवत्व० हां ॥ विष्णवेपर्वतानामधिपतयइदं० ॥ ॐ मरुतोगणानामधिपतयस्तेमांवंत्व० हां ॥ मरुद्भ्योगणानामधिपतिभ्यइदं० ॥
प्राचीनावीती ॐ पितरःपितामहाःपरेवरेततास्ततामहाइहमांवत ॥ अस्मिन्ब्रह्मन्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मन्न
स्यांदेवहूत्याᳪस्वाहा ॥ (इतिजुहोति स्वाहाकारवर्जमुपतिष्ठतेवा ॥ उपस्थानपक्षेनान्वाधानेउत्कीर्तनं) पितृभ्यःपितामहेभ्यःपरेभ्यो
वरेभ्यइदं० ॥ यज्ञोपवीत्यपउपस्पृश्य ॥ अथराष्ट्रभृतः ॥ त्रिविधोराष्ट्रभृतांमंत्राणांविभागः ॥ ऋताषाडितियथापाठमारभ्यतस्मैस्वा
हेत्यंतापूर्वाहुतिः ॥ ताभ्यःस्वाहेत्येतावत्येवापरा ॥ इत्येकःपक्षः ॥ ॐ ऋताषाडृतधामाग्निर्गंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥
ॐ तस्यौषधयोप्सरसऊर्जोनामताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा ॥ इत्येवमपरः ॥ ऋताषाडितियथापाठंपठित्वातस्मैस्वाहेत्युक्त्वापू
र्वाहुतिः ॥ पुनर्यथापाठंपठित्वाताभ्यःस्वाहेत्युक्त्वाउत्तराहुतिः ॥ इत्येवंतृतीयः ॥ पक्षत्रयेपिदशभिःपर्यायैर्विंशतिर्मंत्राः ॥ सप्त
मोत्तमावेकैकाहुतिकावितिद्वाविंशतिर्मंत्राः ॥ ॐ ऋताषाडृतधामाग्निर्गंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ ऋतसहेऋतधाम्नेअग्न
येगंधर्वायेदं० ॥ ॐ तस्यौषधयोप्सरसऊर्जोनामताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा ॥ ओषधीभ्योप्सरोभ्यऊर्ग्भ्यइदं० ॥ ॐ सᳪहितोवि
श्वसामासूर्योगंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ सᳪहितायविश्वसाम्नेसूर्यायगंधर्वायेदं० ॥ ॐ तस्यमरीचयोप्सरसआयुवोना
मताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा ॥ मरीचिभ्योप्सरोभ्यआयुभ्यइदं० ॥ ॐ सुषुम्नःसूर्यरश्मिश्चंद्रमागंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मै

स्वाहा ॥ सुषुम्नायसूर्यरश्मयेचंद्रमसेगंधर्वायेदं० ॥ ॐ तस्यनक्षत्राण्यप्सरसोबेकुरयोनामताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा ॥ नक्ष
त्रेभ्योप्सरोभ्योबेकुरिभ्यइदं०॥ॐ भुज्युःसुपर्णोयज्ञोगंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ भुज्यवेसुपर्णाययज्ञायगंधर्वायेदं० ॥
तस्यदक्षिणाअप्सरसस्तवानामताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा ॥ दक्षिणाभ्योप्सरोभ्यःस्तवाभ्यइदं० ॥ ॐ प्रजापतिर्विश्वकर्मामनोगंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ प्रजापतयेविश्वकर्मणेमनसेगंधर्वायेदं० ॥ ॐ तस्यऋक्सामान्यप्सरसोवह्नयोनामताइदं
ब्रह्मक्षत्रंपातुताभ्यःस्वाहा॥ऋक्सामेभ्योप्सरोभ्योवह्निभ्यइदं०॥ॐ इषिरोविश्वव्यचावातोगंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा॥
इषिरायविश्वव्यचसेवातायगंधर्वायेदं० ॥ ॐ तस्यापोप्सरसोमुदानामताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा ॥ अद्भ्योप्सरोभ्योमुदा
भ्यइदं० ॥ ॐ भुवनस्यपतेयस्यंतउपरिगृहाइहच ॥ सनोरास्वाज्यानिꣳरायस्पोषꣳसुवीर्यꣳसंवत्सरीणाꣳस्वस्तिꣳस्वाहा ॥ भुवन
स्यपत्यइदं० ॥ ॐ परमेष्ठ्यधिपतिर्मृत्युर्गंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ परमेष्ठिनेधिपतयेमृत्यवेगंधर्वायेदं० ॥ ॐ तस्यवि
श्वमप्सरसोभुवोनामताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा ॥ विश्वस्माअप्सरोभ्योभूभ्यइदं० ॥ ॐ सुक्षितिःसुभूतिर्भद्रकृत्सुवर्वान्पर्ज
न्योगंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ सुक्षितयेसुभूतयेभद्रकृतेसुवर्वतेपर्जन्यायगंधर्वायेदं०॥ ॐ तस्यविद्युतोप्सरसोरुचोना
मताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा ॥ विद्युद्भ्योप्सरोभ्योरुग्भ्यइदं० ॥ ॐ दूरेहेतिरमृडयोमृत्युर्गंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वा
हा ॥ दूरेहेतयेअमृडयायमृत्यवेगंधर्वायेदं० ॥ ॐ तस्यप्रजाअप्सरसोभीरुवोनामताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा ॥ प्रजाभ्योप्स
रोभ्योभीरुभ्यइदं०॥ॐ चारुःकृपणकाशीकामोगंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा॥ चारवेकृपणकाशिनेकामायगंधर्वायेदं० ॥
ॐ तस्याधयोप्सरसःशोचयंतीर्नामताइदंब्रह्मक्षत्रंपातुताभ्यःस्वाहा॥ आधिभ्योप्सरोभ्यःशोचयंतीभ्यइदं० ॥ सनोभुवनस्यपते

यस्यंतउपरिगृहाइहर्च ॥ उरुब्रह्मणेस्मैक्षत्रायमहिशर्मयच्छस्वाहा ॥ भुवनस्यपत्यइदं० ॥ ऋताषाट्सꣳहितःसुषुम्नोभुज्युः
प्रजापतिरिषिरोभुवनस्यपरमेष्ठीसुक्षितिर्दूरेहेतिश्चारुःसनोभुवनस्येतिदशभिःपर्यायैःसहद्वाविंशतीराष्ट्रभृतइत्युपहोमः॥ ॐयद
स्यकर्मणोत्यरीरिचंयद्वान्यूनमिहाकरं॥ अग्निष्टत्स्विष्टकृद्विद्वान्त्सर्वꣳस्विष्टꣳसुहुतंकरोतुमे ॥ अग्नयेस्विष्टकृतेसुहुतहुतेसर्वहुत
आहुतीनांकामानाꣳसमर्धयित्रेस्वाहा ॥ अग्नेरुत्तरार्धस्यपूर्वार्धेअतिहायहोमाहुतीर्जुहोति ॥ अग्नयेस्विष्टकृतइदं० ॥ तत
इध्मसन्नहनंतूष्णीमग्नौप्रास्य रुद्रायपशुपतयेस्वाहा ॥ रुद्रायपशुपतयइदं० ॥ दर्व्यापरिधीननक्तिमध्यमंदक्षिणमुत्तरंच ॥
ततो यथाहुतद्वसवोगौर्यमित्यग्निंपरिसमुह्यबर्हिर्भ्यःपरिस्तरणेभ्यश्चकानिचित्तृणान्यादायदर्व्यामग्राण्यनक्ति ॥ मध्यानिमू
लानिचाज्यस्थाल्यां एवंद्वितीये तृतीयेतुमूलानिमध्यानिचाज्यस्थाल्यांदर्व्यामग्राणि ॥ ततश्चैकंतृणमवस्थाप्योत्तरंपरिधिसंधि
मनुप्रहृत्यत्रिरंजलिनोर्ध्वमुद्यौति ॥ ततआत्तंतृणं ॥ ॐ सर्वेभ्यःस्वाहा ॥ इतिप्रहृत्यांगुल्यात्रिर्निर्दिश्य घ्राणंचक्षुःपृथिवीं
चालभ्यापउपस्पृश्य ॥ परिधिंमध्यममग्नौप्रहृत्यसहेतरौप्रहरतिमध्यमंमध्येकरोति ॥ ॥ छ ॥ ॥ अथप्रायश्चित्तहोमः ॥
ॐ अनाज्ञातंयदाज्ञातंयज्ञस्यक्रियतेमिथु ॥ अग्नेतदस्यकल्पयत्वꣳहिवेत्थयथातथꣳस्वाहा ॥ अग्नयइदं० ॥ ॐपुरुषसंमि
तोयज्ञोयज्ञःपुरुषसंमितः ॥ अग्नेतदस्यकल्पयत्वꣳहिवेत्थयथातथꣳस्वाहा ॥ अग्नयइदं० ॥ ॐ यत्पाकत्रामनसादीनदक्षा
नयज्ञस्यमन्वतेमर्तासः ॥ अग्निष्टद्धोताक्रतुविद्विजानन्यजिष्ठोदेवाꣳऋतुशोयजातिस्वाहा ॥ अग्नयइदं० ॥ ॐत्वंनोअ
ग्नेवरुणस्यविद्वान्देवस्यहेडोवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत्स्वाहा ॥ अग्नीवरु
णाभ्यामिदं० ॥ ॐसत्वंनोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ ॥ अवयक्ष्वनोवरुणꣳरराणोवीहिमृडीकꣳसुहवोनएधि

स्वाहा ॥ अग्नीवरुणाभ्यामिदं० ॥ ॐयतइंद्रभयामहेततोनोअभयंकृधि ॥ मघवन्च्छग्धितवतन्नऊतयेविद्विषोविमृधोजहिस्वा
हा ॥ इंद्रायेदं० ॥ ॐस्वस्तिदाविशस्पतिर्वृत्रहाविमृधोवशी ॥ वृषेंद्रःपुरएतुनःस्वस्तिदाअभयंकरःस्वाहा ॥ इंद्रायेदं० ॥ ॐत्र्यंब
कंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात्स्वाहा ॥ त्र्यंबकायेदं० ॥ ॐइदंविष्णुर्विचक्रमेत्रेधानिदं
धेपदं ॥ समूढमस्यपांसुरेस्वाहा ॥ विष्णवइदं० ॥ ॐभूःस्वाहा ॥ अग्नयइदं० ॥ ॐभुवःस्वाहा ॥ वायवइदं० ॥ ॐसुवःस्वाहा ॥ सूर्या
येदं० ॥ ॐमहःस्वाहा बृहस्पतयइदं० ॥ ॐ जनःस्वाहा ॥ वरुणायेदं० ॥ ॐ तपःस्वाहा ॥ इंद्रायेदं० ॥ सत्यंस्वाहा ॥ विश्वेभ्यो
देवेभ्यइदं० ॥ कर्ममध्येअग्न्युपघातप्रायश्चित्तानिकुर्यात् ॥ ॐ वसुभ्योरुद्रेभ्यआदित्येभ्यःस्वाहा ॥ वसुभ्योरुद्रेभ्यआदित्ये
भ्यःसंस्रावभागेभ्यइदं० ॥ ततउत्तरपरिषेकः ॥ ॐ अदितेन्वमंस्थाः ॥ अनुमतेन्वमंस्थाः ॥ सरस्वतेन्वमंस्थाः ॥ देवसवितः
प्रासावीः ॥ इतिपूर्ववत्परिषेकेणविसर्गंकृत्वा ॥ यथेतंप्रणीताःपर्याहृत्यापरेणाग्निंनिधाय ॥ ॐ सदसिसन्मेभूयाःसर्वमसिसर्वंमेभू
याःपूर्णमसिपूर्णंमेभूयाअक्षितमसिमामेक्षेष्ठाः ॥ प्राच्यांदिशिदेवाऋत्विजोमार्जयंतां ॥ दक्षिणायांदिशिमासाःपितरोमार्जयंतां ॥
अपःस्पृष्ट्वा ॥ प्रतीच्यांदिशिगृहाःपशवोमार्जयंतां ॥ उदीच्यांदिश्यापओषधयोवनस्पतयोमार्जयंतां ॥ ऊर्ध्वायांदिशियज्ञःसं
वत्सरोयज्ञपतिर्मार्जयतां ॥ इतिप्रागारभ्यदिक्चतुष्टयेऊर्ध्वमधश्चजलमासिच्य ॥ ॐ समुद्रंवःप्रहिणोम्यक्षिताःस्वांयोनिमपिंग
च्छत ॥ अच्छिद्रःप्रजयाभूयासंमापरासेचिमत्पयः ॥ इतिभूमौनिनीयात्मानंमार्जयित्वामुखंसंमृज्य ॥ यथाश्रद्धंब्रह्मणेदक्षि
णांदद्यात् ॥ इदंपूर्णपात्रंतत्प्रतिनिधिभूतंवायथाशक्तिहिरण्यंब्रह्मणेसंप्रददेइत्युक्त्वानममेतिवदेत् ॥ ब्रह्मास्वस्तीत्युक्त्वायथे
तंप्रतिनिष्क्रामति ॥ ततःसंस्थाजपेनोपतिष्ठते ॥ ॐ यज्ञनमस्तेयज्ञ ॥ नमोनमश्चतेयज्ञ ॥ शिवेनमेसंतिष्ठस्वस्योनेनमेसंतिष्ठस्वसु

भूतेनंमेसंतिष्ठस्वब्रह्मवर्चसेनंमेसंतिष्ठस्वयज्ञस्यधिंमनुसंतिष्ठस्वोपंतेयज्ञनमउपंतेनमउपंतेनमः ॥ इदमिध्मसंनहनप्रहरणादिकं आधारवतिदर्वीहोमेगृह्यांतरेदृष्टत्वेनवृत्तिकृदुक्तेःशिष्टपरिगृहीतत्वाच्चकर्तव्यं ॥ यावदुक्तमेवस्वगृह्योक्तंकर्तव्यमितिवदंतःकेचिन्नेच्छंति ॥ केचित्त्रिवृदन्नहोमानंतरंकुर्वंति ॥ इतिपुंसवनप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १०१ ॥ त्रिवृदन्नहोमः ॥

श्रीः ॥ यत्रहोमोब्राह्मणभोजनंचोक्तंतत्रत्रिवृदन्नहोमः ॥ गृह्यांतरोक्तकर्णवेधतडागोत्सर्गादौहोमब्राह्मणभोजनवतिअतिप्रसंगवारणायोक्तंयत्राचारोप्यस्तितत्रैवत्रिवृदन्नहोमइतिवृत्तिकृता ॥ अतस्तत्राचाराभावान्नातिप्रसंगः ॥ उत्सर्जनेतुहोमोब्राह्मणभोजनमनादिशिष्टाचारश्चास्तिअतोभवतित्रिवृदन्नहोमः ॥ एतेनउत्सर्जनेत्रिवृदन्नहोमोनास्तीतिनास्तिकोवदन्निरस्तः ॥ वक्ष्यतेचोत्सर्जनप्रयोगेविशेषः ॥ नात्रावदानधर्मः ॥ आहुतिपरिमाणश्चेध्माभवति ॥ यावदुक्तैवक्रियाभवति ॥ त्रिवृदन्नहोमस्यापूर्विकत्वात् ॥ ब्राह्मणभोजनार्थमुपनिष्पन्नाद्धोमः ॥ होमशेषादिनासंतुष्टान्पुण्याहंवाचयेत् ॥ ओदनापूपसक्तुरूपादाज्याभिघारितैकीकृतादन्नाद्दर्व्यासकृदवदायहोमःकार्यः ॥ अत्रओदनस्यापूपानाꣳसक्तूनामितिसूत्रेपृथङ्निर्देशःस्वरूपज्ञानार्थः ॥ सूत्रांतरेघृत्रिवृच्छब्देननिर्देशोलाघवार्थः ॥ अंतेउत्सर्जनसूत्रेअपूपैःसक्तुभिरोदनेनेतिव्युत्क्रमेणनिर्देशस्त्ववदेयक्रमबाधार्थः ॥ तेनद्रव्यत्रयंकथमप्येकीकृत्यहोतव्यमन्यथाओदनादिपाठक्रमेणादायहोतव्यमितिस्यात्तन्नेष्टमितिव्युत्क्रमेणसूत्रितमाचार्येण ॥ ॥ अथप्रयोगः ॥ कर्ताअमुककर्मांगंत्रिवृदन्नहोमंपुण्याहवाचनंचकरिष्यइतिसंकल्प्यपरिसमुह्यपरिस्तीर्योत्तरेणाग्निंकुशानास्तीर्य ॥ तत्रपात्राणिसादयति ॥ प्रोक्षणीं पवित्रे दर्वीं घृतं त्रिवृदन्नं प्रादेशमात्राष्टसमित्कमिध्मं कुशांश्चासाद्यप्रोक्षणीःसꣳस्कृत्यपात्रा

णिप्रोक्ष्यदर्वींनिष्टप्यसंमृज्याज्यंसंस्कृत्यदर्भेष्वपरेणाग्निंनिधायओदनापूपसक्तवइतित्रिवृदन्नंवहिर्निष्पन्नत्वादग्नावधिश्रित्योद गुद्वास्यावोक्ष्याभिघार्यैवंसर्वत्रायतनाद्बहिर्निष्पन्नान्नेदेवपवित्राख्यसंस्कारंकृत्वाग्नेःपश्चान्निधायपरिषिच्यतूष्णीमष्टसमित्कमि ध्ममग्नावाधायत्रिवृदन्नंसर्पिर्मिश्रंदर्व्यासकृत्सकृदवदायजुहोति॥ अग्नयेस्वाहा ॥ अग्नयइदं० ॥ सोमायस्वाहा॥ सोमायेदं० ॥ अग्नयेन्नादायस्वाहा ॥ अग्नयेन्नादायेदं० ॥ अग्नयेन्नपतयेस्वाहा ॥ अग्नयेन्नपतयइदं० ॥ प्रजापतयेस्वाहा ॥ प्रजापतयइदं० ॥ विश्वेभ्योदेवेभ्यःस्वाहा ॥ विश्वेभ्योदेवेभ्यइदं० ॥ सर्वाभ्योदेवताभ्यःस्वाहा ॥ सर्वाभ्योदेवताभ्यइदं० ॥ अग्नयेस्विष्टकृते स्वाहा ॥ अग्नयेस्विष्टकृतइदं० ॥ इत्यष्टाहुतीर्हुत्वा ॥ ततोग्नेरुत्तरतःप्रागग्रान्कुशानास्तीर्यतूष्णीमुदकमासिच्य ॥ हुतशेषंत्रि वृदन्नंकिंचिद्धस्तेनादायबलिंकरोति ॥ ॐवास्तुपतयेस्वाहा ॥ वास्तुपतयइदं० ॥ तूष्णींसकृदंतेपरिषेकः॥ ततोन्यूनातिरिक्तदो षपरिहारार्थंसर्वप्रायश्चित्तंकरिष्येइतिसंकल्प्य॥ ॐ भूर्भुवःसुवःस्वाहा॥ प्रजापतयइदं० ॥ ततःअदितेन्वमꣳस्थाइत्याद्युत्तरपरि षेकंकृत्वात्रिवृदन्नहोमशेषादिनाब्राह्मणान्संतोष्यतान्पुण्याहंवाचयेत् ॥ यत्पुण्यंनक्षत्रमित्यादिप्रजापतिःप्रीयतामित्यंतंवदेत्॥ मह्यंसकुटुंबायमहाजनान्नमस्कुर्वाणायआशीर्वचनमपेक्षमाणायामुककर्मकारिणेपुण्याहंभवंतोब्रुवंतु ॥ इतित्रिर्यजमानः॥ ॐ पु ण्याहमितीतरेत्रिः ॥ मह्यमित्यादिपूर्ववत् ॥ स्वस्तिभवंतोब्रुवंत्वितित्रिर्यजमानः॥ ॐ स्वस्तीतिप्रतिवचनंत्रिः ॥ मह्यं० ॥ ऋद्धिं भवंतोब्रुवंत्वितित्रिः ॥ ॐ ऋद्धिरितिप्रतिवचनंत्रिः ॥ इतित्रिवृदन्नहोमप्रयोगः ॥ ततःकर्ताऽपरेणाग्निमुपरिबद्धशुभ्रवर्तुलवि तानस्याधोदेशेभार्यांप्राङ्मुखीमुपवेश्य ॥ तस्यादक्षिणहस्तेयवंनिदधाति । वृषासीति ॥ ततःसकृदुक्तेनमंत्रेणयवस्यदक्षिणत उत्तरतश्चसर्षपौनिदधाति । आंडौस्थइति ॥ तदुपरिगावंदधिद्रप्संनिदधाति । श्वावृत्तदिति ॥ ततस्तूष्णींप्राशयति ॥ कृत

शुद्धाचमनायास्तस्याउदरंहस्ताभ्यामभिमृशति ॥ अभिष्ट्वाहंदशभिरभिमृशामिदशमास्यायसूतवैइति ॥ अत्रन्यूनाधिकांगुलेः कर्तुर्दशभिरितिपदंलुप्यते ॥ स्मार्ताग्न्युपस्थानेगार्हपत्यपदलोपवत् ॥ ततोवटांकुरंप्रपीड्यरसंनिष्कास्यघृतेनसंमिश्रंकृत्वाकृत स्वोरुमूलोपधानायास्तस्यादक्षिणेनासापुटेतूष्णींसेचयेत् ॥ ततोविभूतिंधृत्वाकृतस्यकर्मणःसांगतासिद्ध्यर्थंदशाधिकान्ब्राह्मणा न्यथाकालंयथोपपन्नेनान्नेनभोजयिष्येइतिसंकल्प्य पुनःकर्मसांगतासिद्ध्यर्थंगंधतांबूलादिभिर्ब्राह्मणपूजनंभूयसींदक्षिणांचदातु महमुत्सृज्येइतिसंकल्प्यगंधादिनासंपूज्यदक्षिणांदद्यात् ॥ ततःप्रमादात्कुर्वतांकर्मेतिविष्णुंस्मरेत् ॥ ततोब्राह्मणेभ्यआशिष मेवैतामाशास्तइत्याद्यामंत्रोक्ताआशिषोग्राह्याः॥ ततोब्राह्मणान्नमस्कृत्यशिष्टैरिष्टैश्चसहभोजनंकुर्यात्॥ इतिसत्याषाढ० पुंस०॥

## ॥ १०२ ॥ गर्भस्रावेस्तंभनविधिः ॥

श्रीः ॥ आर्द्रेणपाणिनामंत्रावृत्त्यानाभेरूर्ध्वंत्रिरुन्मार्ष्टि ॥ परांचंत्वानार्वांचंत्वष्टावध्नातुवंधने ॥ सऋतूनुपवेश्यदशमासोअवी रहेति ॥ अत्रगर्भस्रावहरंस्त्रीकर्तृकंकांचनयज्ञोपवीतदानंमहार्णवोक्तंकार्यं ॥ एतस्यसविस्तरोविधिर्धर्मसिंधुसारेस्ति ॥ अपिच स्वर्णधेनुदानहरिवंशश्रवणघृतपूर्णताम्रकलशदानादिविधानान्यन्यत्रोक्तानिसंति तानितत्रतत्रालोचनीयानि ॥ ॥ छ ॥

## ॥ १०३ ॥ सीमंतोन्नयनप्रयोगः ॥

श्रीः॥ चतुर्थेमासिषष्ठेष्टमेनवमेवामासिशुक्लपक्षेरविगुरुशुक्रवारेषुपुनर्वसुपुष्याभिजिद्धस्तप्रोष्ठपदानूराधाश्विनीमूलश्रवणरेवती रोहिणीमृगसंज्ञकपुन्नक्षत्रेषुमध्यपादद्वयेषष्ठ्यष्टमीद्वादशीचतुर्दश्यमावास्यादिव्यतिरिक्ततिथौशुभलग्नादौकार्यं ॥ यजमानः

कृतावश्यकक्रियःवस्त्राच्छादितेपीठेप्राङ्मुखउपविश्यस्वदक्षिणतःपत्नीमुपवेश्याचम्यप्राणानायम्यदेशकालौसंकीर्त्यममास्यां भार्यायांविद्यमानगर्भस्यबैजिकगार्भिकदोषपरिहारद्वाराक्षेत्रसंस्कारद्वाराचश्रीपरमेश्वरप्रीत्यर्थंसीमंतोन्नयनाख्यंकर्मकरिष्ये॥ तदंगंगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्येइतिसंकल्प्योक्तरीत्याकुर्यात् ॥ ( अत्रक्रतुदक्षसंज्ञका विश्वेदेवाः ) ॥ सीमंतोन्नयनांगत्वेनोद्धननादिभूसंस्कारंविधायतत्रमंगलनामानमौपासनाग्निंप्रतिष्ठाप्यायतनस्थेतुमंगलना म्नाभावयित्वाग्निंप्रज्वाल्यसमित्त्रयमादायश्रद्धएहीत्यादिसामान्यप्रधानांतमुक्त्वावैशेषिकप्रधानहोमे ॥ धातारंचतुराज्येनांग होमेवरुणंद्विरित्यादिसामान्यप्रधानांतंहुत्वा ॥ ततोधाताददातुनोरयिमित्यादिप्रधानाहुतिचतुष्टयंहुत्वासंस्थाजपांतंसर्वंसमा प्यत्रिवृदन्नहोमंबलिकरणांतंकृत्वापुण्याहवाचनंकुर्यात् ॥ ततस्तामपरेणाग्निंपूर्ववन्मंडलवितानस्याधोदेशेप्राङ्मुखीमुपवेश्यत्रे ण्याशलल्यासहोदुंबरस्तबकमुपसंगृह्यतस्याःपुरस्तात्प्रत्यङ्मुखस्तिष्ठन्सीमंतमुन्नयेत् ॥ ॐ भूर्भुवःसुवः ॥ राकामहꣳसुहवांꣳसु ष्टुतीहुंवेशृणोतुनःसुभगावोधतुत्मना ॥ सीव्यत्वपःसूच्याच्छिद्यमानयाददातुवीरꣳशतदायमुक्थ्यं ॥ यास्तेराकेसुमतयःसुपेश सोयाभिर्ददासिदाशुषेवसूनि ॥ ताभिर्नोअद्यसुमनांउपागहिसहस्रपोषꣳसुभगेरराणा ॥ इतिद्वाभ्यां ॥ ततःसीमंतमभिमंत्र यति ॥ सोमएवनोराजेत्याहुर्ब्राह्मणीःप्रजाविवृत्तचक्राआसीनास्तीरेतुभ्यंगंगे ॥ विश्वाउतत्वयावयंधाराउदन्याइव ॥ अति गाहेमहिद्विषः ॥ इति ॥ अत्रमंत्रस्थंगंगापदंत्यक्त्वायस्यानद्याःसमीपेनिवासस्तन्नामसंबुद्ध्यंतंप्रक्षिपेत् ॥ ततोब्राह्मणभोजनंभू यसींदक्षिणांचसंकल्प्यदद्यात् ॥ ततआशिषोवाचयित्वाकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ इतिसीमंतोन्नयनप्रयोगः ॥ ॥ छ ॥

## ॥ १०४ ॥ पुंसवनसीमंतयोस्तंत्रप्रयोगः ॥

श्रीः ॥ तत्रादावालस्यादिनाऽकृतपुंसवनस्यसूत्रविहितकालातिक्रमदोषपरिहारार्थंलौकिकाग्नौव्याहृतिहोमादिभिःसहितेनरहितेनवाघारवत्तंत्रेणापूर्विकतंत्रेणवात्वंनःसत्वंनइत्याद्याःपूर्ववत्सप्ताहुतीःसमस्तव्याहृतिभिरेकामाहुतिंचहुत्वाअशक्तौकेवलांसमस्तव्याहृतिभिरेकामेववाहुत्वागोदानाद्यन्यतमप्रत्याम्नायेनपादकृच्छ्ंआलस्येनाकरणेऽर्धकृच्छ्ंप्रायश्चित्तंचरित्वापुंसवनंसीमंतेनसहकुर्यात् ॥ तस्यापिसूत्रोक्तकालातिक्रमेतस्मिन्नेवाग्नौद्विवारंपूर्वोक्ताआहुतीर्हुत्वाप्रतिसंस्कारंपादकृच्छ्ंअर्धकृच्छ्ंवाप्रायश्चित्तंकुर्यात् ॥ ततआचम्यप्राणानायम्यदेशकालौसंकीर्त्यममास्यांभार्यायांविद्यमानगर्भस्यपुंस्त्वप्रतिपादनबीजगर्भसमुद्भवैनोनिबर्हणद्वाराश्रीप० पुंसवनं ममास्यांभार्यायांविद्यमानस्यास्यप्रथमगर्भस्यजनिष्यमाणसर्वगर्भाणांचबीजगर्भसमुद्भवैनोनिबर्हणद्वाराक्षेत्रसंस्कारद्वाराचश्रीपरमेश्वरप्रीत्यर्थंसीमंतोन्नयनंचतंत्रेणकरिष्यइतिसंकल्पः ॥ पुंसवनसीमंतोन्नयनकर्मणोःपुण्याहंभवंतोब्रुवंतुपुंसवनसीमंतोन्नयनकर्मणोःस्वस्तिभ०पुंस०ऋद्धिंभ०पुंस०श्रीर० इतिपुण्याहादिवाक्यानि ॥ तृतीयेप्रतिवचनवाक्येकर्मणीऋध्येतामितिविशेषः ॥ नांदीश्राद्धेक्रतुदक्षादेवाःमंगलोग्निः ॥पुंसवनसीमंतोन्नयनकर्मणोर्यायक्ष्यमाणादेवतास्ताःसर्वाःपरिग्रहीष्यामीत्यन्वाधानवाक्ये ॥ गणेशपूजनादिबलिकरणपुण्याहादिवाचनांतंतंत्रेणैव ॥ वैशेषिकधात्रीचतुष्टयहोमस्यापिनावृत्तिःसंप्रतिपन्नदेवताकत्वात् ॥ ततोदधिद्रप्सादिप्राशनंसीमंतोन्नयनादिकंचक्रमेणकार्यं ॥ आसन्नेप्रसवेएतयोर्मुख्यकालातिपन्नयोरपिमलमासादौक्रियाभवत्येवअनन्यगतिकत्वात् ॥ इतिपुंसवनसीमंतोन्नयनयोस्तंत्रेणप्रयोगः ॥ ॥छ॥ ॥छ॥

## ॥ १०५ ॥ सुखप्रसवोपायाः ॥

श्रीः ॥ सूतिकायाःशिरःसमीपेउदकुंभंनिदधातिपादयोःसमीपेतूर्यंतींनिधायतूष्णीमुदरंस्पृष्ट्वार्द्रेणपाणिनानाभेरधस्त्रिरवाङ्मंत्रावृत्त्यावमार्ष्टि ॥ यथैववायुःपवतेयथासमुद्रएजति ॥ एवंतेगर्भएजतुसहजरायुणावसर्पतुइति ॥ उपायांतरमृग्विधाने ॥ प्रमंदिनेप्रसूयंत्यांजपेद्गर्भप्रमोचनीं ॥ इंद्रंचमनसाध्यायेन्नारीगर्भंप्रमुंचतीति ॥ मंत्रस्तु—प्रमंदिनेपितुमदर्चतावचोयःकृष्णगर्भानिरहन्नृजिश्वना ॥ अवस्यवोवृषणंवज्रदक्षिणंमरुत्वंतंसख्यायहवामहे ॥ इति ॥ उपायांतरं ॥ हिमवत्युत्तरेपार्श्वेशवरीनामयक्षिणी ॥ तस्यानूपुरशब्देनविशल्याभवतुगर्भिणी ॥ ॐ क्षीं ॐ स्वाहा ॥ अनेनैरंडतैलंमहिषीक्षीरमिश्रितमभिमंत्र्यपाययेदुदरेलापयेच्च ॥ ग्रंथांतरेतुहिमवत्युत्तरेपार्श्वइत्यमुंमंत्रंजपन्नेकविंशतिदूर्वांकुरैस्तिलतैलमेकपलंप्रदक्षिणमावर्तयन्नष्टशतंजपित्वातत्तैलंकिंचित्पाययित्वाशेषंयोनौनिषिच्यदूर्वांकुरान्केशेषूपगूहेदित्युक्तं ॥ वृषस्यमूलंयदिनाभियोनौप्रलेपितंस्त्रीझटितिप्रसूयते ॥ तथाकटिस्थःकदलीसुकंदोवेगात्प्रसूतिंकुरुतेंगनानामिति ॥ ( वृषःअडुळसाइतिप्रसिद्धः ) ॥ यंत्रमप्युक्तंयंत्रप्रकाशे ॥ गजाग्निवेदाउडुराट्शरांकारसर्क्षिपक्षाइतिहिक्रमेण ॥ लिखेत्प्रसूतेःसमयेगृहेदःसुखेननार्यःप्रसवंतिशीघ्रं ॥ इति ॥ इदंयंत्रंप्रसूतिसमयेसूतिकागृहेगर्भिण्यादृष्टिगोचरेदेशेलिखेत् ॥ एतद्दर्शनेनसुखेनशीघ्रंनार्यःप्रसवंतीति ॥ इतिसुखप्रसवोपायाः ॥ ॥ छ ॥

सुखप्रसूतियंत्रम्

| | पू. | |
|---|---|---|
| ८ | १ | ६ |
| ३ | ५ | ७ |
| ४ | ९ | २ |

(उ. left, द. right, प. below)

१ तूर्यंतीअवकातांनिदधाति । केचित्तुओषधिविशेषमाहुः । २ अस्यपाठांतरं—हिमवत्युत्तरेपार्श्वेसुरथानामयक्षिणी । तस्याःस्मरणमात्रेण विशल्यागर्भिणीभवेत् ॥ इति ।

## ॥ १०६ ॥ जातकर्मप्रयोगः ॥

श्रीः॥ जातमात्रेपुत्रेपितातस्यमुखं(कुलदेवतावृद्धप्रणामपूर्वकं)निरीक्ष्यनद्यादौस्नात्वाऽसंभवेशीताभिरद्भिःसुवर्णयुताभिर्गृहेवा (उदङ्मुखः)स्नात्वासितचंदनमाल्यादिभिरलंकृतोनालच्छेदनात्प्राक् अश्मानंपरशुंसुवर्णंसर्षपान्कणांश्चोष्णशीताअपःगोघृतमु दकुंभंचसंभृत्यप्राङ्मुखउपविश्याचम्यप्राणानायम्यदेशकालौसंकीर्त्यममास्यकुमारस्यगर्भांबुपानजनितसकलदोषनिबर्हणायुर्व र्चोभिवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंजातकर्मकरिष्ये ॥ तदंगंगणपतिपूजनंपुण्याहवाचनंमातृकापू जनंहिरण्येनपुत्रजन्मनिमित्तकंजातकर्मांगंनांदीश्राद्धंचतंत्रेणकरिष्येइतिसंकल्प्यकुर्यात् ॥ ततोश्मनिपरशुंतदुपरिहिरण्यंचनि धायतानिव्यत्यस्तानिकृत्वातदुपरिकुमारंपूर्वसम्यक्प्रक्षालितंहस्ताभ्यांप्राक्शिरसंधारयति॥ ॐअश्माभवपरशुर्भवहिरण्यमस्तृ तंभव॥ वेदोवैपुत्रनामासिसजीवशरदःशतं॥ अंगादंगात्संभवसिहृदयादधिजायसे ॥ आत्मावैपुत्रनामासिसजीवशरदःशतमि ति॥ यद्यस्यांकश्चिज्जरायुभागस्तिष्ठतितदाअंजलिनोदकमादायमूर्धानमस्याअवसिंचति ॥ तिलदेवपद्यस्वनमाꣳसमसिनोदल मवपद्यस्वस्यादिति ॥ नैमित्तिकमिदं॥ ततऔपासनाग्निंसूतिकागाराद्बहिरुद्धननादिसंस्कृतेदेशेसंस्थाप्यउत्तपनीयमग्निंतुसूति कागारेसंस्थाप्य(तत्रएकंकपालंसंतप्तंकृत्वातस्मिन्शुष्कगोमयंप्रक्षिप्यप्रज्वाल्यैषउत्तपनीयःपचनाग्निर्वा) प्राङ्मुखउपविश्यदेश कालौसंकीर्त्यास्यकुमारस्यशंडामर्कादिरक्षोगणेभ्यःसंरक्षणार्थंसर्षपमिश्रैःकणैःसायंप्रातरुद्धूपनंभूम्यालंभनंचकरिष्येइतिसंक ल्प्यपरिसमुह्यपरिस्तीर्यतूष्णींपरिषिच्यहस्तेनजुहुयान्नात्रत्यागः ॥ सायमेवोपक्रम्यसायंप्रातर्दशाहंउद्धूपनंभूम्यालंभनंचबालर

---

१ इदंमूलाश्लेषाज्येष्ठाव्यतीपातवैधृत्यादिकुयोगेजन्मनिनभवतिकिंतुसुतमुखमदृष्ट्वैवस्नानं । २ अत्रनांदीश्राद्धंरात्रावपिभवति ।

क्षणार्थंकर्तव्यंसायंसायंवा ॥ यदातुपचनाग्नावुद्धूपनंतदातत्कालमेवोभेसकृदेवकर्तव्येइतिवृत्तिकृत् ॥ ॐ शंडोमर्कउपवीरःशां डिकेरउलूखलः ॥ च्यवनोनश्यतादितःस्वाहा ॥ ॐ आलिखन्विलिखन्ननिमिषन्किंवदंतउपश्रुतिःस्वाहा ॥ ॐ अर्यम्णःकुंभी शत्रुःपात्रपाणिर्निपुणिःस्वाहा ॥ ॐ आंत्रीमुखःसर्षपारुणोनश्यतादितःस्वाहा ॥ ॐ केशिनीश्वलोमिनीवजाबोजोपकाशिनी ॥ अपेतनश्यतादितःस्वाहा ॥ ॐ कौवेरकाविश्ववासोरक्षोराजेनप्रेषिताः ॥ ग्रामान्त्सजातयोयंतीप्संतःपरिजाकृतान्त्स्वाहा ॥ ॐ एतान्हतैतान्वध्नीतेत्ययंब्रह्मणोदूतस्तानग्निःपर्यसरत् ॥ तानिंद्रस्तान्बृहस्पतिस्तानहंवेदब्राह्मणःप्रमृशतःकूटदंतान्विकेशा न्लंबस्तनान्स्वाहा ॥ ॐ नक्तंचारिणउरस्पेशाञ्छूलहस्तान्कपालपान्त्स्वाहा ॥ ॐ पूर्वएषांपितेत्युच्चैःश्राव्यकर्मकः ॥ माताजघ न्यागच्छंतीग्रामेविखुरमिच्छंतीस्वाहा ॥ ॐ नक्तंचारिणीस्वसासंधिनाप्रेक्ष्यतेकुलं ॥ यास्वपत्सुजागर्तियस्यैविजातायांमनः स्वाहा ॥ ॐ तासांत्वंकृष्णवर्त्मनेक्लोमानꣳहृदयंयकृत् ॥ अग्नेयक्षिणीनिर्दहस्वाहेति ॥ एतैरेकादशभिर्मंत्रैर्निर्धूमेष्वंगारेष्वावापे नकुमारमुद्धूपयेत् ॥ नात्रत्यागः ॥ ततःपाणीप्रक्षाल्यभूमिमालभते ॥ ॐ यत्तेसुशीमेहृदयंदिविचंद्रमसिश्रितं ॥ तस्यामृतत्व स्यनोधेहिमाहंपौत्रमघꣳरुदं ॥ वेदतेभूमिहृदयंदिविचंद्रमसिश्रितं ॥ तथामृतत्वस्येशानोमाहंपौत्रमघꣳरुदमिति ॥ ॥ छ ॥

## ॥ १०७ ॥ मेधाजननम् ॥

श्रीः ॥ देशकालौसंकीर्त्यास्यकुमारस्यधियोधारणाभिवृद्ध्यर्थंमेधाजननंकरिष्यइतिसंकल्प्य॥ दर्भेणहिरण्यंवध्वातदंतर्धायप्राक् शिरसंकुमारंसंस्थाप्यप्रतिमंत्रंगोघृतंप्राशयति॥प्राशनसूत्रेमंत्राणांसमुच्चयद्योतकपदाभावात्॥ ॐ भूर्ऋचस्त्वयिजुहोमिस्वाहा ॥ ॐ भुवोयजूꣳषित्वयिजुहोमिस्वाहा॥ ॐꣳसुवःसामानित्वयिजुहोमिस्वाहा॥ॐभूर्भुवःसुवरथर्वांगिरसस्त्वयिजुहोमिस्वाहेति ॥

नात्रत्यागः ॥ इतिमेधाजननम् ॥ ततःकुमारमुष्णशीताभिरद्भिःस्नापयति ॥ ॐक्षेत्रीयैत्वानिर्ऋत्यैत्वाद्रुहोमुंचामिवरुणस्य पाशात् ॥ अनागसंब्रह्मणेत्वाकरोमिशिवेतेद्यावापृथिवीउभेइमे ॥ शंतेअग्निःसहाद्भिरस्तुशंद्यावापृथिवीसहौषधीभिः ॥ शमंतरिक्षꣳसहवातेनतेशंतेचतस्रःप्रदिशोभवंतु ॥ सूर्यमृतंतमसोग्राह्यायद्देवाअमुंचन्नसृजन्व्येनसः ॥ एवमहमिमंक्षैत्रियाज्जामिशꣳसात्द्रुहोमुंचामिवरुणस्यपाशादिति ॥ ततःकुमारंमातुरुत्संगेआदधाति ॥ यादैवीश्चतस्रःप्रदिशोवातपत्नीरभिसूर्योविचष्टे ॥ तासांत्वाजरसआदधामिप्रयक्ष्मएतुनिर्ऋतिंपराचैरिति ॥ ततःकुमारमभिमंत्रयते ॥ ॐमातेपुत्रꣳरक्षोहिꣳसीन्माधेनुरतिसारिणी॥प्रियाधनस्यभूयाएधमानास्वेवशेइति॥ततस्तूष्णींप्रक्षालितंदक्षिणंस्तनंसव्यंचमंत्रावृत्त्यापाययति॥ ॐअयंकुमारोजरांधयतुसर्वमायुरेतुतस्मैस्तनंप्रप्यायस्वायुःकीर्तिर्वर्चोयशोबलमिति ॥ ततोमंत्रावृत्त्याउभौस्तनावभिमृशति ॥ ॐ नामयति नरुदतियत्रवयंवदामोयत्रवाभिमृशामसीति ॥ ततोस्याःशिरःसमीपेउदकपूर्णकुंभंपिहितमुखंनिदधाति ॥ ( क्षिप्रप्रसवार्थकात्कुंभाद्भिन्नएवकुंभोयं ) आपोगृहेषुजाग्रतयथादेवेषुजाग्रथ ॥ एवमस्यैसुपुत्रायैजाग्रतेति ॥ ततोजन्मलग्नेदुष्टस्थानस्थितग्रहजनितपीडानिरासार्थंदानजपादिकारयेत् ॥ ततोब्राह्मणेभ्योगोभूहिरण्यादियथाशक्तिदत्वागंधादिनासंपूज्यभूयसींदक्षिणांदत्वाशिषोवाचयेत्अग्नेतेजस्विन्नित्यादिमंत्रैः ॥ ततोनालच्छेदनादियथाचारंकार्यं ॥ इदंचरात्रौसंध्यायांग्रहणेजननमरणाशौचमध्येआशौचांतेवापितरिग्रामांतरगतेपितृव्यादिर्जातकर्मकुर्यात् ॥ इतिसत्याषाढहि० जातकर्मप्रयोगः ॥ ॥ छ ॥

---

१ ततःकुमारस्यगुह्यंनामवक्ष्यमाणप्रकारेणविधातव्यं ॥ इदंमातापितरावेवजानीयातां ॥ व्रतबंधेऽनेनाभिवादनंकारयेत् ॥

## ॥ १०८ ॥ षष्ठीपूजा ॥

श्रीः ॥ पंचमेषष्ठेपिचदिनेपूर्वरात्रौ(प्रदोषसमयेस्नात्वागंधमाल्यभूषितः)पित्रादिराचम्यदेशकालौसंकीर्त्यसूतिकायाःशिशोश्च सकलारिष्टशांतिद्वारायुरारोग्याभिवृद्धिद्वाराचश्रीपरमेश्वरप्रीत्यर्थंविघ्नेशजन्मदाषष्ठीदेवीजीवंतिकानांयथामिलितोपचारैःपूजनमहंकरिष्येइतिसंकल्प्यपूजनस्थानेपीठादौयथाचारंविघ्नेशंजन्मदाःषष्ठीदेवींजीवंतिकांस्कंदंभगवतींचावाह्यषोडशोपचारैः पंचोपचारैर्वा॥ॐसूयवसाद्भगवतीहिभूयाअथोवयंभगवंतःस्याम॥अद्धितृणमघ्न्येविश्वदानींपिबशुद्धमुदकमाचरंती॥इतिमंत्रेण पूजयित्वाप्रार्थनाकार्या॥(विघ्नेशस्य—सर्वविघ्नहरोसित्वमेकदंतगजानन ॥ षष्ठीगृहेर्चितःप्रीत्याबालंदीर्घायुषंकुरु॥लंबोदरमहाभागसर्वोपद्रवनाशन ॥ त्वत्प्रसादादविघ्नेशचिरंजीवतुबालकः ॥ जन्मदानां—वरदाःसायुधायूयंजन्मदाइतिविश्रुताः॥ शक्तिभिःसहबालंमेरक्षतात्राह्निजागरे ) ॥ षष्ठीदेव्याः—गौरीपुत्रोयथास्कंदःशिशुत्वेरक्षितःपुरा ॥ तथाममाप्ययंबालःषष्ठिकेरक्ष्यतांनमः ॥ शक्तिस्त्वंसर्वदेवानांलोकानांहितकारिणी ॥ मातर्बालमिमंरक्षमहाषष्ठिनमोस्तुते॥ स्कंदस्य—कार्तिकेयमहाबाहोगौरीहृदयनंदन ॥ कुमाररक्षभीतिभ्यःपाहिदेवनमोस्तुते ॥ (भगवत्याः—अस्मिंस्तुसूतिकागारेदेवीभिःपरिवारिता ॥ रक्षांकुरुमहाभागेसर्वोपद्रवनाशिनी ॥ अयंममकुलोत्पन्नोरक्षार्थंपादयोस्तव ॥ नीतोमातर्महाभागेचिरंजीवतुबालकः ॥ रूपंदेहिजयंदेहि भगंभगवतिदेहिमे ॥ पुत्रान्देहिधनंदेहिसर्वकामांश्चदेहिमे ॥ शांतिरस्तुशुभंचास्तुप्रणम्यत्वांसुखाययत् ॥ यतःसमागतंपापं तत्रैवप्रतिगच्छतु ॥ ) ततःषष्ठीस्कंदभगवतीभ्यःमाषभक्तबलिंसमर्पयामि ॥ इतिबलिंदत्त्वाब्राह्मणान्गंधतांबूलदक्षिणादिभिः

१ अत्रगोपीनाथपद्धतौजीवंतिकोत्तरंस्कंदस्यशस्त्रंभगवत्याश्चेतिदेवताद्वयंविशेषः । प्रार्थनायांविशेषश्चधनुश्चिह्नांतर्निवेशितोस्ति ।

संपूज्याशिषोवाचयित्वास्वसंबंधिबांधवादिभिः सहापूपखाद्यादिभक्षणंकुर्यात् ॥ जननाशौचमध्येप्रथमषष्ठदशमदिनेषुचनाशौ
चदोषः ॥ अन्नग्रहणेदोषएव ॥ पुरुषाः शस्त्रहस्ताः स्त्रियोगीतिकारिण्योस्यांरात्रौजागरणंकुर्युः ॥ सूतिकागृहंचधूपाग्निदीपश
स्त्रमुसलविभूतियुतंकार्यं ॥ सर्षपादिविकिरणमन्यदपिब्राह्मणद्वाराशांतिसूक्तपाठादियथाचारंकार्यं ॥ इतिषष्ठीपूजासमाप्ता ॥

## ॥ १०९ ॥ नामकरणम् ॥

श्रीः ॥ अत्रमातापुत्रयोः पितुश्चत्रयाणांद्वादश्यामेवाशौचनिवृत्तिः नत्वेकादश्यां ॥ स्नानागारशुद्ध्योर्द्वादश्यांविधानात् ॥ तेन
शाखांतरेविहितमपिऔपासनहोमोनामकरणश्राद्धादिकंचास्माकमेकादश्यांनभवति ॥ इदंचनामकरणंजन्मतोद्वादशेदिवसेक
र्तव्यं॥तच्चस्वकालप्राप्तमपिविष्टिवैधृतिव्यतीपातग्रहणसंक्रांत्यमावास्यापितृश्राद्धदिनक्षयदिनेषुनकार्यं॥ स्वकालेक्रियमाणस्यगु
रुशुक्रास्तबाल्यवार्धकवक्रातिचारमलमासादिनिषेधोनास्ति॥मातापुत्रयोः पितुश्चस्नानंखननलेपनादिनागारशुद्धिंचकारयित्वा
सूतिकाग्निंबहिः परिहृत्यौपासनमग्निमानीयायतनेसंस्थाप्यप्राङ्मुखउपविश्यदक्षिणतः कुमारसहितांभार्यामुपवेश्यआचम्यप्राणा
नायम्यदेशकालौसंकीर्त्यअस्यशिशोर्बीजगर्भसमुद्भवैनोनिबर्हणायुर्वर्चोभिवृद्धिव्यवहारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंनामकर

१ यदाजननकालेकुयोगस्तदातद्दोषशमनायशांतिंकृत्वाजातकर्मनामकरणंचकुर्यात् । जननशांतयः संस्कारप्रकरणांतेवक्ष्यंते । आल
स्यादिनाजातकर्मण्यकृतेतुनामकर्मदिने—जातकर्मकालात्ययनिमित्तंलौकिकाग्नौव्याहृतिहोमवारुणीहोमादिभिः सहितेनरहितेनवाघारवत्तंत्रेणापू
र्विकतंत्रेणवात्वंनः सत्वंनइत्याद्याः सप्ताहुतीः समस्तव्याहृतिभिरेकामाहुतिंचहुत्वागोदानाद्यन्यतमप्रत्याम्नायेनार्धकृच्छ्रंप्रायश्चित्तंचरित्वानंतरमुभयंकु
र्यात् । उभयोः सहकरणेपिगणपतिपूजनादिचतुर्णांतंत्रमेव इति सं० र० ।

णाख्यंकर्मकरिष्येइतिसंकल्प्य॥ तदंगंगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्येइतिसंकल्प्योक्तरीत्याकुर्यात्॥ (पुण्याहेसविताप्रीयतामितिविशेषः) नामदानांगत्वेनोद्धननादिकर्मकरिष्येइतिसंकल्प्यगृह्याग्निंपार्थिवनामानमुपसमाधायसमित्रयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वा॥ नामकरणहोमकर्मणियायक्ष्यमाणादेवतास्ताःसर्वाःपरिग्रहीष्यामीत्यादिव्याहृत्यंतमुक्त्वा॥ वैशेषिकप्रधानहोमेधातारंचतुरनुमतिंचतूराकांद्विःसिनीवालींद्विःकुहूंचाज्येनअंगहोमेवरुणंद्विरित्यादिसंस्रावेणेत्यंतमुक्त्वासमिधोग्नावाधायव्याहृत्यंतंहुत्वा॥प्रधानहोमे॥ धाताददातुनोरयिमितिचतस्रोधात्रीर्हुत्वा॥ॐ अनुनोद्यानुमतिर्यज्ञंदेवेषुमन्यतां ॥ अग्निश्चहव्यवाहनोभवतांदाशुषेमयःस्वाहा ॥ अनुमत्याइदं० ॥ ॐ अन्विदनुमतेत्वंमन्यासैशंचनःकृधि ॥ क्रत्वेदक्षायनोहिनुप्रणआयूंषितारिषःस्वाहा ॥ अनुमत्याइदं० ॥ ॐ अनुमन्यतामनुमन्यमानाप्रजावंतंरयिमक्षीयमाणं ॥ तस्यैवयंहेडसिमापिभूमसानोदेवीसुहवाशर्मयच्छतुस्वाहा ॥ अनुमत्याइदं० ॥ॐ यस्यामिदंप्रदिशियद्विरोचतेनुमतिंप्रतिभूषंत्यायवः ॥ यस्याउपस्थउर्वंतरिक्षंसानोदेवीसुहवाशर्मयच्छतुस्वाहा ॥ अनुमत्याइदं० ॥ ॐ राकामहंसुहवांसुष्टुतीहुवेशृणोतुनःसुभगाबोधतुत्मना॥ सीव्यत्वपःसूच्याच्छिद्यमानयाददातुवीरंशतदायमुक्थ्यंस्वाहा॥ राकायाइदं० ॥ ॐ यास्तेराकेसुमतयःसुपेशसोयाभिर्ददासिदाशुषेवसूनि ॥ ताभिर्नोअद्यसुमनाउपागहिसहस्रपोषंसुभगेरराणास्वाहा ॥ राकायाइदं० ॥ ॐसिनीवालिपृथुष्टुकेयादेवानामसिस्वसा ॥ जुषस्वहव्यमाहुतंप्रजांदेविदिदिड्ढिनःस्वाहा॥सिनीवाल्याइदं० ॥ ॐ यासुपाणिःस्वंगुरिःसुषूमाबहुसूवरी॥तस्यैविश्पत्नियैहविःसिनीवाल्यैजुहोतनस्वाहा॥सिनीवाल्याइदं०॥ ॐकुहूमहंसुभगांविद्मनापसमस्मिन्यज्ञेसुहवांजोहवीमि ॥ सानोददातुश्रवणंपितॄणांतस्यास्तेदेविहविषाविधेमस्वाहा॥ कुह्वाइदं० ॥ इतिद्वादशत्रयोदशवाहुती

हुत्वा ॥ ततइमंमेवरुणेत्यादित्रिवृदन्नहोमंपुण्याहवाचनांतंशुल्बप्रहरणादिसंस्थाजपांतंसमाप्यनामदानं ॥ तत्रप्रथमंकुलदेवता नाममहालक्ष्मीभक्तइत्यादि ॥ ततोजन्मकालीनमासनाम ॥ तच्च ॥ कृष्णोनंतोच्युतश्चक्रीवैकुंठोथजनार्दनः ॥ उपेंद्रोयज्ञपुरुषोवासुदेवस्तथाहरिः ॥ योगीशःपुंडरीकाक्षोमासनामान्यनुक्रमात् ॥ अत्रयथाचारंचैत्रादिर्मार्गशीर्षादिर्वाक्रमः ॥ ततोव्यावहारिकंनाम ॥ अत्रैवंव्यवस्था ॥ वक्ष्यमाणप्रकारेणकृत्रिमंनामद्वयंकार्यं ॥ एकंगुप्तमपरंव्यवहाराय ॥ व्यावहारिकान्नाक्षत्रनामद्वितीयमितिद्रष्टव्यं ॥ एवंसोमयाजीतृतीयमित्यपि ॥ गुप्तंतुनामपुण्याहवाचनात्पूर्वंशुभेकालेकार्यं ॥ तच्चमातापितरावेवजानीतोयावज्जीवंगुप्तंवा मौंजीबंधनेपुत्रोवाजानीते ॥ सगुरोरभिवादनंतेनकुर्यात् ॥ तच्चनामस्वत्रिपुरुषवाचिऋषिवाचिदेवतावाचिवाथवास्वेष्टं ॥ द्व्यक्षरंप्रतिष्ठाकामः चतुरक्षरंब्रह्मवर्चसकामः ॥ तच्चघोषवदाद्यंतरंतस्थंदीर्घात्परंविसर्गांतंवासूपसर्गंवानाम कार्यं ॥ ततोनाक्षत्रंनामज्योतिःशास्त्रोक्तावकहडाचक्रानुसारेणजन्मनक्षत्रपादप्रयुक्ताक्षरादिनाम चुचेचोलेत्यादि ॥ एतच्चसर्वं

---

१ चैत्रादिक्रमेतु—चैत्रादिमासनामानिवैकुंठोथजनार्दनः ॥ उपेंद्रोयज्ञपुरुषोवासुदेवस्तथाहरिः ॥ योगीशःपुंडरीकाक्षोकृष्णोनंतोच्युतस्तथा ॥ चक्रीतिद्वादशैतानिक्रमादाहुर्मनीषिणः ॥ इतिधर्माब्धिसारे ॥ एवंचचैत्रमार्गशीर्षयोर्मध्येकस्यापिक्रमग्रहणेननामवैपरीत्यंनभवति ॥ २ सं. र. नाक्षत्रंनामत्रिविधंजन्मनक्षत्रनाम-जन्मनक्षत्रदेवतानाम-जन्मनक्षत्रपादचतुष्टयभूताक्षराद्याक्षरकंनामेति । तत्राद्यंजन्मनक्षत्रप्रकृतिकंतत्रजातार्थतद्धितांतंयथारौहिणइत्यादि । तत्रोक्ततद्धितांतानांनक्षत्रनाम्नांसंग्रहार्थःश्लोकःप्रयोगवैजयंत्यांसुदर्शनभाष्येविद्यारण्यकृतबौधायनीयदर्शपूर्णमाससूत्रभाष्येचोदाहृतः—रोरेममृज्येचिषुवृद्धिरादौठात्पेचवांत्यश्रवशाश्वयुक्षु ॥ शेषेषुनाम्वोंःकपरःस्वरोंत्यःस्वाप्त्रोरदीर्घःसविसर्गइष्टः॥ इति ॥ अश्वयुक् आश्वयुजः, अपभरणः आपभरणः, कृत्तिकः, रोहिणः रौहिणः, मृगशीर्षः मार्गशीर्षः, आर्द्रकः आर्द्रः, पुनर्वसुः, तिष्यः, आश्लेषः, मघः माघः, पूर्वाफल्गुनः, उत्तराफल्गुनः, हस्तः, चित्रः चैत्रः, स्वातिः, विशाखः, अनूराधः, ज्येष्ठः ज्यैष्ठः, मूलः मूलकः, अषाढः (आषाढः आषाढिनः

नामशर्मांतंब्राह्मणस्यकार्यं ॥ अत्रायंशिष्टाचारः ॥ तंडुलान्कांस्यादिपात्रेप्रसार्यतदुपरिसुवर्णशलाकयाश्रीगणपतयेनमइतिलिखित्वानामानिलिखेत् ॥ प्रथमंकुलदेवतानाम ततोमासनाम ततोव्यावहारिकंनाम ततोनाक्षत्रंचेतिचतुष्टयंलिखित्वानामदेवताभ्योनमःइतिगंधादिदक्षिणांतोपचारैःसंपूज्य ॥ ततःकर्ताकुलदेवतानाम्नामहालक्ष्मीभक्तोसीतिस्वदक्षिणेविद्यमानस्यमातुरुत्संगस्थस्यशिशोर्दक्षिणेकर्णेकथयित्वानर्यंप्रजामित्यादिनाप्रतिष्ठाप्य ॥ विप्रैर्नामसुप्रतिष्ठितमस्त्वित्युक्ते ॥ महालक्ष्मीभक्तोयंभवतःसर्वान्ब्राह्मणानभिवादयते ॥ विप्रैरायुष्मान्भवतुमहालक्ष्मीभक्तःइत्युक्ते ॥ अस्मैमहालक्ष्मीभक्तायपुण्याहंभवंतोब्रुवंत्वितित्रिः ॥ ॐपुण्याहमितित्रिर्विप्राः ॥ एवंस्वस्तिऋद्धिमितित्रिर्वाचयेत् ॥ एवंशिष्टनामत्रयेपिपुण्याहवाचनांतंकार्यं ॥ ततोनीराजनंकारयित्वाश्रीरस्त्वित्याद्युक्त्वाप्रजापतिःप्रीयतामित्युक्त्वा॥कर्मांतेपिपुण्याहवाचनचिकीर्षायांपुण्याहवाचनमभिषेचनंचकारयेत् ॥ ततःकर्मांगत्वेनदशाधिकब्राह्मणभोजनंसंकल्प्यब्राह्मणान्गंधादिनासंपूज्यभूयसींदक्षिणांदत्त्वाब्राह्मणेभ्योममनामप्रथमंजातवेदइत्याशिषोग्राह्याः ॥ ततःकर्मसाद्गुण्यायविष्णुंस्मृत्वाशिष्टैरिष्टैश्चसहभोजनंकुर्यात् ॥ इतिसत्याषाढ० नामकरणं ॥

---

आषाढियः) अभिजित् आभिजितः, श्रवणः श्रावणः, श्रविष्ठः (श्राविष्ठीयः,) शतभिषक् शातभिषजः, (शातभिषः) प्रोष्ठपादः प्रोष्ठपदः, रेवतः रैवतः इति । ३ चुचेचोलाअश्विनी, लिलुलेलोभरणी, अइउएकृत्तिका, ओवाविवुरोहिणी, वेवोकाकिमृगशिरः, कुघङछआर्द्रा, केकोहाहिपुनर्वसु, हुहेहोडापुष्य, डिडुडेडोआश्लेषा, मामिमुमेमघा, मोटाटिटुपूर्वाफल्गुनी, टेटोपापिउत्तराफल्गुनी, पुषाणाठाहस्त, पेपोरारिचित्रा, रुरेरोतास्वाती, तितुतेतोविशाखा, नानिनुनेअनूराधा, नोयायियुज्येष्ठा, येयोभाभिमूळ, भुधाफाढापूर्वाषाढा, भेभोजाजिउत्तराषाढा, जुजेजोखाअभिजित्, खिखुखेखोश्रवण, गागिगूगेधनिष्ठा, गोसासिसुशततारका, सेसोदादिपूर्वाभाद्रपदा, दूझञथउत्तराभाद्रपदा, देदोचाचिरेवतीइति ।

## ॥ ११० ॥ शिशोःपर्यंकारोपणम् ॥

अथस्वगृह्यानुक्ताअपिकेचनसंस्काराःशिष्टपरिगृहीतत्वेनावश्यकत्वात्स्मार्तालिख्यंते ॥

श्रीः ॥ जन्मदिनाद्द्वादशेषोडशेद्वाविंशेअन्यस्मिन्वाज्योतिःशास्त्रोक्तमृदुक्षिप्रनक्षत्रादियुतेशुभेकालेयथाचारंकुलदेवतापूजां विधायालंकृतंशिशुंहरिद्राद्यलंकृतेपर्यंकेमात्राद्याःसौभाग्ययुताःस्त्रियोजलशायिनंहरिंसंस्मृत्यगीतवाद्यादिसमकालंप्राक्शिर संस्थापयेयुः ॥ यथाचारंकुलदेवताश्चपूजयेत् ॥ इतिपर्यंकारोपणविधिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १११ ॥ दुग्धपानम् ॥

श्रीः ॥ एकत्रिंशेदिनेद्वितीयजन्मनक्षत्रेजन्मदिनेवायथाचारमन्यस्मिन्प्राशननक्षत्रयुतेशुभेकालेवाकुलदेवतापूजांविधायगो क्षीरंशंखेनमातान्यावासुभगाकुमारंदक्षिणशिरसंप्राक्शिरसंवापाययेदिति ॥ ॥ ॥

## ॥ ११२ ॥ कर्णवेधः ॥

श्रीः॥ जन्मदिनाद्द्वादशेषोडशेवादिनेषष्ठसप्तमाष्टममासान्यतममासेदंतजननात्पूर्वमेवज्योतिर्विदादिष्टेशुभेकालेपूर्वाह्णेमध्याह्ने वाविष्णुशिवब्रह्मचंद्रसूर्यदिगीशनासत्यसरस्वतीकुलदेवतागोब्राह्मणान्यथाविभवंसंपूज्यमातुरुत्संगस्थस्यशुभासनस्थस्यवालंकृ तस्यशिशोःप्राङ्मुखस्योदङ्मुखस्यवाकुशलेनसुवर्णादिसूच्याकर्णौवेधयेदनावृतेसूर्यरश्मिपातस्थलेंगणादौकुमारस्यपूर्वंदक्षिणः कुमार्यावामः ॥ वेधनक्षात्तृतीयनक्षत्रेकर्णक्षालनंकार्यं ॥ आभरणधारणक्षमताभवतितथावर्धनीयौ ॥ पुंसःसूर्यरश्मिप्रवेश योग्यरंध्रपर्यंतंवर्धयेत् लंबकर्णतातुनिषिद्धा ॥ स्त्रीणांतुयथेष्टम् ॥ ॥ ॥

## ॥ ११२ ॥ सूर्यावलोकननिष्क्रमणंच ॥

श्रीः ॥ तृतीयेमासिजन्मदिनेजन्मभेवाइष्टदेवतापूजनपूर्वकंशिशुनासोत्सवंसूर्यंदर्शनंकारयित्वा ॥ चतुर्थेमासिशुभेकालेवाचंद्रंधेनुंचदर्शयेत् ॥ अथवासूर्यावलोकनंनिष्क्रमणेनसहैवकार्यं ॥ चतुर्थेषष्ठेवामासिशुक्लपक्षेशुभतिथ्यादौपितासभार्यःसशिशुश्च अभ्यंगस्नातःकृतकौतुकश्चप्राङ्मुखउपविश्यदेशकालौसंकीर्त्यममास्यशिशोरायुरभिवृद्धिद्वाराबीजगर्भसमुद्भवैनोनिबर्हणद्वारा चश्रीपरमेश्वरप्रीत्यर्थंसूर्याद्यवलोकनंनिष्क्रमणंचकरिष्ये ॥ तदंगंगणपतिपूजनंपुण्याहवाचनंचकरिष्येइतिसंकल्प्यकृत्वा ॥ तत इंद्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशानानांप्राच्याद्यष्टदिक्पालानांदिशांचंद्रार्कवाय्वादिदेवानांचयथाक्रमंपूजांकृत्वा ब्राह्मणान्संभोज्यशिशुमलंकृत्याग्निसूर्यचंद्रधेनूनांदर्शनंकारयित्वामंत्रान्पठेत् ॥ चंद्रार्काग्निदिगीशानांदिशांचवरुणस्यच ॥ निक्षेपार्थमिमंदद्मितेत्वांरक्षंतुसर्वदा ॥ अप्रमत्तंप्रमत्तंवादिवारात्रमथापिवा ॥ रक्षंतुसततंसर्वेदेवाःशक्रपुरोगमाः ॥ एवंशिशुरक्षार्थंदेवान्संप्रार्थ्यविष्णुशिवालययोरन्यतरद्बंधुगृहंवागत्वातत्रतत्रदेवंपुष्पोपहारादिभिःसंपूज्य गोमयाद्युपलिप्तेचतुरस्रेदेशेधान्यादिनिधायतत्रशिशुमासयित्वामंत्रेणरक्षांकुर्यात् ॥ ॐ हौं जूं सः ॐ भूर्भुवःस्वः ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॐ स्वःभुवःभूः ॐ सः जूं हौं ॐ ॥ इत्येवंरूपंमृतसंजीवनमंत्रंपठन्विभूत्याऽक्षतैर्वामूर्ध्निललाटेच



१ सं. र. मालायांतु—ॐ हौं ॐ जूं ॐ सः ॐ भूः ॐ भुवः ॐ सुवः ॐ त्र्यंबकं० मृतात् ॐ सुवः ॐ भुवः ॐ भूः ॐ सः ॐ जूं ॐ हौं ॐ इतिचतुर्दशप्रणवमंत्रउक्तः ॥

रक्षांकृत्वा ॥ अपूपादिभिर्भूतेशानंगणेशंचसमभ्यर्च्यशिशुंभक्ष्यादिनापोषयित्वादेवताप्रणामंप्रदक्षिणात्रयंचशिशुनाकारयित्वा मातुलाद्यासन्नबंधुगृहंपूर्ववन्नीत्वातत्रशिशुंतोषयित्वास्वगृहंगत्वाब्राह्मणेभ्योदक्षिणांदत्त्वाशिषोवाचयेत् ॥ इतिनिष्क्रमणम् ॥

## ॥ ११४ ॥ उपवेशनम् ॥

श्रीः ॥ पंचमेमासिशुक्लपक्षेपूर्वाह्णेज्योतिर्विदुक्तेमुहूर्तेगणेशंपूजयित्वापुण्याहंवाचयित्वावराहपृथिवीगुरुदेवद्विजान्पूजयित्वाभूमिमुपलिप्यतत्ररंगवल्ल्यामंडलंकृत्वाशंखतूर्यादिमांगलिकध्वनौक्रियमाणेशिशुमुपवेशयेदेभिर्मंत्रैः ॥ रक्षैनंवसुधेदेविसर्वदासर्वगंशिशुं ॥ आयुःप्रमाणंनिखिलंनिक्षिपस्वहरिप्रिये ॥ अचिरादायुषस्त्वस्ययेकेचित्परिपंथिनः ॥ जीवितारोग्यवित्तेषुनिर्दहस्वाचिरेणतान् ॥ धारिण्यशेषभूतानांमातस्त्वमधिकाह्यसि ॥ कुमारंपाहिमातस्त्वंब्रह्मातदनुमन्यतां ॥ ततोब्राह्मणान्संपूज्याशिषोग्राह्याः ॥ कर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ कुमार्याअप्येवमेवकुर्यात् ॥ इतिस्मार्तानि ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ११५ ॥ अन्नप्राशनम् ॥

श्रीः ॥ जन्मतःषष्ठेमास्यष्टमेवादंतेषुजातेषुवाज्योतिर्विदादिष्टेमुहूर्तेशुक्लपक्षेपूर्वाह्णेपित्रादिःशिशोरन्नप्राशनंकुर्यात् ॥ षष्ठेमासेक्रियतेचेत्तदागुरुशुक्रबाल्यस्थविरवक्रातिचारमौढ्यादिनिषेधोधिमासनिषेधश्चनास्ति ॥ अन्नप्राशनचूडाकरणगोदानादिषुवैशेषिकहोमोनास्तिअनुक्तत्वात् ॥ नामकरणस्थोवैशेषिकहोमःकैश्चिदत्रक्रियतेतत्तुसुतरामशुद्धंप्रापकाभावात् ॥ जयादीनामुपहोमसंज्ञांकुर्वतान्नप्राशनादिषुनास्तिप्रधानहोमइतिसूचितंच ॥ उपप्रधानसमीपेहूयंतइत्युपहोमाः ॥ यत्रनास्तिप्रधानहोमस्त

त्र्व्याहृत्यंतःसामान्यप्रधानहोमःप्रधानहोमत्वेनविवक्षितइति ॥ अतएवयुक्तोवहइत्यादिव्याहृत्यंतेषुसामान्यप्रधानमितिशिष्टानांव्यवहारश्च ॥ कर्ताकृतमांगलिकःप्राङ्मुखउपविश्यस्वदक्षिणतःसंस्कार्यसहितांभार्यांचोपवेश्यदेशकालौसंकीर्त्यममास्यशिशोर्मातृगर्भमलप्राशनैनोनिबर्हणबीजगर्भसमुद्भवैनोनिबर्हणद्वाराऽन्नाद्यब्रह्मवर्चसतेजइंद्रियायुरभिवृद्धिद्वाराचश्रीपरमेश्वरप्रीत्यर्थंअन्नप्राशनाख्यंकर्मकरिष्ये ॥ तदंगंगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्यइतिसंकल्प्यकुर्यात् ॥ (पुण्याहेसवितापीयतामितिविशेषः) ततउद्धननादिसंस्कृतायांभुविऔपासनाग्निंपित्रतिरिक्तेकर्तरिलौकिकंवाशुचिनामानंप्रतिष्ठाप्यसमित्त्रयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वाअन्नप्राशनहोमकर्मणियायक्ष्यमाणादेवताइत्यादिजातवेदसमग्निमिध्मेनेत्यादिसामान्यप्रधानांतंहुत्वा ॥ नात्रवैशेषिकप्रधानहोमः ॥ अंगहोमादिसंस्थाजपांतंकृत्वात्रिवृदन्नहोमंपुण्याहवाचनांतंसमाप्य ॥ ततःस्वदक्षिणेमातुरुत्संगस्थंप्राङ्मुखंशिशुंदधिमधुघृतमितित्रिवृन्मिश्रंकृत्वाप्रतिमंत्रंप्राशयति ॥ प्राशनसूत्रेमंत्राणांसमुच्चयद्योतकपदाभावात् ॥ भूस्त्वयिदधामि ॥ भुवस्त्वयिदधामि॥ सुवस्त्वयिदधामीति॥ ततोऽन्नमेकवारंप्राशयति ॥ अपांत्वौषधीनाꣳरसंप्राशयामिशिवास्तआपओषधयःसंत्वनमीवास्तआपओषधयोभवंत्विति॥ ततोयथेष्टंप्राशयित्वामुखंप्रक्षाल्यबालकंभूमावुपवेश्यतदग्रेपुस्तकवस्त्रशस्त्रादिशिल्पानिविन्यस्यस्वेच्छयाशिशुर्यत्स्पृशेत्सास्यजीविकेतिपरीक्षांकुर्यात् ॥ ततःकर्मां

१ अत्र सं० र० इत्यादिव्याहृत्यंतमुक्त्वाअंगहोमेवरुणंद्विरित्यादि । पात्रासादनेदधिमधुघृतंपायसमन्नमाज्यासादनोत्तरंसादयेत् । ततोब्रह्मवरणादित्रिवृदन्नहोमीयपुण्याहवाचनांतंकुर्यात् । तस्मिन्पुण्याहेप्रजापतिःप्रीयतामितिविशेषः । अत्रजयादयःकृताकृताः । २ तत्रविषममातेनैवमधुसर्पिर्मिश्रणमन्यत्रोक्तम् ।

गत्वेनदशाधिकब्राह्मणभोजनंभूयसींदक्षिणांचसंकल्प्यदत्वाऽऽशिशोवाचयित्वाकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ कुमार्यांअप्यमंत्रकमिदंकुर्यात् ॥ इतिसत्याषाढहिरण्यकेशी० अन्नप्राशनप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ११६ ॥ आयुर्वर्धापनविधिः ॥

श्रीः ॥ जन्मनक्षत्रेप्राक्संवत्सरात्प्रतिमासंनक्षत्रहोमः ॥ ऊर्ध्वंसंवत्सरेसंवत्सरेबाल्येपित्रादिःकुर्यात् ॥ ऊर्ध्वंस्वयमेववाकुर्यात्सौरमानेन ॥ यजमानःकृतावश्यकक्रियःसर्वौषधियुतजलपूरितकलशंसंपूज्यतदुदकेनस्नात्वाशुक्लांबरधरोलंकृतःकौतुकमाबध्यप्राङ्मुखउपविश्यदेशकालौसंकीर्त्यममाब्दपूर्तिंजन्मदिवसेआयुरभिवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंआयुर्वर्धापनाख्यंकर्मकरिष्ये इतिसंकल्प्य ॥ गणपतिंसंपूज्यपुण्याहंवाचयित्वा ॥ आयुर्वर्धापनांगत्वेनोद्धननादिकर्मकरिष्येइतिसंकल्प्योद्धननादिभूसंस्कारंविधायतत्रबलवर्धननामानमौपासनमग्निंलौकिकमग्निंवाप्रतिष्ठाप्यसमित्त्रयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वा ॥ आयुर्वर्धापनहोमकर्मणियायक्ष्यमाणादेवतास्ताःसर्वाःपरिग्रहीष्यामीत्यादिसामान्यप्रधानांतमुक्त्वावैशेषिकप्रधानहोमे ॥ अमुकजन्मनक्षत्रंतद्देवतांवाअष्टोत्तरशतसंख्ययाष्टाविंशतिसंख्ययावाचरुणायक्ष्ये ॥ अंगहोमेवरुणंद्विरित्यादिव्याहृत्यंतंहुत्वाजन्मनक्षत्रंतद्देवतांवाचरुणातत्तन्नाममंत्रेणहुत्वाहोमशेषंसमाप्यनात्रत्रिवृदन्नहोमः ॥ स्वजननक्षत्रंतद्देवतांचंद्रंवरुणंचयथोपचारैःसंपूज्यकृताभिषेकोयथाशक्तिस्वजनबंधुसुहृत्पूजांस्ववाहनादिपूजांचकृत्वाब्राह्मणान्भोजयित्वागंधवस्त्रादिभिरलंकृतः ॥

पतिपुत्रवतीभिर्नीराजितोब्राह्मणाशिषोगृहीत्वाहविष्याशीजितेंद्रियःस्यात् ॥ उपहोमेषुनास्तित्रिवृदन्नहोमः आचाराभावात् ॥ यदिसिद्धश्चरुर्गृह्यतेतदादेवपवित्राख्यसंस्कारसंस्कृतोग्राह्यः ॥ आपूर्विकपक्षेणवाचरुहोमःकार्यः ॥ इत्यायुर्वर्धापनप्रयोगः ॥



## ॥ ११७ ॥ प्रवासागतविधिः ॥

श्रीः ॥ प्रवासादागतेपुत्रेपितरिवापुत्रदर्शनेसतिपितुरेवनैमित्तिकंकर्मोच्यते ॥ पितापुत्रमभिमृशति ॥ ॐसोमस्यत्वाद्युम्नेनाभिमृशाम्यग्नेस्तेजसासूर्यस्यवर्चसेति ॥ ततोमूर्ध्न्याजिघ्रति ॥ ॐ पशूनांत्वाहुंकारेणाभिजिघ्राम्यमुकशर्मन्नायुषेवर्चसेहुमिति ॥ ततःस्वदक्षिणेनहस्तेनपुत्रस्यदक्षिणंहस्तमुत्तानंसांगुष्ठंगृह्णाति ॥ अग्निरायुष्मानितिपंचभिःपर्यायैः ॥ अग्निसोमयज्ञब्रह्मदेवाइतिमंत्रक्रमः ॥ ततआयुष्टेविश्वतोदधदितिअग्नौपृथिव्यांप्रतितिष्ठेतिमंत्रद्वयंपुत्रस्यदक्षिणेकर्णेजपति ॥ ततआयुर्दाअग्नेइतिअग्नौपृथिव्यांप्रतितिष्ठेतिमंत्रद्वयंचोत्तरेकर्णेजपति ॥ इदंयावज्जीवंयावदुपनयनंवापितुर्नैमित्तिकं ॥ इदंकुमार्याअपितूष्णींभवति ॥

## ॥ ११८ ॥ चूडाकरणम् ॥

श्रीः ॥ गर्भतोजन्मतोवातृतीयेवर्षेपंचमेवाअगर्भिण्यांमातरिपंचमवर्षादूर्ध्वंगर्भिण्यामपिगुरुशुक्रवार्धकाद्यभावेअक्षयेऽनधिकेचमासिउदगयनेशुक्लपक्षेज्योतिर्विदुक्तेकालेचूडाकर्मकार्यं ॥ यदिगर्भाधानादयःसंस्काराःस्वकालेनजातास्तदाचौलात्प्राग्गर्भाधानादिसंस्काराणामकरणजन्यदोषपरिहारायप्रायश्चित्तंकृत्वागर्भाधानादयःसंस्कारास्तंत्रेणवक्ष्यमाणप्रकारेणसर्वेकर्तव्याः ॥ चौलंतुउपनयनात्प्राक्संस्कारेभ्यःपृथगुपनयनदिवसेवाउपनयनात्पूर्वंकार्यं ॥ (अंतरितसंस्कारप्रायश्चित्तसंकल्पः ॥ देशकालौ

संकीर्त्यअस्यकुमारस्यगर्भाधानपुंसवनसीमंतोन्नयनजातकर्मनामकर्मान्नप्राशनचौलांतसंस्काराणांस्वकालेअकरणप्रत्यवायपरि
हारार्थंप्रतिसंस्कारंपादकृच्छ्रममुकप्रत्याम्नायेनाहमाचरिष्ये ॥ तथागर्भाधानाद्यन्नप्राशनांतसंस्कारसिद्ध्यर्थंप्रतिसंस्कारंपादप्रा
जापत्यप्रायश्चित्तमहमाचरिष्येइतिसंकल्प्यकृत्वा)॥ यजमानःकृतमांगलिकःप्राङ्मुखउपविश्यदक्षिणतःकुमारसहितांभार्यांचोप
वेश्यदेशकालौसंकीर्त्यास्यकुमारस्यबीजगर्भसमुद्भवैनोनिबर्हणद्वाराऽऽयुर्वर्चोभिवृद्धिद्वाराचश्रीपरमेश्वरप्रीत्यर्थंचूडाकरणा
ख्यंकर्मकरिष्ये॥तदंगंगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंअंकुरारोपणंचकरिष्यइतिसंकल्प्यकुर्यात्॥ (पुण्याहे
केशिनःप्रीयंतामितिविशेषः) ॥ उद्धननादिभूसंस्कारंविधायसभ्यनामानमौपासनाग्निंप्रतिष्ठाप्यायतनस्थेतुसभ्यनाम्नाभावयि
त्वाग्निंप्रज्वाल्यसमित्त्रयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वाचौलहोमकर्मणियक्ष्यमाणादेवताःपरिग्रहीष्यामि॥जातवेदस
मग्निमिध्मेनेत्यादिव्याहृत्यंतमुक्त्वा ॥ नात्रप्रधानहोमः॥ अंगहोमेवरुणंद्विरित्यादि ॥ पात्रप्रयोगकालेक्षुरं आनडुहंशकृत् शीतो
ष्णाअपःओषधीश्चासाद्य ॥ संस्थाजपांतंकृत्वात्रिवृदन्नहोमंपुण्याहवाचनांतंकृत्वा ॥ अग्नेःपश्चाद्दक्षिणतःकुमारःमध्येआचार्यः
उत्तरतोमाताब्रह्मचारीवाकश्चित्केशसंयमनार्थंआनडुहंगोमयंधारयन्नुपविशति॥ बहिस्तप्ताअपःशीतासुसंसृज्यताआदायदक्षि
णंगोदानमुनत्ति ॐआपउंदंतुजीवसेदीर्घायुत्वायवर्चसइति॥ (गविपृथिव्यांदीयतेस्वापार्थंअंगंतद्गोदानं तानिमनुष्येचत्वारिते
षांउंदनंजलेनार्द्रीकरणं॥ ) तस्मिन्गोदानेऊर्ध्वाग्रान्कुशान्निदधाति ॐओषधेत्रायस्वैनमिति ॥ तेषुक्षुरंनिदधाति ॐस्वधितेमै
नꣳहिꣳसीरिति ॥ ततःप्रवपति ॐदेवश्रूरेतानिप्रवपेइति ॥ एवमवशिष्टगोदानत्रयेपिउंदनादिवपनांतंसमानंकर्म ॥ वपनेपृथ
ङ्मंत्राः ॥ प्रदक्षिणंवपनंकार्यं ॥ ततःपश्चाद्वपति ॐयेनावपत्सविताक्षुरेणसोमस्यराज्ञोवरुणस्यविद्वान् ॥ तेनब्रह्मणोवपतेद

मस्योर्जेमश्स्य्याववर्चसासश्सृजाथेति ॥ ततउत्तरतोवपति ॐ येनपूषाबृहस्पतेरग्नेरिंद्रस्यचायुषेवपत् ॥ तेनतेहंवपाम्यमुकशर्मन्निति संबुद्ध्यंतंसंस्कार्यनामगृह्णाति ॥ ततःपुरस्ताद्वपति ॐ यथाज्योक्सुमनाअसत् ॥ ज्योकसूर्यंदृशइति ॥ समग्रवपनं ॥ वपनानंतरंनापितेनचूडाश्चकारयेयुः ॥ एकाद्वेतिस्रःपंचवायथाप्रदेशंकुलधर्मानुसारेणचूडाःकार्याः ॥ अथवाएकार्षेयस्यैका ॥ द्व्यार्षेयस्यद्वे ॥ त्र्यार्षेयस्यतिस्रः ॥ पंचार्षेयस्यपंच ॥ एकाचेन्मध्येकार्या ॥ द्वेचेन्मध्येपश्चात् ॥ तिस्रश्चेन्मध्येपुरस्ताद्दक्षिणतः ॥ पंचचेत्प्रतिदिशंमध्येचचूडाःकार्याः ॥ कुमारस्यावश्यकःकश्चित्तान्गोमयाच्छादितान्केशानादायगोष्ठउदुंबरेदर्भस्तंबेवाअवटंकृत्वानिदधाति ॥ ॐ यत्रपूषाबृहस्पतिःसवितासोमोअग्निः ॥ तेभ्योनिधानंवहुधाव्यैच्छन्नंतराद्यावापृथिवीअपःसुर्वरिति ॥ ततःकृतशुद्धस्नानःकुमारआचार्यादीन्प्रणमेत् ॥ सर्पिष्मंतमोदनंनापितायदत्त्वाब्राह्मणभोजनंभूयसींदक्षिणांच दत्त्वाशिषोवाचयित्वाकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ इतिसत्याषाढहिरण्यकेशी० चूडाकरणप्रयोगःसमाप्तः ॥ ॥ छ ॥

## ॥ ११९ ॥ अक्षरस्वीकारः ॥

श्रीः ॥ कुमारमभ्यंगस्नानपूर्वकंस्नापयित्वागंधादिभिरलंकृत्ययथोक्तेमुहूर्तेआचम्यप्राणानायम्यदेशकालौसंकीर्त्यममास्यामुकशर्मणःपुत्रस्याक्षरारंभार्थंमार्कंडेयगर्गाद्युक्तविधिंकरिष्यइतिसंकल्प्यगणपतिपूजनंविधायपुनःकुमारेणसहस्नात्वाशुचौसमेदेशे गोचर्ममात्रंयथापर्याप्तंवास्थलंगोमयेनोपलिप्यतत्रसैकतंस्थंडिलंकृत्वापलाशशाखामूलेनस्थंडिलमध्येमृदंखनित्वापलाशशाखां तत्रैवरोपयित्वातत्रसरस्वतीमावाहयेत् ॥ भुवनमातःसर्ववाङ्मयरूपेआगच्छागच्छेतिमंत्रेण ॥ ततःप्रणवेनासनाद्यर्घ्यादिनमस्कारांतानुपचारान्दद्यात् ॥ अत्रनैवेद्यंपायसंगुडौदनश्च ॥ ततोहरिंलक्ष्मींविघ्नेशंचनाममंत्रैःसंपूज्यस्वविद्यासूत्रकारेभ्योनमः ॥

स्वविद्यायैनमः ॥ इतिनाममंत्राभ्यांतौसंपूज्यस्थंडिलकरणादि ॥ बलवर्धननामात्राग्निः ॥ समित्त्रयमादायेत्यादिप्राणायामांतं कृत्वाअक्षरारंभार्थकर्मणिइत्यादिप्रसाधनीदेव्यंतंव्याहृत्यंतंवोक्त्वाप्रधानहोमेसरस्वतींहरिंलक्ष्मींविघ्नेशंस्वविद्यासूत्रकारान्स्वविद्यांचअष्टाष्टसंख्याभिर्घृताहुतिभिर्यक्ष्यइत्युक्त्वाअंगहोमेवरुणंद्विरित्यादिअग्निंस्विष्टकृतमित्यादिवापूर्वोक्तानुसारेणोक्त्वासमिदभ्याधानादिप्रसाधनीदेवीहोमांतंव्याहृतिहोमांतंवान्वाधानोत्कीर्तितपक्षानुसारेणकृत्वाप्रधानहोमंकुर्यात् ॥सरस्वत्यैस्वाहा हरयेस्वाहा लक्ष्म्यैस्वाहा विघ्नेशायस्वाहा स्वविद्यासूत्रकारेभ्यःस्वाहा स्वविद्यायैस्वाहा इत्येतैर्नामभिस्तत्तद्देवतोद्देशेनाष्टाष्टसंख्याकाघृताहुतीर्जुहुयात् ॥ अंत्ययोर्नवाहोमः ॥ ततोंगहोमादिस्विष्टकृदादिवापूर्वांतानुसारेणहोमशेषंसमापयेत् ॥ नत्रिवृदन्नहोमः आपूर्विकतंत्रेणवासर्वोहोमः ॥ स्वस्यकर्तुमसंभवेआचार्यंवृत्वातेनहोमंकारयेत् ॥ ततोक्षरप्रवक्तारंप्राङ्मुखमासीनंशक्तितोवस्त्रालंकारादिभिर्यथाविभवंसंपूज्यशिष्टान्ब्राह्मणांश्चसंपूज्यतेभ्योयथाविभवंदक्षिणांदत्वाकुमारेणसहसर्वाआवाहितदेवतास्त्रिःप्रदक्षिणीकृत्यकुमारेणाक्षरप्रवक्त्रभिवंदनंकारयित्वाक्रमेणावाहितदेवताउद्वासयेत् ॥ ततःकुमारोब्राह्मणान्पित्रादीन्गुरूंश्चसंपूज्यनमस्कृत्यप्राङ्मुखस्याक्षरप्रवक्तुःसमीपेप्रत्यङ्मुखउपविश्याक्षरप्रवक्तारंनमस्कुर्यात् ॥ ततोऽक्षरप्रवक्ताआयुष्मान्विद्यावान्भवसौम्या ३ इत्याशिषोदत्वाप्रणवपूर्वकंलेखयेच्च ॥ ॐ नमःसिद्धंइतिपूर्वंपाठयित्वालेखयित्वाअकाराद्यक्षराणिपाठयेल्लेखयेच्चेतिसंप्रदायः ॥ इतिसंस्काररत्नमालायामक्षरारंभः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १२० ॥ बालानांवाक्शुद्ध्युपायः ॥

श्रीः ॥ वचाब्राह्मीचमंडूकाघनंकुष्ठंसनागरं ॥ घृतेनपरिदेयंचचूर्णंवाक्पटुकारणं ॥ गुडूचिकामपामार्गविडंगंशंखपुष्पिका ॥ विष्णुक्रांतावचापथ्यानागरंचशतावरी ॥ चूर्णंघृतेनसंमिश्रंलिह्यात्प्रज्ञांविवर्धयेत् ॥ त्रिभिर्दिनैःसहस्रैकंश्लोकानामवधार्यते ॥ त्रिकटुत्रिफलाधन्यायवानीशतमूलिका ॥ वचाब्राह्मीतथाभार्ङ्गीचूर्णंसमधुलेहितं ॥ वाक्पटुत्वंचबालानांवीणावाद्यसमस्वरं ॥

## ॥ १२१ ॥ गर्भाधानाद्यंतरितसंस्कारनिर्णयः ॥

श्रीः ॥ प्रतिबंधवशात्उपनयनात्प्रागंतरितान्संस्कारान्प्रारब्धेनसंस्कारेणसहतत्तत्कालातिक्रमप्रायश्चित्तंकृत्वासर्वांस्तंत्रेणकुर्यात् ॥ चौलंतुसंस्कारेभ्यःपृथगुपनयनदिवसेवाकृत्वाउपनयनंकार्यं ॥ गर्भाधानादिचौलांतसंस्काराणामत्यगतौप्रायश्चित्तेनापिचरितार्थत्वं ॥ उपनयनप्रभृतिसंस्काराणामत्यगतावपिकालातिक्रमेसतितत्तत्कालातिक्रमप्रायश्चित्तंकृत्वोपनयनादयःसंस्कारास्त्ववश्यंकर्तव्याः ॥ प्रायश्चित्तंतुप्रतिसंस्कारंपादप्राजापत्यः ॥ चूडायामर्धप्राजापत्यः ॥ आलस्यादिनालोपेद्विगुणंकार्यं ॥ तच्चजपहोमब्राह्मणभोजनगोदानाद्यन्यतमप्रत्याम्नायेनकार्यं ॥ प्रणवव्याहृतिसहितयागायत्र्यासहस्रंतिलहोमः ॥ सप्रणवसमस्तव्याहृतिभिर्वाकेवलेनप्रणवेनवासहस्रंतिलहोमः ॥ अयुतंगायत्रीजपोवाद्वादशब्राह्मणभोजनंवारुद्रैकादशिनीजपो

---

१ वचा वेखंड, ब्राह्मी प्रसिद्धा, मंडूका मंडूकपर्णी दिंडाइतिभाषायां, घनोमुस्ता, कुष्ठंप्रसिद्धं, नागरंशुंठी, गुडूचिकागुळवेली, अपामार्गः- आघाडा, विडंगंवायविडंगं, शंखपुष्पीश्वेतपुष्पीप्रसिद्धा, विष्णुक्रांताप्रसिद्धा, पथ्याहरीतकी, सर्वत्रहरीतकीग्रहणेतस्यादलंग्राह्यं । त्रिकटुसुंठ- मिरेंपिंपळी, धन्याधणे, यवानीओवा, अन्यानिप्रसिद्धानि, त्रिफलाहिरडाबेहडाआमलकइति ॥

वाएकंगोदानंवाप्राजापत्यप्रत्याम्नायः ॥ तीर्थयात्राद्यन्यदपियथासंभवंदेशकालकर्तृतारतम्येनप्रायश्चित्तंप्रकल्प्यकृत्वासंस्का
राःकार्याः ॥ गर्भाधानाद्यन्नप्राशनांतानांतंत्रं ॥ तत्रसंस्कारेषुहोमस्त्वंगं ॥ अंगजातंचसकृदनुष्ठितंसर्वत्रोपकरोति ॥ यदपिवैशे
षिकमंगंसंप्रतिपन्नदेवताकंचेत्सकृदेवानुष्ठेयं ॥ यच्चविरुद्धधर्मकंवैशेषिकमंगंतदनुष्ठेयमेवनतस्यप्रसंगसिद्धिः ॥ अंगभूतेपिहो
मेकिंचिदंगंकिंचित्प्रधानमितितुव्यवहारः ॥ प्रतिकर्मसाधारणंयत्तदंगं ॥ यत्कर्मविशेषंप्रतिविशिष्यविधीयतेतद्वैशेषिकंप्रधान
मितिचव्यवहारः ॥ वस्तुतस्तुतद्वैशेषिकंमुख्यकर्मणोंगमेव ॥ यथाजयाद्यंगभूतोहोमोविधीयतेतत्रयद्वैशेषिकमंगंतदन्वाधा
नादौप्रधानमितिचोच्यते तत्सर्वमप्यंगमेव ॥ एवमन्यत्रापिअंगंप्रधानमितिचद्रष्टव्यं ॥ एवंचहोमांगगर्भाधानादीनिप्रधा
नानिअन्वर्थनामधेयानि ॥ गर्भआधीयतेयेनकर्मणातत्समंत्ररेतःसेकादिगर्भाधानं ॥ पुमान्सूयतेयेनकर्मणातत्पुंसवनंदधिद्र
प्सादिप्राशनं ॥ सीमंतउन्नीयतेयेनकर्मणात्रेण्याशलल्यायत्क्रियतेतत्सीमंतोन्नयनं ॥ अन्नंप्राश्यतेयेनतदन्नप्राशनं ॥ उपआ
चार्यस्यसमीपंनीयतेयेनकर्मणातत्समंत्रंप्रधानोपनयनमित्येवमादीनिप्रधानानिपृथक्पृथगनुष्ठेयानि ॥ तत्रयःसंस्कारोनिष्पन्न
स्तत्रापिमंत्राःपठनीयाः ॥ तावतैवसंस्कारइतिप्रयोगपारिजातेऽन्यत्रच ॥ गर्भाधानस्यजातत्वाच्छयनाह्वानमंत्रारेतोवस्कंद
नमंत्राश्चपठनीयाः ॥ पुंसवनेसीमंतेचहोमेधात्रीचतुष्टयरूपंवैशेषिकमंगमुक्तंतदेकवारमनुष्ठितंसत्पुंसवनेसीमंतेचोपकरोतीतिन
तस्यावृत्तिः ॥ संप्रतिपन्नदेवताकत्वात्तंत्रेणैवसिद्धेः ॥ दधिद्रप्सादिप्राशनंसीमंतोन्नयनादिकंचप्रधानंसमंत्रंपूर्ववदेवकुर्यात् ॥
जातकर्मणितु ॥ जातेश्मनिपरशुमित्यादिकाक्रियायाशक्यतेसासमंत्राकार्या ॥ अन्यत्रमंत्रपाठमात्रं ॥ मेधाजननेघृतप्राशना
दिसर्वंपूर्ववदेवकुर्यात् ॥ नामकर्मणिचहोमेवैशेषिकमंगमुक्तं ॥ धातादादातुनोरयिमितिद्वादशाहुतीर्जुहोतित्रयोदशेत्येकेषा

मिति ॥ तत्तथैवहोतव्यं ॥ तंत्रत्वेपिकेषांचिद्विरुद्धधर्मत्वात्केषांचिदप्राप्तविधानाच्चयथाप्राप्तएवहोमः ॥ नामदानादिकंचसर्वं पूर्ववदेवकुर्यात् ॥ अन्नप्राशनहोमेतुवैशेषिकमंगमेवनास्ति ॥ त्रिवृत्प्राशनमन्नप्राशनंचसमंत्रंपूर्ववदेवकार्यम् ॥ ॥ ७ ॥

## ॥ १२२ ॥ संस्काराणांकालातिपत्तिप्रायश्चित्तहोमः ॥

श्रीः ॥ उपनयनदिनात्पूर्वदिनेपत्न्याकुमारेणचसहकृतमंगलस्नानःआचम्यप्राणानायम्यदेशकालौसंकीर्त्यममास्यकुमारस्यगर्भाधानपुंसवनसीमंतोन्नयनजातकर्मनामकरणान्नप्राशनचौलसंस्काराणांकालातिपत्तिजनितप्रत्यवायपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंप्रायश्चित्तहोमंकरिष्येइतिसंकल्प्योल्लेखनादिविधिनाग्न्यायतनंसंस्कृत्यविटनामानंश्रोत्रियागारादाहृतंलौकिकमग्निंप्रतिष्ठाप्यप्रज्वाल्यध्यात्वाग्निंपरिस्तीर्योत्तरेणाग्निंदर्भान्संस्तीर्यतेषु दर्वींआज्यस्थालींप्रोक्षणीपात्रंउपवेषंसंमार्गदर्भानवज्वलनदर्भानेकांसमिधंआज्यंचेतिपात्राण्यासाद्यपवित्रेकृत्वाप्रोक्षणीः सꣳस्कृत्यपात्राणिप्रोक्ष्यदर्वींनिष्टपनादिपवित्रेअग्नावाधायेत्यंतंकृत्वाअग्निंअदितइत्याद्यैःपरिषिच्यासादितांसमिधमाधाय॥ ॐ त्वंनोअग्ने० मुमुग्ध्यस्मत्स्वाहा अग्नयेवरुणायचेदं ॥ ॐ सत्वंनोअग्ने० एधिस्वाहा अग्नयेवरुणायचेदं॥ ॐ इमंमेवरुण० चकेस्वाहा वरुणायेदं॥ ॐ येतेशतंवरुणयेसहस्रंयज्ञियाःपाशावितताःपुरुत्रा॥तेभ्योनइंद्रःसवितोतविष्णुर्विश्वेदेवामुंचंतुमरुतःस्वस्त्यास्वाहा वरुणायेंद्रायसवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यश्चेदं ॥ ॐ अयाश्चाग्नेस्य० भेषजꣳस्वाहा अयासेग्नयइदं ॥ ॐ उदुत्तमंवरुण० स्यामस्वाहा वरुणायेदं ॥ ॐ अवंतेहेडोव० कृतानिस्वाहा वरुणायेदं ॥ ॐ भूर्भुवःसुवःस्वाहा प्रजापतयइदं ॥ इतिप्रतिसंस्कारमष्टावाहुतीराज्येनजुहोति ॥ ततःपरिस्तरणानिविसृज्यअदितेन्वमꣳ

स्थाः इत्याद्यैरुत्तरपरिषेकंकृत्वाग्निंपूजयेत् ॥ अथवाप्रतिसंस्कारंसमस्तव्याहृतिभिरेकैकामेवाज्याहुतिंजुहुयात्नेतराःसप्ताहुतयः ॥ ॥ इतिसंस्काररत्नमालायांसंस्कारलोपप्रायश्चित्तहोमः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १२३ ॥ लुप्तसंस्कारप्रायश्चित्तम् ॥

श्रीः ॥ आचमनादिदेशकालोत्कीर्तनांतेममपुत्रस्यगर्भाधानपुंसवनसीमंतोन्नयनजातकर्मनामकरणान्नप्राशनांतसंस्कारकर्मणांस्वकालेअकरणजनितप्रत्यवायपरिहारार्थंपादकृच्छ्रंप्रायश्चित्तंतथाममपुत्रस्यचौलसंस्कारकर्मणःस्वकालेअकरणजनितप्रत्यवायपरिहारार्थंअर्धकृच्छ्रंप्रायश्चित्तंकरिष्ये इतिसंकल्पपूर्वकंविप्रभोजनहोमाद्यन्यतमद्वाराकुर्यात् ॥ सूर्यावलोकननिष्क्रमणयोःशास्त्रांतरोक्तत्वेनानावश्यकत्वान्नतदकरणेप्रायश्चित्तं ॥ एवंप्रायश्चित्तंविधायातीतान्संस्कारानुपनयनदिनेतत्पूर्वदिनेवातंत्रेणकुर्यात् ॥ चौलंतूपनयनदिनएव ॥ प्रायश्चित्तेकृतेपश्चादतीतमपिकर्मवै ॥ कार्यमित्येकआचार्यानेत्यन्येतुविपश्चितइति ॥

---

१ एतच्चालस्यादिनाऽकरणेर्धकृच्छ्रंचूडायांकृच्छ्रंज्ञेयं ॥ मुख्यकल्पासंभवेसहस्रसंख्यतिलहोमायुतगायत्रीजपद्वादशब्राह्मणभोजनाद्यन्यतमप्रत्याम्नायेनकुर्यात् ॥ पादकृच्छ्रेब्राह्मणत्रितयभोजनंअर्धकृच्छ्रेषड्ब्राह्मणभोजनंक्रमेणप्रत्याम्नायौ ॥ पादकृच्छ्रार्धकृच्छ्रयोर्गोदानरुद्रैकादशिनीजपादिरूपप्रत्याम्नायासंभवात्तिलहोमाद्यन्यतमएवप्रत्याम्नायः ॥ सचतुरीयांशरूपोर्धरूपइतिपादकृच्छ्रार्धकृच्छ्रानुसारेणकल्पनीयः ॥ पादकृच्छ्रेवस्त्रदानंकृच्छ्रार्धेतैलकांचनं ॥ पादोनकृच्छ्रेगोदानंकृच्छ्रेगोमिथुनंस्मृतं ॥ इतिविष्णूक्तोवाप्रत्याम्नायःकल्पयितव्यः ॥ तैलयुक्तंकांचनंतैलकांचनमितिसमासः ॥ सहस्रसंख्यतिलहोमस्तुप्रणवव्याहृतिसहितयागायत्र्या–प्रणवसहितसमस्तव्याहृतिभिर्वा–केवलेनप्रणवेनवा ॥ अयुतगायत्रीजपस्तूपनयनोपदिष्टतृतीयपाठेनकार्यः ।

## ॥ १२४ ॥ गर्भाधानाद्यंतरितसंस्काराणांतंत्रम् ॥

श्रीः॥ शुभेमुहूर्तेकृतमांगलिकोवस्त्राच्छादितेपीठेप्राङ्मुखउपविश्यस्वदक्षिणतःपत्नींसंस्कार्यंचोपवेश्यआचम्यप्राणानायम्यदेश कालौसंकीर्त्यास्यकुमारस्यबीजगर्भसमुद्भवैनोनिवर्हणद्वाराक्षेत्रसंस्कारव्यवहारान्नाद्यतेजआयुर्वर्चोभिवृद्धिद्वाराचश्रीपरमेश्व रप्रीत्यर्थंअंतरितान्गर्भाधानपुंसवनसीमंतोन्नयनजातकर्मनामकरणान्नप्राशनसंस्कारांस्तंत्रेणकरिष्ये॥अथवानामकर्मांतसंस्का रानन्नप्राशनेनचौलेनवासहकरिष्ये॥अन्यसंस्कारेणसहकरणेतुसंकल्पेऊहसंपादनंयथासंभवंद्रष्टव्यं॥ पृथक्संकल्पास्तु—सं०र० ममास्याभार्यायाःप्रतिगर्भसंस्कारातिशयद्वारास्यांजनिष्यमाणगर्भाणांचबीजगर्भसमुद्भवैनोनिवर्हणक्षेत्रसंस्कारसिद्धिद्वाराश्री परमेश्वरप्रीत्यर्थंगर्भाधानाख्यंकर्म, अस्यजातस्यबीजगर्भसमुद्भवैनोनिवर्हणद्वाराश्री० पुंसवनाख्यंकर्म, अस्यजातस्यजनिष्यमा णगर्भाणांचवैजिकगार्भिकैनोनिवर्हणद्वाराश्री० सीमंतोन्नयनाख्यंकर्म, अस्यकुमारस्यगर्भांबुपानजनितदोषनिवर्हणबीजगर्भ समुद्भवैनोनिवर्हणद्वाराश्री० जातकर्म, अस्यपुत्रस्यबीजगर्भसमुद्भवैनोनिवर्हणायुर्वर्चोभिवृद्धिव्यवहारसिद्धिद्वाराश्री० नाम कर्म, अस्यशिशोरायुरभिवृद्धिद्वाराश्री० सूर्यावलोकनं, अस्यशिशोरायुःश्रीवृद्धिबीजगर्भसमुद्भवैनोनिवर्हणद्वाराश्री० निष्क्र मणं, अस्यपुत्रस्यमातृगर्भमलप्राशनशुद्धिबीजगर्भसमुद्भवैनोनिवर्हणान्नाद्यब्रह्मवर्चसतेजइंद्रियायुरभिवृद्धिद्वाराश्री० अन्नप्रा शनाख्यंकर्मचाद्य ॥ अस्यकुमारस्यबीजगर्भसमुद्भवैनोनिवर्हणबलायुर्वर्चोभिवृद्धिद्वाराश्री० चौलाख्यंकर्म, अस्यामुकशर्मणः कुमारस्यद्विजत्वसिद्धिपूर्वकवेदाध्ययनाधिकारसिद्धिद्वाराश्री० आचार्यपैतृकसावित्रीमातृकमुपनयनाख्यंकर्मचश्वस्तंत्रेणकरि ष्यइतिसंकल्पः ॥ असंभवेकेवलमुपरिनिर्दिष्टवदेवसंकल्पंकृत्वातत्तत्प्रयोगान्यथासंभवंकुर्यात् ॥ तदंगंगणपतिपूजनंपुण्याहवा

चनंमातृकापूजनंनांदीश्राद्धंचकरिष्येइतिसंकल्प्यकृत्वा ॥ उद्धननादिनाभूसंस्कारंविधायतत्रौपासनाग्निंप्रतिष्ठाप्यासंभवेलौ
किकंवायतनेनिधायप्रज्वाल्यसमित्रयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वा ॥ पुंसवनसीमंतोन्नयननामकरणान्नप्राशनहोम
कर्मणियायक्ष्यमाणादेवतास्ताःसर्वाःपरिग्रहीष्यामीत्यादिव्याहृत्यंतमुक्त्वावैशेषिकहोमे ॥ धातारंचतुःपुनर्धातारंचतुरनुमतिंच
तूराकांद्विःसिनीवालींद्विःकुहूंचाज्येनांगहोमेवरुणंद्विरित्यादिसंस्रावेणेत्यंतमुक्त्वासमिधोग्नावाधाय ॥ व्याहृत्यंतंहुत्वावैशेषि
कहोमः ॥ पुंसवनसीमंतयोस्तंत्रेणधात्रीचतुष्टयंहुत्वा ॥ धातादंदातुनोरयिमीशां० धाताप्रजानां० धातादंदातुनोरयिंप्राचीं०
धातादंदातुदाशुषे० ॥ ततोनामकरणस्यद्वादशत्रयोदशवाहुतीर्हुत्वा ॥ तत्रधात्रीणांविरुद्धधर्मत्वान्नप्रसंगसिद्धिः ॥ अनुनो
द्यानुमति० ॥ अन्विदनुमते० अनुमन्यतामनु० यस्यामिदंप्रदिशि० राकामहं० यास्तेराके० सिनीवालिपृथुष्टुके० यासुपा
णिः० कुहूमहं० ॥ इमंमेवरुणेत्यादिसंस्थाजपांतंसमाप्यत्रिवृदन्नहोमंबलिकरणांतंसमाप्यपुण्याहवाचनेमह्यमित्यादिगर्भाधा
नपुंसवनसीमंतजातकर्मान्नप्राशनकर्मकारिणेपुण्याहंभवंतोब्रुवंत्वितित्रिर्यजमानः ॥ ॐ पुण्याहमितिविप्राः ॥ एवंस्वस्तिऋद्धि
मित्यपि ॥ एवंपुण्याहांतंहोमविधिंसमाप्य ॥ ततःक्रमेणप्रधानानि ॥ तत्रगर्भाधानमंत्रान्पठित्वापुंसवनस्योक्तरीत्यादधिद्रप्सा
दिप्राशयित्वासीमंतंचोन्नीयजातकर्ममंत्रान्पठित्वामेधाजननेपूर्ववत्समंत्रंघृतंप्राश्यपूर्ववन्नामदानादिकंचकृत्वाअन्नप्राशनरीत्या
त्रिवृत्समंत्रंप्राश्यअन्नप्राशनंचपूर्ववदेवकार्यं ॥ ततोभिषेकंकृत्वाकर्मसांगतासिद्ध्यर्थेब्राह्मणभोजनंसंकल्प्यब्राह्मणान्संपूज्याशि
षोवाचयित्वाप्रमादात्कुर्वतांकर्मेतिकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ गर्भाधानादिविवाहांताःप्रजासंस्काराः ॥ केचनक्षेत्रसंस्कारा
अपि ॥ तेचगृह्याग्नौकर्तव्याः ॥ गृह्याग्न्यभावेलौकिकाग्नौ ॥ उपनयनादिविवाहांताःसंस्कारालौकिकाग्नावेव ॥ उपनयनादि

संस्काराणांतंत्रंनभवति ॥ पूर्वसंस्कारसंस्कृतएवोत्तरसंस्कारेऽधिकारी ॥ गर्भाधानादिक्रमंविहायोपनयनमुखेनसंस्काराम्ना नंकुर्वताचार्येणोपनयनादीनांप्राधान्यस्योक्तत्वात् ॥ अत्रपितर्यसन्निहितेपिपितृव्यादिर्भ्रात्रादिर्वासंस्कारान्कुर्यात् ॥ इतिस त्याषाढहिरण्यकेशी० अंतरितसंस्काराणांतंत्रेणप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १२५ ॥ नांदीश्राद्धोपयोगीविचारः ॥

श्रीः ॥ वृद्धिश्राद्धंतुगर्भाधानादिगर्भसंस्कारेषुजातकर्मादिष्वपत्यसंस्कारेषुअग्न्याधानादिषुश्रौतकर्मसुश्रवणाकर्मादिषुवापीकूप तडागारामाद्युद्यापनादिषुदेवप्रतिष्ठायांवानप्रस्थाश्रमसंन्यासस्वीकारेतुलापुरुषादिमहादानादौनवगृहप्रवेशेमहानाम्न्यादिवेद व्रतेषुराजाभिषेकशांतिकपौष्टिकेषुसर्वेषुउपाकर्मोत्सर्जनयोरप्येकेनवीनयोर्वातयोरन्यत्राप्येवंविधेकार्यं ॥ इदमाभ्युदयिकश्रा द्धंमातृपूजनंचैकस्यानेकसंस्कारेष्वेककर्तृकेषुयुगपदुपस्थितेषुसर्वादौसकृदेवतंत्रेणकार्यं ॥ नतुप्रतिसंस्कारमावृत्त्या ॥ दैवाद कृतजातकर्मादिकस्योपनयनकालेजातकर्माद्यनुष्ठानेदेशांतरगतस्यमृतबुद्ध्याकृतौर्ध्वदैहिकस्यागतस्यपुनर्जातकर्मादिसंस्कारा णांविहितानांयुगपदनुष्ठाने कर्मनाशाजलस्पृष्टादीनांप्रायश्चित्ततयापुनःसंस्काराणांयुगपदनुष्ठानेवा ॥ तदुक्तंब्रह्मपुराणे ॥ गणशःक्रियमाणानांमातृभ्यः( मातृणां )पूजनंसकृत् ॥ सकृदेवभवेच्छ्राद्धमादौनपृथगादिषु ॥ वृद्धिश्राद्धंनवदैवत्यं ॥ पार्वण त्रयात्मकं ॥ तत्रक्रममाहाश्वलायनाचार्यः ॥ मातापितामहीचैवसंपूज्याप्रपितामही ॥ पित्रादयस्त्रयश्चैवमातुःपित्रादयस्त्रयः ॥ एतेनवार्चनीयाःस्युःपितरोभ्युदयेद्विजैः ॥ अत्रसत्यवसूविश्वेदेवौसोमयागगर्भाधानपुंसवनसीमंतोन्नयनाधानादिकर्मांगभूतवृ द्धिश्राद्धेक्रतुदक्षसंज्ञकौविश्वेदेवौ ॥ इतिसिंध्वाद्याशयः ॥ नांदीश्राद्धंपिताकुर्यादाद्येपाणिग्रहेपुनः ॥ अतऊर्ध्वंप्रकुर्वीतस्वयमेवा

थनांदिकम् ॥ कात्यायनः ॥ स्वपितृभ्यःपितादद्यात्सुतसंस्कारकर्मसु ॥ पिंडानोद्वाहनात्तेषांतस्याभावेतुतत्क्रमात् ॥ जीवेत्तुयदि वर्गाद्यस्तंवर्गंतुपरित्यजेत् ॥ गौर्यादिमातृकापूजनंनांदीश्राद्धांगं ॥ यत्रनांदीश्राद्धंनक्रियतेतत्रमातृकापूजनमपिनकार्यं ॥ ॥

## ॥ १२६ ॥ नांदीश्राद्धाधिकारिणः ॥

श्रीः ॥ प्रथमविवाहांतेषुसुतसंस्कारेषुपितावृद्धिश्राद्धंकुर्यात् ॥ द्वितीयादिविवाहेतुवरएवकुर्यात् ॥ प्रथमविवाहेयदिपित्रादीनांसर्वेषांवक्ष्यमाणानामधिकारिणामभावस्तदापिस्वयमेव ॥ प्रवासादिनापितुरभावेनज्येष्ठभ्राताकुर्वन्स्वपितुःपितृभ्योदद्यात् ॥ यदितुपितानजीवतिपितामहस्तुप्रवासस्थितःतदापितृप्रपितामहवृद्धप्रपितामहानुद्दिश्यपार्वणंकुर्यात् ॥ एवंमातृमातामहपार्वणयोरपिद्रष्टव्यं ॥ सर्वेषांजीवनेनांदीश्राद्धलोपएवनित्यवन्नांदीश्राद्धविधिनैवकुर्यादितिलोपशास्त्रसहकृतेनतत्प्रापणात् ॥ सर्वेषांयथोक्ताधिकारिणामभावेनयदिमातापुत्र्यादिविवाहंकुर्यात्तदास्वयंसंकल्पमात्रंकृत्वास्वस्तिवाचननांदीश्राद्धादिकंसर्वंब्राह्मणद्वाराकारयेदितिप्रयोगपारिजाते ॥ समावर्तनेनांदीश्राद्धंपितैवकुर्यात् ॥ प्रवासादिनापितुरभावेस्वयमेवेतिकेचित् ॥ अत्रपितरिविद्यमानेपिस्वयमेवकुर्यादित्यन्ये ॥ सुतसंस्कारेषुअजीवन्मातृपितृमातामहःपितास्वमात्राद्युद्देश्यकंपार्वणत्रयंकुर्यात् ॥ मातरिजीवत्यांतत्पार्वणलोपः मातामहेजीवतितत्पार्वणस्य तदापार्वणद्वयेनैवनांदीश्राद्धसिद्धिः ॥ मातृमातामहजीवनेपितृपार्वणेनैवनांदीश्राद्धसिद्धिः पितृमातृजीवनेमातामहपार्वणेनैव ॥ पितृमातामहजीवनेदेवरहितेनमातृपार्वणेनैव ॥ जीवत्प्रपितामहःपितृपितामहवृद्धप्रपितामहानुद्दिश्यपितृपार्वणंकुर्यात् ॥ जीवत्पितामहप्रपितामहःपितृवृद्धप्रपितामहातिवृद्धप्रपि

तामहानुद्दिश्यपितृपार्वणंकुर्यात् ॥ एवंमातृमातामहपार्वणयोरपिद्रष्टव्यं ॥ सापत्नमातरिमृतायांतयासहैवमातृपार्वणं कार्यं ॥ सपत्न्योःपितामहीप्रपितामह्योरपिस्वपितामहीप्रपितामहीभ्यांसह ॥ स्वमातरिजीवत्यामपिसापत्नमात्रामातृपार्वणनिर्वाहइतिकेचित् ॥ तन्न ॥ तस्याएकोद्दिष्टदेवतात्वेनपार्वणेनुप्रवेशाभावात् ॥ आपरपक्षिकान्वष्टक्यादिश्राद्धवत्प्रापकवचनाभावाच्च ॥ मातामहपार्वणेमुख्यमातामह्यादिषुजीवतीषुतत्सपत्नीभिःसपत्नीकत्वगुणोपपत्तिर्द्रष्टव्येतिकेचित् ॥ वर्गत्रयाद्यानांजीवनेसुतसंस्कारेषुनांदीश्राद्धलोपएव ॥ एवंस्वस्यद्वितीयादिविवाहांगत्वेननांदीश्राद्धंकुर्वन्जीवत्पितृकस्तुपितुःपित्रादीनुद्दिश्यपार्वणंकुर्यात् ॥ जीवत्पितृपितामहस्तुपितामहस्यपित्रादीनुद्दिश्यपार्वणंकुर्यात्॥ एवंमातृमातामहपार्वणयोरपीतिकेचित्॥ अन्येतुअस्मिन्विषयेतत्तद्वर्गाद्यजीवनेतत्तत्पार्वणलोपएवेतिवदंति ॥ आत्मीकृत्यसुवर्णेनपरकीयांतुकन्यकां ॥ धर्म्येणविधिनादातुमसगोत्रोपियुज्यतइतिस्कांदात् ॥ अनाथांकन्यकांदत्वासहस्रशेनाधिकेवरे ॥ द्विगुणंफलमाप्नोतिकन्यादानेयदीरितमितिविष्णुधर्मोत्तरवचनाद्वाकेनापिहेतुनाकन्यांदातुमशक्नुवतादानाधिकारिणात्वंकन्यादानंकुर्विंतिप्रार्थनाद्वायःपरकन्यांदातुमिच्छतिसोपिसंस्कार्यकन्यायाःपित्रादीनुद्दिश्यतस्याजीवत्पितृकत्वेतदीयमात्राद्युद्देश्यकपार्वणानुष्ठानंयथासंभवंकुर्यात् ॥ दत्तकपुत्रस्तुयदिलब्धबीजिरिक्थस्तदोभौपितरौपितामहौप्रपितामहौचोद्दिश्यकुर्यात् ॥ एवमितरयोःपार्वणयोर्बोध्यं ॥ यदितुबीजिरिक्थग्रहणेधिकार्यंतरसंभवाद्गोत्ररिक्थेजनयितुर्नभजेद्दत्रिमःसुतइतिशास्त्रादलब्धतद्रिक्थस्तदाप्रतिगृहीतकुलसंबद्धपित्राद्युद्देश्यकमेवकुर्यात् ॥ इतिनांदीश्राद्धाधिकारिणः ॥

॥ छ ॥

॥ छ ॥

## ॥ १२७ ॥ नांदीश्राद्धप्रयोगः ॥

श्रीः ॥ तत्रायंविशेषः ॥ सर्वपितृकर्मापियज्ञोपवीतिनैवयवैःकार्यं ॥ प्रदक्षिणमुपचारः अमूलादर्भाः अत्रप्राङ्मुखोदङ्मुखताएव देवतीर्थमेव ॥ प्रागग्राएवआसनादिषुदर्भाः रेखाअपिप्रागग्राः नतिलोदकं नसव्यजानुनिपातनं ननामग्रहणं नास्मद्गोत्रवसुरूपादिशब्दाः स्वधाशब्दस्थानेस्वाहाशब्दः संस्कारांगनांदीश्राद्धेदर्भस्थानेदूर्वाः आधानसोमाद्यंगभूतेतुदर्भाएव नात्ररक्तचंदनपुष्पमालानिषेधः आदौमातृवर्गः मध्येपितृवर्गः मातामहवर्गःसपत्नीकः पूर्वाह्णएवश्राद्धारंभः ॥ निहन्मिसर्वंइति यवारक्षंत्व० येराक्षसाःयवप्रकि० इतियवानेवविकिरेत् ॥ ततःअपवित्रःपवित्रोवा० इतिपुंडरीकाक्षंध्यात्वादेशकालौसंकीर्त्यसत्यवसुसंज्ञकाविश्वेदेवाःनांदीमुखाः मातृपितामहीप्रपितामह्यःनांदीमुखाः[२] (नांदीमुख्यइत्यपि) पितृपितामहप्रपितामहाःनांदीमुखाः मातामहमातुःपितामहमातुःप्रपितामहाःसपत्नीकाःनांदीमुखाः एतानुद्दिश्यश्वोद्यवाकरिष्यमाणामुककर्मांगत्वेनविहितंनांदीश्राद्धमद्यकरिष्यइतिसंकल्पंकुर्यात् ॥ जीवत्पितृकस्यपितुःमातृपितामहीत्यादि ॥ जीवदुभयादेस्तुपितामहस्यमातृपितामहीत्यादियथायथमुल्लेखः ॥ अस्मिन्नांदीश्राद्धेसत्यसंज्ञकानांविश्वेषांदेवानांस्थानेयुवांनिमंत्रयेइतिनिमंत्र्ययुवाभ्यांक्षणःकरणीयइतिप्रथमदेवार्थब्राह्मणद्वयंनिमंत्र्य वसुसंज्ञकानांविश्वेषांदेवानांस्थानेयुवामित्यादिविप्रद्वयनिमंत्रणं ॥ अस्मिन्नांदीश्राद्धेमातृपितामही

---

१ शुभायप्रथमांतेनवृद्धौसंकल्पमाचरेत् ॥ नषष्ठ्यायदिवाकुर्यान्महादोषोभिजायते ॥ अनस्मद्गृद्धशब्दानामरूपाणामगोत्रिणाम् ॥ अनाम्नांचातिलाद्यैश्चनांदीश्राद्धंचसव्यवत् ॥ संबंधनामगोत्राणिवर्जयेदत्रकर्मणि ॥ पिंडनिर्वपणंकुर्यान्नवाकुर्यान्नराधिप ॥ दधिकर्कंधुसंमिश्रान्पिंडान्दद्याद्यथाक्रमम् ॥ एकंनाम्नापरंतूष्णींदद्यात्पिंडद्वयंबुधः ॥ २ अत्रङीष्विकल्पः । नखमुखात्संज्ञायामितिनिषेधानवतारःअचादिसंज्ञात्वेनेतिधर्माब्धौ ।

प्रपितामहीनांनांदीमुखानांस्थानेयुवांनिमंत्रयेयुवाभ्यांक्षणःकरणीयइतिद्वयं॥ अस्मिन्॰ पितृपितामहप्रपितामहानांनांदीमुखा
नांस्थानेयुवामित्यादिद्वयं ॥ अस्मिन्॰ मातामहमातुःपितामहमातुःप्रपितामहानांनांदीमुखानांस्थानेयुवामित्यादिविप्रद्वयंनि
मंत्र्यापाकसिद्ध्युत्तरं पाकःसिद्धआगम्यतांदैवेक्षणःक्रियतांइतियथायथंयज्ञोपवीत्येवनिमंत्र्यप्रातःषट्घटिकानंतरंस्नात्वाचम्य
प्राणानायम्य समस्तसंपदितिब्राह्मणान्प्रदक्षिणीकृत्येत्यादिअग्नौकरणांतंमासिश्राद्धवत्कुर्यात् ॥ मातृपार्वणेविप्राभावेपूजनपूर्व
कंस्त्रियोभोज्याः देवपाद्यदानोत्तरंमात्रादीनामपिचतुरस्रमंडलएवपाद्यदानं ॥ प्राप्नुतांभवंतौप्राप्नवाव इतिप्रश्नप्रतिवचनयो
रूहः ॥ आसनेऋजवएवदर्भाः प्रदक्षिणमेवकुशासनं यवोसियवयेत्यनेनैवयवप्रक्षेपणं तत्तद्युग्माद्यविप्रकराग्रंतत्तद्द्वितीयविप्र
करेसंस्थाप्यकराग्रेणपवित्राग्रंतेनतेनधारयित्वातत्रतत्रतंत्रेणार्घ्यंदेयं ॥ नांदीमुखान्पितॄनावाहयिष्येइत्यावाहनानुज्ञावाक्यं ॥
मध्यमयांगुल्यैवगंधदानंद्विर्द्विरेव ॥ पुष्पाणिमालतीशतपत्रीमल्लिकाकुब्जकेतकीपाटलानिमालाश्चैषामेवपुष्पाणामिति ॥ तत
श्चतुरस्राण्येवमंडलानिविधायतेषुसर्वेष्वपिसौवर्णान्येवसर्वाणिभोजनपात्राणि अलाभेमधुकपलाशग्राम्यकदल्याद्यन्यतमपत्रा
णिसंस्थाप्यसर्वपात्राणांपरितःबृहत्सामेतिप्रदक्षिणमेवभस्ममर्यादांकृत्वाकरशुद्धिंचविधाय आसादितेषुपात्रेषूपस्तीर्य होमार्था
न्नोद्धरणार्थंपात्रमुपस्तीर्यगृहीत्वाउद्धरिष्याम्यग्नौचकरिष्यामिइतिब्राह्मणानामंत्रयते ॥ काममुद्ध्रियतांकाममग्नौचक्रियतामिति
विप्राअनुज्ञांदद्युः॥ ततःकर्ताअपांमेध्यमितिमंत्रेणतूष्णीमेववाअमूलमेवमहद्बर्हिराच्छिद्यतूष्णींपरिस्तरणार्थानमूलानेवदर्भाना
च्छिद्यउभयंवद्धानधोनिदधाति ॥ ततःदक्षिणाग्निमौपासनाग्निंवातदभावेअयाश्चेत्यादिविधिनोत्पादितमग्निंप्रागुदगग्रैर्दर्भैःपरि
स्तीर्यतूष्णीमेवप्रदक्षिणंपरिषिच्यपिंडदानार्थंपृषदाज्यंनिष्पाद्यसुरक्षितंनिदध्यात् ॥ दधनितदर्धमाज्यमानीयालोडयेत्तत्पृषदाज्यं

भवति ॥ अत्रासंस्कृतमेवाज्यं ॥ ततउत्पूतेननवनीतेनानुत्पूतेनाज्येनवाभिघार्योद्वास्याग्नेःपश्चान्निधायदक्षिणंजान्वाच्यमेक्षणे
नोद्धृतान्नैकदेशमुपहत्यसोमायपितृपीतायस्वाहा सोमायपितृपीतायेदं० ॥ पुनरुपहृत्य यमायांगिरस्वतेपितृमतेस्वाहा इतितृती
याहुत्यर्थंकानिचित्सिक्थान्यवशेष्यद्वितीयामाहुतिंजुहोति ॥ अग्नयेकव्यवाहनायेदं०॥ततस्तूष्णींमेक्षणमनुप्रहरति॥ततःपात्रेषु
मधुरद्रव्यसहितंअनम्लद्रव्यव्यंजनसहितमन्नंपरिविष्यहुतावशिष्टंकिंचित्पितृपात्रेषुपरिविष्यदेवेभ्योनैवेद्यंसमर्प्य सत्यंत्वर्तेन०
परिषिच्यपृथिवीतेपात्रमित्याद्युक्त्वा सत्यसंज्ञकेभ्योविश्वेभ्योदेवेभ्योनांदीमुखेभ्यइदमन्नंसोपस्करंस्वाहाहव्यंनममइतिविप्रद्व
यहस्तयोःउदकंदत्त्वा वसुसंज्ञकेभ्योविश्वेभ्योदेवेभ्योनांदीमुखेभ्यइदमन्नंसोपस्करंस्वाहाहव्यंनममेतिद्वितीयदेवविप्रद्वयहस्त
योरुदकंदत्त्वायेदेवादिवीत्युपतिष्ठते॥ततःसत्यं०परिषिच्यपृथिवीतेपात्रंद्यौ० म्यक्षितमसिमामातृपितामहीप्रपितामहीनांनांदी
मुखानांक्षेष्ठाअमुत्रामुष्मिन्लोके इतिमातृवर्गीयविप्रपात्रद्वयस्थमन्नंमंत्रावृत्त्याभिमृश्यइदंविष्णु० विष्णोहव्यंरक्षस्वइतितयोरं
गुष्ठमनखंमंत्रावृत्त्यातत्तदन्नेनिवेश्यमातृपितामहीप्रपितामहीभ्योनांदीमुखाभ्यइदमन्नंसोपस्करंस्वाहाहव्यंनममइतिमातृवर्गी
यविप्रहस्तयोरुदकंदद्यात् ॥ एवमूहेनपितृपार्वणे ॥ मातामहपार्वणेनांदीमुखशब्दात्पूर्वंसपत्नीकशब्दप्रयोगः ॥ एवमन्नंनिवेद्य
कुलदेवतांसंपूज्ययंतुनदयइतिपठित्वानांदीमुखाःपितरःप्रीयंतामितिवाचयित्वा प्रीयंतांनांदीमुखाःपितरइतितैरुक्तेतान्नमस्कृ
त्यब्रह्मार्पणंकृत्वापरिविष्टान्नेषुसर्पिरासिच्यअपोशानोदकदानादियथासुखंजुषध्वमित्युक्त्वाअपेक्षितंयाचितव्यमितिविप्रप्रार्थ
नांतंकुर्यात् ॥ विप्राःपरिषेकबलिदानवर्जंविधिनाभुंजीयुः ॥ तेषुभुंजानेषुराक्षोघ्नंपवमानानुवाकं आशुःशिशानइत्यनुवाकं इंद्रं
वोविश्वतस्परिहवामहइत्यादीनैंद्रमंत्रांश्चाभिश्रावयेत् ॥ भोजनांतेमधुवाताइत्येतस्यस्थानेउपास्मैगायतानरइतिपंचर्चःश्रावये

तुअक्षन्नमीमदंतेतिच ॥ ततःसत्यसंज्ञकाविश्वेदेवानांदीमुखाः नांदीश्राद्धंरुचितं वसुसंज्ञकावि० नांदी० रुचितं मातृपितामही प्रपितामह्यः नांदीमुखाः पितृपितामहप्रपितामहाः नांदीमु० मातामहमातुःपितामहमातुःप्रपितामहाः सपत्नीकानांदीमुखाः संपन्नंइतितत्तद्विप्रंप्रतिवदेत् ॥ सुरुचितमितिदेवविप्राःप्रतिब्रूयुः ॥ सुसंपन्नमितिपितृविप्राःप्रतिब्रूयुः ॥ एतावेवात्रतृप्तिप्रश्नौ ॥ ततउच्छिष्टभाग्भ्योन्नंदीयतामित्यादिविप्राचमनांतंसमानं ॥ आचांतेषुविप्रेषुशीघ्रमुच्छिष्टंनिष्काश्यभूमिंसंमार्ज्यपिंडदानंकुर्यात् ॥ तत्रायंविशेषः ॥ मार्जयंतांमातरोनांदीमुखाःसोम्यासः मार्जयंतांपितामह्योनांदीमुखाःसोम्यासः मार्जयंतांप्रपितामह्योनांदीमुखाःसोम्यासः मार्जयंतांपितरोनांदीमुखाःसोम्यासः मार्जयंतांपितामहानांदी० सो० मार्जयंतांप्रपिता० नां० सो० मार्ज० मातामहानां० सो० मार्ज० मातुःपिताम० नां० सो० मार्ज० मातुःप्रपितामहानां० सो० इत्येतैर्यथायथंतत्तद्रेखायांदेवतीर्थेनैवोदकांजलिनिनयनं ॥ प्रतिपिंडंतूष्णींद्वितीयःपिंडः तत्तत्पिंडसमीपेतत्तद्वितीयपिंडार्थंउदकांजलिदानमपिकर्तव्यं ॥ सर्वमंत्रेषुसपत्नीकत्वाभिध्यानमात्रंनतुतच्छब्दस्योल्लेखः ॥ एतत्तेमातर्नांदीमुखेयंतेपिंडःस्वाहा ॥ एतत्तेपितामहिनांदीमुखेयंतेपिंडःस्वाहा एतत्तेप्रपितामहिनांदी० एतत्तेपितर्नांदीमुख० एतत्तेपितामहनांदीमुख० एतत्तेप्रपितामहनांदी० एतत्तेमातामहनांदी० एतत्तेमातुःपितामहनांदी० एतत्तेमातुःप्रपितामहनांदीमुखायंतेपिंडःस्वाहाइत्येतैर्यथायथंतत्तद्रेखास्थबर्हिषिदेवतीर्थेनैवपृषदाज्यदधिबदराक्षतयवैरुद्धृतमन्नंमिश्रयित्वातेनपिंडान्दद्यात् ॥ अत्रापिसपत्नीकत्वाभिध्यानमात्रं ॥ सर्वाभावेपृषदाज्ययवमात्रमिश्रणं ॥ प्रतिपिंडंतूष्णींद्वितीयपिंडदानं ॥ आपोदेवीः स्वाहया० गच्छंतुपितरोनांदीमुखाःस्योनाः० तमेपितॄन्नांदीमुखान् अत्रपितरोनांदीमुखायथा० अमीमदंतपितरोनांदीमुखाअनुस्वाहमा० आंक्ष्वमातर्नांदीमुखेइत्याद्यूहेनअंजनंद

द्यात् ॥ अभ्यंक्ष्वमातर्नांदीमुखेइत्याद्यूहेनअभ्यंजनंदद्यात् ॥ एतानिवःपितरोनांदीमुखावासाꣳसिइत्येवमूहितेनदशामूर्णास्तु
कांछित्वाछित्वापिंडेषुक्षिपतिपूर्वेवयसि उत्तरेवयसितुदक्षिणप्रकोष्ठस्थंहृदयस्थंलोमछित्वाछित्वातेनैवमंत्रेणप्रक्षिपति ॥ दशा
वोर्णास्तुका० ॥ ततःपितृभ्योनांदीमुखेभ्योनमइतिगंधादिभिःपूजयेत् ॥ अत्रआरक्तगंधारक्तपुष्पाक्षतमालाद्यपिदेयं ॥ ततो
नमोवःपितरोरसायेत्यादिषुपितृशब्दोत्तरंनांदीमुखशब्दप्रयोगः नमोवःपितरोनांदीमुखारसायपितरोनांदीमुखानमोवोयएत
स्मिन्० नमोवःपितरोनांदी० शुष्मा० पितरोनांदी० नमोवःपितरो०नां० जीवाय० नमोवःपितरोनांदीमुखाःस्वाहायैपि०नां०
नमोवःपितरोनांदीमुखामन्यवे०नमोवःपितरोनांदीमुखाघोरायपितरोनांदीमुखानमोवोयएतस्मिन्लोके० ऊर्जस्वतीस्वाहयावं
दमानास्ता० उत्तिष्ठतपितरोनांदीमुखाःप्रेतपूर्वे० परेतपितरोनांदीमुखाःसोम्या० अथापितॄन्नांदीमुखान्सुविदत्रान्० यंतुपित
रोनांदी० मुखामनसाजवेन ॥ मनोन्वा० स्तोमेन पितॄणांनांदीमुखानांचमन्मभिः०पुनर्नःपितरोनांदीमुखामनोददातु०पात्रो
त्सर्गांतंसमानं॥ निरग्निकस्यात्रपिंडदानंकुलधर्मानुसारेणकृताकृतं साग्निकस्यतुनियतमेव ॥ ततःशिवाआपःसंत्वित्यादिअस्मि
न्श्राद्धेदत्तैरन्नोदकादिभिर्नांदीमुखाःपितरःप्रीयंतामितिभवंतोब्रुवंत्वित्यक्षय्यंदत्वा प्रीताःसंत्वितितैरुक्तेसर्वेभ्योविप्रेभ्योद्राक्षा
मलकमूलयवान्निष्क्रयंवादक्षिणाःपांत्वितिदक्षिणांदद्यात्तांबूलंच॥ ततोदातारोनोभिवर्धतामिति प्रार्थिता विप्राःप्रतिब्रूयुः ॥
ततोनांदीमुखाःपितरःप्रीयंतामितिभवंतोब्रुवंत्वितिकर्तावदेत्॥ प्रीयंतांनांदीमुखाःपितरइतिविप्राः॥ मद्गृहेसततंशोभनमस्त्वि
तिभवंतोब्रुवंत्वितिकर्तावदेत् ॥ त्वद्गृहेसततंशोभनमस्त्वितिविप्राःप्रतिब्रूयुः ॥ अत्रसर्वान्पिंडान्त्यमूषुवाजिनमितिमंत्रेणोद्धृ
त्याप्सुक्षिपति ब्राह्मणंवाभोजयतीत्यादिप्रतिपत्त्यंतरंतुदर्शश्राद्धवत् ॥ नात्रपिंडप्राशनंपत्न्याः ॥ ततोबर्हिरग्नौप्रहरति॥ येसमा

नाःसमनसःपितरोनांदीमुखायमराज्ये० ॥ पिंडस्थानेजलमासिच्य वाजेवाजेइत्यस्यस्थाने ॥ त्यमूषुवाजिनंदेवजूतंसहावानंतरुतारंरथानां ॥ अरिष्टनेमिंपृतनाजमाशुंस्वस्तयेताक्ष्यैमिहाहुवेम ॥ इतिमंत्रमुक्त्वापितृन्देवांश्चविसर्जयेत् ॥ ततःकूर्चद्वयंविस्रस्य आमावाजस्य० आमागंतांपितरानांदीमुखामातरानांदीमुखाश्चामासो० स्वादुषंसदःपितरोनांदीमुखावयोधाः ब्राह्मणासःपितरोनांदीमुखाःसोम्यासःशिवेनो० इत्यूहेनमंत्रान्वदेत् ॥ ततोविप्राःइहैवस्तंमा० आयुःप्रजां० प्रीतास्तुभ्यंपितामहानांदीमुखाःइत्याशिषोदद्युः ॥ ततोयजमानःमातापितामहीचैव० प्रमातामहकस्तथा ॥ एतेभवंतु० मंगलमितिविप्रान्वदेत् ॥ विप्राःमात्रादयःप्रीताःमंगलंप्रयच्छंतुइतिप्रतिब्रूयुः ॥ तत्तत्पार्वणाद्यजीवनवशेनयस्यकस्यचित्पार्वणलोपेतत्तत्पार्वणविषयकश्लोकैकदेशलोपः ॥ केवलमातृपार्वणकरणेएताभवंतुसुप्रीताइत्यूहःदेवाअप्यत्रनकार्याः ॥ ततःइडामग्ने० इत्यनेनमंत्रेणआचारात्पात्रेण किंचिद्द्रव्यंसंघट्टयेत् ॥ ततःअद्यमेसफलमित्यादियस्यस्मृत्येत्येतदंतंकृत्वाअनेननांदीश्राद्धाख्येनकर्मणापरमेश्वरःप्रीयतांनमम इतिकर्मसमर्प्यविष्णुंसंस्मृत्यपवित्रेविसृज्याचम्यभाद्विंसर्जयेत् ॥ निरग्निकस्यपिंडदानाकरणकल्पेसांकल्पिकविधिः ॥ अत्र वैश्वदेवआदावंतेचकर्तव्यइतिकेचित् नचब्रह्मचर्यादिनियमाः ॥ अत्रतर्पणेविशेषः पितरंनांदीमुखंतर्पयामिपितामहंनांदीमुखं तर्पयामीत्येवंकेवलजलेनतर्पणं ननामग्रहणंनप्राचीनावीतं ॥ तर्पणाभावएववा ॥ इतिसंस्काररत्नमालायांवृद्धिश्राद्धप्रयोगः ॥

## ॥ १२८ ॥ उपनयनपूर्वदिनकृत्यं ॥



श्रीः ॥ उद्धननादिचतुर्थदिवसीयसावित्रीव्रतविसर्गांतमुपनयनं ॥ ज्योतिर्विदादिष्टेसुमुहूर्तेकुमारस्योपनयनंकर्तव्यं ॥ ततः प्राग्दिनेतद्दिनेवाकृतमांगलिकआचार्यःवस्त्राच्छादितेपीठेप्राङ्मुखउपविश्यस्वदक्षिणतःपत्नींतद्दक्षिणतःसंस्कार्यंचोपवेश्यआच

म्यप्राणानायम्यस्वस्तिन॰ यशस्करं॰ इतिमंत्राभ्यां सुवासिन्याकुंकुमतिलकंकारयित्वागणानीत्वा॰ देवींवाचं॰ इतिगृहदेव ताभ्यःपूगीफलंतांबूलंनारिकेलादिसमर्प्य नमोमहद्भ्यइतिमातापितृगुरुवृद्धान्नमस्कृत्य यावतीर्वै॰ इति विप्रान्नमस्कृत्यदेश कालौसंकीर्त्यममास्यामुकशर्मणःपुत्रस्यद्विजत्वसिद्धिपूर्वकवेदाध्ययनाधिकारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थआचार्यपैतृकसा वित्रीमातृकसंस्काररूपमुपनयनाख्यंकर्मकरिष्ये ॥ तदंगंगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंग्रहाणामानुकू ल्यार्थंग्रहमखंमंडपदेवताप्रतिष्ठापनंचकरिष्येइतिसंकल्प्योक्तरीत्याकुर्यात् ॥ ततःषोडशद्वादशाष्टहस्तान्यतमपरिमितःसद्मद्वा रिमंडपःकार्यः ॥ तत्रसद्मनोवामभागेसमंततःसंस्कार्यचतुर्हस्तायताहस्तमात्रोच्छ्रायासुलक्षणावेदिःकार्या ॥ ॥ छ ॥

## ॥ १२९ ॥ मंडपदेवताप्रतिष्ठा ॥

श्रीः ॥ दूर्वाशमीपल्लवकुलदेववृक्षपल्लवांस्तच्छाखावाऽऽम्रादिप्रशस्तवृक्षपत्रवेष्टितान्सूत्रेणषोढावेष्टयेत् ॥ तत्रएकत्रमुसलमेक त्रच क्षुरिकादिशस्त्रंमध्येप्रक्षिप्यवेष्टयेत् ॥ तान्षट्वंशपात्रेनिधायउदक्संस्थेषुचतुर्षुक्रमेणनंदिनीनलिनीमैत्रोमास्तदुत्तरस्थेमुस लगर्भेपशुवर्धिनींततउत्तरस्थेशस्त्रगर्भेभगवतींचसूक्ष्ममृन्मयकलशद्वयेएकस्मिन्वायथाचारंतंडुललड्डुकपूर्णेहिरण्यहरिद्रापूग फलयुतेन्युब्जशरावपिहितेसूत्रवेष्टितेअविघ्नपसंज्ञकंगणपतिंचावाह्ययथा॥ॐ नंदिन्यैनमःनंदिनींआवाहयामि॥ ॐ नलिन्यैनमः नलिनींआ०॥ॐ मैत्रायैनमःमैत्रामा०॥ ॐ उमायैनमःउमामा० ॥ ॐ पशुवर्धिन्यैनमःपशुवर्धिनीमा०॥ॐशस्त्रगर्भभगवत्यैनमः शस्त्रगर्भा० ॥ ॐअविघ्नपसंज्ञकगणपतयेनमः॥ अविघ्नप० ॥ एताःपात्रांतरेआवाह्य ॐ नर्यप्रजांमेगोपाय॥ अमृतत्वायजीवसे ॥ जातांजनिष्यमाणांच ॥ अमृतेसत्येप्रतिष्ठितां ॥ नंदिन्याद्यावाहितदेवताःसुप्रतिष्ठिताःसंतु ॥ ॐ नंदिन्याद्यावा०ध्यायामि ॥ आसनं॰ पाद्यं॰ अर्घ्यं॰ आचमनीयं॰ ॥ तैलोद्वर्तनोष्णोदकैरभ्यंगस्नानंषण्णांवेष्टितानामविघ्नपस्यचकारयित्वा॥ ॐ कनिक्रद

ज्ञानुषंप्रब्रुवाणइयर्तिवाचमरितेवनावं ॥ सुमंगलश्चशकुनेभवासिमात्वाकाचिंदविभाविश्व्याविदत् ॥ मात्वाश्येनउद्वधीन्मासुपर्णोमात्वाविददिषुमान्वीरोअस्ता ॥ पित्र्यामनुप्रदिशंकनिक्रदत्सुमंगलोभद्रवादीवदेह ॥ अवक्रंददक्षिणतोगृहाणांसुमंगलोभद्रवादीशकुंते ॥ मानस्तेनईशतमाघशंसोबृहद्वदेमविदथेसुवीराः ॥ प्रदक्षिणिदभिगृणंतिकारवोवयोवदंतऋतुथाशकुंतयः ॥ उभेवाचौवदतिसामगाइवगायत्रंचत्रैष्टुभंचानुराजति ॥ उद्गातेवशकुनेसामगायसिब्रह्मपुत्रइवसवनेषुशंससि ॥ वृषेववाजीशिशुमतीरपीत्यासर्वतोनःशकुनेभद्रमावदविश्वतोनःशकुनेपुण्यमावद ॥ आवदंस्त्वंशकुनेभद्रमावदतूष्णीमासीनःसुमतिंचिकिद्धिनः ॥ यदुत्पतन्वदसिकर्करिर्यथावृहद्वदेमविदथेसुवीराः ॥ नंदिन्याद्यावाहितदे० मांगलिकस्नानं० ॥ वस्त्रं० गंधं० अक्षतान्० पुष्पाणि० धूपं० दीपं० नैवेद्यं० तांबूलं० फलं० दक्षिणांपुष्पांजलिं० इत्यादिपूजांसमाप्यवस्त्राच्छादितवंशपात्रेआग्नेयकोणे नंदिनीनामकंवेष्टितंनंदिन्यैनमःनंदिनींस्थापयामीतिप्रतिष्ठाप्य॥ॐसमुद्रज्येष्ठाःसलिलस्य०ॐआपोहिष्ठा० इतिद्वाभ्यांप्रोक्ष्य॥ ॐगंधद्वारांदुराधर्षां० इतिगंधाक्षतान्समर्प्य॥दधिक्राव्णइतिदधि॥कांडात्कांडादितिदूर्वापुष्पाणिचसमर्पयेत्॥१॥ ॐनलिन्यैनमःनलिनींस्थापयामि॥ ॐयाआपोदिव्या० ॥ ॐआपोहिष्ठा० ॥ प्रोक्ष्य॥ गंधद्वारांदु० गंधाक्षतान्० दधिक्राव्ण० इतिदधि॥ कांडात्कांडा० दूर्वाःपुष्पाणिच॥२॥ ॐमैत्रायै० मैत्रांस्था० ॥ ॐयासांराजावरु० आपोहिष्ठा० प्रोक्ष्य गंधद्वारांदुरा० गंधाक्षतान् दधिक्राव्ण०दधि॥ कांडात्कांडा०दूर्वाःपुष्पाणिच॥३॥ ॐउमायै०उमांस्था० ॥ ॐयासुराजावरु० ॐआपो०प्रोक्ष्य गंधद्वारां० गंधाक्षतान् ॥ दधिक्राव्ण० दधि॥ कांडात्कांडा० दूर्वाःपुष्पाणिच॥४॥ ॐपशुवर्धिन्यै० पशुवर्धिनीं० समुद्रज्येष्ठा० याआपो० यासांराजा० यासुराजा० आपोहि० प्रोक्ष्य गंधद्वारां० गंधाक्षतान्॥ दधिक्राव्ण० दधि॥ कांडात्कांडा० दूर्वाःपुष्पाणिच ॥

॥ ५ ॥ शस्त्रगर्भभग० शस्त्रग० प्रोक्षणादिसर्वंतूष्णींकृत्वा ॥ अविघ्नपसंज्ञकगणपतये अविघ्नप० स्थाप० ॐनर्यंप्रजांमे० मंड
पदेवताभ्यो० गंधाक्षतपुष्पाणिसमर्प्य० तद्वंशपात्रंस्वयंगृहीत्वा अविघ्नपसंज्ञकगणपतिंचपत्न्याग्राहयित्वागृहांतःरंगवल्ल्यादि
नापूजिते ( घंटादिवाद्यघोषेणसहितःसब्राह्मणः ॐइयमेवसायाप्रथमाव्यौच्छंदंतरस्यांचरतिप्रविष्टा ॥ वधूर्जजाननवगज्जनि
त्रीत्रयंएनांमहिमानःसचंते ॥ छंदस्वतीउषसापेपिशानेसमानंयोनिमनुसंचरंती ॥ सूर्यपत्नीविचरतःप्रजानतीकेतुंकृण्वानेअ
जरेभूरिरेतसा ॥ ऋतस्यपंथामनुतिस्रआगुस्त्रयोघर्मासोअनुज्योतिषागुः॥ प्रजामेकारक्षत्यूर्जमेका १ व्रतमेकारक्षतिदेवयूनां ॥
चतुष्टोमोअभवद्यातुरीयायज्ञस्यपक्षावृषयोभवंती ॥ गायत्रींत्रिष्टुभंजगतीमनुष्टुभंबृहदर्कंयुंजानाःसुवराभरन्निदं ॥ पंच
भिर्धाताविदधाविदंयत्तासांस्वसृरजनयत्पंचपंच ॥ तासामुयंतिप्रयवेणपंचनानारूपाणिक्रतवोवसानाः ॥ त्रिंशत्स्वसारउप
यंतिनिष्कृतंसमानंकेतुंप्रतिमुंचमानाः ॥ २ ॥ ऋतूंस्तन्वतेकवयःप्रजानतीर्मध्येछंदसःपरियंतिभास्वतीः ॥ ज्योतिष्मती
प्रतिमुंचतेनभोरात्रींदेवीसूर्यस्यव्रतानि ॥ विपश्यंतिपशवोजायमानानानारूपामातुरस्याउपस्थे ॥ एकाष्टकातपसातप्यमाना
जजानगर्भंमहिमानमिंद्रं ॥ तेनदस्यून्व्यसहन्तदेवाहंतासुराणामभवच्छचींभिः॥ अनानुजामनुजांमामकर्तसत्यंवदंत्यन्विच्छ
एतत् ॥ भूयास ३ मस्यसुमतौयथायूयमन्यावोअन्यामतिमाप्रयुक्त ॥ अभून्ममसुमतौविश्ववेदाआष्टप्रतिष्ठामविदद्धिगाधं॥
भूयासमस्यसुमतौयथायूयमन्यावोअन्यामतिमाप्रयुक्त ॥ पंचव्युष्टीरनुपंचदोहागांपंचनाम्नीमृतवोनुपंच ॥ पंचदिशःपंचदशेन
कॢप्ताःसमानमूर्ध्नीरभिलोकमेकं ॥४॥ ऋतस्यगर्भःप्रथमाव्यूषुष्यपामेकामहिमानंबिभर्ति ॥ सूर्यस्यैकाचरतिनिष्कृतेषुघर्मस्यैका
सवितैकांनियच्छति ॥ याप्रथमाव्यौच्छत्साधेनुरभवद्यमे ॥ सानःपयस्वतीधुक्ष्वोत्तरामुत्तरांसमां ॥ शुक्रर्षभानभसाज्योति

षागांद्ब्रिश्वरूपाशबलीरग्निकेतुः ॥ समानमर्थंस्वपस्यमानाबिभ्रतीजरामजरउषआगाः ॥ ऋतूनांपत्नीं ५ प्रथमेयमागादह्नांने त्रीजनित्रीप्रजानां ॥ एकासतीबहुधोषोव्युच्छस्यजीर्णात्वंजरयसिसर्वमन्यत् ॥ इत्यादिसूक्तेनस्वस्तिनइंद्रो० अष्टौदेवावसवः० ऋद्ध्यास्महव्यैः० इतिमंत्रान्पठन्) देशेऽक्षतपुंजेषुनर्यप्रजामितिप्रतिष्ठाप्यसंपूज्यततोयावन्मंडपोद्वासनंप्रत्यहंपूजयेत् ॥ आचारात्वस्त्रादिदानंतत्परिधानंचयुवासुवासा० ॥ कुर्वाणाचीरमात्मनः ॥ वासांसिममगावश्च ॥ अन्नपानेचसर्वदा ॥ ततोमे श्रियमावह ॥ युवंवस्त्राणिपीवसावसाथे ॥ युवोरच्छिद्रामंतवोहसर्गाः॥अवातिरतमनृतानिविश्वा ॥ ऋतेनमित्रावरुणासचेथे ॥ एतत्कर्मणःसांगतासिध्यर्थंनानानामगोत्रान्ब्राह्मणान्गंधादिभिःपूजयिष्ये ॥ तेभ्योभूयसींदक्षिणांदातुमहमुत्सृजे ॥ तेनश्री कर्मांगदेवतारूपीपरमेश्वरःप्रीयतां ॥ यांतुदेवगणाःसर्वे इतिविसृज्यद्विराचामेत् ॥ छ ॥ ॥ छ ॥

## ॥ १०६ ॥ उपनयनप्रयोगः ॥

श्रीः ॥ ततआचार्यःदेशकालौसंकीर्त्यममसावित्र्युपदेशाधिकारसिद्ध्यर्थंअमुकप्रत्याम्नायेनप्राजापत्यत्रयपरिमितंप्रायश्चित्तंक रिष्येइतिसंकल्प्यकुर्यात् ॥ बटुनापिसावित्रीग्रहणाधिकारसिद्ध्यर्थंतावदेवकारणीयं ॥ ततःकृतभोजनोबटुराचर्म्यदेश

---

१ ततोद्वितीयदिनेप्रातराचार्यःषट्प्रभृतिसमसंख्यान्ब्राह्मणान्संभोज्यपुण्याहस्वस्तिऋद्धीर्वाचयित्वेंद्रःप्रीयतामितिवदेत् । ततःकृतमंगलस्नानमलंकृतंकुमारंमात्रासहभोजयेत् । मातुरभावेऽन्ययावाऽप्रत्याख्यायिन्या । तस्याअप्यभावेएकाकिनंभोजयेत् ॥२ पौराणाचमनं ॥ तद्यथा ॥ केशवाद्यै स्त्रिभिर्नामभिरुदकंपिबेत् ॥ चतुर्थपंचमाभ्यांकरतलेस्पृशेत् ॥ षष्ठसप्तमाभ्यामोष्ठौस्पृशेत्॥अष्टमनवमाभ्यांमुखंसंमृजेत् ॥ दशमेनवामहस्तंप्रोक्ष्य एकादशेनपादौप्रोक्ष्य द्वादशेनशिरःस्पृष्ट्वा त्रयोदशेनोर्ध्वोष्ठमंगुल्यग्रैःस्पृष्ट्वा चतुर्दशेनदक्षिणनासारंध्रमंगुष्ठतर्जनीभ्यां पंचदशेनवामनासारंध्रंताभ्या

कालौसंकीर्त्योपनयनांगंवपनंकरिष्येइतिसंकल्प्यकुर्यात् ॥ ततोयथाचारंस्नानंयथाशक्त्यलंकरणंअहतवस्त्रपरिधानंचकर्तव्यं ॥ ततआचार्यउपनयनहोमांगंउद्धननादिकरिष्यइतिसंकल्प्य उद्धननेनभूसंस्कारंविधाय तत्रमथितंश्रोत्रियागारादाहृतंवास मुद्भवनामानंलौकिकमग्निंप्रतिष्ठाप्यप्रज्वाल्यसमित्त्रयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वोपनयनहोमकर्मणियक्ष्यमाणादे वताःपरिग्रहीष्यामि ॥ जातवेदसमग्निमिध्मेनेत्यादिव्याहृत्यंतमुक्त्वाप्रधानहोमे ॥ आयुर्दामग्निंआयुर्दादेवमग्निंचाज्येन ॥ अंगहोमेवरुणंद्विरित्यादिएतादेवताःसद्योयक्ष्यइत्यंतमुक्त्वासमिधोग्नावाधायप्राकृतानिवैकृतानिचपात्राण्यासादयति ॥ दर्वीं आज्यस्थालींप्रणीतापात्रंप्रोक्षणीपात्रंइध्मंबर्हिःदर्भान्उपवेषंकटिसूत्रंकच्छंयज्ञोपवीतंमेखलांअश्मानंकूर्चंदंडंअजिनंभिक्षापात्रं सप्तपलाशसमिधश्चवाससीगांआज्यंचासाद्यपरिधिपरिधानांतमाचार्यःसमापयेत् ॥ अथभुक्तंकृतवपनंस्नातमलंकृतंकृताह तवस्त्रपरिधानंवटुंअग्नेरुत्तरतःसमानीयप्राङ्मुखंकृत्वाकटिसूत्रंकच्छंचतूष्णींदत्वाचमनंकारयेत् ॥ ततोब्रह्मचारीश्रौतस्मार्त कर्मानुष्ठानसिद्ध्यर्थंयज्ञोपवीतधारणंकरिष्येइतिसंकल्प्यमंत्रंपठन्यज्ञोपवीतंधारयति ॥ ॐ यज्ञोपवीतंपरमंपवित्रंप्रजापतेर्य त्सहजंपुरस्तात् ॥ आयुष्यमग्र्यंप्रतिमुंचशुभ्रंयज्ञोपवीतंबलमस्तुतेजः ॥ इत्याचार्यदत्तोपवीतेनकुमारोयज्ञोपवीतीभूत्वा

---

मेवं षोडशसप्तदशाभ्यांयथाक्रमंदक्षिणवामनेत्रेंगुष्ठानामिकाभ्यां अष्टादशैकोनविंशाभ्यांदक्षिणवामश्रोत्रेंगुष्ठकनिष्ठिकाभ्यां विंशेननाभिंताभ्यामेव एकविंशेनहृदयंपाणितलेनद्वाविंशेनशिरःपाणिना त्रयोविंशचतुर्विंशाभ्यांयथाक्रमंदक्षिणवामभुजौअंगुल्यग्रैःस्पृशेदिति ॥ केशवादिनामानिनमों- तानिप्रथमांतानिवासंबुद्ध्यंतानिवा संबुद्ध्यंतपक्षेकेचिद्विष्णुपदंहरिपदंचाविभक्तिकमेवोच्चारयंतितत्साधूनेवप्रयुंजीतेतिनियमात्तुच्छं ॥ गायत्र्युप- देशात्प्राक्तनानिसर्वाण्यप्याचमनान्येवमेव ॥

प्राङ्मुखोद्विराचम्यपूर्वेणाचार्यमपरेणाग्निंगत्वाचार्याद्दक्षिणतःप्राङ्मुखउपविश्यान्वारभते ॥ ततआचार्यःपरिषेचनादिसामा
न्यप्रधानांतंहुत्वाप्रधानहोमंकरोति ॥ ॐ आयुर्दाअग्नेहविषोजुषाणोघृतप्रतीकोघृतयोनिरेधि ॥ घृतंपीत्वामधुचारुगव्यंपितेव
पुत्रमभिरक्षतादिमꣳस्वाहा ॥ आयुर्देग्नयइदं० ॥ ॐ आयुर्दादेवजरसंगृणानोघृतप्रतीकोघृतपृष्ठोअग्ने ॥ घृतंपिबन्नमृतंचारुग
व्यंपितेवपुत्रंजरसेनयेमꣳस्वाहा ॥ आयुर्देदेवायाग्नयइदं० ॥ इतिप्रधानाहुतिद्वयंहुत्वा ॥ ततइमंमेवरुणेत्यादिस्विष्टकृदंतं
हुत्वा ॥ उत्तरपरिधिसंधेरुत्तरतोश्मानंनिधाय ॥ कुमारमात्माग्न्योरंतरानीत्वादक्षिणेनपादेनोपक्रम्यंप्राङ्मुखंपञ्ज्यामवस्थापय
ति ॥ आतिष्ठेममश्मानमश्मेवत्वꣳस्थिरोभव ॥ प्रमृणीहिदुरस्यून्त्सहस्वपृतनायतइति ॥ ततःपरिधापितंवासःप्रज्ञातंनिधाय ॥
ततोऽहतंवासःप्राङ्मुखस्यपरिधापयति ॥ याअकृंतन्नवयन्याअतन्वतयाश्चदेवीरंतानभितोददंत ॥ तास्त्वादेवीर्जरसासंव्ययंत्वा
युष्मानिदंपरिधत्स्ववासः ॥ परिधत्तधत्तवाससैनꣳशतायुषंकृणुतदीर्घमायुः ॥ बृहस्पतिःप्रायच्छद्वासएतत्सोमायराज्ञेपरिदा
तवाउ ॥ जरांगच्छासिपरिधत्स्ववासोभवाकृष्टीनामभिशस्तिपावा ॥ शतंचजीवशरदःसुवर्चारायश्चपोषमुपसंव्ययस्वेति ॥ ततो
द्विराचांतमभिमंत्रयते ॥ परीदंवासोधिधास्वस्तयेभूरापीणामभिशस्तिपावा ॥ शतंचजीवशरदःपुरूचीर्वसूनिचाय्योविभजास
जीवन्निति ॥ ततस्त्रिगुणयामेखलयाप्रदक्षिणंत्रिःपरिव्ययतिद्विरित्येके ॥ यादुरितापरिबाधमानाशर्मवरूथेपुनतीनआगात् ॥
प्राणापानाभ्यांबलमावहंतीस्वसादेवानाꣳसुभगामेखलेयमिति ॥ उत्तरतोनाभेस्त्रिवृतंग्रंथिंकृत्वादक्षिणतोनाभेःपरिकर्षति ॥
ततोजिनमुत्तरीयंकरोति ॥ मित्रस्यचक्षुर्धरुणंधरीयस्तेजोयशस्विस्थविरꣳसमिद्धं ॥ अनाहनस्यंवसनंजरिष्णुपरीदंवाज्यजिनं
धत्स्वामुकशर्मन्नदितिस्तेकक्षांबध्नातु ॥ वेदस्यानुवक्तवैमेधायैश्रद्धायाअनूक्तस्यानिराकरणायब्रह्मणेब्रह्मवर्चसायेति ॥ मंत्रेषु

सर्वत्रासावितिपदंपरित्यज्यसंस्कार्यस्यसंबुद्ध्यानामग्राह्यं ॥ ततःइंद्रायत्वांपरिददेइतिवदेत् ॥ परिदेहीतिमाणवकः ॥ परीम
मिंद्रब्रह्मणेमहेश्रोत्रायदध्मस्यथैनंजरिमाणयेज्योक्श्रोत्रेधिजागरदिति ॥ ततोमाणवकमपरेणाग्निमुदङ्मुखमुपवेश्यहुतशेषमा
ज्यंमंत्रत्रयेणैकवारंप्राशयति ॥ सूत्रेएतैःसन्नतैरितिबहुवचनेनप्राशनेमंत्राणांसमुच्चयस्योक्तत्वात् ॥ हुतशेषेआज्येदधिप्रक्षिप्य
पृषदाज्यंकृत्वावाप्राशयति ॥ त्वयिमेधांत्वयिप्रजांत्वय्यग्निस्तेजोदधातु ॥ त्वयिमेधांत्वयिप्रजांत्वयींद्रइंद्रियंदधातु ॥ त्वयिमे
धांत्वयिप्रजांत्वयिसूर्योभ्राजोदधातु ॥ योगेयोगेइममग्नइतिमंत्राभ्यामाचार्यःप्राश्नंतंसमीक्षते ॥ योगेयोगेतवस्तरंवाजेवाजे
हवामहे ॥ सखायइंद्रमूतये ॥ इममग्नआयुषेवर्चसेकृधिप्रियंरेतोवरुणसोमराजन् ॥ मातेवास्मैअदितेशर्मयच्छविश्वेदेवाजर
दष्टिर्यथासदिति ॥ अथवाहुतशेषमाज्यंपृषदाज्यंवाआभ्यामेवमंत्राभ्यांप्राशयति ॥ तदाईक्षणेनास्तिमंत्रः ॥ अत्रकेचित्सूत्रार्थ
ज्ञानाभावेनत्रिभिर्मंत्रैःप्राशनत्रयंकारयंतितदशुद्धं ॥ प्राशनसूत्रेत्वेतैःसंनतैरितिबहुवचनात्प्राशनेमंत्राणांसमुच्चयस्योक्तत्वात्
त्रिभिरेकवारंप्राशनंकार्यं ॥ ततःकृतशुद्धाचमनःकुमारआचार्यंतूष्णींस्पृशति ॥ आचार्यश्चैनमभिमंत्रयते ॥ शतमिन्नुशरदो
अंतिदेवायत्रानश्चक्राजरसंतनूनां ॥ पुत्रासोयत्रपितरोभवंतिमानोमध्यारीरिषतायुर्गंतोरिति ॥ ततःप्रदक्षिणमग्निंचरंतंबटुमभि
मंत्रयते ॥ आगंतासमगन्महिप्रसमृत्युंयुयोतन ॥ अरिष्टाःसंचरेमहिस्वस्तिचरतादिहस्वस्त्यागृहेभ्यइति ॥ ततोबटुंउपनय
नार्थंवाचयति ॥ ब्रह्मचर्यमागामुपमानयस्वब्रह्मचारीभवानिदेवेनसवित्राप्रसूतइति ॥ ततआचार्यःपृच्छतिकोनामासीति ॥
ततोमाणवकः व्यावहारिकंनामनाक्षत्रंनामचवदति ॥ गिरिधरशर्मास्मिरौहिणशर्मास्मीत्येवंप्रकारेण ॥ ततआचार्यः ॥ स्वस्ति
देवसवितरहरमनेनामुनोद्दचमशीय ॥ अत्रमंत्रेअमुनेतिपदंनिष्काश्यबटोर्व्यावहारिकंनाक्षत्रंचशर्मांतंनामद्वयंप्रक्षिप्यमंत्रःपठ

नीयः ॥ सच ॥ स्वस्तिदेवसवितरहमनेनगिरिधरशर्मणारौहिणशर्मणोद्दचमशीयेत्येवंप्रकारेणनामनीगृह्णाति ॥ ततःकुशैरुभा वात्मानंमार्जयतः ॥ शंनोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनइति ॥ मार्जनांतंसर्वंकृत्वासुमुहूर्तोपनयनसमयं प्रतीक्षेत् ॥ अथप्रधानोपनयनं ॥ प्राप्तब्रह्मचर्यस्यकृतमार्जनस्यस्वस्थानस्थितस्याचार्यस्यचांतरास्वस्तिकांकितमंतःपटंप्राक्छदं आचारान्मध्येकृत्वामंगलपद्यपाठेवाद्यादिघोषेचक्रियमाणेसुलग्नसमयेअंतःपटंप्रागपसार्यप्राङ्मुखआचार्यःवक्ष्यमाणोपनयनध र्मेणउदङ्मुखस्यवटोरुपनयनंकुर्यात् ॥ इदंमुख्यमुपनयनशब्दवाच्यंज्योतिर्विदादिष्टेसुमुहूर्तेकर्तव्यम् ॥ ॥ छ ॥

## ॥ १३१ ॥ उपनयनमंत्राः ॥

श्रीः ॥ ॐअग्नेतेजस्विन्तेजस्वीत्वंदेवेषुभूयास्तेजस्वंतंमामायुष्मंतंवर्चस्वंतंमनुष्येषुकुरुदीक्षायैचत्वातपसश्चतेजसेजुहोमितेजो विदसितेजोमामाहासीन्माहंतेजोहासिषंमामांतेजोहासीदिंद्रौजस्विन्नोजस्वीत्वंदेवेषुभूयाओजस्वंतंमामायुष्मंतंवर्चस्वंतंमनुष्ये षुकुरुब्रह्मणश्चत्वाक्षत्रस्यच ॥ १ ॥ ओजसेजुहोम्योजोविदस्योजोमामाहासीन्माहमोजोहासिषंमामामोजोहासीत्सूर्यभ्राजस्वि न्भ्राजस्वीत्वंदेवेषुभूयाभ्राजस्वंतंमामायुष्मंतंवर्चस्वंतंमनुष्येषुकुरुवायोश्चत्वापांचभ्राजसेजुहोमिसुवर्विदसिसुवर्मामाहासीन्मा हꣳसुवर्हासिषंमामाꣳसुवर्हासीन्मयिमेधांमयिप्रजांमय्यग्निस्तेजोदधातुमयिमेधांमयिप्रजांमयींद्रइंद्रियंदधातुमयिमेधांमयिप्रजां मयिसूर्योभ्राजोदधातु ॥ २ ॥ सांग्रहण्येष्ट्यायजते ॥ इमांजनताꣳसंगृह्णानीति ॥ द्वादशारत्नीरशनाभवति ॥ द्वादशमासाःसं वत्सरः ॥ संवत्सरमेवावरुंधे ॥ मौंजीभवति ॥ ऊर्ग्वैमुंजाः ॥ ऊर्जमेवावरुंधे ॥ चित्रानक्षत्रंभवति ॥ चित्रंवाएतत्कर्म ॥ यदं श्वमेधःसमृध्यै ॥ पुण्यनामदेवयजनमध्यवस्यति ॥ पुण्यामेवतेनकीर्तिमभिजयति ॥ अपदातीनृत्विजःसमावहंत्यासुब्रह्मण्या

याः ॥ सुवर्गस्यलोकस्यसमष्ट्यै ॥ केशश्मश्रुवंपते ॥ नखानिनिकृंतते ॥ दतोधावते ॥ स्नाति ॥ अहतंवासःपरिधत्ते ॥ पाप्मनो पहत्यै ॥ वाचंयत्वोपवसति ॥ सुवर्गस्यलोकस्यगुप्त्यै ॥ रात्रिंजागरयंतआसते ॥ सुवर्गस्यलोकस्यसमष्ट्यै ॥ २॥ नयंप्रजांमेगोपाय ॥ अमृतत्वायजीवसे ॥ जातांजनिष्यमाणांच ॥ अमृतेसत्येप्रतिष्ठितां ॥ इत्युपनयनमंत्राः ॥ अथोपनयनं ॥ तच्चेत्थं ॥ आचार्यःकुमारस्यदक्षिणमंसंस्वदक्षिणेनहस्तेनसव्यंसव्येनतूष्णीमन्वारभ्यात्मनोदक्षिणेनहस्तेनब्रह्मचार्यभिमुखेनत स्यहृदयंस्पृष्ट्वासमीपमुपनयति ॥ भूर्भुवःसुवस्तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ देवस्यत्वासवितुः प्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामुपनयेमुकशर्मन्निति ॥ इदंप्रधानोपनयनंब्रह्मचारीनविस्मरेत् ॥ विस्मरणेत्वखिलंकर्मावर्त तेइतिमातृदत्तः ॥ ततआचार्यःस्वदक्षिणंहस्तेनवटोर्दक्षिणंहस्तंसांगुष्ठमुत्तानंगृह्णाति ॥ अग्निष्टेहस्तमग्रभीत्सोमस्तेहस्तमग्रभी त्सवितातेहस्तमग्रभीत्सरस्वतीतेहस्तमग्रभीत्पूषातेहस्तमग्रभीद्बृहस्पतिस्तेहस्तमग्रभीन्मित्रस्तेहस्तमग्रभीद्वरुणस्तेहस्तमग्रभीत्त्व ष्टातेहस्तमग्रभीद्धातातेहस्तमग्रभीद्विष्णुस्तेहस्तमग्रभीत्प्रजापतिस्तेहस्तमग्रभीदिति ॥ ततोबटुंसंशास्ति ॥ सवितात्वाभिरक्षतु मित्रस्त्वमसिधर्मणाग्निराचार्यस्तवदेवेनसवित्राप्रसूतोबृहस्पतेर्ब्रह्मचारीभवामुकशर्मन् ॥ अपोशानसमिधआधेहिकर्मकुरुमादि वास्वाप्सीरिति ॥ ततःस्वहस्तेनब्रह्मचारिणोदक्षिणमंसंउपर्युपरितूष्णीमन्ववमृश्यहृदयदेशमभिमृशति ॥ ममहृदयेहृदयंतेअ स्तुममचित्तंचित्तेनान्वेहिममवाचमेकमनाजुषस्वबृहस्पतिस्त्वानियुनक्तुमह्यं मामेवानुसꣳरभस्वमयिचित्तानिसंतुतेमयिसामी च्यमस्तुतेमह्यंवाचंनियच्छतादिति ॥ ततोनाभिदेशमभिमृशति ॥ प्राणानांग्रंथिरसिसमाविस्रसइति ॥ ततःकुमारमभिमंत्र यते ॥ भूर्भुवःसुवःसुप्रजाःप्रजयाभूयासꣳसुवीरोवीरैःसुवर्चावर्चसासुपोषःपोषैःसुमेधामेधयासुब्रह्माब्रह्मचारिभिरिति ॥ ततः

पुनःकुमारमभिमंत्रयते ॥ भूर्ऋक्षुत्वाग्नौपृथिव्यांवाचिब्रह्मणिददेमुकशर्मन् ॥ भुवोयजुःषुत्वावायावंतरिक्षेप्राणेब्रह्मणिददेमुकशर्मन् ॥ सुवःसामसुत्वासूर्येदिविचक्षुषिब्रह्मणिददेमुकशर्मन् ॥ इष्टतस्तेप्रियोसानिअमुकशर्मन् ॥ अनलस्यतेप्रियोसानिअमुकशर्मन् ॥ इदंवत्स्यावःप्राणआयुषिवत्स्यावःप्राणआयुषिवसामुकशर्मन् ॥ ततोब्रह्मचारिणोदक्षिणंहस्तमुत्तानंसांगुष्ठमग्निरायुष्मानितिपंचभिःपर्यायैर्गृह्णाति॥ अग्निरायुष्मान्त्सवनस्पतिभिरायुष्मान्तेनत्वायुषायुष्मंतंकरोमि ॥ सोमआयुष्मान्त्सओषधीभिरायुष्मान्तेनत्वायुषायुष्मंतंकरोमि ॥ यज्ञआयुष्मान्त्सदक्षिणाभिरायुष्मान्तेनत्वायुषायुष्मंतंकरोमि ॥ ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तेनत्वायुषायुष्मंतंकरोमि ॥ देवाआयुष्मंतस्तेंमृतेनायुष्मंतस्तेनत्वायुषायुष्मंतंकरोमि ॥ ततोमंत्रद्वयंबटोर्दक्षिणेकर्णेजपति ॥ आयुष्टेविश्वतोदधदयमग्निर्वरेण्यः ॥ पुनस्तेप्राणआयतिपरायक्ष्मंꣳसुवामिते ॥ अग्नौपृथिव्यांप्रतितिष्ठवायावंतरिक्षेसूर्येदिवियाꣳस्वस्तिमग्निर्वायुरादित्यश्चंद्रमाआपोनुसंचरंतिताꣳस्वस्तिमनुसंचरामुकशर्मन्॥ प्राणस्यब्रह्मचार्यभूरमुकशर्मन्इति॥ ततोमंत्रद्वयमुत्तरेकर्णेजपति ॥ आयुर्दाअग्नेहविषोजुषाणोघृतप्रतीकोघृतयोनिरेधि ॥ घृतंपीत्वामधुचारुगव्यंपितेवपुत्रमभिरक्षतादिमं ॥ अग्नौपृथिव्यांप्रतितिष्ठ० ॥ ततोब्रह्मचारिणोमुखेनमुखꣳसन्निधायजपति ॥ मेधांतइंद्रोददातुमेधांदेवीसरस्वती ॥ मेधांतेअश्विनावुभावाधत्तांपुष्करस्रजाविति ॥ ततोबटुमुत्थाप्य ॥ कषकादिदेवेभ्यस्त्वांपरिददे॥ परिदेहीतिवटूक्तौ॥ आचार्योददाति ॥ कषकायत्वापरिददामि ॥ अंतकायत्वापरिददामि ॥ अघोरायत्वापरिददामि ॥ गदायत्वापरिददामि॥यमायत्वापरिददामि ॥ मखायत्वापरिददामि ॥ वशिन्यैत्वापरिददामि ॥ पृथिव्यैत्वासवैश्वानरायैपरिददामि ॥ अद्भ्यस्त्वापरिददामि ॥ ओषधीभ्यस्त्वापरिददामि ॥ वनस्पतिभ्यस्त्वापरिददामि ॥ द्यावापृथिवीभ्यांत्वापरिददामि ॥ सुभूतायत्वापरिददामि ॥

ब्रह्मवर्चसायत्वापरिददामि ॥ विश्वेभ्यस्त्वादेवेभ्यःपरिददामि ॥ सर्वेभ्यस्त्वाभूतेभ्यःपरिददामि ॥ सर्वाभ्यस्त्वादेवताभ्यः परिददामि ॥ इतिपरिदानं ॥ पुनरुपनयनेपरिदानानंतरंसावित्रीवाचनं ॥ पुनरुपनयनप्रयोगमग्रेवक्ष्यामः ॥ प्रथमोपनयने परिदानांतंकृत्वाऽक्षारलवणादिकंव्रतंकुमारस्यदिनत्रयमग्निसन्निधौकारयित्वात्र्यहेतीतेचतुर्थदिवसेप्रातःसावित्रीवाचनंकृत्वा सप्तपलाशसमिद्धोमादिक्रमेणाखिलंकार्यमित्येकंमतं ॥ पौष्करसादेरपरंमतं ॥ सद्यःपौष्करसादिरितिसमानेह्निसद्यःव्रतमुपेत्य सावित्रीग्रहणं ॥ तदुच्यते ॥ परिदानानंतरंमाणवकः ॥ देशकालौसंकीर्त्यममेधाद्यभिवृद्धिद्वाराब्रह्मचर्यव्रतग्रहणांगंसप्तप लाशसमिद्धोमंकरिष्येइतिसंकल्प्याचार्यःकारयति ॥ घृतान्वक्तंसाग्रंपलाशसमित्सप्तकमादाय ॥ अग्नयेसमिधमाहार्षंबृहतेजा तवेदसे ॥ यथात्वमग्नेसमिधासमिध्यसएवंमांमेधयाप्रज्ञयाप्रजयापशुभिर्ब्रह्मवर्चसेनान्नाद्येनसमेधयस्वाहेत्येकांसमिधंजुहोति॥ अग्नयइदं० ॥ अग्नयेसमिधावाहार्षंबृहते० स्वाहेतिद्वेजुहोति॥ अग्नयइदं० ॥ अग्नयेसमिधआहार्षमितिसर्वमंत्रमुच्चार्यचतस्रो जुहोति ॥ अग्नयइदं० ॥ ततआचार्यःइध्मसन्नहनादिसंस्थाजपांतंकर्मसमापयेत् ॥ अथब्रह्मचर्याश्रमव्रतग्रहणंकुर्यात् ॥ आ चार्यः ब्रह्मचारिणाकर्तव्यानिव्रतान्युपदिशति ॥ ब्रह्मचारीनगायेन्नरोदेन्ननृत्यदर्शीस्यादित्यादीनिब्रह्मचारिप्रकरणस्थधर्मोक्ता निश्रुत्वा देशकालौसंकीर्त्यममब्रह्मचर्याश्रमविहितसकलव्रतानांग्रहणंयावत्समावर्तनंयथाशक्तिकरिष्येइतिसंकल्प्योपस्थेयदेव ताअभिसंधायोपतिष्ठते ॥ अग्नेव्रतपतेव्रतंचरिष्यामितच्छकेयंतन्मेराध्यतां ॥ वायोव्रतपतेव्रतंचरिष्यामितच्छकेयंतन्मेरा ध्यतां ॥ आदित्यव्रतपतेव्रतंचरिष्यामितच्छकेयंतन्मेराध्यतां ॥ व्रतानांव्रतपतेव्रतंचरिष्यामितच्छकेयंतन्मेराध्यतां ॥ एवंप्रकारेणव्रतग्रहणंकृत्वा ॥ समावर्तनेएतद्व्रतत्यागोवक्ष्यमाणप्रकारेणकार्यः ॥ अंतराम्नातविशेषव्रतानांग्रहणंत्यागश्च

तत्रतत्रवक्ष्यते ॥ ततोगुरवेवरंददाति ॥ गुरोवरंतेददामीति ॥ वरोत्रगौः अभावेगुंजापरिमितंसुवर्णंवा ॥ पितुरपिस्याद्वर दानं ॥ ततआचार्योमंत्रंवाचयित्वामाणवकमुत्थापयति ॥ उदायुषास्वायुषोदोषधीनाꣳरसेनोत्पर्जन्यस्यशुष्मेणोदस्थाममृताꣳ अनुइति ॥ ततःसूर्यायत्वांपरिददे ॥ परिदेहीतिमाणवकः ॥ आचार्यः ॥ सूर्यैषतेपुत्रस्तंतेपरिददामीति ॥ ततआचार्योब्रह्म चारीवाआदित्यमुपतिष्ठते ॥ तच्चक्षुर्देवहितंपुरस्ताच्छुक्रमुच्चरत् ॥ पश्येमशरदःशतंजीवेमशरदःशतंनंदामशरदःशतंमोदा मशरदःशतंभवामशरदःशतꣳशृणवामशरदःशतंप्रब्रवामशरदःशतमजीताःस्यामशरदःशतंज्योक्चसूर्यंदृशेइति ॥ ततआचा र्योदंडंप्रयच्छति ॥ अग्निष्टआयुःप्रतरांकृणोत्वग्निष्टेपुष्टिंप्रतरांदधात्विंद्रोमरुद्भिरिहतेदधात्वादित्यस्तेवसुभिरादधात्विति ॥ तत स्तूष्णींभिक्षापात्रमरिक्तंप्रदायाह ॥ भिक्षाचर्यंचरेति ॥ ततोब्रह्मचारीओमित्याज्ञामादायप्रथमंमातरंमातृसमांवाऽप्रत्याख्या यिनींभिक्षेत भवतीभिक्षांदेहीति ॥ भवान्भिक्षांददात्वितिपुमांसं ॥ प्रथमंभिक्षितमादायाऽऽचार्यायनिवेदयति भैक्ष्यंभो इति ॥ आचार्यस्तत्प्रतिगृह्णाति ॥ ततोरातिकुलेषुभिक्षेत ॥ ततआचार्यःवटोःपूर्वंप्रज्ञातंनिहितंवासःप्रतिगृह्णाति ॥ यस्यतेप्र थमवास्यꣳहरामस्तंत्वाविश्वेअवंतुदेवाः ॥ तंत्वाभ्रातरःसुहृदोवर्धमानमनुजायतांवहवःसुजातमिति ॥ ततउपनयनांगंत्रिवृद न्नहोमंपुण्याहवाचनंचकरिष्येइतिसंकल्प्योक्तरीत्याकृत्वाश्रद्धामेधेप्रीयेतामितिवदेत् ॥ ततःसावित्रीग्रहणांगंत्र्यहव्रतमुपदिश ति ॥ इक्षुविकारलवणमाषमुद्गादिधान्यमधुमांसानिनभोक्तव्यानि ॥ उपरिशयनंमृन्मयेनजलपानंशूद्रायस्वोच्छिष्टदानंदिवा स्वापादिवर्जनीयानि ॥ उभौकालौभिक्षाचर्यं ॥ सायमुपक्रम्यउभौकालौसायꣳसायंवाअग्निकार्यंकार्यमिति ॥ ब्रह्मचारीश्रुत्वा देशकालौसंकीर्त्यममसावित्रीव्रतग्रहणाधिकारसिद्ध्यर्थंअब्ध्यादिसन्निधौयथाशक्तित्र्यहव्रतग्रहणंकरिष्येइतिसंकल्प्योपस्थेयदेव

ताअभिसंधायोपतिष्ठते ॥ अग्नेव्रतपतेव्रतंचरिष्यामीत्यादित्र्यहव्रतंस्वीकृत्यचतुर्थदिवसेउक्तरीत्याविसर्गःकार्यः ॥ ततआचार्यो गायत्र्युपदेशार्थमुदगग्रेकूर्चेप्राङ्मुखउपविशति ॥ राष्ट्रभृदस्याचार्यासंदीमात्वद्योषमिति ॥ ततोब्रह्मचारीआदित्यायांजलिना नमस्कारंविधाय आचार्यस्यदक्षिणंपादंसकुक्षिकंसव्यान्वारब्धेनदक्षिणेनहस्तेनावमृशतीत्युपसंग्रहणंकार्यं ॥ अथाभिवादनं ॥ दक्षिणंबाहुंसव्यान्वारब्धंश्रोत्रसमंप्रसार्यामुकप्रवरान्वितामुकगोत्रोमुकशर्माहंभोअभिवादयेइत्युच्चारयन्शिरोवनतिपूर्वकमा चार्यस्यनमस्कारकरणमभिवादनंव्यावहारिकेणनाम्नाकार्यं ॥ ततआचार्येणायुष्मान्भवामुकशर्मन् ३ इतिप्लुतांत्यस्वरोच्चारणे नप्रयुक्ताशीर्वादोविनयावनतोभूत्वा ॥ सर्ववेदारंभार्थत्वेनसावित्र्युपदेशंवांछन्नध्येष्यमाणावचनद्वयात्मकेनमंत्रेणैकश्रुत्याह ॥ अधीहिभोःसावित्रींभोअनुब्रू ३ हीति ॥ ततआचार्यःबटुमभिमंत्रयति ॥ ॐ गणानांत्वागणपतिꣳहवामहेकविंकवीनामुपमश्रव स्तमं ॥ ज्येष्ठराजंब्रह्मणांब्रह्मणस्पतआनंःशृण्वन्नूतिभिःसीदसादनमिति ॥ ततःसर्ववेदारंभार्थत्वेनसावित्रींपच्छोर्धर्चश्चोनवा नमितिवाचयति ॥ ॐ भूस्तत्संवितुर्वरेण्यं ॥ भुवोभर्गोदेवस्यधीमहि ॥ सुवर्धियोयोनंःप्रचोदयात् ॥ ॐ भूर्भुवस्तत्संवितुर्वरे ण्यंभर्गोदेवस्यधीमहि ॥ सुवर्धियोयोनंःप्रचोदयात् ॥ ॐ भूर्भुवःसुवस्तत्संवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनंःप्रचो दयात्इति ॥ एवमुच्चारणाशक्तौयथाशक्तिवाचयति ॥ तैत्तिरीयकाणांगायत्र्यारंभेणैवसर्ववेदारंभोभवति ॥ ततःकर्मांगदेव ताप्रीत्यर्थंशतद्वयंशतंवाऽत्यशक्तौदशाधिकान्ब्राह्मणान्यथाकालंयथोपपन्नेनान्नेनभोजयिष्यइतिसंकल्प्यभोजयेत् ॥ पुनःकर्मा गदेवताप्रीत्यर्थंगंधतांबूलादिभिर्ब्राह्मणपूजनंभूयसीदक्षिणादानंचकरिष्यइतिसंकल्प्यकृत्वा ॥ अग्नेतेजस्विन्अवरुंधेमुंजाइत्या दिभिर्मंत्रैराशिषोग्राह्याः ॥ ततःप्रमादात्कुर्वतांकर्मेतिकर्मसाद्गुण्यायाचार्योबटुश्चविष्णुंस्मरेत् ॥ इतिगायत्र्युपदेशांतंकर्मस० ॥

## ॥ १३२ ॥ अग्निकार्यम् ॥

श्रीः ॥ तच्चप्रातःकालस्यातीतत्वादर्थात्सायमुपक्रम्योभौकालौसायंसायंवाकरोति ॥ आचम्यप्राणानायम्यममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंसायमग्निकार्यंकरिष्यइतिसंकल्प्य॥ ॐयथाहुतद्वंसवोगौर्यैमित्यग्निंपरिसमुह्यपरिस्तीर्य अदितेनुमन्यस्वेत्यादिपूर्ववत्परिषेकंकृत्वाष्टौसमिधआदायव्यस्ताभिर्व्याहृतिभिस्तिस्रःसमस्ताभिश्चैकेतिचतस्रोहुत्वोत्तरैश्चतुर्भिर्मंत्रैश्चतस्रोजुहोति॥ ॐएषातेअग्नेसमित्तयावर्धस्वचाचप्यायस्व॥ वर्धिषीमहिचवयमाचप्यासिषीमहिस्वाहा॥ अग्नयइदं० ॥ ॐमेधांमइंद्रोददातुमेधांदेवीसरस्वती ॥ मेधांमेअश्विनावुभावाधत्तांपुष्करस्रजौस्वाहा॥ इंद्रायसरस्वत्याअश्विभ्यामिदं०॥ ॐअप्सरासुचयामेधागंधर्वेषुचयन्मनः ॥ दैवींमेधामनुष्यजासामांमेधासुरभिर्जुषताꣳस्वाहा ॥ मेधायाइदं० ॥ ॐ आमांमेधासुरभिर्विश्वरूपाहिरण्यवर्णाजगतीजगम्या॥ ऊर्जस्वतीपयसापिन्वमानासामांमेधासुप्रतीकाजुषताꣳस्वाहा॥ मेधायाइदं० ॥ ततःपूर्ववत्परिसमुह्यपरिषेकपरिस्तरणविसर्गांतंकृत्वाग्निमुपतिष्ठते ॥ ॐयत्तेअग्नेतेजस्तेनाहंतेजस्वीभूयासंयत्तेअग्नेवर्चस्तेनाहंवर्चस्वीभूयासंयत्तेअग्नेहरस्तेनाहꣳहरस्वीभूयासं॥ मयिमेधांमयिप्रजांमय्यग्निस्तेजोदधातुमयिमेधांमयिप्रजांमयींद्रइंद्रियंदधातुमयिमेधांमयिप्रजांमयिसूर्योभ्राजोदधातुइति ॥ त्र्यायुषंजमदग्नेःकश्यपस्यत्र्यायुषंयद्देवानांत्र्यायुषंतन्मेअस्तुत्र्यायुषमित्याचाराद्भस्मधृत्वा ॥ स्वस्ति ॥ श्रद्धांमेधांयशःप्रज्ञांविद्यांबुद्धिंश्रियंबलं ॥ आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहनेत्यग्निंप्रार्थयित्वाप्रमादात्कुर्वतांकर्मेतिकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ ततउक्तप्रकारेणोपसंग्रहणंअभिवादनंचस्वसन्निहितानांपित्रोर्गुर्वादीनांचसायंप्रातश्चकुर्यात् ॥ प्रत्यभिवादनज्ञानेवाभिवादयेत् ॥ अन्यान्नमस्कुर्यात् ॥ इत्यग्निकार्यं ॥ ॥ छ ॥ ॥ छ ॥

श्रीः ॥ चतुर्थदिवसेप्रातराचार्यःकृतनित्यक्रियःब्रह्मचारिसहितःप्राङ्मुखउपविश्यदेशकालौसंकीर्त्योपनयनांगंत्रिवृदन्नहोमंपु ण्याहवाचनंचकरिष्यइतिसंकल्प्याचार्यएवकुर्यात् ॥ अत्रकश्चिदाह त्र्यहव्रतंचरतीत्यतोब्रह्मचारिणःस्वप्रकरणत्वेनोपस्थितत्वा त्व्रतविसर्गेचावश्यकत्वात्क्त्वाप्रत्ययेनसमानकर्तृत्वलाभाच्चाखिलंचतुर्थदिनकृत्यंब्रह्मचारिकर्तृकमिति ॥ तदशुद्धं ॥ त्र्यहेप र्यवेतेतथैवेत्यतिदेशेनपुण्याहांतस्त्रिवृदन्नहोमआचार्यकर्तृकोतिदिष्टस्तस्यब्रह्मचार्यवांतरप्रकरणप्राप्तत्वेनबलवत्त्वात् ॥ समान कर्तृत्वस्यचौत्सर्गिकत्वात् ॥ पुण्याहंवाचयित्वात्र्यहव्रतंचरतीत्यादाविहैवानंतर्यमात्रार्थेक्त्वोदर्शनात्ब्रह्मचारिणश्चअवैधत्वात् सर्वमाचार्यकर्तृकं ॥ यावदुक्तमेवकुमारस्य अवैधत्वादितिमातृदत्तोक्तेश्चपुण्याहांतस्त्रिवृदन्नहोमकर्ताआचार्यएवनब्रह्मचा री ॥ किंचत्र्यहव्रतंचरतीत्यत्रब्रह्मचारिणोव्रतग्रहणेसाक्षाद्विध्यभावात्व्रतंचरिष्यामीतिमंत्रलिंगात्ब्रह्मचर्यव्रतग्रहणंबटुःकुर्या दित्येवविधिकल्पनंनतुत्रिवृदन्नहोममपिबटुःकुर्यादितिकल्पकाभावात् ॥ अतोपिनब्रह्मचारीत्रिवृदन्नहोमकर्ता ॥ नचतथैवेत्य तिदेशादेवपुण्याहांतसर्वत्रिवृदन्नहोमप्राप्तौत्रिवृदन्नेनेत्याद्यंशानुवादोव्यर्थइतिवाच्यं ॥ तस्यपूर्वोत्तरावध्यर्थत्वात् ॥ व्याख्या तश्चायमर्थोमातृदत्तेनतथैवेत्येतावदक्रियमाणेसर्वमुपनयनमावर्तेततच्चनेष्टमित्यादिनाग्रंथेन ॥ किंच ॥ यदिब्रह्मचारिकर्तृकोहो मइष्टःस्यात् परिवेषणवचनादेवसिद्धेहोमेतिदेशवचनमनर्थकंस्यात् ॥ पूर्वत्रहोमेदृष्टस्योपनयनाग्नेरतिदेशार्थतदितिचेत् ॥ तर्हिनिर्णीतएवतत्राचार्यःकर्तासचन्यायादत्रप्राप्नोतिनातिदिश्यतइत्यत्रायुष्मतांशपथएवशरणं ॥ व्याख्यातंचवृत्तिकृद्भिः अग्न्याद्यर्थमतिदेशवचनमिति ॥ तदग्न्यर्थमेवेतिचेन्न ॥ एकदेशातिदेशेप्रमाणाभावात् ॥ एवंआचार्यएवत्रिवृदन्नहोमकर्ता ॥

अपिचव्रतंचरतिव्रतंविसृजतइत्यादौकुमारस्यावैधत्वेनप्रयोजकव्यापारस्यावश्यकत्वात् चारयतिविसर्जयतिइत्यादिण्यर्थविवक्षयाप्राप्तएवाचार्यःकर्तेति ॥ दृश्यंतेचशिष्टपरंपरयानुष्ठातारस्तथेति ॥ तस्मात्ब्रह्मचारिकर्तृकस्त्रिवृदन्नहोमस्त्वशुद्धएवेत्यलंविस्तरेण ॥ ततोब्रह्मचारीदेशकालौसंकीर्त्यस्वीकृतस्यत्र्यहव्रतस्यविसर्गंकरिष्येइतिसंख्योपस्थेयदेवताअभिसंधायोपतिष्ठते ॥ ॐअग्नेव्रतपतेव्रतमचारिषंतदशकंतन्मेराधि ॥ वायोव्रतपतेव्रतमचारिषंतदशकंतन्मेराधि ॥ आदित्यव्रतपतेव्रतमचारिषंतदशकंतन्मेराधि ॥ व्रतानांव्रतपतेव्रतमचारिषंतदशकंतन्मेराधि ॥ इति ॥ इतिव्रतविसर्गः ॥ ॥ ॥

## ॥ १३४ ॥ मंडपदेवतोत्थापनम् ॥

श्रीः ॥ ततआचार्यःगौर्यादिमंडपदेवतास्थापितवंशपात्रंस्वयंगृहीत्वाअविघ्नपकलशंपत्न्याग्राहयित्वामंडपांतरागत्यप्राङ्मुखउपविश्यदेशकालौसंकीर्त्योपनयनांगत्वेनस्थापितानांदेवतानामुत्थापनंमंडपोद्वासनंस्वस्तिपुण्याहवाचनंचकरिष्ये ॥ आदौनिर्विघ्नता० करिष्येइतिसंकल्प्य ॥ तैलोद्वर्तनोष्णोदकैर्यथाचारंनंदिन्याद्याःस्नापयित्वाषोडशोपचारैःगौर्याद्याःसर्वाःसंपूज्यविसृजेत् ॥ ॐउत्तिष्ठब्रह्मणस्पतेदेवयंतस्त्वेमहे ॥ उपप्रयंतुमरुतःसुदानवइंद्रप्राशूर्भवासचा ॥ यांतुदेवगणाःसर्वेपूजामादायपार्थिवीं ॥ इष्टकामप्रसिद्ध्यर्थंपुनरागमनायचेतिमंडपदेवताश्चविसृज्य ( अत्रस्वस्तिवाचनंकुर्यात् ) ब्राह्मणान्गंधादिनासंपूज्यआचार्यायदक्षिणांदत्वाप्रमादात्कुर्वतांकर्मेतिकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ इतिमंडपदेवतोत्थापनम् ॥



## ॥ १३५ ॥ ब्रह्मचारिधर्माः ॥

श्रीः ॥ ततोब्रह्मचारीइक्षुविकारान्लवणंमाषमुद्गादिशमीधान्यंभुंजानोधर्मोक्तान्यन्यानिचव्रतानिब्रह्मचारिप्रकरणोक्तानिनगा

येन्नरोदेदित्यादीन्याचरन्गुरोरनुकूलंकुर्वन्कांडव्रतोपाकरणविधिनाकांडव्रतान्युपाकृत्याध्ययनंकुर्यात् ॥ आचार्यःश्रुताध्ययनसंपन्नःसदाचारःसएवोपनयेत्सएवाध्यापयेत् ॥ नतुपितैवोपनयेदितिनियमः ॥ इतिब्रह्मचारिधर्माः ॥ छ ॥ ॥ छ ॥

## ॥ १३६ ॥ ब्रह्मचार्यग्निनाशप्रायश्चित्तं ॥

श्रीः ॥ देशकालौसंकीर्त्यब्रह्मचार्यग्निनाशजनितदोषपरिहारार्थंप्रायश्चित्तंकरिष्येइतिसंकल्प्यउद्धननादिभूसंस्कारंविधायश्रोत्रियागारादाहृतंलौकिकमग्निंमथितंवाप्रतिष्ठाप्यपरिसमुह्यपरिषिच्यदर्वींनिष्टप्याज्यंसंस्कृत्यदर्व्याज्यमादाय ॥ अयाश्चाग्नेस्यनभिशस्तीश्चसत्यमित्वमयाअसि ॥ अयासावयसाकृतोयासन्हव्यमूहिषेयानोधेहिभेषजꣳस्वाहा इत्येकाज्याहुतिर्होतव्या ॥ प्रातरग्निनाशेब्रह्मचारिणआसायमुपवासः ॥ सायमग्निनाशेआप्रातरुपवासइत्यग्निनाशप्रायश्चित्तं ॥ ॥ इतिसत्याषाढ० वैशं० महेशभट्टकृतावुपनयनप्रयोगः ॥ ॥ ॥ ॥ ॥

## ॥ १३७ ॥ चतुर्वेदव्रतनिर्णयः ॥

श्रीः ॥ उपनयनवद्वेदव्रतानामावश्यकत्वम् ॥ अत्रप्राजापत्यसौम्याग्नेयवैश्वदेवकांडानांतत्तत्कांडाख्यव्रतानांचारंभसमापनयोःस्वरूपमुच्यते ॥ उपनयनानंतरंविद्यारंभानुकूलेमुहूर्तेहोमपूर्वकमेवकांडाध्ययनोपक्रमः ॥ कांडाध्ययनेसमाप्तेहोमपूर्वकमेवोत्सर्गः ॥ व्रतानामप्येतेएवारंभसमापनेभवतोनभेदेन ॥ अध्ययनांगत्वात्सर्वब्रह्मचारिव्रतानां ॥ कांडानांसंकीर्णत्वेनयथाकांडमध्ययनासंभवात्कांडानुक्रमणेचसंप्रतिसारस्वतपाठस्याभ्यनुज्ञातत्वात्सारस्वतपाठेनैवाध्यापनंसंप्रत्यस्ति ॥ अतःप्राजाप

त्यादिकांडव्रतान्येवोदगयनेशुभेदिनेकांडवदेकशउपाकृत्यतंत्रेणसर्वाणिकांडव्रतान्युपाकृत्यवायथाशक्त्याऽऽचरन्नध्ययनंकुर्यात् ॥ कांडोत्सर्गविधिनाचोत्सृजेत् ॥ उपाकरणोत्सर्गयोर्ग्रहणत्यागरूपयोस्तंत्रंनैवकुर्यात्स्वरूपविरोधात् ॥ अतएवमातृदत्तेनापिकांडोपाकरणकांडविसर्गशब्दौव्रतपरौव्याख्यातौ ॥ कांडोपाकरणेकांडव्रतोपाकरणेकांडोत्सर्गेकांडव्रतोत्सर्गइत्यर्थइति ॥ अतश्चकांडव्रतानामेवोपाकरणोत्सर्जनेभवतः ॥ यत्तुकांडानामुपाकरणमुत्सर्जनंचोक्तंतदज्ञानप्रलपितमित्युपेक्षणीयं ॥ नन्वत्रकानिकांडव्रतानि ॥ सर्वब्रह्मचारिव्रतानीतिचेन्न ॥ तेषामारंभस्यजातत्वात् ॥ तद्विसर्गश्चसमावर्तनेभविष्यति ॥ कांडर्षिहोमएवेष्यतइतिचेन्न ॥ सचव्रतारंभेकारणंनतुव्रतानितानिचविशिष्यतयोक्तानि ॥ अतश्चगृह्यांतरेप्रजापतिसोमाग्निविश्वेदेवहोमानां कांडव्रतत्वेनग्रहणादस्माकंचतत्समानाध्ययनत्वेनाविरोधाच्चतएवकांडव्रतशब्देनोच्यंते ॥ एतेनकांडव्रतोपाकरणेतिरिक्तहोमकरणमशुद्धमितिवदन्निरस्तः ॥ इतिचतुर्वेदव्रतनिर्णयः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १३८ ॥ वेदव्रतोपाकरणप्रयोगः ॥

श्रीः ॥ समावर्तनप्राक्तनान्याचार्यकर्तृकाणिकर्माणि ॥ यावदुक्तमेवब्रह्मचारीकरोति ॥ आचार्यःब्रह्मचारिसहितोनद्यादौस्नात्वाकृतनित्यक्रियःप्राङ्मुखउपविश्यदक्षिणतोब्रह्मचारिणमुपवेश्यदेशकालौसंकीर्त्यास्यामुकशर्मणोब्रह्मचारिणोवेदाध्ययनाधिकारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंप्राजापत्यसौम्याग्नेयवैश्वदेवाख्यचतुर्णांकांडव्रतानामुपाकरणानितंत्रेणकरिष्ये ॥ तदंगंगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्येइतिसंकल्प्यकृत्वा ॥ ब्रह्मचारिणःकांडव्रतोपाकरणांगत्वेनवपनंस्नानंचकारयित्वानूतनकटिसूत्रकच्छोपवीताजिनोत्तरीयदंडांश्चदत्त्वापुराणान्यप्सुनिक्षिपेत् ॥ उद्धननादिभूसंस्कारंविधायसमुद्ध

वनामानंलौकिकमग्निंप्रतिष्ठाप्यप्रज्वाल्यसमित्त्रयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वाकांडव्रतोपाकरणहोमकर्मणियक्ष्यमा
णादेवताइत्यादिसामान्यप्रधानांतमुक्त्वा वैशेषिकप्रधानहोमे सदसस्पतिमाज्येनप्रजापतिंकांडर्षिंसोमंकांडर्षिंअग्निंकांडर्षिंवि
श्वान्देवान्कांडर्षींश्चाज्येनप्रजापतिंसोमंअग्निंविश्वान्देवान्प्रत्येकंषडाहुतीराज्येन ॥ अंगहोमेवरुणंद्विरित्यादिसंस्रावेणेत्यंतमु
क्त्वान्वाधानसमिधोग्न्यावाधायसामान्यप्रधानांतंहुत्वा॥वैशेषिकहोमे॥ सदसस्पतिमद्भुतंप्रियमिंद्रस्यकाम्यं ॥ सनिंमेधामया
सिषꣳस्वाहा ॥ सदसस्पतयइदं० ॥ प्रजापतयेकांडर्षयेस्वाहा ॥ प्रजापतयेकांडर्षयइदं० ॥ सोमायकांडर्षयेस्वाहा ॥ सोमाय
कांडर्षयइदं० ॥ अग्नयेकांडर्षयेस्वाहा ॥ अग्नयेकांडर्षयइदं० ॥ विश्वेभ्योदेवेभ्यःकांडर्षिभ्यःस्वाहा ॥ विश्वेभ्योदेवेभ्यःकां
डर्षिभ्यइदं० ॥ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयꣳस्यामपतयोरयीणाꣳ
स्वाहा ॥ प्रजापतयइदं० ॥ रयीणांपतिंयजतंबृहंतमस्मिन्भरेनृतमंवाजसातौ ॥ प्रजापतिंप्रथमजामृतस्ययजामदेवमधिनोब्र
देवीतुस्वाहा ॥ प्रजापतयइदं० ॥ प्रजापतेत्वंनिधिपाःपुराणोदेवानांपिताजनिताप्रजानां ॥ पतिर्विश्वस्यजगतःपरस्पाहविर्नो
वविहवेजुषस्वस्वाहा ॥ प्रजापतयइदं०॥ तवेमेलोकाःप्रदिशोदिशश्चपरावतोनिवतउद्वतश्च ॥ प्रजापतेविश्वसृज्जीवधन्यइदंनो
देवप्रतिहर्यहव्यꣳस्वाहा ॥ प्रजापतयइदं० ॥ प्रजापतिंप्रथमंयज्ञियानांदेवानामग्रेयजतंयजध्वं ॥ सनोददातुद्रविणꣳसुवीर्यꣳ
रायस्पोषंविष्यंतुनाभिमस्मेस्वाहा ॥ प्रजापतयइदं० ॥ योरायईशेशतदायउक्थ्योयःपशूनाꣳरक्षितविष्ठितानां ॥ प्रजा
पतिःप्रथमजाऋतस्यसहस्रधामाजुषताꣳहविर्नःस्वाहा ॥ प्रजापतयइदं० ॥ ६ ॥ सोमोधेनुꣳसोमोअर्वंतमाशुꣳसोमोवीरंकर्म
ण्यंददातु ॥ सादन्यंविदथ्यꣳसभेयंपितृश्रवणंयोददाशदस्मैस्वाहा ॥ सोमायेदं० ॥ अषाढंयुत्सुपृतनासुपप्रिꣳसुवर्षामप्सांवृ

जनस्यगोपां ॥ भरेषुजाꣳसुक्षितिꣳसुश्रवसंजयंतंत्वामनुमदेमसोमस्वाहा ॥ सोमायेदं० ॥ त्वꣳसोमक्रतुभिःसुक्रतुर्भूस्त्वंदक्षैःसु दक्षोविश्ववेदाः॥ त्वंवृषावृषत्वेभिर्महित्वाद्युम्नेभिर्द्युम्न्यभवोनृचक्षाःस्वाहा ॥ सोमायेदं० ॥ यातेधामानिहविषायजंतितातै विश्वापरिभूरस्तुयज्ञं ॥ गयस्फानःप्रतरणःसुवीरोवीरहाप्रचरासोमदुर्यान्त्स्वाहा ॥ सोमायेदं० ॥ त्वमिमाओषधीःसोमविश्वा स्त्वमपोअंजनयस्त्वंगाः ॥ त्वमाततंथोर्वैतरिक्षंत्वंज्योतिषावितमोववर्थस्वाहा ॥ सोमायेदं० ॥ यातेधामानिदिवियापृथिव्यां यापर्वतेष्वोषधीष्वप्सु ॥ तेभिर्नोविश्वैःसुमनाअहेडन्राजन्त्सोमप्रतिहव्यागृभायस्वाहा ॥ सोमायेदं० ॥ ६ ॥ अग्नेनयसुपथा रायेअस्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठांतेनमउक्तिंविधेमस्वाहा ॥ अग्नयइदं० ॥ प्रवःशु क्रायभानवेभरध्वꣳहव्यंमतिंचाग्नयेसुपूतं ॥ योदैव्यानिमानुषाजनूꣳष्यंतर्विश्वानिविद्मनाजिगातिस्वाहा ॥ अग्नयइदं०॥ अच्छा गिरोमतयोदेवयंतीरग्निंयंतिद्रविणंभिक्षमाणाः ॥ सुसंदृशꣳसुप्रतीकꣳस्वंचꣳहव्यवाहमरतिंमानुषाणाꣳस्वाहा ॥ अग्नयइदं० ॥ अग्नेत्वमस्मद्युयोध्यमीवाअनग्नित्राअभ्यमंतकृष्टीः ॥ पुनरस्मभ्यꣳसुवितायदेवक्षांविश्वेभिरजरेभिर्यजत्रस्वाहा ॥ अग्नयइदं० ॥ अग्नेत्वंपारयानव्योअस्मान्त्स्वस्तिभिरतिदुर्गाणिविश्वा ॥ पूश्चपृथ्वीबहुलानउर्वीभवातोकायतनयायशंयोःस्वाहा ॥ अग्नयइदं०॥ प्रकारवोमननावच्यमानादेवद्रीचींनयथदेवयंतः ॥ दक्षिणावाड्वाजिनीप्राच्येतिहविर्भरंत्यग्नयेघृताचीस्वाहा ॥ अग्नयइदं० ॥ ॥ ६ ॥ आनोविश्वेअस्क्रागमंतुदेवामित्रोअर्यमावरुणःसजोषाः ॥ भुवन्यथानोविश्वेवृधासःकरन्त्सुषाहाविथुरन्नशवःस्वाहा ॥ विश्वेभ्योदेवेभ्यइदं० ॥ शंनोदेवाविश्वदेवाभवंतुशꣳसरस्वतीसहधीभिरस्तु ॥ शमभिषाचःशमुरातिषाचःशंनोदिव्याःपार्थि वाःशंनोअप्याःस्वाहा ॥ विश्वेभ्योदेवेभ्यइदं० ॥ येसवितुःसत्यसवस्यविश्वेमित्रस्यव्रतेवरुणस्यदेवाः ॥ तेसौभगंवीरवद्गोमद

म्रोदधातनद्रविणंचित्रमस्मेस्वाहा ॥ विश्वेभ्योदेवेभ्यइदं० ॥ अग्नेयाहिदूत्यंवारिषेण्योदेवाँ२अच्छाब्रह्मकृतागणेन ॥ सरस्व
तींमरुतोअश्विनापोयक्षिदेवान्रत्नधेयायविश्वान्त्स्वाहा ॥ विश्वेभ्योदेवेभ्यइदं० ॥ द्यौःपितःपृथिविमातरध्रुगग्नेभ्रातर्वसवो
मृडतानः ॥ विश्वंआदित्याअदितेसजोषाअस्मभ्य२ंशर्मबहुलंवियंतःस्वाहा ॥ विश्वेभ्योदेवेभ्यइदं० ॥ विश्वेदेवाःशृणुतेमं२ंह
वंमेयेअंतरिक्षेयउपद्यविष्ठ ॥ येअग्निजिह्वाउतवायजत्राआसद्यास्मिन्बर्हिषिमादयध्व२ंस्वाहा ॥ विश्वेभ्योदेवेभ्यइदं० ॥ ६ ॥
इतिप्रजापतिसोमाग्निविश्वदेवेभ्यःप्रत्येकंषट्षडाहुतीर्हुत्वा तत इमंमेवरुणेत्यादिदेवसवितःप्रासावीरितिपरिषेकविसर्गांतमा
चार्यःसमापयेत् ॥ ततोब्रह्मचारीउपस्थेयदेवताअभिसंधायोपतिष्ठते ॥ अग्नेव्रतपतेव्रतंचरिष्यामितच्छकेयंतन्मेराध्यतां ॥ वायो
व्रत० ॥ आदित्यव्रत० ॥ व्रतानांव्रतपते० ॥ तां० ॥ एवंउक्तरीत्यादेवतांउपस्थायगुरवेवरंदद्यात् ॥ उक्तोवरः ॥ ततआचार्यः
यथेतंप्रणीताःपर्याहृत्यसंस्थाजपांतंकर्मसमापयेत् ॥ नात्रत्रिवृदन्नहोमः ॥ ब्राह्मणभोजनंसंकल्प्यगंधादिनासंपूज्यभूयसींदक्षि
णांदत्त्वाग्निंविसृज्यप्रमादात्कुर्वतांकर्मेतिकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ ब्रह्मचारीस्वविहितानिव्रतान्याचरन्यथासारस्वतपाठेना
ध्ययनंकुर्यात् ॥ इतिहिरण्यकेशीयस्मा० सं० वैशं० म० वेदव्रतोपाकरणप्रयोगःसमाप्तः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १३९ ॥ वेदव्रतोत्सर्जनम् ॥

श्रीः ॥ आचार्यश्चंद्रानुकूल्येसतिनद्यादौप्रशस्तेदेशेकृतनित्यक्रियःप्राङ्मुखउपविश्यस्वदक्षिणतोब्रह्मचारिणमुपवेश्यदेशकालौ
संकीर्त्यास्यब्रह्मचारिणोवेदाध्ययनांगत्वेनस्वीकृतानांप्राजापत्यसौम्याग्नेयवैश्वदेवकांडाख्यव्रतानामुत्सर्जनंतंत्रेणकरिष्येतदंगं
गणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्येइतिसंकल्प्योक्तरीत्याकुर्यात् ॥ ततोब्रह्मचारिणोवपनंस्नानंनूतन

कटिसूत्रकच्छोपवीताजिनोत्तरीयदंडानांधारणंचकारयित्वापुराणानिकटिसूत्रादीन्यप्सुनिक्षिप्योद्धननादिनाभूसंस्कारंविधा यतत्रसमुद्भवनामानंलौकिकमग्निंप्रतिष्ठाप्यप्रज्वाल्यसमित्रयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वावेदव्रतोत्सर्जनहोमकर्म णियक्ष्यमाणादेवताःपरिग्रहीष्यामीत्यादिव्याहृत्यंतमुक्त्वावैशेषिकहोमेसदसस्पतिंप्रजापतिंकांडर्षिंसोमंकांडर्षिंअग्निंकांडर्षिंवि श्वान्देवान्कांडर्षींश्चाज्येन प्रजापतिंसोममग्निंविश्वान्देवांश्चप्रत्येकंषड्भिराज्याहुतिभिर्यक्ष्ये ॥ अंगहोमेवरुणंद्विरित्यादिसंस्रावे णेत्यंतमुक्त्वासमिधोग्नावाधायपरिसमूहनादिव्याहृत्यंतंहुत्वावैशेषिकहोमादिपरिषेकविसर्गांतमुपाकरणवत्कुर्यात् ॥ ततोब्रह्म चारीउपस्थेयदेवताअग्न्याद्याश्चतस्रोभिसंधायोपतिष्ठते ॥ अग्नेव्रतपतेव्रतमचा० धि ॥ वायोव्र० आदित्य०व्रतानां०धि ॥इति व्रतविसर्गंकृत्वागुरवेवरंदद्यात् ॥ आचार्यःप्रणीताःपर्याहृत्यसंस्थाजपांतंसमाप्य॥नात्रत्रिवृदन्नहोमः॥ ब्राह्मणभोजनंसंकल्प्य तत्पूजनंभूयसीदक्षिणादानमाशीःप्रार्थनंचकृत्वाप्रमादात्कुर्वतांकर्मेतिकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ इतिवेदव्रतोत्सर्गः॥ छ ॥

## ॥ १४० ॥ शुक्रियव्रतोपाकरणम् ॥

श्रीः ॥ शुक्रियव्रतंसूत्रवृत्तिकृद्भ्यामस्पृष्टमपिबौधायनेदृष्टत्वेनकारिकाकृतोक्तत्वाच्छक्तौकर्तव्यमापूर्विकपक्षेण ॥ तस्यप्रयोगः॥ आचार्यश्चंद्रानुकूल्येसतिशुभदिनेप्राङ्मुखउपविश्यदक्षिणतःब्रह्मचारिणंप्रातरग्निकार्योत्तरंचोपवेश्यदेशकालौसंकीर्त्यास्यब्रह्म चारिणोवेदाध्ययनाधिकारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंसौम्यव्रतांतर्गतशुक्रियव्रतोपाकरणंकरिष्येतदंगंगणपतिपूजनंपुण्या हवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्येइतिसंकल्प्यकृत्वाब्रह्मचारिणोवपनंकटिसूत्रादिपूर्ववद्दत्वासायंहोमानंतरमस्तमिते आदित्येग्रामात्प्रागुदग्वाजलसमीपेगत्वाप्राङ्मुखोब्रह्मचारिसहितउपविश्यदेशकालौसंकीर्त्यशुक्रियव्रतांगमुद्धननादिकर्मकरि

ष्येइतिसंकल्प्यगणेशंसंपूज्योद्धननादिनाभूसंस्कारंविधायसमुद्भवनामानंलौकिकमग्निंप्रतिष्ठाप्यप्रज्वाल्यसमित्रयमादायश्रद्ध
एहीत्यादिप्राणायामांतंकृत्वाशुक्रियव्रतोपाकरणहोमकर्मणियक्ष्यमाणादेवताःपरिग्रहीष्यामि ॥ तूष्णीमग्निंसमिद्भिःअग्निंवायु
मादित्यंप्रजापतिंचौदुंबरसमिद्भिर्यक्ष्ये ॥ प्रायश्चित्तहोमेव्याहृतिदेवताश्चाज्येनयक्ष्ये ॥ इत्युक्त्वासमिधोग्नावाधाय ॥ प्रोक्षणीं
दर्वींआज्यस्थालींऔदुंबरीश्चतस्रःसमिधःवासःकुशाद्यासाद्यप्रोक्षणीसंस्कारादिपरिषेकांतंकृत्वा ॥ समिद्धोमः ॥ ॐपृथिवीस
मित् ॥ तामग्निःसमिंधे ॥ साग्निꣳसमिंधे ॥ तामहꣳसमिंधे ॥ सामासमिंद्धा ॥ आयुषातेजसा ॥ वर्चसाश्रिया ॥ यशसाब्र
ह्मवर्चसेन ॥ अन्नाद्येनसमिंताꣳस्वाहा ॥ अग्नयइदं० ॥ ॐअंतरिक्षꣳसमित् ॥ सावायुꣳसमिंधे ॥ तामहꣳसमिंधे ॥ सामास
मिंद्धा ॥ आयुषातेजसा ॥ वर्चसाश्रिया ॥ यशसाब्रह्मवर्चसेन ॥ अन्नाद्येनसमिंताꣳस्वाहा ॥ वायवइदं० ॥ ॐद्यौःसमित् ॥
तामादित्यःसमिंधे ॥ सादित्यꣳसमिंधे ॥ तामहꣳसमिंधे ॥ सामासमिंद्धा ॥ आयुषातेजसा ॥ वर्चसाश्रिया ॥ यशसाब्रह्म
वर्चसेन ॥ अन्नाद्येनसमिंताꣳस्वाहा ॥ आदित्यायेदं० ॥ ॐप्राजापत्यामेसमिदसिसपत्नक्षयणी ॥ भ्रातृव्यहामेसिस्वाहा ॥
प्रजापतयइदं०॥ततःकृतस्यकर्मणोन्यूनातिरिक्तदोषपरिहारार्थंव्याहृतिहोमंकृत्वा ॥ ततोब्रह्मचारीवेदाध्ययनांगंअग्न्यादिसन्नि
धौशुक्रियव्रतग्रहणंकरिष्येइतिसंकल्प्यचतस्रोदेवताअभिसंधायोपतिष्ठते ॥ अग्नेव्रतपतेव्रतंचरिष्यामीत्यादिनाव्रतंस्वीकृत्यसौ
म्यानुवाकानामादितःकिंचित्किंचिदधीत्यवाससाशिरःसमुखंवेष्टयित्वाग्राममंप्रविश्यतांरात्रिंवाग्यतस्तिष्ठेत् ॥ उदितआदित्ये
शिरोमुखवेष्टनेविमुच्यकृतनित्यक्रियोग्निकार्यंकृत्वाआदित्यमुपतिष्ठते ॥ वयःसुपर्णाउपसेदुरिंद्रंप्रियमेधाऋषयोनाधमानाः ॥
अपध्वांतमूर्णुहिपूर्द्धिचक्षुर्मुमुग्ध्यस्मान्निधयेवबद्धान् ॥ तच्चक्षुर्देवहितंपुरस्ताच्छुक्रमुच्चरत् ॥ पश्येमशरदःशतंजीवेम०सूर्यदृशे ॥

इत्यादित्यमुपस्थाय ॥ ततआदित्यमग्निमश्मानंकुंभंवत्संहिरण्यंचदृष्ट्वाचार्यायवरंदत्त्वाकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ इतिशुक्रियव्रतोपाकरणप्रयोगः ॥ सौम्यकांडांतर्गतशुक्रियदृष्टंवेदभागमधीत्योत्सर्जनंकुर्यात् ॥ इतिशुक्रियव्रतोपाकरणम् ॥ ॥ छ ॥

## ॥ १४१ ॥ शुक्रियव्रतोत्सर्जनम् ॥

श्रीः ॥ आचार्योब्रह्मचारिसहितःकृतनित्यक्रियःप्राङ्मुखउपविश्याचम्यअस्यब्रह्मचारिणोवेदाध्ययनांगत्वेनस्वीकृतस्यशुक्रियव्रतस्योत्सर्जनंकरिष्येइतिसंकल्प्यगणेशपूजनादिकृत्वापरिषेकांतंपूर्ववदापूर्विकपक्षेणकृत्वासमिद्धोमेविशेषः द्यौःसमिदितिविलोमपाठेनऔदुंबरीश्चतस्रःसमिधोहुत्वाऽऽदित्यव्रतपतेव्रतमचारिषमित्यादिव्युत्क्रमपाठेनोपस्थानादिविष्णुस्मरणांतंसमानं॥पृथक्कांडव्रतोपाकरणपक्षेसौम्योपाकरणानंतरंशुक्रियव्रतोपाकरणोत्सर्जनेकृत्वासौम्योत्सर्जनंकुर्यात् ॥ इतिशुक्रियव्रतोत्सर्जनम् ॥

## ॥ १४२ ॥ गोदानप्रयोगः ॥

श्रीः ॥ गविपृथिव्यांदीयंतेस्वापार्थयानिमस्तकस्यचत्वार्यंगानितेषांवपनादिरूपंकर्मगोदानकर्मेत्युच्यते ॥ तच्चद्विविधं ॥ एकमुपनयनस्यादौचूडाकरणरूपंद्वितीयमुपनयनानंतरंक्रियमाणं ॥ तच्चगोदानमुपनयनवदावश्यकं ॥ तच्चगर्भतोजन्मतोवाषोडशवर्षेसमावर्तनात्प्राक्कार्यं ॥ ब्रह्मचर्यादिव्रतेनाधीत्यसमावर्तितव्यं ॥ ब्रह्मचर्यकालोष्टाचत्वारिंशद्वर्षाणिचतुर्विंशतिर्द्वादशवर्षाणियावत्ग्रहणंवा ॥ अशक्तत्वादनित्यत्वाच्चयथाशक्त्यधीत्यवास्नानंकरोति ॥ तदागोदानकर्माकृष्यसमावर्तनात्प्रागेवोदगयनेशुक्लपक्षेगुरुशुक्रवार्धकाद्यभावेअक्षयेऽनधिकेचमासिज्योतिर्विदुक्तकालेदिवसेचौलवत्कार्यं ॥ कर्ताप्राङ्मुखउपविश्य

स्वदक्षिणतःपत्नींतद्दक्षिणतोब्रह्मचारिणंचोपवेश्यआचम्यप्राणानायम्यदेशकालौसंकीर्त्यास्यब्रह्मचारिणआयुर्वर्चोभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थंगोदानकर्मकरिष्ये ॥ तदंगंगणेशपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धमंकुरारोपणंचकरिष्यइतिसंक ल्प्यकृत्वा ॥ उद्धननादिभूसंस्कारंविधायतत्रसूर्यनामानंलौकिकमग्निंप्रतिष्ठाप्यप्रज्वाल्यसमित्रयमादायश्रद्धएहीत्यादिप्राणाया मांतंकृत्वागोदानहोमकर्मणियक्ष्यमाणादेवताइत्यादिसामान्यप्रधानांतंकृत्वा नात्रप्रधानहोमः ॥ अंगहोमादिसंस्थाजपांतंकर्म समाप्य ॥ अग्नेःपश्चात्कर्तादक्षिणतोब्रह्मचारीउत्तरतःकेशसंयमनार्थंमाताब्रह्मचारीवाकश्चिदानडुहंगोमयंधारयन्नुपविशति ॥ ततश्चौलोक्तप्रकारेणोष्णशीताभिरद्भिरुंदनादिवपनांतंआचार्यःनापितोवाचौलवत्कुर्यात् ॥ चूडाकरणकालेयथाचारंधृताभिः शिखाभिःसहमध्यशिखासहितंतद्रहितंवावपनमितिविशेषः ॥ गर्तेकेशसंयमनादिकंचौलवत्कृत्वाचार्यायवरंदक्षिणांसर्पिष्मंत मोदनंनापितायचदत्त्वाकर्मांगंदशाधिकब्राह्मणभोजनंभूयसींदक्षिणांदत्त्वाप्रमादात्कुर्वतांकर्मेतिकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ इतिश्रीसत्याषाढ० प्रथमेसं० वै० महेशभट्टकृतौगोदानप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १४३ ॥ ब्रह्मचारिणोवेदव्रतातिरिक्तसाधारणव्रतलोपेप्रायश्चित्तम् ॥

श्रीः ॥ कृतनित्यक्रियआचार्यःप्रातरग्निकार्योत्तरंब्रह्मचारीचप्राङ्मुखउपविश्यदेशकालौसंकीर्त्यास्यब्रह्मचारिणःशौचाचमनसं ध्यावंदनदर्भधारणभिक्षाग्निकार्यराहित्यशूद्रादिस्पर्शनकौपीनकटिसूत्रयज्ञोपवीतमेखलादंडाजिनत्यागदिवास्वापछत्रधारणपा दुकाध्यारोहणमालाधारणोद्वर्तनानुलेपनांजनाभ्यंजनजलक्रीडाद्यूतनृत्यगीतवाद्याद्यभिरतिपाखंडादिसंभाषणपर्युषितभोज नादिब्रह्मचारिव्रतलोपजनितदोषपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंहोमपूर्वकंकृच्छ्रत्रयमितममुकप्रत्याम्नायेनप्रायश्चित्तंकरिष्येइ

तिसंकल्प्योद्धननादिभूसंस्कारंविधायतत्रलौकिकमग्निंविण्णामानंप्रतिष्ठाप्यप्रज्वाल्यसमित्रयमादायश्रद्धएहीत्यादिप्राणायामां तंकृत्वाब्रह्मचारिप्रायश्चित्तहोमकर्मणियक्ष्यमाणादेवताःपरिग्रहीष्यामीत्यादिव्याहृत्यंतमुक्त्वाप्रधानहोमेअग्निंवायुंसूर्यंप्रजापतिं चैकैकयाहुत्याआज्येनयक्ष्ये॥ अग्निंपृथिवींमहांतं वायुमंतरिक्षंमहांतं आदित्यंदिवंमहांतं प्रजापतिंचंद्रमसंनक्षत्राणिदिशोमहांतं प्रत्येकमेकैकयाहुत्याआज्येन ॥ अग्निंविश्ववेदसंविभावसुंशतक्रतुंचैकैकयाहुत्याआज्येन ॥ अग्निंद्वाभ्यामाज्याहुतिभ्यां॥ अग्निं वायुंसूर्यंप्रजापतिंचैकैकयाज्याहुत्यायक्ष्ये ॥ अंगहोमेवरुणंद्विरित्यादिसामान्यप्रधानांतंहुत्वावैशेषिकहोमः ॥ व्यस्तसमस्तक्रमे णव्याहृतिचतुष्टयंहुत्वा ॥ ॐ भूरग्नयेचपृथिव्यैचंमहतेचस्वाहा॥ अग्नयेपृथिव्यैमहतइदं० ॥ ॐ भुवोवायवेचांतरिक्षायचमहतेच स्वाहा ॥ वायवेंतरिक्षायमहतइदं० ॥ ॐ सुवरादित्यायंचदिवेचंमहतेचस्वाहा॥ आदित्यायदिवेमहतइदं० ॥ ॐ भूर्भुवःसुवश्चंद्र मसेचनक्षत्रेभ्यश्चदिग्भ्यश्चमहतेचस्वाहा ॥ प्रजापतयेचंद्रमसेनक्षत्रेभ्योदिग्भ्योमहतइदं० ॥ ॐपाहिनोअग्नएनसेस्वाहा ॥ अग्न यइदं० ॥ ॐपाहिनोविश्ववेदसेस्वाहा॥ विश्ववेदसइदं०॥ ॐयज्ञंपाहिविभावसोस्वाहा॥ विभावसवइदं०॥ ॐसर्वंपाहिशतक्रतो स्वाहा॥ शतक्रतवइदं०॥ ॐपुनरूर्जानिवर्तस्वपुनरग्नइषायुषा ॥ पुनर्नःपाहिविश्वतःस्वाहा ॥ अग्नयइदं० ॥ ॐसहरय्यानिवर्त स्वाग्नेपिन्वस्वधारया ॥ विश्वप्स्नियाविश्वतस्परिस्वाहा ॥ अग्नयइदं० ॥ ॐभूःस्वाहा ॥ अग्नयइदं० ॥ ॐभुवःस्वाहा ॥ वायव इदं० ॥ ॐसुवःस्वाहा ॥ सूर्यायेदं० ॥ ॐभूर्भुवःसुवःस्वाहा ॥ प्रजापतयइदं०॥ इत्यष्टादशाहुतीर्हुत्वा ॥ ततःकृच्छ्रत्रयप्रत्या म्नायत्वेनकल्पितजपहोमाद्यन्यतमप्रायश्चित्तंकृत्वा ॥ इमंमेवरुणेत्यादिसंस्थाजपांतंसर्वंसमाप्याचार्यायवरंदक्षिणांदत्त्वाप्रमा दात्कुर्वतांकर्मेतिकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ इतिबौधायनोक्तब्रह्मचारिव्रतलोपप्रायश्चित्तम् ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १४४ ॥ वेदव्रतानांकालातिक्रमप्रायश्चित्तम् ॥

श्रीः ॥ कृतनित्यक्रियआचार्योब्रह्मचारीचप्राङ्मुखउपविश्यदेशकालौसंकीर्त्यास्यब्रह्मचारिणोवेदव्रतानांकालातिक्रमजन्यदोषपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंहोमपूर्वकंकृच्छ्रत्रयमितंअमुकप्रत्याम्नायेनप्रायश्चित्तंकरिष्ये ॥ तदंगमुद्धननादिकरिष्येइति संकल्प्यकृत्वाभूसंस्कारंविधायतत्रलौकिकमग्निंविण्णामानंप्रतिष्ठाप्यसमित्त्रयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वा ॥ वेदव्रतकालातिक्रमप्रायश्चित्तहोमकर्मणियक्ष्यमाणादेवताइत्यादिसामान्यप्रधानांतमुक्त्वाप्रधानहोमे ॥ गायत्र्यासहस्रमष्टोत्तरंशतमष्टोत्तरंअष्टाविंशतिसंख्ययावासवितारमाज्येनयक्ष्ये ॥ अंगहोमेवरुणंद्विरित्यादिसामान्यप्रधानांतंहुत्वावैशेषिकप्रधानहोमः॥ यथोद्दिष्टसंख्ययागायत्र्याहुत्वा ॥ सवित्रइदं० ॥ ततोजपहोमगोदानाद्यन्यतमप्रत्याम्नायेनप्रायश्चित्तंकृत्वा ॥ ततइमंमेवरुणेत्यादिसंस्थाजपांतंसर्वसमाप्याचार्यायदक्षिणांदत्त्वाब्राह्मणभोजनादिसंकल्प्यकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ इतिकालातिक्रमप्रायश्चित्तंकृत्वाशुभदिनेवेदव्रतोपाकरणंयथाकालमुत्सर्जनंचकृत्वैवसमावर्तनंकार्यं ॥ उपनयनप्रभृतिसंस्काराणांप्रायश्चित्तेनाचरितार्थत्वात्आवश्यकंचेत्युपनयनमुखेनसंस्काराम्नानंवदतासूत्रकृतैवायमर्थउक्तइति ॥ इतिबौधायनोक्तंवेदव्रतकालाति० ॥

## ॥ १४५ ॥ समावर्तनम् ॥

श्रीः ॥ उद्धननादिमधुपर्कसमाप्त्यंतंसमावर्तनं ॥ पूर्वोक्तव्रताचरणपूर्वकंयथाशक्तिवेदमधीत्यगोदानकर्मकृत्वागुरुंदक्षिणादिनासंतोष्यतमनुज्ञाप्योदगयनेसितेपक्षेरोहिणीमृगतिष्योत्तराफल्गुनीहस्तचित्राविशाखाद्यन्यतमेनक्षत्रेचंद्रानुकूल्येशुभेदिनेउप

नयनोक्तेकालेसमावर्तनंकार्यं ॥ समावर्तनप्राक्तनान्याचार्यकर्तृकाणिकर्माणियावदुक्तंब्रह्मचारीकरोति ॥ समावर्तनंतुब्रह्मचारिकर्तृकमेव ॥ अधीत्यवेदꣳस्नानमितिसूत्रेअधीत्येत्यत्रसमानकर्तृकक्रियाविहितक्त्वाप्रत्ययेनाध्ययनस्नानयोरेककर्तृकत्वस्योक्तत्वात्समावर्तनापरपर्यायंस्नानंब्रह्मचारिकर्तृकमेव ॥ ब्रह्मचारीकृतनित्यक्रियःप्रातरग्निकार्यानंतरंआचार्यसहितअपांसमीपेशुचौदेशेगत्वाथवागोष्ठंसूर्यरश्मिदर्शनरहितंसम्यगाच्छाद्यरात्राववेवब्रह्मचारीतत्रगत्वाप्रातरग्निकार्यानंतरंप्राङ्मुखउपविश्यदेशकालौसंकीर्त्यममगृहस्थाद्याश्रमसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंसमावर्तनाख्यंकर्मकरिष्ये ॥ तदंगंगणेशपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्येइतिसंकल्प्यकृत्वा ॥ उद्धननादिभूसंस्कारंविधायतत्रपावकनामानंलौकिकमग्निंप्रतिष्ठाप्यप्रज्वाल्यसमित्रयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वासमावर्तनहोमकर्मणियक्ष्यमाणादेवताःपरिग्रहीष्यामीत्यादिव्याहृत्यंतमुक्त्वा ॥ प्रधानहोमे ॥ जातवेदसमग्निंपलाशसमिधायक्ष्ये ॥ व्याहृतीनामग्निंवायुंसूर्यंप्रजापतिंअग्निंचाज्येन ॥ अंगहोमेवरुणंद्विरित्यादिपात्रासादनात्प्राक्कृत्वा प्राकृतानिदर्व्यादीन्यासाद्यपालाशींसमिधंदंतधावनमौदुंबरकाष्ठमार्द्रंउष्णशीताअपःक्षुरंआनडुहंगोमयं सौरभयुक्तंचंदनं वाससी कुंडले मणिं आदर्शं छत्रं दंडं उपानहौ स्रजं आंजनं ग्रामप्रवेशार्थंरथादियानंचेतिवैकृतान्यासाद्यसामान्यप्रधानहोमांतंकृत्वाप्रधानहोमः ॥ ॐइमꣳस्तोममर्हतेजातवेदसेरथमिवसंमहेमामनीषया ॥ भद्राहिनःप्रमतिरस्यसꣳसद्यग्नेसख्येमारिषामावयंतवस्वाहा ॥ इतिपालाशींसमिधंजुहोति ॥ जातवेदसेअग्नयइदं० ॥ ततोव्यस्तसमस्तक्रमेणव्याहृतीराज्येनहुत्वा ॥ त्र्यायुषंजमदग्नेःकश्यपस्यत्र्यायुषंयद्देवानांत्र्यायुषंतन्मेअस्तुत्र्यायुषꣳस्वाहा ॥ अग्नयइदं० ॥ इतिषट्प्रधानाहुतीर्हुत्वा ॥ ततइमंमेवरुणेत्यादित्रिवृदन्नहोमंपुण्याहवाचनांतंकृत्वा ॥ ततउपनयनेस्वीकृतानांसकलब्रह्मचारिव्र

तानांविसर्गंकरिष्येइतिसंकल्प्याग्निपुरोगाश्चतस्रोदेवताअभिसंधायोपतिष्ठते ॥ अग्नेव्रतपतेव्रतमचारिषंतदशकंतन्मेराधि ॥
एवं वायोव्र० आदित्यव्रत० व्रतानांव्रतं० इत्याद्युक्तरीत्याव्रतविसर्गंकृत्वा ॥ ततउदुत्यंचित्रमितिद्वाभ्यामादित्यमुपस्थाय ॥
उत्तरीयमजिनरूपंवासोनिदधाति ॥ उदुत्तमंवरुणपाशमस्मच्छ्रथायेति ॥ ततोंतरीयंकच्छोपरिकटिप्रदेशेवेष्टितंवासोनिदधाति ॥
अवाधमंवरुणपाशमस्मच्छ्रथायेति ॥ अन्यद्वासःपरिधायद्विराचम्य ॥ ततोमेखलांनिदधाति ॥ विमध्यमंवरुणपाशमस्म
च्छ्रथायेति ॥ ततोदंडंनिदधाति ॥ अथावयमादित्यव्रतेतवानागसोअदितयेस्यामेति ॥ ततोऽऽजिनंवासोमेखलांदंडंचाप्सु
तूष्णींप्रक्षिप्यापरेणाग्निंप्राङ्मुखउपविश्यक्षुरꣳसंमृशति ॥ क्षुरोनामासिस्वधितिस्तेपितानमस्तेअस्तुमामाहिꣳसीरिति ॥ ततस्तू
ष्णींवप्त्रेप्रदायशीतास्वप्सुउष्णाआनीयाभिमृशति ॥ शिवानोभवथसꣳस्पृशेइति ॥ ततोदक्षिणंगोदानमुंदति ॥ आपउंदंतुजी
वसेदीर्घायुत्वायवर्चसइति ॥ गोदानेऊर्ध्वाग्रान्कुशान्निदधाति ॥ ओषधेत्रायस्वैनमिति ॥ कुशोपरिक्षुरंनिदधाति ॥ स्वधिते
मैनꣳहिꣳसीरिति ॥ ततोगोदानस्थान्त्सकेशान्कुशान्वपति ॥ देवश्रूरेतानिप्रवपेइति ॥ उंदनादिवपनांतंवप्तुःकर्मवचनसाम
र्थ्यादाचार्यस्यवा ॥ ततोवप्तारंसमीक्षते ॥ यत्क्षुरेणमर्चयथासुपेशसावप्तर्वपसिकेशश्मश्रुवर्चयामुखंमानआयुःप्रमोषीरिति ॥
ततःश्मश्रूपपक्षक्रमेणमुखस्यसर्वश्मश्रूणांवपनंशिखांविहायशिरःस्थसर्वकेशानांबाहुमूलमारभ्यसर्वलोम्नांनखानांचवपनंकारये
त् ॥ स्नातकस्यबंधुजनःकश्चिदानडुहेगोमयेश्मश्रुलोमनखान्यंतर्धायगोष्ठउदुंबरेदर्भस्तंबेवाऽवटंकृत्वातत्रनिदधाति ॥ इदमह
ममुष्यामुष्यायणस्यपाप्मानमवगूहामीति ॥ अत्रमंत्रेअमुष्यामुष्यायणस्येतिपदद्वयंनिष्काश्यस्नातकस्यव्यावहारिकंशर्मांतंना
मगोत्रनामधेयंचप्रक्षिप्यमंत्रंपठेत् ॥ इदमहंगिरिधरशर्मणोनैतुंदनस्यपाप्मानमवगूहामीत्येवंप्रकारेणमंत्रंपठित्वा श्मश्र्वाद्यवटे

निधायावटंमृत्तिकयापिधाय करंजकल्काद्युद्वर्तनेनशरीरमलमुत्साद्यऔदुंवरकाष्ठेनार्द्रेणदंतान्प्रक्षालयति ॥ ॐअन्नाद्यायव्यूह ध्वंदीर्घायुत्वायव्यूहध्वंब्रह्मवर्चसायव्यूहध्वंदीर्घायुरहमन्नादोब्रह्मवर्चसीभूयासमिति ॥ अथप्रधानस्नानं ॥ शीतमिश्राभिरु ष्णाभिरद्भिः सर्वमंत्रांतेएकवारंस्नाति ॥ आपोहिष्ठेतितिसृभिर्हिरण्यवर्णाइतिचतसृभिःपवमानःसुवर्जनइत्यनुवाकेनचेति ॥ च कारेणस्नानेमंत्राणांसमुच्चयस्योक्तत्वात्सर्वमंत्रांतेएकंस्नानंकृत्वाद्विराचम्यशुक्लेवाससीपरिधायद्विराचम्यबंधुजनैरानीतंसर्वसु गंधयुतंद्रव्यंचंदनपिष्टंवा तज्जलेनाभ्युक्ष्यतेनपाणीप्रलिप्य देवेभ्यःप्राचीनंनमस्कारांजलिंकरोति ॥ ॐनमोग्रहायचाभिग्रहायच ॐनमःशाकजंजभाभ्यांनमस्ताभ्योदेवताभ्योयाअभिग्रहिणीरिति॥ततस्तेनैवांजलिनामुखमारभ्यानुलोममात्मानमनुलिंपति ॥ ॐअप्सरासुचयोगंधोगंधर्वेषुचयद्यशः ॥ दैव्योयोमानुषोगंधःसमामाविशतादिहेति ॥ ततअहतेवाससीतूष्णींजलेनाभ्युक्ष्य ॥ अंतरीयंवासःअधोनाभिउपरिजानुपरिदधाति॥ ॐसोमस्यतनूरसितनुवंमेपाहिस्वामातनूराविशशिवामातनूराविशेति ॥ ततो द्विराचम्यमंत्रावृत्त्याउत्तरीयंवासश्चपरिधायद्विराचम्य ॥ कटिसूत्रंकच्छंचपरित्यज्य ॥ इतःपरंकटिसूत्रंकच्छधारणंचप्रतिषि ध्यते ॥ ततोपरेणाग्निंप्राङ्मुखउपविश्यसुवर्णाच्छादितंचंदनकाष्ठकृतंबादरंवामाणिंकुंडलेचसूत्रप्रोतेदर्भेणप्रवध्याग्नावुपरिधारय न्तत्रदर्व्याजुहोतिपंचभिर्मंत्रैः ॥ ॐआयुष्यंवर्चस्यँरायस्पोषमौद्भिदं ॥ इदँहिरण्यमायुषेवर्चसेजैत्रायाविशतांमाँस्वाहा ॥ हिरण्यायेदं० ॥ १ ॥ ॐउच्चैर्वाजिपृतनासाहँसभासाहंधनंजयं॥ सर्वाःसमग्राऋद्धयोहिरण्येस्मिन्त्समाभृताःस्वाहा॥ हिरण्या येदं० ॥ २ ॥ ॐशुनमहँहिरण्यस्यपितुरिवनामाग्रभीषं ॥ तंमाहिरण्यवर्चसंकरोतुपुरुषुप्रियंब्रह्मवर्चसिनंमाकरोतुस्वाहा ॥ हिरण्यायेदं० ॥ ३ ॥ ॐप्रियंमाकुरुदेवेषुप्रियंमाब्रह्मणिकुरु ॥ प्रियंविश्वेषुशूद्रेषुप्रियंमाकुरुराजसुस्वाहा ॥ हिरण्यायेदं० ॥४॥

ॐइयमोषधेत्रायमाणासहमानासहस्वती॥सामाहिरण्यवर्चसंकरोतुपुरुषुप्रियंब्रह्मवर्चसिनंमाकरोतुस्वाहा ॥ हिरण्यायेदं० ॥५॥
इतिपंचाहुतीर्हुत्वा ॥ ततःस्वाहाकारवर्जितैरेतैरेवपंचभिर्मंत्रैर्मणिंकुंडलेचोदपात्रेत्रिःप्रदक्षिणमावर्त्यसम्यक्प्रक्षाल्य ॥ ततोद
क्षिणेकर्णेकुंडलंनिदधाति॥ॐविराजंचस्वराजंचाभिष्टिर्याचनोगृहे॥ॐलक्ष्मीराष्ट्रस्ययामुखेतयामास२ंसृजामसीति॥मंत्रावृत्त्या
सव्येनिदधाति ॥ ततोदक्षिणकर्णस्थंकुंडलंयथानपतिततथापिदधाति ॥ ॐऋतुभिष्ट्वार्तवैरायुषेवर्चसेसंवत्सरस्यधायसातेनसन्न
नुगृह्णासीति ॥ पुनर्मंत्रंपठित्वासव्यकर्णस्थंपिदधाति ॥ ततोग्रीवायांमणिंबध्नाति ॥ ॐइयमोषधेत्रायमाणासहमानासहस्वती ॥
सामाहिरण्यवर्चसंकरोतुपुरुषुप्रियंब्रह्मवर्चसिनंमाकरोत्वपाशोसीति॥ ततोद्वाभ्यांस्रजंधारयति ॐशुभिकेशोभमारोहशोभयंती
मुखंमम ॥ मुखंचममशोभयभूयास्२ंचभगंकुरु॥१॥यामाहरज्जमदग्निःश्रद्धायैकामायास्यै ॥ इमांतांप्रतिमुंचेहंभगेनसहवर्च
सा॥२॥इति ॥ ततस्त्रैककुदेनांजनेनान्येनकज्जलादिनावासकृदुक्तेनमंत्रेणहस्ताभ्यांबहुकृत्वोयुगपदनक्ति॥ ॐयदांजनंत्रैककु
दंजातस्२ंहिमवतउपरि ॥ तेनवामांजेहंभगेनसहवर्चसामयिपर्वतपूरुषमिति ॥ युगपदशक्तौसव्यमंक्त्वादक्षिणमनक्ति ॥ तदा
द्विवचनांतेपिमंत्रेचक्षुःसंस्कारत्वान्मंत्रावृत्तिः ॥ ततआत्मानमादर्शेऽवेक्षते ॥ ॐयन्मेमनःपरागतंयद्वामेअपरागतं ॥ राज्ञासो
मेनतद्वयमस्मासुधारयामसीति ॥ ततोवैणवंदंडंप्रतिगृह्यदेवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यांप्रतिगृह्णामिइति
ततोदंडंसकृन्मंत्रमुक्त्वात्रिरुन्मार्ष्टि ॥ ॐइंद्रस्यवज्रोस्यश्विनौमापातमिति ॥ ततःसकृदुक्तेनमंत्रेणदंडंत्रिःप्रदक्षिणमुपरिशिरो
भ्रामयति ॥ ॐवेगवेजयास्मत्द्विषतस्तस्करान्त्सरीसृपान्छ्वापदान्रक्षा२ंसिपिशाचान्पौरुषेयाद्भयान्नोदंडरक्षविश्वस्माद्भयाद्रक्ष
सर्वतोजहितस्करानननग्नःसर्ववृक्षेषुजायसेत्व२ंसपत्नहा ॥ जहिशत्रुगणान्त्सर्वान्त्समंतंमघवानिवेति ॥ यदिप्रमादाद्धस्ताद्दंडः

पतितितंपुनरादत्ते ॥ ॐयोमेदंडःपरापतद्विहायसोधिभूम्यां ॥ इमंतंपुनराददेयमायुषेचबलायचेति ॥ इदंचदंडधारणंयावज्जीवं मधुपर्कांतकर्मसमाप्त्यंतंवाआवश्यकं ॥ ततःसकृन्मंत्रेणपादयोरुपानहावववध्ययुगपदवरोहति ॥ युगपदशक्तौमंत्रावृत्तिः ॥ ॐप्रतिष्ठेस्थोदेवतेमामासंताप्तमिति ॥ ततश्छत्रंप्रतिगृह्णाति ॥ प्रजापतेःशरणमसिब्रह्मणश्छदिरिति ॥ ततश्छत्रधारणानंतरंग्रामप्रवेशार्थंरथादियानमारुह्ययत्रपूजांकरिष्यंतोभवंतिमातुलाद्याः यथावास्वस्यपूजाभवतितथावेदनंकृत्वापितद्गृहंमधुपर्कपूजार्थंस्नातकोगच्छेत् ॥ यदातुगोष्ठेसमावर्तनकर्मक्रियतेतदारात्रिपर्यंतंतत्रैवस्थित्वारात्रौरथाद्यारुह्यगच्छेत् ॥ सूर्यरश्मिदर्शनप्रतिषेधस्तुगोष्ठेकरणपक्षएव ॥ आनयंत्यस्मैरथंग्रामप्रवेशार्थमश्वंहस्तिनंवा ॥ स्नातकोरथमारोहति ॥ ॐरथंतरमसिवामदेव्यमसि ॥ बृहदस्यंकौन्यंकावभितोरथंयौध्वांतंवाताग्रमनुसंचरंतौदूरेहेतिरिंद्रियावान्पतत्रीतेनोग्नयःपप्रयःपारयंतु ॥ अयंवामश्विनारथोमादुःखेमासुखेरिषत् ॥ अरिष्टःस्वस्तिगच्छतुविविघ्नन्नभिदासतः ॥ इहधृतिरिहविधृतिरिहरंतिरिहरमतामिति ॥ अश्वमारोहति ॥ अश्वोसिहयोसिमयोस्यत्योसिनरोस्यर्वासिसप्तिरसिवाज्यसिवृषासिनृमणाअसिययुर्नामासीत्येकादशभिरश्वनामभिरश्वं ॥ गजमारोहति ॥ इंद्रस्यत्वावज्रेण्यभ्युपविशामिवहकालवहश्रियंमाभिवहहस्त्यसिहस्तियशसमसिहस्तिवर्चसमसिहस्तियशसीहस्तिवर्चसीभूयासमिति ॥ आरोहणानंतरमेवसकृन्मंत्रमुक्त्वादिशउपस्थायगच्छति ॥ गच्छन्वाउपतिष्ठते ॥ ॐसंस्रवंतुदिशोमयिसमागच्छंतुसूनृताः ॥ सर्वेकामाअभियंतुनःप्रियाअभिस्रवंतुनःप्रियाइति ॥ ततःपूजकगृहंप्राप्ययानादवरुह्यानवरुह्यवास्वसंमुखमागच्छंतंस्वयंवाभिमुखोगच्छन्पूजकंसमीक्षते ॥ ॐयशोसियशोहंत्वयिभूयासमिति ॥ ॥ छ ॥

## ॥ १४६ ॥ मधुपर्कः ॥

श्रीः ॥ पूजकःसमावर्तनदिनेस्वगृहमागतायस्नातकायशयनासनादिसन्निवासस्थानंसंपाद्यपूज्यंप्राङ्मुखमुपवेश्यस्वयंचोदङ्मुखउपविश्यपरिकर्मिभिर्मधुपर्कपात्राणिसहैवासादयति ॥ तद्यथा ॥ हसीयः सुचतुर्षुपात्रेषुकूर्चमुपवेशनार्थंपाद्यार्घ्याचमनीयार्थाअपश्चपृथक्पृथक्संस्थाप्यवर्षीयसापिधायतथाहसीयसिकांस्येदधिमधुघृतमितित्रिवृद्दधिमधुघृतमापःसक्तवइतिपक्तंवाकांस्येकृत्वावर्षीयसापिधायसूत्रेणावेष्ट्यइतिपंचपात्राणिगांचयथाशक्तिवस्त्रयज्ञोपवीताभरणानिचासाद्य ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यउपस्थितंस्नातकंमधुपर्केणपूजयिष्यइतिसंकल्प्य ॥ अर्घइतित्रिःप्राह ॥ पूज्यःकुरुतेतिप्रत्याह ॥ पूजकःकूर्चइतित्रिःप्राह ॥ पूज्यःसुकूर्चइत्युक्त्वाहस्ताभ्यांप्रतिगृह्यपद्भ्यामाक्रम्योदगग्रेकूर्चेप्राङ्मुखउपविशति ॥ ॐराष्ट्रभृदस्याचार्यासंदीमात्वद्योषमिति ॥ पूजकःपाद्यमितित्रिःप्राह ॥ पूज्यःसुपाद्यमितिप्रत्याह ॐअस्मिन्राष्ट्रेश्रियमावेशयाम्यतोदेवीःप्रतिपश्याम्यापः ॥ दक्षिणंपादमवनेनिजेस्मिन्राष्ट्रइंद्रियंदधामि ॥ सव्यंपादमवनेनिजेस्मिन्राष्ट्रइंद्रियंवर्धयामि ॥ पूर्वमन्यमपरमन्यंपादाववनेनिजे ॥ देवाराष्ट्रस्यगुप्त्याअभयस्यावरुध्यै ॥ आपःपादावनेजनीर्द्विषंतंनिर्दहंतुमे ॥ ॐचरणंपवित्रंविततंपुराणं ॥ येनपूतस्तरतिदुष्कृतानि ॥ तेनपवित्रेणशुद्धेनपूताः ॥ अतिपाप्मानमरातिंतरेम ॥ लोकस्यद्वारमर्चिमत्पवित्रं ॥ ज्योतिष्मद्भ्राजमानंमहस्वत् ॥ अमृतस्यधाराबहुधादोहमानं ॥ चरणंनोलोकेसुधितांदधातु ॥ अग्निर्मूर्धाभुवः ॥ अनुनोद्यानुमतिरन्विदनुमतेत्वं ॥ हव्यवाहꣳस्विष्टं ॥ पूजकस्यशूद्रःशूद्रावासव्यंपादमग्रेब्राह्मणस्यप्रक्षालयतिब्राह्मणोदक्षिणमग्रेप्रक्षाल्यसव्यंप्रक्षालयति ॥ ततः पूज्यःपूजकस्यहस्तावभिमृशति ॥ ॐविराजोदोहोसिमयिदोहःपाद्यायैविराजइति ॥ ततआत्मानमभिमृशति ॥ ॐमयितेजइंद्रियं

वीर्यमायुःकीर्तिर्वर्चोयशोबलमिति ॥ ततःपूजकःवस्त्रालंकारादिसहितमर्घ्यजलमादायार्घ्यमितित्रिःप्राह ॥ पूज्यःस्वर्घ्यमित्यु क्त्वापूजकदत्तमर्घ्यजलसहितंवस्त्रालंकारादिसर्वंप्रतिगृह्णाति ॥ॐआमागन्यशसास१ंसृजतेजसावर्चसापयसाच॥तंमाकुरुप्रियं प्रजानामधिपतिंपशूनामिति ॥ अर्घ्यजलंपूजकेनदीयमानंकिंचित्तूष्णींप्रतिगृह्यावशिष्टंप्रदात्रेप्रदायतेनभूमौनिनीयमानमनुमं त्रयते ॥ ॐसमुद्रंवःप्रहिणोम्यक्षिताःस्वांयोनिमपिगच्छत ॥ अच्छिद्रःप्रजयाभूयासंमापरासेचिमत्पयः इति ॥ ततःप्रतिगृहीतेन वस्त्रालंकारादिनात्मानमलंकरोति ॥ द्विराचम्य ॥ पूजकआचमनीयमितित्रिःप्राह ॥ पूज्यःस्वाचमनीयमित्युक्त्वा ॥ अमृतोप स्तरणमसीतिसकृदर्धजलमाचामति ॥ नात्रशुद्धाचमनं ॥ ततःपूजकोमधुपर्कमादायमधुपर्कइतित्रिःप्राह ॥ पूज्यःसुमधुपर्क इत्युक्त्वाहस्ताभ्यामाकाशांजलिनाप्रतिगृह्णाति॥ॐदेवस्यत्वेत्यादिप्रतिगृह्णामीत्यंतेन॥ ततस्तंपृथिव्यांप्रतिष्ठापयति॥ॐपृथिव्या स्त्वानाभौसादयामीडायाःपदेइति ॥ दक्षिणकरस्यांगुष्ठेनोपमध्यमयाचसकृदुक्तेनमंत्रेणत्रिःप्रदक्षिणमालोडयति ॥ ॐयन्मधुनो मधव्यंपरममन्नाद्य१ंरूपं ॥ तेनाहंमधुनोमधव्येनपरमेणरूपेणपरमोमधव्योन्नादोभूयासमिति ॥ ततोमंत्रावृत्त्यांगुष्ठोपमध्यमा भ्यामेवत्रिःप्राश्नाति ॥ ॐतेजसेत्वाश्रियैयशसेबलायान्नाद्यायप्राश्नामीति ॥ १रातयेतच्छिष्टंप्रदायअभावेसर्वंप्राश्य ॥ ततःअमृ तापिधानमसीतिआचमनीयशेषेणसकृदाचम्यमुखंप्रक्षाल्यविधिवदाचामति॥ ततःपूजकोगौरितित्रिःप्राह ॥ पूज्यःसुगौरित्यु क्त्वागामुत्सृजति ॥ गौर्धेनुर्भव्या ॐमातारुद्राणांदुहितावसूना१ंस्वसादित्यानाममृतस्यनाभिः ॥ प्रणुवोचंचिकितुषेजनायमा गामनागामदितिंवधिष्ट ॥ पिबतूदकंतृणान्यत्तु॥ओमुत्सृजतेति ॥ ततःपूजकःसिद्धमन्नंभूतमितित्रिःप्राह ॥ पूज्यः ॥ तत्सुभूतंवि

१ रातिर्मित्रम् । २ विध्युक्ताचमनंश्रुत्युक्तं "केशवाद्यैस्त्रिभिःपीत्वे"तिस्मृत्युक्तंवा । ३ उत्सृजतेतिपक्षे । अन्येनमा१ंसेनान्न१ंस१ंस्कृत्येति सूत्रकारः ॥ मांससहितोमधुपर्कःकलौनिषिद्ध इति माषान्नमुपयोक्तव्यं ।

राडन्नंतन्माक्षायितन्मेशीयतन्मऊर्जंधास्तत्सुभूतमितिप्रत्याह ॥ पुनःपूज्यआह ॥ ब्राह्मणान्भोजयतेति ॥ ततःपूजकःब्राह्मण भुक्तशेषमन्नंपूज्यायददाति ॥ पूज्यस्तत्प्रतिगृह्णाति ॥ ॐद्यौस्तेददातुपृथिवीप्रतिगृह्णातुपृथिवीतेददातुप्राणःप्रतिगृह्णातुप्राणस्त्वा श्नातुप्राणःपिबतुइति ॥ ततोयावत्कामंप्राश्नाति ॥ ॐइंद्राग्नीमेवर्चःकृणुतांवर्चःसोमोबृहस्पतिः ॥ वर्चोमेविश्वेदेवावर्चोमेधत्तम श्विना ॥ ततःशुद्धाचमनोत्तरंद्विराचम्यकल्पितेतस्मिन्नावसथेरात्रिश्चेत्स्थित्वास्वगृहंगच्छति ॥ यदातुपित्रादिरध्यापयति त दाग्रामात्बहिर्नद्यादौगोष्ठेवाविधिवत्स्नातश्छत्रधारणांतकर्मानंतरंरथादियानमारुह्यपितृगृहमागच्छति ॥ तदापित्रादिरेवमधु पर्केणार्हयति ॥ पितैवैनंमधुपर्केणार्हयेदितिमनुस्मरणात् ॥ ततःकर्मांगंब्राह्मणभोजनंदशाधिकंदक्षिणांचसंकल्प्यदत्त्वाकर्म साद्गुण्यायविष्णुंस्मरेत् ॥ यदिदंरथगजाश्वारोहणंदिशामुपस्थानंपूजकनिरीक्षणंचसमंत्रमुक्तंतत्समावर्तनांगत्वात्स्नातकस्यैव भवति ॥ अथास्माआवसथमित्यथशब्दादधिकारवचनात् ॥ ऋत्विगाचार्यश्वशुरमातुलविवाह्यादीनामेवंमधुपर्कपूजाकार्या विशेषविचारोवगंतव्यःप्रमाणभागात् ॥ इतिसमावर्तनप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १४७ ॥ विवाहविचारः ॥

श्रीः ॥ ( तत्राष्टौविवाहाः "ब्राह्मोदैवस्तथाचार्षःप्राजापत्यस्तथासुरः ॥ गांधर्वोराक्षसश्चैवपैशाचस्त्वष्टमोमतः ॥ अस्यव्याख्या ग्रंथांतरे तेषुब्राह्मादिषुमुख्यंब्राह्मविवाहपक्षमंगीकृत्यप्रयोगउच्यते)कन्यावरणंवाङ्निश्चयोनांदीश्राद्धादिकंचवरपित्रादिनाक्रि यते ॥ तच्चकन्यादानादिकंकन्यापित्रा ॥ विवाहहोमादिकंचवरेण । अंगंवाप्रधानंवायस्ययद्विहितःप्राप्तंतत्तेनक्रियते इत्यनेक

कर्तृककर्मसमुदायविशेषोविवाहसंस्कारः तेनचकन्यापुत्रयोःसंस्कारोभवतीति ॥ विवाहस्यास्तिगर्भाधानादिसंस्कारेष्वंतर्भावः ॥ तथाहि ॥ अत्रेयंप्रयोगपारिजातस्थव्याख्यालिख्यते ॥ नांदीश्राद्धंपिताकुर्यादाद्येपाणिग्रहेपुनः ॥ अतऊर्ध्वंप्रकुर्वीतस्वयमेवतुनांदिकम् ॥ चंद्रिकायांकात्यायनस्तु स्वपितृभ्यःपितादद्यात्सुतसंस्कारकर्मसु ॥ पिंडानोद्वहनात्तेषांतस्याभावेतु तत्क्रमादिति ॥ इदंवचनंखंडशोनिबंधकारैःप्रयोगपारिजातेचव्याख्यातं ॥ प्रकृतोपयोगिकिंचिदुच्यते ॥ पिंडान्आउद्वहनात्उद्वाहंअभिव्याप्यगर्भाधानादिविवाहांतेषुसुतसंस्कारकर्मसुपितास्वपितृभ्योदद्यादिति ॥ सुतशब्देनपुत्र्यपिगृह्यते ॥ विवाहश्चावश्यंसुतादीनांसंस्कारोभवतीति ॥ उपस्थितेविवाहेअमुकस्यविवाहसंस्कारंकरिष्येइतिसंकल्पस्त्ववश्यंकर्तव्यः ॥ पित्रादयःसंस्कारकाः ॥ पुत्रादयःसंस्कार्याः ॥ विवाहश्चसंस्कारइतिनबुध्यंतेभ्रांतास्तंनकुर्वंति ॥ प्रयोगकारैर्नलिखितस्तेषामनुपस्थितिर्विस्मरणंवामूलमिति ॥ विवाहसंकल्पमारभ्यचतुर्थींहोमांतोवागृहप्रवेशनीयस्थालीपाकांतोवाद्विविधोविवाहः ॥ तत्रपाणिग्रहणंप्रधानं ॥ पाणिग्रहणाद्धिसहत्वमितिधर्मेस्मरणात् ॥ शाखांतरीयंकन्यावरणंवाग्दानंस्वकल्पविहितंगृहप्रवेशादिचांगमेव ॥ प्रथमपक्षेपाणिग्रहणप्रभृत्यौपासनहोमस्त्रिरात्रव्रतंचपाणिग्रहणदिनमादायैवतुरीयस्याह्नस्त्रिभागशेषायांरात्रौचतुर्थीकर्मचभवति ॥ गृहप्रवेशकर्मतुविवाहहोमोत्तरमेवदूरदेशत्वेनाशक्तौ ॥ शक्तौतुचतुर्थीहोमात्पूर्वंपश्चाद्वास्वगृहंगत्वैवकर्तव्यम् ॥ गृहप्रवेशांतोविवाहइतिद्वितीयःपक्षः ॥ तत्रगृहप्रवेशस्थालीपाकानंतरमौपासनोपक्रमः ॥ नपूर्वंपाणिग्रहणप्रभृति ॥ गृहप्रवेशदिनोत्तरंदिनत्रयंत्रिरात्रव्रतं गृहप्रवेशदिनमादायैवतुरीयस्याह्नस्त्रिभागशेषायांरात्रौचतुर्थीकर्मसंगमार्थं ॥ नविवाहांगं ॥ द्विविधेपिविवाहेपार्वणस्थालीपाकःपर्वण्यागतेपिगृहप्रवेशस्थालीपाकानंतरमेवचतुर्थीहोमात्पूर्वमपिचभवति ॥

वाहेशुभकालज्ञानार्थंघटीस्थापनंकरिष्यइतिसंकल्प्यगणपतिंसंपूज्यमहीद्यौरित्यादिविधिनास्थापितभांडेवरुणंसंपूज्यतत्रजले मुख्यंत्वमसियंत्राणांब्रह्मणानिर्मितंपुरा ॥ भवभावायदंपत्योःकालसाधनकारणं ॥ इतिमंत्रेणघटिकापात्रंनिक्षिपेत् ॥ ॥

## ॥ १५२ ॥ सीमांतपूजनम् ॥

श्रीः ॥ अथकन्यादातावरगृहमागतःआचम्यप्राणानायम्यदेशकालौसंकीर्त्यकरिष्यमाणकन्याविवाहांगत्वेनवरस्यसीमांतपूजनंकरिष्यइतिसंकल्प्य गणेशवरुणपूजनेकृत्वा अस्मिन्राष्ट्रेश्रिय० चरणंपवित्रमित्यादिमंत्रैःस्ववामभागस्थपत्नीप्रक्षिप्तजलेनतदीयदक्षिणवामपादौप्रक्षाल्याचम्यगंधपुष्पनीराजनवस्त्रैर्यथाविभवंसंपूज्ययथाचारंदुग्धादिप्राशनंकारयेत् ॥ इतिसीमांतपूजा

## ॥ १५३ ॥ वरस्यवधूगृहगमनं ॥

श्रीः ॥ वरःकृतनित्यक्रियःस्वलंकृतःस्रग्वीइष्टदेवतागुर्वादींश्चनमस्कृत्यतैरनुज्ञातोयथाविभवमश्वादियानंतूष्णीमारुह्यधृतसितच्छत्रःस्वर्चितैर्ज्ञातिबांधवैःकनिक्रदत्० इयमेवसाया० इत्यादिमंगलसूक्तपठनपरैर्ब्राह्मणैःपुरंध्रीभिःपूर्णकलशदर्पणकन्यापुष्पाक्षतदीपमालाध्वजलाजैर्मंगलतूर्यघोषैश्चसहवधूगृहमेत्यतद्वारदेशेप्राङ्मुखउदङ्मुखोवास्थितोनीराजनपूर्णकुंभयुतैः पुरंध्रीजनैः प्रत्युद्यातोनीराजितोंतर्गृहंप्रविश्यमंडपांतःसम्यगास्तृतेपीठेप्राङ्मुखउपविशेत् ॥ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १५४ ॥ मधुपर्केणवरस्यपूजा ॥

श्रीः ॥ कन्यादाताउदङ्मुखउपविश्यस्वदक्षिणतःपत्नीमुपवेश्याचम्यप्राणानायम्यदेशकालौसंकीर्त्यविवाहार्थमुपस्थितंवरंमधु

पर्केणपूजयिष्येइतिसंकल्प्यकूर्चादिसकलमधुपर्कपूजासामग्रीमासाद्यपूज्यशाखयासमावर्तनोक्तरीत्यामधुपर्कपूजांकुर्यात् ॥ अत्रवरस्यविवाह्यत्वेनमधुपर्कपूजा ॥ शाखांतरेमधुपर्कार्हेषुविवाह्यस्यपृथगुपादानात् ॥ स्नातकस्यतुस्नानदिनेउपस्थितस्यैवय द्गृहंगच्छतिसकुर्यात् ॥ अन्यथासर्वेषांस्नातकत्वेनातिप्रसंगःस्यात् ॥ अथकन्यास्नातापरिहिताहतवस्त्रागृहांतःपूजितस्थानेसूत्र वेष्टितोपलसहितदृषदुपरिहरिद्रादिनिर्मितौगौरीहरौसौभाग्यादिकामनयापूजयित्वादेवेंद्राणींतत्रैवाक्षतपुंजेपूजयित्वाप्रार्थयेत् ॥ देवेंद्राणिनमस्तुभ्यंदेवेंद्रप्रियभामिनि ॥ विवाहंभाग्यमारोग्यंपुत्रलाभंचदेहिमेइति ॥ ततोगौरींसौभाग्यादिप्रार्थयमाना तत्रैवतिष्ठेत् ॥ ( मुहूर्तपत्रिकापूजनं ॥ कर्तादेशकालौसंकीर्त्यवधूवरयोःमुहूर्तदेवताप्रसादसिद्धिद्वारामुहूर्तपत्रिकापूजांकरिष्ये ॥ ॐप्रणोदेवीसरस्वती० ॥ इतिषोडशोपचारैःसंपूज्यगणकमभ्यर्च्यतस्मैविभववेवस्त्रादिदत्वाततःइष्टकालंश्रुत्वासमयंप्रतीक्षेत् ॥ इत्या चारप्राप्तं ) ॥ ततोब्राह्मणाःस्वलंकृतेवेश्मनिवादित्रादिघोषेक्रियमाणेपूर्वापरभागयोर्हस्तांतरालंविहायधान्यराशीकृत्वाकुंकुमकृत स्वस्तिकांकितमंतःपटंराश्योर्मध्येउत्तरदशंधारयेयुः ॥ पूर्वराशावश्मनिप्रत्यङ्मुखींकन्यांपश्चिमराशौपीठेप्राङ्मुखमेववरंकृत्वातंडु लजीरकयुतांजलीउभाववस्थाप्यद्विजामंत्रपठनंपुरंध्र्योमंगलगीतीश्चकुर्युः ॥ वधूवरौचमनसेष्टदेवतांध्यायंतौसमाहितौतिष्ठेतां ॥

## ॥ १५५ ॥ मंगलाष्टकानिलिलितंच ॥

श्रीः ॥ नत्वास्वांकुलदेवतांचकमलांविघ्नेश्वरंशारदांवक्ष्येकृष्णविवाहकौतुकमिदंचेतोहरंश्रृण्वतां ॥ स्वस्यैवान्यगुणानुवर्णनप रिश्रांतस्यविश्रांतयेनित्यंस्वोदरपूर्तयेकुहकवत्कुर्यात्सदामंगलं ॥ १ ॥ देवोविघ्नविनाशनोगणपतिर्ध्यातश्चचिंतापहृद्यन्नत्याहृत विघ्नकाअपिसुराजाताहराजादयः ॥ योत्राविघ्नपसंज्ञयाचकलशेसंस्थापितोमंडपेसिद्ध्याश्लेषणहर्षितःसउभयोःकुर्यात्सदामं

गलं ॥२॥ वात्सल्यात्पितरौकपोलयुगुलंस्वस्यागतौचुंबितुंदृष्ट्वाकुंचितमास्यपद्ममलंसेषत्स्मितंसत्वरं ॥ अन्योन्यंशिवयोस्ततः सुवदनेयुक्तेअभूतांतयोरित्थंयेनविनोदितौसभगवान्कुर्यात्सदामंगलं ॥ ३ ॥ विघ्नेशोविबुधर्षिभिर्गणपतिर्दैतेयजोपद्रवाद्भीतैः प्रार्थितईश्वरोपिकुतुकाद्धृत्वावपुःशैशवं ॥ पार्वत्योकसिशैशवानिचरितान्यत्युत्कटान्याचरन्देवोहर्षयतीश्वरौसभगवान्कुर्यात्सदामंगलं ॥ ४ ॥ श्रीमान्काश्यपगोत्रजोरुणरुचिर्यःसिंहराशीश्वरःषट्त्र्याशस्थसुशोभनोगुरुकुजाब्जानांचमित्रंरविः ॥ दैत्येमंदरिपुःकलिंगजननश्चाग्नीश्वरौदेवतेमध्येवर्तुलगैंद्रिकासुवदनःकुर्यात्सदामंगलं ॥ ५ ॥ ॥ विवाहललितं ॥ अविरलमदधाराधौतकुंभःशरण्यःफणिवरवृतगात्रःसिद्धसाध्यादिवंद्यः ॥ त्रिभुवनजनविघ्नध्वांतविध्वंसदक्षोवितरतुगजवक्रःसंततंमंगलंवां ॥ १ ॥ विघ्नेश्वरोविघ्नविनाशकारीनिर्विघ्नकार्येसकलार्थसिद्धिः ॥ विघ्नेश्वरोविघ्ननरेशपूज्योवधूवराभ्यांशुभमादधातु ॥ २ ॥ सकलभुवनवृंदानंदसंदोहकंदःफणिवरवृतगात्रःसिद्धसाध्यादिवंद्यः ॥ असुरसुरमुनींद्रैःपूजितोविघ्नहर्तासस कलगणनाथोमंगलंवांददातु ॥ ३ ॥ यन्मंगलंप्रवरशंखगदाधरस्यरामस्यरावणजयायसमुत्थितस्य ॥ जित्वानिशाचरपुरींपुनरागतस्यतन्मंगलंभवतुवांविजयायनित्यं ॥ ४ ॥ सकलभुवनचंचद्ध्वांतविध्वंसदीपस्त्रिदशपतिदिशोयःस्वर्णताटंकपत्रं ॥ सकलभुवनलक्ष्मीदायकोनायकोह्यांसकलविविधमूर्तिर्मंगलंवांददातु ॥ ५ ॥ उपनयनललितं ॥ मंदमंदगमनोभवपुत्रःसर्वविघ्नशमनोगणराजः ॥ सिद्धिबुद्धिसहितःफलदाताब्रह्मचारिबटवेवरदोस्तु ॥ १ ॥ धुंढिराजजननीगिरिपुत्रीभक्तदोषशमनीहितदात्री ॥ शंकरप्रियतमातनुगौरीब्रह्मचारिबटवेवरदास्तु ॥ २ ॥ मेखलाजिनकमंडलुदंडीयज्ञसूत्रकनकांबरखड्गी ॥ कामनाकृतिहरिर्बलिदंडीब्रह्मचारिबटवेवरदोस्तु ॥ ३ ॥ अजिनदंडकमंडलुमेखलारुचिरपावनवामनमूर्तये ॥ मितजगत्त्रितयायजितारयेनिगमवाक्पटवे

बटवेनमः ॥ ४ ॥ यःपितुर्वचनपालनकामःकामनांतकरणोरणधीरः ॥ रावणांतकसलक्ष्मणरामोब्रह्मचारिवटवेवरदोस्तु ॥ ५ ॥ यावद्वीचीस्तरंगान्वहतिसुरनदीजाह्नवीपुण्यतोयायावच्चाकाशमार्गेतपतिदिनकरोभास्करोलोकपालः ॥ यावद्वज्रेंद्रनीलस्फटिकमणिशिलावर्ततेमेरुशृंगेतावत्त्वंपुत्रपौत्रैःस्वजनपरिवृतोजीवशंभोःप्रसादात् ॥ ६ ॥ अत्यासन्नतयाघंटारवप्रामाण्यज्योतिःशास्त्रोक्तसुलग्नसमयेसुतिथिःसुवारःसुनक्षत्रंसुयोगःसुकरणंहोराद्रेष्काणनवांशद्वादशांशत्रिंशांशानिरंतरमनुकूलाःस्वस्तिसर्वेग्रहाःशुभाएकादशस्थानस्थितफलदाःवरदाभवंतु ॥ ततोज्योतिर्विदामंगलपद्यपाठपूर्वकंतदेवलग्नमितिपठितेप्रदिष्टेकालेसुमुहूर्तमस्त्वित्युक्तेसद्योंतःपटमुदगपसार्यवधूवराभ्यांपरस्परनिरीक्षणंपरस्पर सिन्नंजलिस्थतंडुलगुडजीरकावकिरगंकन्यापूर्वकंकार्यमाचारात् ॥ पाणिग्रहणाद्धिसहत्वमितिधर्मेस्मरणात् विवाहेपाणिग्रहणंप्रधानं ॥ तद्यथासुमुहूर्तेभवतितथाकर्तव्यं ॥ शोभार्थंस्वमंत्रान्त्स्वल्पानृक्कवादिब्राह्मणखंडांश्चपठेत्॥ ततस्त्रिवारंपंचवारंवापीताक्षतारोपणंवरपूर्वकंकुर्वंति ॥

## ॥ १५६ ॥ विवाहमंत्राः ॥

श्रीः ॥ ॐनयेदैभ्योवृक्ष्येतयद्वैश्वकर्मणानिजुहोतिंसदुस्यांनेवतत्नीणात्यस्मेदेवासोवपुषेचिकित्सतयमाशिरादंपतीवाममश्नुतः॥ पुमान्पुत्रोजायतेविंदतेवस्वथविश्वेअरपाएधतेगृहः ॥ आशीर्दायादंपतीवाममश्नुतामरिष्टोरायःसचताꣳसमोकसा ॥ यआसिंचत्संदुग्धंकुंभ्यासहेष्टेनयामन्नमतिंजहातुसः ॥ सर्पिग्रीवीपीवर्यस्यजायापीवानःपुत्राअकृशासोअस्य ॥ सहजानिर्यःसुमखस्यमानइंद्रायाशिरꣳसहकुंभ्यादात् ॥ आशीर्मऊर्जमुतसुप्रजास्त्वमिषंदधातुद्रविणꣳसवर्चसं॥संजयन्क्षेत्राणिसहसाहमिंद्रकृण्वानोअ

क्रुशालितंडुलानादाय ॥ वरःक्षालितपाणिःप्रक्षालितवध्वंजलौक्षीरघृतेनस्वहस्तद्वयांगुलिभिर्द्विरुपस्तीर्यद्विवारंतथैवतंडुलानो प्यतेनतथैवद्विरभिघारयेत् ॥ ततोवरांजलावप्येवमेवदात्राअन्येनवापूरितेदातातदंजल्योःसुवर्णंनिधायवरांजलिंकन्यांजल्यु परिनिधाय ॥ कन्यातारयतु ॥ दक्षिणाःपांतु ॥ वहुदेयंचास्तु ॥ पुण्यंवर्धतां ॥ शांतिःपुष्टिस्तुष्टिश्चास्तु ॥ तिथिकरणमुहूर्त नक्षत्रसंपदस्तु ॥ इत्युच्चार्यकन्यामुद्धृत्यतयांजलिस्थानक्षतान्वरमूर्धन्यारोपयेत् ॥ भगोमेकामःसमृद्ध्यतां ॥ ततोवरःस्वांज लिस्थतंडुलान् ॥ यज्ञोमेकामःसमृद्ध्यतां ॥ कन्यामूर्धनि ॥ वधूः श्रियोमेकामःसमृद्ध्यतां ॥ वरः धर्मोमेकामःसमृद्ध्यतां ॥ वधूः प्रजामेकामःसमृद्ध्यतां ॥ वरः यशोमेकामःसमृद्ध्यतां ॥ ततःकन्यावरांजलिंद्विरुपस्तीर्यद्विस्तंडुलैरापूर्यद्विरभिघारयेत् ॥ दात्रान्येनवापूर्ववत्कन्यांजलौसंपूरितेदातापूर्ववद्धिरण्यंनिधायकन्यांजलिंवरांजलौनिधायपूर्ववत्कन्यातारयत्वित्यादिवाक्य षट्कंवदेत् ॥ ततोवरः ॥ यज्ञोमेकामःसमृद्ध्यतां ॥ कन्या भगोमेकामःसमृद्ध्यतां ॥ वरः धर्मोमेकामःसमृद्ध्यतां ॥ वधूः श्रियोमेकामःसमृद्ध्यतां ॥ वरः यशोमेकामःसमृद्ध्यतां ॥ वधूः प्रजामेकामःसमृद्ध्यतां ॥ सप्तमंवधूपूर्वकंकार्यं तूष्णीं ॥ ततोवरः स्वशिरःपुष्पमादायक्षीरघृतेनाप्लाव्यकन्याललाटेतिलकंकरोति ॥ एवंकन्यापिवरललाटेकरोति ॥ ततःपुष्प मालांवरकंठेनिदधाति ॥ वरोपिवधूकंठे ॥ ततोवरपक्षसुवासिन्योवधूवरौप्राङ्मुखावुपवेश्याचारप्राप्ताष्टपुत्रीसंज्ञकंवस्त्रद्वयंस कंचुकंकृष्णमणियुतंदोरकंचवध्वैसमर्प्यतांसकंचुकमेकंपरिधाप्यान्यतरमुत्तरीयंकुर्वंति ॥ ततोवरस्तत्सूत्रंइष्टदेवतास्मरणपूर्वकं वधूकंठेवध्नाति ॥ मांगल्यतंतुनानेनभर्तृजीवनहेतुना ॥ कंठेबध्नामिसुभगेसाजीवशरदांशतमिति ॥ ततोलंकारादिभिर्वधूंभूष यतिआयुष्यंवर्चस्यमितिपंचभिर्मंत्रैः ॥ ततोहरिद्राखंडपूगफललड्डुकान्पात्रेनिधाय ॥ दंपतीदेशकालौसंकीर्त्यविवाहव्रतरक्ष

णार्थंगणपतिपूजनंकरिष्यावहे इतिसंकल्प्यवधूवराभ्यांआवाहनादिदक्षिणांतोपचारैःपूजाकार्या ॥ ततःपुरोधाः विवाहव्रतर
क्षिणंगणपतिमनुस्मृत्यसपूगहरिद्राखंडलड्डुकौतयोर्वस्त्रप्रांतेपृथक्पृथक्गणानांत्वाआतूनइंद्रेतिवध्नीयात्॥ वधूवरौविवाहव्रतस
माप्त्यंतंग्रंथिद्वयंनविसृजेतां ॥ ततःपुरोधाः ॥ नीललोहितमितिमंत्रेणतयोरुत्तरीयांतौमिथोवध्नीयात् ॥ ततःसभार्योदाता
वृद्धाःस्त्रियोज्ञातिबांधवाश्चक्रमादार्द्राक्षतारोपणंकुर्युः॥ ततोदंपतीदेशकालौसंकीर्त्यसौभाग्यादिप्राप्त्यर्थंमहालक्ष्मीपार्वतीशची
पूजनंकरिष्यावहेइतिसंकल्प्यपात्रस्थसिततंडुलपुंजत्रयेउदक्संस्थानामावाहनादिदक्षिणांतोपचारैःपूजाकार्या ॥ ततोदंपतीदेश
कालौसंकीर्त्यचतुर्थदिनपर्यंतंअक्षारादिकंविवाहव्रतंचरिष्यावहेइतिसंकल्प्येक्षुविकारादिसामुद्रादिलवणवर्जमशनंकुर्वाणौवस्त्रा
भरणादिनाअलंकुर्वाणौमैथुनवर्जंसहवसतः ॥ ततोवधूर्देशकालौसंकीर्त्यसौभाग्यादिप्राप्तिपूर्वकंलक्ष्मीपार्वतीशचीप्रीत्यर्थंहरि
द्राजीरकादिमांगल्यद्रव्यपरिपूरितवंशपात्रवायनदानंकरिष्यइतिसंकल्प्यसुवासिनीभ्योदद्यात् ॥ ततोद्विजैराशिषोदेयाः ॥
तत्रमंत्राः ॥ ॐभद्रंकर्णेभिःशृणुयामदेवाः ॥ भद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवांसस्तनूभिः ॥ व्यशेमदेवहितंय
दायुः ॥ १ ॥ ॐनवोनवोभवतिजायमानोह्नांकेतुरुषसामेत्यग्रे ॥ भागंदेवेभ्योविदधात्यायन्प्रचंद्रमास्तिरतिदीर्घमायुः॥ २ ॥
ॐयथाहतद्वसवोगौर्यंचित्पदिषिताममुंचतायजत्राः ॥ एतात्वमस्मत्प्रमुंचाव्यंहःप्रातार्यग्नेप्रतरांनआयुः ॥ ३ ॥ ॐमानोअ
रातिरघशंसागन् ॥ क्षत्रस्यराजावरुणोधिराजः ॥ नक्षत्राणांशतभिषग्वसिष्ठः ॥ तौदेवेभ्यःकृणुतोदीर्घमायुः ॥ ४ ॥
इत्यायुःपदांताः ॥ ततोवरोमंडपांतस्थांवेदिमागत्यप्राङ्मुखउपविशति ॥ इतिकन्यादानम् ॥ ॥ छ ॥

# ॥ १५८ ॥ विवाहहोमः ॥

श्रीः ॥ प्राङ्मुखोवरआचम्यप्राणानायम्यदेशकालौसंकीर्त्यपरिगृहीतायांवध्वांभार्यात्वसिद्धिद्वाराग्नावौपासनत्वसिद्धिद्वाराच श्रीपरमेश्वरप्रीत्यर्थंविवाहहोमंकरिष्ये ॥ तदंगमुद्धननादिकरिष्येइतिसंकल्प्य ॥ उद्धननादिनाभूसंस्कारंविधायतत्रयोजकना मानंलौकिकमग्निंप्रतिष्ठाप्यप्रज्वाल्यसमित्रयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वा विवाहहोमकर्मणियायक्ष्यमाणादेवता स्ताःसर्वाःपरिग्रहीष्यामीत्यादिव्याहृत्यंतमुक्त्वावैशेषिकप्रधानहोमे॥अग्नीवरुणावाज्येन॥अग्निंगार्हपत्यमाज्येन॥अग्निमाज्येन॥ दिवंवायुमश्विनौसवितारंबृहस्पतिंविश्वान्देवानाज्येन॥ अग्निंद्विराज्येन॥ अंगहोमे॥वरुणंद्विः॥ अग्नीवरुणौद्विः॥ अयासमग्निं प्रजापतिंचाज्येन॥ लाजहोमे अग्निंत्रिर्लाजैः॥ स्विष्टकृद्धोमे अग्निꣳस्विष्टकृतमाज्येन ॥ जयाभ्यातानराष्ट्रभृद्देवताःसामा न्यप्रायश्चित्तदेवताश्चाज्येन ॥ वसून्रुद्रानादित्यान्त्सꣳस्रावाज्येन एतादेवताःसद्योयक्ष्यइत्युक्त्वासमिधोग्नावाधायपात्रासाद नेप्राकृतानिदर्व्यादीन्यासाद्य ॥ अश्मानंलाजान्व्रीह्यादिबीजान्यभिषेकार्थंकलशंचासाद्यपरिधिपरिधानांतकृत्वा ॥ ततोवधू मीशानदेशतोबांधवैःसमानीयमानांवरःसमीक्षते ॥ ॐसुमंगलीरियंवधूरिमाꣳसमेतपश्यत ॥ सौभाग्यमस्यैदत्वायाथास्तंविपरे तनेति ॥ ततोवधूरुत्तरेणपात्राणिअग्निस्वामिनोरंतरागत्वादक्षिणतःपतिमुपविश्याचम्यान्वारभते॥ ततोवरःपरिषेकादिसामा न्यप्रधानांतंहुत्वाप्रधानहोमंकरोति॥ॐअग्निरैतुप्रथमोदेवतानाꣳसोस्यैप्रजांमुंचतुमृत्युपाशात्॥ तदयꣳराजावरुणोनुमन्यतांय थेयꣳस्त्रीपौत्रमघंनरोदात्स्वाहा॥ अग्नीवरुणाभ्यामिदं०॥ १ ॥ ॐइमामग्निस्त्रायतांगार्हपत्यःप्रजामस्यैनयतुदीर्घमायुः॥ अशू न्योपस्थाजीवतामस्तुमातापौत्रमानंदमभिप्रबुध्यतामियꣳस्वाहा ॥ अग्नयेगार्हपत्यायेदं० ॥ २॥ मातेगृहेनिशिघोषउत्थादन्य

त्रत्वद्रुदत्यः संविशंतु ॥ मात्वंविकेश्युरआवधिष्ठाजीवपत्नीपतिलोकेविराजप्रजांपश्यंतीसुमनस्यमानाꣳस्वाहा ॥ अग्नयइदं० ॥ ३ ॥ ॐद्यौस्तेपृष्ठꣳरक्षतुवायुरूरूअश्विनौचस्तनंधयतस्तेपुत्रान्त्सविताभिरक्षतु ॥ आवाससःपरिधानाद्बृहस्पतिर्विश्वेदेवाअभिरक्षंतुपश्चात्स्वाहा ॥ दिवेवायवेअश्विभ्यांसवित्रेबृहस्पतयेविश्वेभ्योदेवेभ्यइदं० ॥४॥ ॐअप्रजस्तांपौत्रमृत्युंपाप्मानमुतवाघं॥ शीर्ष्णःस्रजमिवोन्मुच्यद्विषद्भ्यःप्रतिमुंचामिपापꣳस्वाहा ॥ अग्नयइदं० ॥ ५ ॥ ॐदेवकृतंब्राह्मणंकल्पमानंतेनहन्मियोनिषदःपिशाचान् ॥ क्रव्यादोमृत्यूनधरान्पादयामिदीर्घमायुस्तवजीवंतुपुत्राःस्वाहा ॥ अग्नयइदं० ॥ ६ ॥ ततःइमंमेवरुण० ॥ तत्त्वायामि० ॥ त्वंनोअग्ने० ॥ सत्वंनोअग्ने० ॥ त्वमग्नेअयासि० ॥ प्रजापते० ॥ इतिषडाहुतीर्हुत्वा ॥ उत्तरेणोत्तरंपरिधिसंधिमश्मानंनिधायतत्रदक्षिणपादोपक्रमेणपत्न्यांवधूंप्राङ्मुखीमवस्थापयति ॥ ॐआतिष्ठेममश्मानमश्मेवत्वꣳस्थिराभव ॥ प्रमृणीहिदुरस्यून्त्सहस्वपृतनायतइति ॥ ॥ इतिविवाहहोमः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १५९ ॥ पाणिग्रहणम् ॥

श्रीः ॥ अपरेणाग्निंद्वयान्दर्भान्पूर्वापरानुदगग्रान्निधाय ॥ तत्रपूर्वदर्भेषुस्वयंप्रत्यङ्मुखस्तिष्ठन् अपरदर्भेषुतिष्ठंत्याःप्राङ्मुख्यास्तस्याःसांगुष्ठंसलोममुत्तानंहस्तंगृह्णीयात् ॥ ॐसरस्वतिप्रेदमिवसुभगेवाजिनीवति ॥ तांत्वाविश्वस्यभूतस्यप्रजायामस्यग्रतः ॥ गृह्णामितेसुप्रजास्त्वायहस्तंमयापत्याजरदष्टिर्यथासत् ॥ भगोअर्यमासवितापुरंधिर्मह्यंत्वादुर्गार्हपत्यायदेवाइति ॥ ततस्तामग्रेणदक्षिणमंसंप्रदक्षिणमावृत्यस्वदक्षिणतःप्रत्यङ्मुखींकृत्वाभिमंत्रयतेषड्भिः ॥ ॐअघोरचक्षुरपतिघ्न्येधिशिवापशुभ्यःसुमनाःसुवर्चाः ॥ जीवसूर्वीरसूःस्योनाशंनएधिद्विपदेशंचतुष्पदे ॥ तांनःपूषंच्छिवतमामेरयस्वयस्यांवीजंमनुष्यावपंति ॥ यानऊरूउश

सर्वस्थालीपाकानांप्रकृतिर्गृहप्रवेशस्थालीपाकः ॥ इदंचपक्षद्वयंनित्योर्ध्वग्रहणव्याख्यानव्यवस्थयाविवाहप्रकरणेवृत्तिकारेणद
र्शितमित्यलंविस्तरेण ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १४८ ॥ कन्यावरणम् ॥

श्रीः ॥ ज्योतिर्विदादिष्टेविवाहनक्षत्रयुतेशुभेकालेद्वौचत्वारोष्टादयोवाब्राह्मणाःप्रशस्तवेषाःवरेणतत्पित्रादिनावाप्रेषिताः ॥ ॐअनृक्षराऋजवःसंतुपंथायेभिःसखायोयंतिनोवरेयं ॥ समर्यमासंभगोनोनिनीयात्संजास्पत्यंसुयममस्तुदेवाः ॥ इतिमंत्रपाठपुरःसरंमांगल्यद्रव्यगंधतांबूलवस्त्राभरणयुतप्रशस्तवेषाभिःपुरंध्रीभिःसहगीतवाद्यादिघोषेणवरयुतास्तदयुतावाकन्यागृहमेत्यशुभेवस्त्राच्छादितेपीठेप्राङ्मुखींसालंकारांसुवेषांकन्यामुपवेश्यगंधतांबूलादितद्धस्तेवरपित्रादिर्दत्त्वातत्पित्रादयः गणपतिपूजनपूर्वकंप्राङ्मुखासीनाः ॥ अमुकप्रवरान्वितामुकगोत्रोत्पन्नायामुकप्रपौत्रायामुकपौत्रायामुकपुत्रायामुकशर्मणेवराय ॥ अमुकप्रवरोपेतामुकगोत्रोत्पन्नाममुकप्रपौत्रीममुकपौत्रीममुकपुत्रीममुकनाम्नींकन्यांभार्यात्वायवृणीमहेइतिब्रूयुः ॥ अथकन्यादाताभार्याज्ञातिबंध्वनुमतिंकृत्वायथोक्तमनूद्यानन्नूद्यवावृणीध्वमितिवदेत् ॥ एवंपुनर्द्विःप्रयुज्यप्रदास्यामीतित्रिरुच्चैर्वदेत् ॥ ततोवरपित्रादिर्गंधाक्षतशुभवस्त्रयुग्मभूषणतांबूलपुष्पादिभिःकन्यांपूजयेत्संप्रदायागतैर्मंत्रैर्देवींवाचमित्यादिभिः ॥ इतिबौधायनोक्तं ॥

## ॥ १४९ ॥ वाग्दानम् ॥

श्रीः ॥ ततःकन्यादाताप्राङ्मुखःकन्यावामतउपविश्यआचम्यप्राणानायम्यदेशकालौसंकीर्त्यकरिष्यमाणविवाहांगभूतंवा

ग्दानमहंकरिष्ये ॥ तदंगंगणपतिपूजनंवरुणपूजनंचकरिष्यइतिचसंकल्प्यगंधादिदक्षिणांतोपचारैर्गणपतिंसंपूज्ययथाचारंक लशपूजनादिकृत्वा ॥ स्वस्थानेकन्यापूजयितारमुपवेश्यस्वयंतत्प्राच्यांप्रत्यङ्मुखउपविश्यगंधतांबूलादिनापूजयेत् ॥ सचदा तारं ॥ तौचस्वस्वमान्यान्यथाचारंगंधादिदापयित्वागृह्णीयातां ॥ ततोदाताहरिद्राखंडंपंचदृढपूगीफलानिगंधाक्षतसहि तानिचआचारात्गृहीत्वा ॥ अमुकप्रवरान्वितामुकगोत्रोत्पन्नायामुकप्रपौत्रायामुकपौत्रायामुकपुत्रायामुकशर्मणेवराय ॥ अमु कप्रवरान्वितामुकगोत्रोत्पन्नाममुकप्रपौत्रीममुकपौत्रीममुकपुत्रीममुकनाम्नींकन्यांज्योतिर्विदादिष्टेमुहूर्तेदास्येइतिवाचासंप्रददेइ तिचोक्त्वा ॥ अव्यंगेऽपतितेऽक्लीवेदशदोषविवर्जिते ॥ इमांकन्यांप्रदास्यामिदेवाग्निद्विजसंनिधौ ॥ इतिपठित्वा ॥ वरपित्रादिव स्त्रप्रांतेतानिपूगफलानिप्रक्षिप्यनर्यप्रजामितिप्रतिष्ठामंत्रेणवस्त्रप्रांतेवध्वाग्रंथिंचंदनादिनाचर्चयेत् ॥ ततोहरिद्राखंडंपंचपूगफ लानितथैववरपित्रादिर्गृहीत्वामुकप्रवरान्वितामुकगोत्रोत्पन्नामुकवरविषयेभवंतोनिश्चिताभवंत्वितिदातृवस्त्रप्रांतेप्रक्षेपादिकंकु र्यात् ॥ ततोदाता ॥ वाचादत्तामयाकन्यापुत्रार्थंस्वीकृतात्वया ॥ कन्यावलोकनविधौनिश्चितस्त्वंसुखीभव ॥ इतिवरपितरंप्र तिपठेत् ॥ सच ॥ वाचादत्तात्वयाकन्यापुत्रार्थंस्वीकृतामया ॥ वरावलोकनविधौनिश्चितस्त्वंसुखीभव ॥ इतिकन्यापितरंप्र तिपठेत् ॥ भ्रात्रादौस्वीकर्तरिभ्रात्रर्थंमित्रार्थमित्यूहःकर्तव्यः ॥ ततोब्राह्मणाः ॥ शिवाआपःसंतु ॥ सौमनस्यमस्तु ॥ अक्षतंचारिष्टं चास्तु ॥ दीर्घमायुःश्रेयःशांतिःपुष्टिस्तुष्टिश्चास्तु ॥ एतद्वःसत्यमस्तु ॥ इत्युक्त्वा ॥ ॐसमानीवआकूतिःसमानाहृदयानिवः ॥ समानमस्तुवोमनोयथावःसुसहासति ॥ इतिपठेयुः ॥ ततोदाताकन्यायाःविवाहसौभाग्याद्यभिवृद्ध्यर्थंशचीपूजनमहंकरिष्ये

इतिसंकल्प्य ॥ पात्रस्थसिततंडुलपुंजेशचीमावाह्यषोडशोपचारैःपंचोपचारैर्वापूजयेत् ॥ देवेंद्राणिनमस्तुभ्यंदेवेंद्रप्रियभामिनि ॥ विवाहंभाग्यमारोग्यंपुत्रलाभंचदेहिमे ॥ इतिशचींकन्याप्रार्थयेत् ॥ ततःसुवासिनीभिर्नीराजनादिमांगलिकंकार्यं ॥ विप्राश्चगंधतांबूलादिभिःपूजिताःसौभगायपदांतान्आशीर्मंत्रान्पठेयुः ॥ तेचमंत्राः ॥ (समिद्धस्यवनस्पतेसंदिव्येनबृहस्पतेचतुःशिखंडानर्यप्रजामितिषण्मंत्रादयः)॥ॐसमिद्धस्यश्रयमाणःपुरस्ताद्ब्रह्मवन्वानोअजरंसुवीरं॥आरेअस्मदमतिंबाधमानमुच्छ्रयस्वमहतेसौभगाय॥ १ ॥ॐवनस्पतेशतवल्शोविरोहसहस्रवल्शाविवयंरुहेम ॥ यंत्वायंस्वधितिस्तेतिजानःप्रणिनायमहतेसौभगाय ॥ २ ॥ ॐसंदिव्येनदीदिहिरोचनेनविश्वाआभाहिप्रदिशःपृथिव्याः ॥ संचेध्यस्वाग्नेप्रचबोधयैनमुच्चतिष्ठमहतेसौभगाय ॥ ३ ॥ ॐबृहस्पतेसवितर्बोधयैनंसंशितंचित्संतरांसंशिशाधि॥ वर्धयैनंमहतेसौभगाय ॥४॥ ॐचतुःशिखंडायुवतिःसुपेशाघृतप्रतीकाभुवनस्यमध्ये ॥ मर्मृज्यमानामहतेसौभगाय ॥ ५ ॥ ॐनर्यप्रजामितिच ॥ ततोगंधतांबूलादिभिर्ब्राह्मणान्संपूज्यतेभ्यश्चाशिषोगृह्णीयात् ॥ अस्मेदेवासइत्याद्याआशीर्मंत्राः ॥ इतिवाग्दानप्रयोगः ॥ ततोयथाकालंवैवाहिकेशुभेमुहूर्तेवधूवरयोस्तैलहरिद्रारोपणादियथाचारंकार्यं ॥ गृहांगणेषोडशद्वादशाष्टान्यतमारत्निर्मंडपःकार्यः ॥ ॥

## ॥ १५० ॥ विवाहप्रयोगः ॥

श्रीः ॥ तत्रसद्मवामभागेसमंततःसंस्कार्यचतुर्हस्तायताहस्तमात्रोच्छ्रायासुलक्षणावेदिःकार्या ॥ ततोवधूपितावरपिताचविवाहदिनात्पूर्वेद्युस्तद्दिनेवापूर्वाह्णेपत्नीसहितःकृताभ्यंगःकृतमांगलिकवेषःकृतलेपनरंगमांगलिकेप्रांगणेशुभासनेप्राङ्मुखउपविश्यस्वद

क्षिणतःपत्नींतद्दक्षिणतःसंस्कार्यंचोपवेश्यआचम्यप्राणानायम्यइष्टदेवतागुर्वादीन्नमस्कृत्यदेशकालौसंकीर्त्य ममास्यामुकशर्मणःपुत्रस्यअमुकनाम्न्याःकन्यकायाःभ्रातृपुत्रस्यवाविवाहसंस्कारंकरिष्ये ॥ तदंगंगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंनवग्रहमखंमंडपदेवताप्रतिष्ठापनंचकरिष्ये इतिसंकल्प्योक्तरीत्यागणपतिपूजनंपुण्याहवाचनंचकृत्वानांदीश्राद्धात्पूर्वं अविघ्नपसंज्ञकंगणपतिंकलशेआवाह्यवस्त्राच्छन्नवंशपात्रस्थतंडुलपुंजेषुगौर्यादिषोडशब्राह्म्यादिसप्तमातृकाःकुलदेवतागणपत्यादिसहिताउपनयनोक्तरीत्यापूजयित्वानांदीश्राद्धंचकृत्वामंडपदेवताआवाह्यसंपूज्यमंडपदेवताप्रतिष्ठांमंडपेविधाय मंडपाभावे गौर्यादिस्थापितवंशपात्रेवाकृत्वा॥ तद्वंशपात्रंस्वयंगृहीत्वाअविघ्नपकलशंपत्न्याग्राहयित्वा इयमेवसायाप्रथमेतिमंत्रंपठन्गृहांतःपूजितेदेशेनीत्वानर्यंप्रजामितिप्रतिष्ठाप्ययावन्मंडपोद्वासनंप्रत्यहंपूजयेत् ॥ अन्यदपियथाकुलधर्मंसर्वंकुर्यात् ॥ ततोविवाहांगदेवताकुलदेवताप्रीत्यर्थंद्विजसुवासिनीकुमारिकादीन्यथाचारंयथाकालंयथोपपन्नेनान्नेनभोजयेत् ॥ ॥

## ॥ १५१ ॥ लग्नघटीस्थापनम् ॥



श्रीः ॥ प्रागुदक्प्रवणेदेशेगोमयेनोपलेपिते ॥ मृण्मयंकुंडिकायुग्मंस्थापयेदव्रणंशुभं ॥ कुंकुमाक्तेनसूत्रेणपरिवेष्ट्यपरस्परं ॥ स्वच्छेनवारिणापूर्णंतंडुलानामथोपरि ॥ निश्चलेसलिलेपश्चात्कुंडिकायांजलोपरि ॥ स्थापयेद्घटिकायंत्रंसूर्यबिंबानुदर्शनात् ॥ ताम्रपात्रेवारिपूर्णेमृत्पात्रेप्यथवाशुभे ॥ मंडलार्धोदयंवीक्ष्यरवेस्तत्रविनिक्षिपेत् ॥ कर्तादेशकालावुत्कीर्त्यअद्यकरिष्यमाणवि



१ ममास्यपुत्रस्यदैवपित्र्यर्णापाकरणहेतुधर्मप्रजोत्पादनसिद्धिद्वाराविवाहसंस्कारंकरिष्ये ममास्याःकन्यायाःभर्त्रासहधर्मप्रजोत्पादनगृह्यपरिग्रहधर्माचरणेष्वधिकारसिद्धिद्वाराविवाहसंस्कारंकरिष्ये इतिधर्मांऽधिसारेकौस्तुभेच ।

न्याꣳअधरान्त्सपत्नान् ॥ १ ॥ प्रजापतिःसोमꣳराजानमसृजत ॥ तंत्रयोवेदाअन्वसृज्यंत॥ तान्हस्तेकुरुत ॥ अथहसीतासावित्री ॥ सोमꣳराजानंचकमे ॥ श्रद्धामुसचकमे ॥ साहंपितरंप्रजापतिमुपससार ॥ तꣳहोवाच ॥ नमस्तेअस्तुभगवः ॥ उपत्वायानि ॥ प्रत्वापद्ये ॥ सोमंवैराजानंकामये ॥ श्रद्धामुसकामयतइति ॥ तस्याउहस्थागरमलंकारंकल्पयित्वा ॥ दशहोतारंपुरस्ताद्व्याख्याय ॥ चतुर्होतारंदक्षिणतः ॥ पंचहोतारंपश्चात् ॥ षड्ढोतारमुत्तरतः ॥ सप्तहोतारमुपरिष्टात् ॥ संभारैश्चपत्निभिश्चमुखेलंकृत्य ॥ आस्यार्धंवव्राज ॥ ताꣳहोदीक्ष्योवाच ॥ उपमावर्तस्वेति ॥ तꣳहोवाच ॥ भोगंतुमआचक्ष्व॥ एतन्मआचक्ष्व ॥ यत्तेपाणाविति ॥ तस्याउहत्रीन्वेदान्प्रददौ ॥ तस्मादुहस्त्रियोयोभोगमैवहारयंते ॥ सयःकामयेतप्रियःस्यामिति ॥ यंवाकामयेतप्रियःस्यादिति ॥ तस्माएतꣳस्थागरमलंकारंकल्पयित्वा ॥ दशहोतारंपुरस्ताद्व्याख्याय ॥ चतुर्होतारंदक्षिणतः ॥ पंचहोतारंपश्चात् ॥ षड्ढोतारमुत्तरतः ॥ सप्तहोतारमुपरिष्टात् ॥ संभारैश्चपत्निभिश्चमुखेलंकृत्य ॥ आस्यार्धंव्रजेत् ॥ प्रियोहैवभवति ॥ नयंप्रजांमेगोपाय ॥ अमृतत्वायजीवसे ॥ जातांजनिष्यमाणांच ॥ अमृतेसत्येप्रतिष्ठितां ॥ ॥छ॥ ॥छ॥

## ॥ १५७ ॥ कन्यादानम् ॥

श्रीः ॥ ततःकन्यादातावरदत्तवस्त्राभरणादिरहितांस्वदेयाभरणाद्यलंकृतामहतवस्त्रपरिधानांकन्यांवरायदद्यात् ॥ तत्रायंक्रमः ॥ दातावधूवरदक्षिणतउदङ्मुखउपविश्यस्वदक्षिणतःपत्नीमुपवेश्याचम्यप्राणानायम्यदेशकालौसंकीर्त्यममसमस्तपितॄणांनिरतिशयसानंदब्रह्मलोकावाप्त्यादिकन्याप्रतिपादनकल्पोक्तफलावाप्तयेअनेनवरेणास्यांकन्यायामुत्पादयिष्यमाणसंतत्याद्वादशावरान्द्वादशपरान्पुरुषान्पवित्रीकर्तुमात्मनश्चलक्ष्मीनारायणप्रीतयेब्राह्मविवाहविधिनाकन्याप्रतिपादनमहंकरिष्येइतिसंक

ल्प्य ॥ सपत्नीकउत्थायोदङ्मुखएवप्रत्यङ्मुख्याःकन्यायादक्षिणंमंसंप्रगृह्य ॥ कन्यांकनकसंपन्नांकनकाभरणैर्युतां ॥ दास्यामिवि
ष्णवेतुभ्यंब्रह्मलोकजिगीषया ॥ विश्वंभरःसर्वभूताःसाक्षिण्यःसर्वदेवताः ॥ इमांकन्यांप्रदास्यामिपितॄणांतारणायच ॥ इतिमंत्रौप
ठित्वा ॥ कांस्यपात्रेकन्यांजल्युपरिस्थवरांजलिदक्षिणहस्तेस्वदक्षिणेनहस्तेनभार्यादत्तसंततजलधारोदकंक्षिपन्वदेत् ॥ कन्यातार
यतु ॥ पुण्यंवर्धतां ॥ शिवाआपःसंतु ॥ सौमनस्यमस्तु ॥ अक्षतंचारिष्टंचास्तु ॥ दीर्घमायुःश्रेयःशांतिःपुष्टिस्तुष्टिश्चास्तु ॥ य
च्छ्रेयस्तदस्तु ॥ यत्पापंतत्प्रतिहतमस्तु ॥ पुण्याहंभवंतोब्रुवंतु ॥ स्वस्तिभवंतोब्रुवंतु ॥ ऋद्धिंभवंतोब्रुवंतु ॥ श्रीरस्त्वितिभवंतोब्रु
वंतु ॥ ॐपुण्याहमित्यादिवरोवदेत् ॥ दाताअग्निःप्रीयतामित्युक्त्वा ॥ अमुकप्रवरान्वितामुकगोत्रोमुकशर्माहंममसमस्तेत्यादि
प्रीतयेइत्यंतमुक्त्वा ॥ अमुकप्रवरोपेतामुकगोत्रोत्पन्नायामुकप्रपौत्रायामुकपौत्रायामुकपुत्रायामुकशर्मणेकन्यार्थिनेश्रीधररू
पिणेवराय ॥ अमुकप्रवरोपेतामुकगोत्रोत्पन्नाममुकप्रपौत्रीममुकपौत्रीममुकपुत्रीममुकनाम्नींकन्यांवरार्थिनींश्रीरूपिणींप्रजाप
तिदैवत्यांप्रजासहत्वकर्मभ्यस्तुभ्यमहंप्रतिपादयेइत्युक्त्वादद्यात् ॥ ततोवरः ॥ ॐतथेतिप्रतिगृह्णाति ॥ एवंकन्यातारयत्वि
त्यादिॐतथेत्यंतंवारत्रयमुक्त्वाकन्याप्रतिपादनंकार्यं ॥ अत्रधर्मार्थकामरूपफलत्रयोद्देशेनैवकन्याप्रतिपादनस्यधर्मसूत्रेउक्त
त्वात्सप्रतिबंधदानत्वेनदातुर्नममेतित्यागःप्रतिग्रहीतुःप्रतिग्रहणमंत्रश्चनभवति ॥ ततोदाता ॥ गौरींकन्यामिमांविप्रयथाशक्ति
विभूषितां ॥ गोत्रायशर्मणेतुभ्यंदत्तांविप्रसमाश्रय ॥ कन्येममाग्रतोभूयाःकन्येमेदेविपार्श्वयोः ॥ कन्येमेपृष्ठतोभूयास्त्वद्दाना
न्मोक्षमाप्नुयां ॥ ममवंशकुलेजातापालितावत्सराष्टकं ॥ तुभ्यंविप्रमयादत्तापुत्रपौत्रप्रवर्धिनी ॥ धर्मेचार्थेचकामेचनातिचरि



१ अंसंप्रगृह्येति दक्षिणेकन्यांसेहस्तंकृत्वेत्यर्थः । २ अत्रकेचिद्वासिष्ठगोत्रायविष्णुशर्मणेइत्यादितत्तद्गोत्रनाम्नोरूहंकुर्वंतितन्निर्मूलं ।

तव्यात्वयेयं ॥ नातिचरामीतिवरः ॥ ततोदातादेशकालौसंकीर्त्यकृतस्यकन्याप्रतिपादनस्यसांगतासिद्ध्यर्थंयथाशक्तिंदक्षिणां संप्रददइत्युक्त्वावरहस्तेदत्वानममेतिवदेत् ॥ ततोवरः ॥ ॐदेवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यांप्रतिगृह्णा मिराजात्वावरुणोनयतुदेविदक्षिणेग्नयेहिरण्यंतेनामृतत्वमश्यांवयोदात्रेमयोमह्यमस्तुप्रतिग्रहीत्रेकइदंकस्माअदात्कामःकामाय कामोदाताकामःप्रतिग्रहीताकामंसमुद्रमाविशकामेनत्वाप्रतिगृह्णामिकामैतत्तएषातेकामदक्षिणोत्तानस्त्वांगीरसःप्रतिगृह्णा त्वितिपठित्वा ॥ ॐस्वस्तीतिवदेत् ॥ ततोदाताजलपात्रभोजनपात्रगोमहिष्यश्वगजदासदासीभूवाहनालंकारादियथाविभवंसं कल्पपूर्वकंवरायदद्यात् ॥ तत्रमंत्राः ॥ यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी ॥ विश्वरूपधरोदेवःप्रीयतामनयागवा॥गोः ॥ १ ॥ सर्वसस्याश्रयाभूमिर्वराहेणसमुद्धृता ॥ अनंतसस्यफलदाममशांतिंप्रयच्छतु ॥ भूमेः ॥ २ ॥ इयंदासीमयातुभ्यंश्रीव त्सप्रतिपादिता ॥ सर्वकर्मकरीह्यस्यायथेष्टंभद्रमस्तुते ॥ दास्याः ॥ ३ ॥अशून्यंशयनंनित्यमनूनांश्रियमुन्नतिं ॥ सौभाग्यंदेहि मेनित्यंशय्यादानेनकेशव ॥ शय्यायाः ॥ ४ ॥ हिरण्यगर्भसंभूतंसौवर्णंचांगुलीयकं ॥ सर्वप्रदंप्रयच्छामिप्रीणातुकमलाप तिः ॥ अंगुलीयकस्य ॥ ५ ॥ क्षीरोदमथनेपूर्वमुद्धृतंकुंडलद्वयं ॥ श्रियासहसमुद्भूतंददेश्रीःप्रीयतामिति ॥ कुंडलयोः ॥ ६ ॥ इदंगृहंगृहाणत्वंसर्वोपस्करसंयुतं ॥ तवविप्रप्रसादेनममास्त्वभिमतंफलं ॥ गृहस्य ॥ ७ ॥ इंद्रादिलोकपालानांयाराजमहिषी प्रिया ॥ महिषासुरस्यजननीसास्तुमेसर्वकामदा ॥ महिष्याः ॥ ८ ॥ परापवादपैशुन्यादभक्ष्यस्यचभक्षणात् ॥ उत्पन्नपापंदा नेनताम्रपात्रस्यनश्यतु ॥ ताम्रपात्रस्य ॥ ९ ॥ यानिपापान्यनेकानिकामोत्थानिकृतानिच ॥ कांस्यपात्रप्रदानेनतानिनश्यंतु मेसदा॥ कांस्यपात्रस्य॥१०॥ ततःकुशदूर्वापल्लवैरभिषिंचेत्पुरोधाः॥ ॐआनःप्रजांजनयतुप्रजापतिराजरसायसमनक्त्वर्यमा॥

अदुर्मंगलीःपतिलोकमाविशशंनोभवद्विपदेशंचतुष्पदे ॥ अघोरचक्षुरपतिघ्न्येधिशिवापशुभ्यःसुमनाःसुवर्चाः ॥ वीरसूर्देवका मास्योनाशंनोभवद्विपदेशंचतुष्पदे ॥ इमांत्वमिंद्रमीढ्वःसुपुत्रांसुभगांकृणु ॥ दशास्यांपुत्रानाधेहिपतिमेकादशंकृधि ॥ सम्राज्ञी श्वशुरेभवसम्राज्ञीश्वश्र्वांभव ॥ ननांदरिसम्राज्ञीभवसम्राज्ञीअधिदेवृषु ॥ समंजंतुविश्वेदेवाःसमापोहृदयानिनौ ॥ संमातरि श्वासंधातासमुदेष्ट्रीदधातुनौ ॥ समुद्रज्येष्ठाइतिचतसृभिः ॥ आपोहिष्ठेतितिसृभिः ॥ ततोदुग्धाक्तेनद्विगुणशुक्लसूत्रेणदंपतीकंठ देशेकटिदेशेचैशानीमारभ्यपंचवारंचतुर्वारंवाप्रदक्षिणंवेष्टयेत्पुरोधाएभिर्मंत्रैः ॥ ॐपरित्वागिर्वणोगिरइमाभवंतुविश्वतः॥वृद्धा युमनुवृद्धयोजुष्टाभवंतुजुष्टयः ॥ तान्वोमहोमरुतएवयाव्नोविष्णोरेषस्यप्रभृथेहवामहे ॥ हिरण्यवर्णान्ककुहान्यतःस्रुंचोब्रह्मण्यं तःशंस्यंराधईमहे ॥ दशावनिभ्योदशकक्ष्येभ्योदशयोक्रेभ्योदशयोजनेभ्यः ॥ दशाभीशुभ्योअर्चताजरेभ्योदशधुरोदशयुक्ता वहद्भ्यः ॥ तेअद्रयोदशयंत्रासआशवस्तेषामाधानंपर्येतिहर्यतं ॥ तऊसुतस्यसोम्यस्यांधसोंशोःपीयूषंप्रथमस्यभेजिरे ॥ तेसोमा दोहरीइंद्रस्यनिंसतेंशुंदुहंतोअध्यासतेगवि ॥ तेभिर्दुग्धंपपिवान्त्सोम्यंमध्विंद्रोवर्धतेप्रथतेवृषायते ॥ वृषावोअंशुर्नकिलारिषाथ नेळावंतःसदमित्स्थनाशिताः ॥ रैवत्येवमहसाचारवस्थनयस्यग्रावाणोअजुषध्वमध्वरं ॥ ततःकंठदेशस्थंसूत्रमधोनिष्कास्यकुं कुमाक्तमूर्णास्तुकायुतंचकृत्वातेनहरिद्राखंडंबध्वातद्वधूवामहस्तप्रकोष्ठेवरोबध्नीयात् ॥ ॐविश्वेत्तातेसवनेषुप्रवाच्यायाचकर्थ मघवन्निंद्रसुन्वते ॥ पारावतंयत्पुरुसंभृतंवस्वपावृणोःशरभायऋषिबंधवे ॥ ततःकटिदेशस्थंसूत्रमुपरिनिष्कास्योर्णास्तुकांहरि द्राखंडंचबध्वावरदक्षिणहस्तप्रकोष्ठेवधूर्बध्नीयात् ॥ ॐनीललोहितंभवतिकृत्यासक्तिर्व्यज्यते ॥एधंतेअस्याज्ञातयःपतिर्बंधेषुबध्य ते ॥ ततोवधूवरौपरस्परमायुर्वर्धनकामावक्षतारोपणंकुर्यातां ॥ तैजसपात्रस्थगव्यक्षीरेघृतमासिच्यपात्रांतरेणार्द्रानक्षतशु

तीविस्नयातैयस्यामुशंतःप्रहरेमशेपं ॥ सोमःप्रथमोविविदेगंधर्वोविविदउत्तरः ॥ तृतीयोअग्निष्टेपतिस्तुरीयोहंमनुष्यजाः ॥ सोमो ददद्गंधर्वायगंधर्वोग्नयेददात्॥ पशूꣳश्चमह्यंपुत्राꣳश्चाग्निर्ददात्यथोत्वां ॥ अमुहमस्मिसात्वंद्यौरहंपृथिवीत्वꣳसामाहमृक्त्वंतावेहि संभवावसहरेतोदधावहैपुꣳसेपुत्रायवेत्तवैरायस्पोषायसुप्रजास्त्वायसुवीर्याय॥ इमांत्वमिंद्रमीढ्वःसुपुत्राꣳसुभगांकुरु ॥ दशास्यां पुत्रानाधेहिपतिमेकादशंकुरुइति ॥ ततस्तांयथायतनंदक्षिणतउपवेश्यस्वयंचोपविश्यतदंजलावाज्येनतूष्णीमुपस्तीर्य तत्रमंत्रा वृत्त्याअस्याभ्रात्रादिर्वरोवायथाचारंलाजान्द्विरावपति ॥ त्रिःपंचावत्तिनः॥ॐइमाँल्लाजानावपामिसमृद्धिकरणान्मम तुभ्यंच संवननंतदग्निरनुमन्यतामयं ॥ तूष्णीमभिघार्य ॥ दर्वींस्थानीयंतदंजलिमादायवरोजुहोति ॥ ॐइयंनार्युपब्रूतेग्नौलाजानावपंती दीर्घायुरस्तुमेपतिरेधंतांज्ञातयोममस्वाहा ॥ अग्नयइदं० ॥ ततोवधूमुत्थापयति ॥ ॐउदायुषास्वायुषोदोषधीनाꣳरसेनोत्पर्जन्यं स्यशुष्मेणोदस्थाममृताꣳअनुइति ॥ ततस्तयासहप्रदक्षिणमग्निमनुपरिक्रामति ॥ ॐविश्वाउतत्वयावयंधाराउदन्याइव ॥ अति गाहेमहिद्विषइति ॥ पुनस्तथैवतामुपवेश्यतदंजलावुपस्तीर्यद्विर्लाजानोप्याभिघार्यतथैवहुत्वोत्थाप्यप्रदक्षिणमग्निंपरिक्रम्यतथै वलाजानांतृतीयाहुतिंहुत्वातृतीयंपरिक्रम्यआज्येनैवसौविष्टकृतंहुत्वापश्चाज्जयादिहोमःकार्यः ॥ अत्रयथापुरस्तादितिसूत्रेणसि द्धस्यस्विष्टकृतःपुनरत्रविधानंकालपरं ॥ तेनतृतीयपरिक्रमणानंतरंस्विष्टकृत्॥ पश्चाज्जयादिहोमः ॥ यत्तुसामान्यतोदृष्टत्वेन कारिकाकृतोक्तं जयादिस्विष्टकृत्ततइतितत्सूत्रवृत्तिविरुद्धत्वादशुद्धमित्युपेक्षणीयं ॥ अन्यथातृतीयंपरिक्रम्यसौविष्टकृतंजुहो तीतिसूत्रमनर्थकंस्यात् ॥ सिद्धत्वात्स्विष्टकृतस्तृतीयपरिक्रमणस्यदृष्टधर्मवत्तालाभाच्च ॥ ततइध्मसन्नहनप्रहरणादिसंस्थाज पांतंकर्मसमापयेत् ॥ नात्रत्रिवृदन्नहोमः ॥ ततःअपरेणाग्निंसप्ताक्षतपुंजान्प्राक्संस्थानुदक्संस्थान्वाकृत्वा ॥ दक्षिणेनपादेन

प्रक्रम्यसव्येनानुप्रक्राममासव्येनदक्षिणमतिक्रामीरितिभार्यासंशास्यतस्याअर्थावबोधंकृत्वादक्षिणपादंप्रगृह्यप्रगृह्यवासस्ताक्षत पुंजेषुवक्ष्यमाणमंत्रैःप्रतिमंत्रंसप्तविष्णुक्रमान्क्रामयति॥ॐएकमिषेविष्णुस्त्वान्वेतु॥ॐद्वेऊर्जेविष्णुस्त्वान्वेतु ॥ ॐत्रीणिव्रतायवि ष्णुस्त्वान्वेतु॥ॐचत्वारिमायोभवायविष्णुस्त्वान्वेतु॥ॐपंचपशुभ्योविष्णुस्त्वान्वेतु ॥ ॐषड्रायस्पोषायविष्णुस्त्वान्वेतु॥ॐसप्त सप्तभ्योहोत्राभ्योविष्णुस्त्वान्वेतु ॥ सप्तमेधान्यराशौस्थितेवधूपादेवरोजपति॥ॐसखायौसप्तपदावभूवसख्यंतेगमेयंसख्यात्ते मायोषंसख्यान्मेमायोष्ठाइति ॥ ततोस्यादक्षिणंपादंस्वदक्षिणेनपादेनाक्रम्यदक्षिणेनहस्तेनास्यादक्षिणमंसमुपर्युपर्यन्ववमृश्य हृदयदेशमभिमृशति ॥ ॐममहृदयेहृदयंतेअस्तुममचित्तंचित्तेनान्वेहिममवाचमेकमनाजुपस्वबृहस्पतिष्ट्वानियुनक्तुमह्यंमामेवा नुसंरभस्वमयिचित्तानिसंतुतेमयिसामीच्यमस्तुतेमह्यंवाचंनियच्छतादिति ॥ ततोनाभिदेशंस्पृशति ॥ ॐप्राणानांग्रंथिरसि समाविस्रसइति ॥ ततस्तामपरेणाग्निंप्राङ्मुखीमुपवेश्यतस्याःपुरस्तात्प्रत्यङ्मुखस्तिष्ठन्आपोहिष्ठेतितिसृभिर्हिरण्यवर्णाःशुचयः पावकाइतिचतसृभिःपवमानःसुवर्जनइत्यनुवाकेनचकलशस्थाद्भिःकुशैस्तांमार्जयति ॥ ततोवृद्धाब्राह्मणाज्ञातिवांधवाःसुवा सिन्यश्चाशीःपूर्वकंवधूमस्तकेव्रीह्यादिबीजानियथाचारमारोपयंति ॥ याजाताओषधयइत्यादिमंत्रैः ॥ अन्यदपियथाचारप्रा प्तंविवाहेतत्सर्वंकर्तव्यं ॥ ततःकृतस्यविवाहहोमस्यसांगतासिद्धयेआचार्यादीन्गंधतांबूलादिनासंपूज्य ॥ ॐअस्मेदेवासोवपुषे चिकित्सतेत्यादिनातेभ्यश्चाशिषःसंप्राप्यप्रमादात्कुर्वतांकर्मेतिकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ ॥ इतिविवाहहोमः ॥ ॥

## ॥ १६० ॥ गृहप्रवेशः ॥

श्रीः ॥ विवाहहोमानंतरमेववधूबांधवाःपितृगृहात्तांभार्यारथादियानेनभर्तृगृहंप्रापयंति ॥ विवाहाग्निंसर्वमेकस्मिन्पात्रेकृत्वाजा यापत्योःपृष्ठतोनुहरंति ॥ वरःस्वगृहद्वारंप्राप्यभार्यासंशास्ति ॥ दक्षिणंपादमग्रेतिहरदेहलिंमाधिष्ठाइति ॥ सायथाशासनंदक्षि

णंपादमग्रेकृत्वादेहलिंचानधिष्ठायगच्छति॥ततोगृहपूर्वार्धशालायांसभार्यःप्राङ्मुखउपविश्याचम्यप्राणानायम्यदेशकालौसंकी
र्त्यममविवाहाग्नेर्गृह्यत्वसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंविवाहांगभूतंगृहप्रवेशनीयाख्यंकर्मकरिष्येइतिसंकल्प्यगणेशपूजांकृत्वा
उद्धननादिभूसंस्कारंविधायतत्रविवाहाग्निंप्रतिष्ठाप्यापरेणाग्निंलोहितमानडुहंचर्मप्राचीनग्रीवमुत्तरलोमास्तृणाति॥ तदभावेकु
शानास्तीर्यतेषुप्राङ्मुखउपविश्यस्वदक्षिणतोभार्यांचोपवेश्य ॥ उदङ्मुखौवोपविशतः॥तदापश्चाद्भार्योपविशति॥ॐइहगावोनिषी
दंत्विहाश्वाइहपूरुषाः ॥ इहोसहस्रदक्षिणोपिपूषानिषीदत्विति ॥ ततोनक्षत्रोदयपर्यंतंवाग्यतौभवतः ॥ नक्षत्रोदयेसतिप्राचीमु
दीचींवादिशंगृहान्निष्क्रम्ययस्मिन्देशेध्रुवदर्शनंभवतितस्मिन्देशेप्राङ्मुखउदङ्मुखोवाभूत्वावध्वासहदिशउपतिष्ठते ॥ ॐदेवीः
षडुर्वीरुरुणःकृणोतविश्वेदेवासइहवीरयध्वमिति॥ततोनक्षत्राणि॥ ॐ माहास्महिप्रजयामातनूभिरिति ॥ ततश्चंद्रमसं ॥ ॐ मारं
धामद्विषतेसौमराजन्निति ॥ ततःसप्तर्षीन् ॥ ॐ सप्तर्षयःप्रथमांकृत्तिकानामरुंधतींयेध्रुवताꣳहनिन्युः ॥ षट्कृत्तिकामुख्य
योगंवहंतीयमस्माकंभ्राजत्वष्टमीति ॥ ततोध्रुवं॥ ॐ ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवमसिध्रुवतस्थितं ॥ त्वंनक्षत्राणांमेथ्यसिसमापाहिपृत
न्यतः ॥ नमोब्रह्मणेध्रुवायाच्युतायास्तुनमोब्रह्मणःपुत्रायप्रजापतयेनमोब्रह्मणःपुत्रेभ्योदेवेभ्यस्त्रयस्त्रिꣳशेभ्योनमोब्रह्मणःपु
त्रपौत्रेभ्योंगिरोभ्योयस्त्वांध्रुवमच्युतꣳसपुत्रꣳसपौत्रंब्रह्मवेदध्रुवाअस्मिन्पुत्राःपौत्राभवंतिप्रेष्यांतेवासिनोवसनंकंबलानिकꣳसꣳ
हिरण्यꣳस्त्रियोराजानोन्नमभयमायुःकीर्तिर्वर्चोयशोबलंब्रह्मवर्चसमन्नाद्यमित्येतानिमयिसर्वाणिध्रुवाण्यच्युतानिसंतु ॥ ध्रुवंत्वा
ब्रह्मवेदध्रुवोहमस्मिन्लोकेस्मिꣳश्चजनपदेभूयासमच्युतंत्वाब्रह्मवेदमाहमस्माल्लोकादस्माच्चजनपदाच्च्योषिद्विषन्मेभ्रातृव्योस्मा
ल्लोकादस्माच्चजनपदात्च्यवतामचेष्टंत्वाब्रह्मवेदमाहमस्माल्लोकादस्माच्चजनपदाच्चेष्टिषिद्विषन्मेभ्रातृव्योस्माल्लोकादस्माच्चजनप

दाचेष्टतामव्यथमानंत्वाब्रह्मवेदमाहमस्माल्लोकादस्माच्चजनपदाद्व्यथिषिद्विषन्मेभ्रातृव्योस्माल्लोकादस्माच्चजनपदाद्व्यथतां ॥ न भ्यंत्वासर्वस्यवेदनभ्यमहमस्यजनपदस्यभूयासंमध्यंत्वासर्वस्यवेदमध्यमहमस्यजनपदस्यभूयासंतंतिंत्वासर्वस्यवेदतंतिरहमस्यज नपदस्यभूयासंमेथींत्वासर्वस्यवेदमेथ्यमहमस्यजनपदस्यभूयासंनाभिंत्वासर्वस्यवेदनाभिरहमस्यजनपदस्यभूयासंयथानाभिःप्रा णानांविषूवानेवमहंविषूवानेकशतंपाप्मानमृच्छतुयोस्मान्द्वेष्टियंचवयंद्विष्मोभूयाꣳसिमामेकशतात्पुण्यान्यागच्छंतु ॥ इति मंत्रैर्ध्रुवमुपतिष्ठते ॥ नक्षत्राणामभ्रादिप्रतिबंधेनादर्शनेपितस्यांदिश्युपस्थानंकर्तव्यं ॥ ततउपस्थानदेशेमनसआह्लादकेनव चसाभार्यासंभाष्यपुनःशालांप्रविशति ॥ ॥ इतिगृहप्रवेशः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १६१ ॥ गृहप्रवेशस्थालीपाकप्रयोगः ॥

श्रीः ॥ द्विविधःस्थालीपाकः आघारवान्आपूर्विकश्च ॥ सर्वस्थालीपाकप्रकृतिभूतआद्योयंस्थालीपाकः ॥ अत्रपक्षद्वयेपिपरि गृहीतपक्षःस्यात्तत्रापूर्विकपक्षेणप्रयोगः ॥ अयंचनक्षत्रोपस्थानानंतरंरात्रावेवकार्यः ॥ अग्नेःपश्चात्वध्वासहप्राङ्मुखउपवि श्याचम्यप्राणानायम्यदेशकालौसंकीर्त्यगृहप्रवेशांगभूताग्नेयस्थालीपाकेनयक्ष्येइतिसंकल्प्यसमिद्‌द्वयमादायगृहप्रवेशस्थालीपा कहोमकर्मणियक्ष्यमाणादेवताःपरिग्रहीष्यामि ॥ अग्निंसमिद्भ्यांतूष्णीं ॥ अग्निंचरुणा ॥ अग्निꣳस्विष्टकृतंचरुणा ॥ प्रा यश्चित्तहोमेअग्निंवायुंसूर्यंप्रजापतिंचाज्येनएतादेवताःसद्योयक्ष्यइत्युक्त्वासमिधावग्नावाधाय । यथाहतद्वसवइत्यग्निंपरिसमु ह्यपरिस्तीर्योत्तरेणकुशानास्तीर्य यथोपयोगंपात्राणिसादयति दर्वींआज्यस्थालींचरुस्थालींप्रोक्षणीपात्रोलूखलमुसलव्रीह्याज्यसं मार्गदर्भोद्धरणपात्रमेक्षणपवित्राद्यासाद्यप्रोक्षणीःसꣳस्कृत्यासादितानिप्रोक्ष्यउलूखलेव्रीहीनोप्यपत्न्यावघात्यप्रक्षाल्योत्तरेणाग्नि

मासादितचरुस्थाल्यांतानोप्याग्नौश्रपयति ॥ ततोदर्वींनिष्टप्याज्यꣳसꣳस्कृत्यशृतंचरुमभिघार्योदगुद्वास्योद्धरणपात्रेमेक्षणे नोद्धृत्याग्नेःपश्चान्निधायपरिषिच्य समिद्द्वयात्मकमिध्ममंक्त्वा तूष्णीमग्नावाधाय चरुंदर्व्योपहत्यसकृदवदायजुहोति ॥ ॐअग्नयेस्वाहा ॥ अग्नयइदंनमम ॥ पुनर्भूयाꣳसमुपहत्योत्तरार्धस्यपूर्वार्धेजुहोति ॥ ॐअग्नयेस्विष्टकृतेस्वाहा ॥ अग्नयेस्विष्टकृतइदंनमम ॥ कृतस्यकर्मणोन्यूनातिरिक्तदोषपरिहारार्थंप्रायश्चित्तहोमंकरिष्यइतिसंकल्प्यव्याहृतिचतुष्टयंहुत्वापरिषेकविसर्गंकृत्वास्थालीपाकशेषेणब्राह्मणंविद्यावंतंभोजयेत् ॥ ततःकृतस्यविवाहकर्मणःसांगतासिद्ध्यर्थमाचार्यायवृषभंतत्प्रतिनिधिभूतंहिरण्यंवादत्त्वाप्रमादात्कुर्वतांकर्मेतिकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ आपूर्विकहोमेष्वाहुतिपरिमाणकइध्मःकार्यः ॥ अत्रवृत्तिकृताआघारपक्षोप्युक्तोस्ति ॥ इत्यापूर्विकस्थालीपाकप्रयोगः ॥ एकग्रामेचेद्विवाहस्तदाऽगारंप्राप्यैवगृहप्रवेशनीयहोमः ॥ देशांतरेचेद्विवाहस्तदास्वगृहागमनकालेऽग्निरजस्रंप्रागुक्तरीत्यानेयः ॥ समारोपणंकृत्वावानेयः ॥ सर्वथानाशेसतिगृहमागत्यश्रोत्रियागारादाहृतमग्निंउक्तदेशउक्तरीत्याप्रतिष्ठाप्याग्निनाशप्रायश्चित्तंकृत्वापूर्वोक्तप्रकारेणगृहप्रवेशनीयंकर्मसमाचरेत् ॥ गृहप्रवेशस्थालीपाकानंतरमेवदर्शपूर्णमासस्थालीपाकारंभःकार्यः ॥ समाप्तंगृहप्रवेशकर्म ॥ ॥ ॥

## ॥ १६२ ॥ औपासनहोमः ॥

श्रीः ॥ सचपाणिग्रहणोत्तरंयावज्जीवंनक्षत्रंदृष्ट्वाप्रदोषेवानवघटिकात्मकेगौणेपिवाकालेसायंहोमः ॥ उषसिपुरोदयंयर्हिवाक्प्रवदेत् ॥ उदितेवासूर्येप्रातर्होमः ॥ सायमेवोपक्रम्यसायंप्रातश्चविवाहाग्नौगौणेपिहोमकालेहोमःकार्यः ॥ गृहप्रवेशांतविवाहपक्षेगृहप्रवेशस्थालीपाकादूर्ध्वमेवस्वकालेहोमोपक्रमःकार्यः ॥ होमद्रव्यंतुमाषवर्जंकामंव्रीहियवतिलादिकमग्निहोत्रद्रव्यंग्राह्यं ॥

१ यर्हियदापक्षिणांवाचःप्रवर्तंते किलकिलाशब्दःश्रूयतेइतियावत् ।

अग्निहोत्रभक्तित्वात् ॥ असमाप्तेश्रौतेमध्येस्मार्तास्नानंकुर्वतःसूत्रकारस्यायमर्थोभिप्रेतःक्वचित्स्मार्तेपिश्रौतधर्मप्राप्तिरस्तीति ॥ तत्रातिप्रसंगेशिष्टाचारदर्शनान्निर्णयः ॥ अतएवान्वारंभणस्थालीपाकादीनामुपपत्तिः ॥ तत्रशिष्टपरंपरयानुष्ठानदर्शनात् ॥ एतच्चवृत्तिकृतोप्यभिप्रेतं ॥ उत्सर्गतःप्राप्तार्थस्याचाराान्निर्णयइतित्रिवृदन्नहोमप्रसंगेदर्शितं ॥ यत्रहोमोब्राह्मणभोजनंचोक्तंतत्र त्रिवृदन्नहोमः ॥ गृह्यांतरोक्तहोमब्राह्मणभोजनवत्सुकर्णवेधतडागोत्सर्जनादिषुचातिप्रसंगःस्यात्तद्वारणायचोक्तंयत्राचारोप्य स्तितत्रैवत्रिवृदन्नहोमः ॥ आचाराभावादभावःस्यादिति ॥ अतएवोत्सर्जनेचैतत्रितयदर्शनात्रिवृदन्नहोमोनास्तीतिवदन् भ्रांतःपरास्तः ॥ ॥ अथप्रयोगः ॥ उपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंसायंप्रातरौपासनहोमौहोष्ये ॥ इदानीं सायमौपासनहोमंहोष्येइतिसंकल्प्य ॥ चत्वारिशृंगेतिध्यात्वापरिसमुह्यपरिस्तीर्यपरिषिच्य ॥ यस्त्वाहृदाकीरिणामन्यमानइ त्यभ्यर्च्यव्रीह्यादिद्रव्यंद्वादशपर्वपूरितमादायहस्तेनजुहोति ॥ ॐअग्नयेस्वाहा ॥ अग्नयइदं० ॥ ॐप्रजापतयेस्वाहा ॥ प्रजाप तयइदं० ॥ तथैवपरिसमुह्यपरिषेकविसर्गंकृत्वाअग्निमुपतिष्ठते ॥ ॐअग्निर्मूर्धादिवःककुत्पतिःपृथिव्याअयं ॥ अपाꣳरेताꣳ सिजिन्वति ॥ त्वामग्नेपुष्करादध्यथर्वानिरमंथत ॥ मूर्ध्नोविश्वस्यवाघतः ॥ अयमग्निःसहस्रिणोवाजस्यशतिनस्पतिः ॥ मूर्धा कवीरयीणामितिउपस्थाय ॥ ततोविभूतिंधारयति ॥ त्र्यायुषंजमदग्नेरित्यादि ॥ स्वस्ति ॥ श्रद्धांमेधांयशःप्रज्ञांविद्यांबुद्धिंश्रि यंबलं ॥ आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहनेत्यग्निंप्रार्थ्य ॥ प्रमादात्कुर्वतांकर्मेतिकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ इतिसायंहोमः ॥ प्रातर्होमेतु ॐसूर्यायस्वाहा ॥ सूर्यायेदं० ॥ ॐप्रजापतयेस्वाहा ॥ प्रजापतयइदं० ॥ ॐउद्वयंतमसस्परिपश्यंतोज्योतिरु० ॥ ॐउदुत्यंजा० ॥ ॐचित्रंदे० ॥ तस्थुषश्चेत्युपस्थानंमंत्रत्रयेणान्यत्समानं ॥ अग्निहोत्रवृत्त्यैतद्धोमकालेप्युदितानुदितव्यवस्थाग्राह्या ॥

इत्यौपासनहोमः ॥ ततःसायमौपासनहोमानंतरंवधूवरौप्राङ्मुखावुपविश्यदेशकालौसंकीर्त्यविवाहांगभूतंत्रिरात्रव्रतंचरिष्यावहेइतिसंकल्प्येक्षुविकारान्सामुद्रादिलवणमभुंजानौवस्त्राभरणादिनाचात्मानमलंकुर्वाणौमैथुनवर्जंचाधःशायिनौसहवसतइत्यादिव्रतंपाणिग्रहणदिनमादायगृहप्रवेशादूर्ध्वंवात्रिरात्रव्रतंवधूवराभ्यांकर्तव्यं ॥ अग्निनाशेप्रायश्चित्तंतुपुनराधानप्रयोगोक्तं ॥

## ॥ १६३ ॥ आशौचेहोमविधिः ॥

श्रीः ॥ जननशावाशौचयोर्ऋत्विगादिनासायंप्रातर्होमौकारयेत् ॥ स्वयंद्रव्यत्यागंकुर्यात् ॥ ऋत्विगाद्यभावेतुआशौचपातात्पूर्वंहोमांतेवक्ष्यमाणप्रकारेणाग्निसमारोपणंकृत्वासूतकनिवृत्तौउद्धननादिभूसंस्कारंविधायतत्रस्वयोनितउत्पन्नमग्निंप्रतिष्ठाप्यतत्रसमारूढमग्निंवक्ष्यमाणप्रकारेणावरोप्यप्राणानायम्यदेशकालौसंकीर्त्यममामुकनिमित्तेननित्यहोमातिक्रमजन्यदोषपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंप्रायश्चित्तपूर्वकमतिक्रांतहोमान्करिष्यइतिसंकल्प्याऽऽज्यꣳसꣳस्कृत्यदर्व्यामाज्यमादायजुहोति ॥ ॐमनोज्योतिर्जुषतामाज्यंविच्छिन्नंयज्ञꣳसमिमंदधातु ॥ याइष्टाउषसोनिम्रुचश्चताःसंदधामिहविषाघृतेनस्वाहा ॥ मनसेज्योतिषइदं० ॥ ततोहोमार्थंव्रीह्यादिद्रव्यमादायपरिसमूहनादिकृत्वाअतीतकालादारभ्यक्रमेणद्वेद्वेआहुतीहुत्वापश्चात्तत्कालहोमंचकृत्वापरिषेकविसर्गांतंकर्मशेषंसमापयेत् ॥ इत्याशौचहोमविधिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १६४ ॥ चतुर्थदिनेऐरिणीपूजनम् ॥

श्रीः ॥ चतुर्थदिनेरात्रौतत्रभद्रादिसंभवेदिनएववाशिष्टाचारप्राप्तंवरमात्रेतत्समायैवाऐरिण्याख्यंक्षुद्रषोडशवंशशूर्पयुतंमहावंश

१ अरणी निर्मथ्य उत्पादितमित्यर्थः

पात्रदानंकार्यंकन्यादात्रा ॥ वस्त्रतांबूलसंयुक्तंदंपत्योर्वंशवर्धनं ॥ ऐरिण्याख्यंवंशपात्रंपक्वान्नैःपरिपूरितं ॥ १ ॥ करकैरु द्रसंख्याकैःसुवर्णपरिपूरितैः ॥ एतावदैरिणीरूपंकर्तव्यंकिलसूरिभिः ॥ २ ॥ एवंसंपाद्यकन्यादातासभार्योदेशकालौसंकीर्त्यवि वाहस्यसंपूर्णफलावाप्तयेवरस्यतत्पितृमात्रादीनांतत्पक्षीयाणांचयथाविभवंवस्त्रादिभिःपूजनमहंकरिष्येइतिसंकल्प्यवरादिभ्यो यथाविभवंवस्त्रादिकंदत्त्वापुनस्तिथ्यादिसंकीर्त्यममकन्यादानसंपूर्णफलावाप्तिद्वाराश्रीउमामहेश्वरप्रीत्यर्थंऐरिणीपूजनंवरमा त्रेऐरिणीदानंचकरिष्येइतिसंकल्प्य ॥ ऐरिणित्वमुमादेवीमहेशोगिरिजापतिः ॥अतस्त्वांपूजयिष्यामिऐरिणींसर्वकामदां ॥ १ ॥ सवस्त्रांचसदीपांचशूर्पैःषोडशभिर्युतां ॥ वरमात्रेप्रदास्यामिकन्यादानस्यसिद्धये ॥ २ ॥ इतिसंकल्प्य ॥ महावंशपात्रेउमामहे श्वरौषोडशोपचारैःसंपूज्यवंशपात्रंवरमात्रेदत्वामंत्रान्पठेत् ॥ वंशोवंशकरःश्रेष्ठोवंशोवंशसमुद्भवः ॥ अनेनवंशदानेनतुष्टोवृद्धिं करोतुमे ॥ १ ॥ वंशपात्रमिदंपुण्यंवंशजातसमुद्भवं ॥ वंशानामुत्तमंदानमतःशांतिंप्रयच्छमे ॥ २ ॥ वंशपात्राणिसर्वाणिमया संपादितानिवै ॥ उमाकांतायदत्तानिममगोत्राभिवृद्धये ॥ ३ ॥ वंशवृद्धिकरंदानंसौभाग्यादिसमन्वितं ॥ वस्त्रेणाच्छादितं पूगफलहेमसमन्वितं ॥ ४ ॥ सर्वपापक्षयकरंनानाद्रव्यैस्तुपूरितं ॥ दानानामुत्तमंदानमतःशांतिंप्रयच्छमे ॥ ५ ॥ इति ॥ ततस्तत्सदीपवंशपात्रंसकुटुंबस्ययजमानस्यशिरसिधारयंतिस्वस्तिनोमिमीतामित्यादिना ॐ स्वस्तिनोमीमितामश्विनाभर्गःस्व स्तिदेव्यदितिरनर्वणः॥स्वस्तिपूषाअसुरोदधातुनःस्वस्तिद्यावापृथिवीसुचेतुना ॥ ततःकन्यापित्रादिर्वरस्यमातृपित्रादीनामुत्संगे कन्यामुपवेश्यप्रार्थयेत् ॥ संप्तवर्षात्वियंकन्यापुत्रवत्पालितामया ॥ इदानींतवपुत्रायदत्तास्नेहेनपाल्यतामिति ॥ ततोवरमात्रा

१ द्वादशचतुर्दशादिवर्षवयस्कायांकन्यायां रंगूनाम्नी अंबानाम्नी सीतानाम्नीत्वियंकन्या इत्यादियोजयेत् । २ इदानींतवमित्राय इदानीं-तुतवभ्रात्रे इत्याद्यूहोमित्रादिविषये ।

वधूमातृतत्पक्षीयसुवासिनीभ्यःसकंचुकक्षुद्रवंशशूर्पवायनदानानिवध्वाकारणीयानीत्याद्याचारप्राप्तंयथाचारंज्ञेयं ॥ इदंऐरिणी पूजनादिवधूपितृभ्यामभुक्तवद्भ्यांकृत्वाभोजनंकार्यं ॥ इत्यैरिणीपूजनं ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १६५ ॥ चतुर्थीकर्म ॥

श्रीः ॥ चतुर्थीकर्मांतोविवाहइतिपक्षेविवाहदिनमादायचतुर्थस्याह्नस्त्रिभागशेषायांरात्रौचतुर्थीकर्मकार्यं ॥ गृहप्रवेशांतोवि वाहइतिपक्षेतुगृहप्रवेशदिनमादायचतुर्थस्याह्नस्त्रिभागशेषायांरात्रौचतुर्थीकर्मसंगमार्थमेवनविवाहांगमितिपूर्वमुक्तमेव ॥ वरः वधूसहितःप्राङ्मुखउपविश्यआचम्यप्राणानायम्यदेशकालौसंकीर्त्यममास्याःभार्यायाःसोमाद्युपभुक्तिदोषपरिहारद्वाराश्रीपरमे श्वरप्रीत्यर्थंचतुर्थीकर्मतदंगंप्रायश्चित्तहोमंचकरिष्येतदंगंगणेशपूजनंकरिष्यइतिसंकल्प्यकृत्वाग्निंप्रज्वाल्यसमित्रयमादायअग्न एहीत्यादिप्राणायामांतंकृत्वाप्रायश्चित्तहोमकर्मणियक्ष्यमाणादेवताःपरिग्रहीष्यामि ॥ जातवेदसमग्निमिध्मेनेत्यादिसामान्यप्र धानांतमुक्त्वाप्रधानहोमे ॥ वरुणंद्विराज्येन॥ अग्नीवरुणौद्विराज्येन॥ अग्निंप्रायश्चित्तिं ॥ वायुंप्रायश्चित्तिं ॥ आदित्यंप्रायश्चि त्तिं ॥ आदित्यंप्रायश्चित्तिं ॥ वायुंप्रायश्चित्तिं ॥ अग्निंप्रायश्चित्तिं ॥ अग्निंप्रायश्चित्तिं ॥ वायुंप्रायश्चित्तिं ॥ आदित्यंप्रायश्चित्तिं चाज्येन ॥ मूर्ध्निसꣳस्रावहोमेअग्निंवायुंसूर्यंप्रजापतिंसꣳस्रावाज्येन अयासमग्निंप्रजापतिंचाज्येनजयाभ्यातानराष्ट्रभृद्देवताश्चा ज्येन सामान्यप्रायश्चित्तदेवताश्चाज्येनेत्यादिएतादेवतायक्ष्यइत्युक्त्वासमिधोग्नावाधायसामान्यप्रधानांतंहुत्वाप्रधानहोमः ॥ इमंमेवरुणतत्त्वायामित्वंनोअग्नेसत्वंनोअग्नइतिचतस्रआहुतीर्हुत्वा॥ॐअग्नेप्रायश्चित्तेत्वंप्रायश्चित्तिरसिब्राह्मणस्त्वानाथकामउप धावामियास्यैघोरातनूस्तामितोनाशयस्वाहा॥ अग्नयेप्रायश्चित्तयइदं०॥ॐवायोप्रायश्चित्तेत्वंप्रायश्चित्तिरसिब्राह्मणस्त्वानाथका

१ चतुर्थदिनस्यरात्रौ निशीथोत्तरमित्यर्थः । चतुर्थ्यामपररात्रे इतिसूत्रकृदुक्तेः ।

मउपधावामियास्यैनिंदितातनूस्तामितोनाशयस्वाहा ॥ वायवेप्रायश्चित्तयइदं० ॥ ॐआदित्यप्रायश्चित्तेत्वंप्रायश्चित्तिरसिब्राह्मण स्त्वानाथकाममउपधावामियास्यैपतिघ्नीतनूस्तामितोनाशयस्वाहा ॥ आदित्यायप्रायश्चित्तयइदं० ॥ पुनर्व्युत्क्रमेण ॥ ॐआदित्य प्रायश्चित्ते० पतिघ्नी० आदित्यायप्रायश्चित्तयइदं० ॥ ॐवायोप्रायश्चित्ते० निंदितात० वायवेप्रायश्चित्तयइदं० ॥ ॐअग्नेप्रायश्चित्तेत्वं प्रायश्चित्तिर० घोरातनूस्तामितो० अग्नयेप्रायश्चित्तयइदं० ॥ पुनरनुक्रमेण ॥ ॐअग्नेप्रा० ॐवायोप्रा० ॐआदित्यप्रा० नवाहुति होमकालेसंस्रावाज्यंपात्रांतरेधृत्वातदेवसंस्रावाज्यंदर्व्यातस्यामूर्ध्निजुहोति ॐभूर्भगंत्वयिजुहोमिस्वाहा ॥ अग्नयइदं० ॥ ॐभु वोयशस्त्वयिजुहोमिस्वाहा ॥ वायवइदं० ॥ ॐसुवःश्रियंत्वयिजुहोमिस्वाहा ॥ सूर्यायेदं० ॥ ॐभूर्भुवःसुवस्त्विषिंत्वयिजुहोमिस्वाहा ॥ प्रजापतय० ॥ इत्याहुतिचतुष्टयंमूर्ध्निहुत्वाग्नौजुहोति ॥ त्वमग्नेअयासीत्यादिक्रमेणसंस्थाजपांतंसमाप्य ॥ नात्रत्रिवृदन्नहोमः ॥ ततःकर्मणःसांगतासिद्धयेआचार्यायदक्षिणांदत्वाप्रमादात्कुर्वतांकर्मेतिकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ ततःकुंभमुदकपूर्णमग्नि समीपेनिधायअग्निंउदकुंभंचप्रदक्षिणीकृत्यापरेणाग्निंतांभार्यांसम्यगास्तृतेपर्यंकेप्राक्शिरसमुदक्शिरसंवाशाययित्वा तस्यायो निंदक्षिणेनपाणिनाभिमृशति ॥ ॐअभित्वापंचशाखेनशिवेनाभिद्विषावता ॥ सहस्रेणयशस्विनाहस्तेनाभिमृशामसिसुप्रजास्त्वा येति ॥ ततस्तस्यायोनौस्वप्रजननंप्रवेशयति ॥ ॐसन्नाम्नःसंहृदयानिसन्नाभिःसंत्वचः ॥ संत्वाकामस्ययोक्रेणयुंजान्यविमोच नायेति ॥ ततस्तांपर्यालिंगयति ॥ ॐमामनुव्रताभवसहचर्यामयाभव ॥ यातेपतिघ्नीतनूर्जारघ्नींत्वेतांकरोमिशिवात्वंमह्यमेधिक्षु रपविर्जारेभ्यइति ॥ ततोस्यामुखंस्वमुखेनजुषति ॥ ॐमधुहेमध्विदंमधुजिह्वामेमधुवादिनी ॥ मुखेमेसारघंमधुदत्सुसंवननं कृतं ॥ चाक्रवाकंसंवननंयन्नदीभ्यउदाहृतं ॥ यद्युक्तोदेवगंधर्वस्तेनसंवनिनौस्वकइति ॥ इतिचतुर्थीकर्म ॥ ॥ छ ॥

१ कस्मिंश्चित्पात्रे प्रत्याहुति दर्वीस्थंसंस्रावाज्यंकृत्वातेनाज्येनाहुतिचतुष्टयंपत्न्यामूर्ध्निजुहोतीत्यर्थः ।

## ॥ १६६ ॥ देवकोत्थापनंमंडपोद्वासनंच ॥

श्रीः ॥ तच्चअभुक्त्वाषष्ठातिरिक्तसमेदिवसेकुर्यात् ॥ विषमेतुसप्तमपंचमयोःकुर्यात् ॥ यजमानःसपत्नीकःप्राङ्मुखउपविश्य देशकालौसंकीर्त्यविवाहांगत्वेनस्थापितदेवतानामुद्वासनंमंडपोद्वासनंपुण्याहवाचनंचकरिष्यइतिसंकल्प्यगंधाद्युपचारैर्देवताः संपूज्यउत्तिष्ठब्रह्मणस्पतइत्युत्थाप्यानीयभगवत्यादीनांमंडपदेवतानांतैलोद्वर्तनोष्णोदकस्नानानिकारयित्वासंपूज्य यांतुदेवगणाइतिविसृज्यवेष्टनसूत्रमुन्मुच्यपुण्याहवाचनंकुर्यात् ॥ ततोद्विजैरभिषेकःकार्यः ॥ अभिषेकांतेपुरोधास्तच्छाखादिकंवंशपात्रेनिधायतदुपरिप्रक्षिप्ताभिषेकजलंसकुटुंबयजमानशिरसिकिंचित्किंचित्स्रावयन्पठति॥ ॐ प्रेतिचेतिचेत्येतद्वैसर्वस्वस्त्ययनंयत्प्रेतिचेतिचेतितद्योस्यप्रियःस्यात्तमेतेनानुमंत्रयेतप्रेतिचेतिचेतिस्वस्त्येवगच्छतिस्वस्तिपुनरागच्छति ॥ ततःकर्ताशिरसिबद्धांजलिः ॥ अस्मत्गोत्रेषट्सुषट्सुमासेषुशोभनानिभवंत्वित्युक्त्वा ॥ ब्राह्मणास्तथास्त्वितिब्रूयुरेवंत्रिःकार्यं ॥ ततोद्विजांश्चंदनतांबूलादिनापूजयित्वातदाशिषश्चगृह्णीयात् ॥ ततश्चान्यदपिस्वस्वकुलधर्मानुसारिसर्वंकुर्यात् ॥ इतिविवाहप्रयोगः ॥ ॥

## ॥ १६७ ॥ द्विभार्यस्याग्निसंसर्गविधिः ॥

श्रीः ॥ कर्ताविवाहहोमकालेउद्धननादिनाभूसंस्कारंविधायतत्रपूर्वभार्यायागृह्याग्निंप्रतिष्ठाप्यतत्रद्वितीयभार्यायाविवाहहोमंकुर्यात्सएवगृह्याग्निः ॥ यस्यतुलौकिकाग्नौद्वितीयविवाहहोमोभवति तेननवाहमग्निद्वयस्यपृथगुपासनाकार्या ॥ ततोदशमेद्वादशे त्रयोदशेवाहनिप्रातरुभयत्रहोमानंतरंप्राङ्मुखउपविश्याग्निद्वयंपत्नीभ्यामानाय्य ॥ दक्षिणतउत्तरतश्चपात्रद्वयेसंस्थाप्यतत्राग्नि

द्वयमध्येउद्धननेनभूसंस्कारेणस्थंडिलंविधायपत्नीभ्यामन्वारब्धआचम्यप्राणानायम्यदेशकालौसंकीर्त्यममगृह्याग्निसाध्यानांकर्मणांतंत्रेणानुष्ठानसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थमौपासनाग्न्योःसंसर्गंकरिष्येतदंगंगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्येइतिसंकल्प्यकृत्वामंत्रद्वयेनतौप्रत्यक्षौपासनाग्नीस्वयंपत्नीभ्यांवास्वस्वौपासनाग्निंयुगपदेवमध्यमेस्थंडिलेस्थापयेत् ॥ ॐ भवतंनःसमनसौसमोकसावरेपसौ ॥ मायज्ञꣳहिꣳसिष्टंमायज्ञपतिंजातवेदसौशिवौभवतमद्यनः ॥ अग्नावग्निश्चरतिप्रविष्टऋषीणांपुत्रोअधिराजएषः ॥ स्वाहाकृत्यब्रह्मणातेजुहोमिमादेवानांमिथुयाकर्भागधेयंइतिद्वाभ्यां ॥ ततस्तमग्निंप्रज्वाल्यसमित्त्रयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वाऔपासनाग्न्योःसंसर्गहोमकर्मणियक्ष्यमाणादेवताःपरिग्रहीष्यामि ॥ जातवेदसमग्निमिध्मेनेत्यादिव्याहृत्यंतमुक्त्वाप्रधानहोमे ॥ तंतुमंतमग्निंत्रिश्चरुणायक्ष्ये ॥ ततःवरुणंद्विरित्यादिदेवतायक्ष्यइत्यंतमुक्त्वासमिधोग्नावाधाय ॥ उक्तप्रकारेणचरुंश्रपयित्वाआघारवतातंत्रेणहोमःकार्यः ॥ व्याहृत्यंतंहुत्वाप्रधानहोमः ॥ ॐतंतुंतन्वन्रजसोभानुमन्विहिज्योतिष्मतःपथोरक्षधियाकृतान् ॥ अनुल्बणंवयतजोगुवामपोमनुर्भवजनयादैव्यंजनꣳस्वाहा ॥ तंतुमतेग्नयइदं० ॥ ॐउद्बुध्यस्वाग्नेप्रतिजागृह्येनमिष्टापूर्तेसꣳसृजेथामयंच ॥ पुनःकृण्वꣳस्त्वापितरंयुवानमन्वाताꣳसीत्त्वयितंतुमेतꣳस्वाहा ॥ तंतुमतेग्नयइदं० ॥ ॐत्रयस्त्रिꣳशत्तंतवोयेवितत्निरेयइमंयज्ञꣳस्वधयाददंतेतेषांछिन्नंप्रत्येतद्दधामिस्वाहाघर्मोदेवाꣳअप्येतुस्वाहा ॥ तंतुमतेग्नय० ॥ इतिचरोराहुतित्रयंहुत्वा ॥ ततइमंमेवरुणेत्यादिसंस्थाजपांतंकर्मसमापयेत् ॥ नात्रत्रिवृदन्नहोमः ॥ कर्मांगत्वेनब्राह्मणभोजनंसंकल्प्य ॥ आचार्यायदक्षिणांदत्वातेभ्यश्चाशिषःसंप्राप्यप्रमादात्कुर्वतांकर्मेतिकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ ततोयावज्जीवमेतस्याग्नेःपरिचर्याकार्या ॥ अग्न्युपघातेपुनराधानप्राप्तौसत्यांभार्याद्वयान्वारंभेणपुनराधानोक्तरीत्याअ

ग्नेरुत्पत्तिःकार्या ॥ अग्न्योःसंसर्गस्यजातत्वान्नपृथगग्न्योरुत्पत्तिः ॥ केचित्तुपुनराधानेनाग्निद्वयंपृथगुत्पाद्याऽग्न्योःसंसर्गविधि नासंसर्गंकुर्यादितिवदंति ॥ तृतीयभार्यादावप्येवमेवविधिः ॥ इतिश्रीरुद्रस्वामिमतानुसारीद्विभार्याग्न्योःसंसर्गप्रयोगः ॥ ॥

## ॥ १६८ ॥ अन्वारंभणीयस्थालीपाकः ॥

श्रीः ॥ अयंसूत्रानुक्तोपिशिष्टाचारदर्शनाल्लिख्यते ॥ सचगृहप्रवेशस्थालीपाकानंतरंपूर्णमास्याःपूर्वंचतुर्दश्यांपूर्वाह्णेकार्यः ॥ गृह्याग्नेःपश्चात्सपत्नीकःप्राङ्मुखउपविश्यदेशकालौसंकीर्त्यदर्शपूर्णमासस्थालीपाकंकर्तुंदशहोतृसारस्वतहोमपूर्वकंअन्वारंभणीयस्थालीपाकंकरिष्येइतिसंकल्प्यगणेशपूजादिकृत्वा अग्निंप्रज्वाल्यसमिद्द्वयमादायश्रद्धएहीत्यादिअन्वारंभणीयस्थालीपाकहोमकर्मणियक्ष्यमाणादेवताःपरिग्रहीष्यामि ॥ अग्निंसमिद्भिःवाचस्पतिंब्रह्माणंचाज्येनपूर्णमासममावास्यांचाज्येन ॥ अग्नाविष्णू सरस्वतीं सरस्वंतं अग्निंभगिनं अग्निंस्विष्टकृतंचचरुणायक्ष्ये ॥ सामान्यप्रायश्चित्तदेवताश्चाज्येनएतादेवतायक्ष्यइत्युक्त्वासमिधावग्नावाधायपरिसमुह्यपरिस्तीर्यउपयुक्तानिपात्राण्यासाद्यप्रोक्षणीसंस्कारादिकृत्वाआपूर्विकत्वादाहुतिपरिमाणमष्टसमित्कमिध्मंतूष्णींहुत्वा ॥ दर्व्यामाज्यमादाय ॥ ॐचित्तिः स्रुक् ॥ चित्तमाज्यं ॥ वाग्वेदिः ॥ आधीतंबर्हिः ॥ केतोअग्निः ॥ विज्ञातमग्निः ॥ वाक्पतिर्होता ॥ मनउपवक्ता ॥ प्राणोहविः ॥ सामाध्वर्युः ॥ इतिदशहोतारंमनसानुद्रुत्य ॥ ॐवाचस्पतेविधेनामन् ॥ विधेमतेनाम ॥ विधेस्त्वमस्माकंनाम ॥ वाचस्पतिःसोमंपिबतु ॥ आस्मासुनृम्णंधात्स्वाहाइत्यंतंपठन्जुहोति ॥ वाचस्पतयेब्रह्मणइदं० ॥ ॐपूर्णापश्चादुतपूर्णापुरस्तादुन्मध्यतःपौर्णमासीजिगाय ॥ तस्यांदेवाअधिसंवसंतउत्तमेनाकइहमादयंताꣳ स्वाहा ॥ पूर्णमासायेदं० ॥ ॐयत्तेदेवाअदधुर्भागधेयममावास्येसंवसंतोमहित्वा ॥ सानोयज्ञंपिपृहिविश्ववारेरयिंनोधेहिसु

भगेसुवीरꣳस्वाहा ॥ अमावास्यायाइदं० ॥ ततउक्तरीत्याचरुश्रपणंकृत्वाचरुहोमः ॥ दर्व्यासकृदवदायजुहोति ॥ ॐअग्नाविष्णुभ्याꣳस्वाहा ॥ अग्नाविष्णुभ्यामिदं० ॥ ॐसरस्वत्यैस्वाहा ॥ सरस्वत्याइदं० ॥ ॐसरस्वतेस्वाहा ॥ सरस्वतइदं० ॥ ॐअग्नयेभगिनेस्वाहा ॥ अग्नयेभगिनइदं० ॥ ॐअग्नयेस्विष्टकृतेस्वाहा ॥ अग्नयेस्विष्टकृतइदं० ॥ ततःसर्वप्रायश्चित्तंव्याहृतिचतुष्टयंहुत्वाचार्यायदक्षिणांदत्वाप्रमादात्कुर्वतांकर्मेतिकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ इत्यन्वारंभणीयस्थालीपाकः ॥ ॥छ ॥

## ॥ १६९ ॥ दर्शपूर्णमासस्थालीपाकप्रयोगः ॥

श्रीः ॥ तस्यचायंक्रमः ॥ गृहप्रवेशस्थालीपाकानंतरंपौर्णमासंपर्वयदाभवतितदाचतुर्दश्यांदशहोतृसारस्वतहोमपूर्वकंअन्वारंभणस्थालीपाकंकृत्वापौर्णमास्याःस्थालीपाकःस्वकालेकार्यः ॥ श्रौतभक्तित्वादिष्टिकालोस्यकालः ॥ अथप्रयोगः ॥ सपत्नीकोगृह्याग्नेःपश्चादुपविश्याचम्यप्राणानायम्यदेशकालौसंकीर्त्यदर्शपूर्णमासस्थालीपाकाभ्यांयक्ष्ये ॥ तत्राद्यपौर्णमासस्थालीपाकेनयक्ष्येइतिपौर्णमास्यां ॥ पूर्वसंकल्पितदर्शस्थालीपाकेनयक्ष्यइत्यमावास्यायामितिसंकल्प्यगणेशपूजनादिकृत्वाग्निंप्रज्वाल्यसमिद्वयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वापौर्णमासस्थालीपाकहोमकर्मणियक्ष्यमाणादेवताःपरिग्रहीष्यामि ॥ अग्निंसमिद्भ्यांअग्निंचरुणाअग्निꣳस्विष्टकृतंचरुणा ॥प्रायश्चित्तदेवताश्चाज्येनयक्ष्यइत्युक्त्वासमिधावग्नावाधायपरिसमूहनादिकृत्वाशृतंचरुंबर्हिष्याधायसमिद्वयात्मकंइध्मंतूष्णींहुत्वादर्व्याचरोःसकृदवदायजुहोति ॥ ॐअग्नयेस्वाहा ॥ अग्नयइदं० ॥ ॐअग्नयेस्विष्टकृतेस्वाहा ॥ अग्नयेस्विष्टकृतइदं० ॥ ततःसामान्यप्रायश्चित्तंचाज्येनहुत्वा परिषेकविसर्गांतंकृत्वाविष्णुंस्मरेत् ॥ इतिपौर्णमासस्थालीपाकः ॥ एवमेवदर्शस्थालीपाकः ॥ ॥ ॥ ॥

# ॥ १७० ॥ आग्रयणस्थालीपाकः ॥

श्रीः॥अयंसूत्रानुक्तोपिशिष्टपरिगृहीतत्वाल्लिख्यते॥ सचशरदिवसंतेचकार्यः ॥ अग्नेःपश्चात्प्राङ्मुखःसपत्नीकउपविश्यदेशकालौ संकीर्त्यव्रीह्यादिधान्यानांप्राशनाधिकारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंपंचाज्यानीहोमपूर्वकंआग्रयणस्थालीपाकंकरिष्येइतिसं कल्प्यगणेशपूजादिकृत्वाऽग्निंप्रज्वाल्यसमिद्धयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वा आग्रयणस्थालीपाकहोमकर्मणिया यक्ष्यमाणदेवतास्ताःपरिग्रहीष्यामि ॥ तूष्णीमग्निमिध्मेन ॥ इंद्रंद्यावापृथिव्यौऋतून् इदुवत्सरपरिवत्सरसंवत्सरान् देवांश्चा ज्येन॥इंद्राग्नी विश्वान्देवान् द्यावापृथिव्यौचचरुणायक्ष्ये॥अग्निंस्विष्टकृतंचरुणा सामान्यप्रायश्चित्तदेवताश्चाज्येनयक्ष्यइत्यु क्त्वासमिधावग्नावादध्यात्॥अयमापूर्विकपक्षेणकार्यः॥परिसमूहनादिकृत्वातूष्णीमिध्मंहुत्वापंचाज्यानीराज्येनजुहोति॥ॐ श तायुधायशतवीर्यायशतोतयेभिमातिषाहे॥शतंयोनःशरदोअजीतानिंद्रोनेषदतिदुरितानिविश्वास्वाहा॥इंद्रायेदं०॥ॐ येचत्वा रःपथयोदेवयानाअंतराद्यावापृथिवीवियंति ॥ तेषांयोअज्यानिमजीतिमावहात्तस्मैनोदेवाःपरिदत्तेहसर्वेस्वाहा ॥ द्यावापृथि वीभ्यामिदं०॥ॐ ग्रीष्मोहेमंतउतनोवसंतःशरद्वर्षाःसुवितंनोअस्तु॥ तेषामृतूनांशतशारदानांनिवातएषामभयेस्यामस्वाहा ॥ ऋतुभ्यइदं० ॥ ॐ इदुवत्सरायपरिवत्सरायसंवत्सरायकृणुताबृहन्नमः॥तेषांवयंसुमतौयज्ञियानांज्योगजीताअहताःस्यामस्वा हा॥इदुवत्सरपरिवत्सरसंवत्सरेभ्यइदं० ॥ ॐ भद्रांनःश्रेयःसमनैष्टदेवास्त्वयावसेनसमशीमहित्वा॥सनोमयोभूःपितोआविश स्वशंतोकायतनुवेस्योनःस्वाहा॥देवेभ्यइदं०॥इतिपंचाज्याहुतीर्हुत्वा॥ततःपूर्ववच्चरुंशृतमुदगुद्वास्यबर्हिष्याधायदर्व्योपहत्यसकृ दवदायजुहोति॥ॐ इंद्राग्निभ्यांस्वाहा इंद्राग्निभ्यामिदं० ॥ ॐ विश्वेभ्योदेवेभ्यःस्वाहा विश्वेभ्योदेवेभ्यइदं०॥ॐ द्यावापृथि

वीभ्याᳪंस्वाहा ॥ द्यावापृथिवीभ्यामिदं०॥ॐ अग्नयेस्विष्टकृतेस्वाहा ॥ अग्नयेस्विष्टकृतइदं० ॥ ततःआज्येनव्याहृतिचतुष्टयंस र्वप्रायश्चित्तंहुत्वाग्निंप्रार्थ्याचार्यायदक्षिणांदत्वाकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ ततःहुतशेषेणब्राह्मणान्संभोज्यस्वयंनवान्नप्राश नंकुर्यात् ॥ यद्यप्याग्रयणस्थालीपाकादिकंसूत्रेकंठतोनोक्तंतथापिश्रौतमध्येस्मार्ताम्नानंकुर्वतासूत्रकृतोक्तप्रायमेव ॥ श्रौतभाक्त्वे पिस्थालीपाकानांदर्वीहोमत्वान्नसर्वातिदेशः ॥ आग्रयणस्थालीपाकत्वादेवब्राह्मणपरिवेषणोत्तरंभोजनात्प्रागेवपुरोडाशवत्स्वयं प्राश्यपत्नींचप्राशयित्वाशुद्धाचमनोत्तरंभोजनंकार्यं ॥ तथैवसकलहिरण्यकेशिशिष्टानुष्ठानपरंपरादर्शनंच ॥ इत्याग्रयणस्था० ॥

## ॥ १७१ ॥ सभार्यस्यप्रवासविधिः ॥

श्रीः ॥ यदिसभार्यःप्रयास्यंस्तर्ह्यग्निंसमारोप्यगच्छेत् ॥ अथसमित्समारोपः ॥ ॐ अयंतेयोनिर्ऋत्वियोयतोजातोअरोचथाः ॥ तंजानन्नग्नआरोहाथानोवर्धयारयिं ॥ इतिसमिधमग्नौप्रताप्यशुचिर्धारयति ॥ अथात्मसमारोपः ॥ हस्तंप्रताप्यमुखेननासिक यावाऊष्माकर्षणंकरोति ॥ ॐ यातेअग्नेयज्ञियातनूस्तयेह्यारोहात्मात्मानं ॥ अच्छावसूनिकृण्वन्नस्मेनर्यापुरूणि ॥ यज्ञोभूत्वाय ज्ञमासीदस्वांयोनिं ॥ जातवेदोभुवआजायमानःसक्षयएहीति ॥ प्रत्यक्षस्याग्नेःसकाशाद्देवतारूपस्याग्नेररण्योरात्मनिवाऽऽनय नंसमारोपणं ॥ तद्यजमानोध्वर्युर्वाकुर्यात् ॥ आत्मसमारोपणंतुयजमानस्यैव ॥ नद्युत्तरणेग्रामसीमातिक्रमेचदंपत्योरन्वारंभः ॥ आत्मसमारोपपक्षेसर्वदाअस्पृश्यस्पर्शनंजलेनिमज्यस्नानंस्त्रीगमनंचाकुर्वन्मूत्रपुरीषोत्सर्गेशौचमकृत्वाचिरकालंनतिष्ठेत् ॥ यत्र गत्वावसतितत्रउद्धननादिसंस्कृतायतनेश्रोत्रियागारादाहृतमग्निंसंस्थाप्यप्रज्वाल्यतत्रसमित्स्थमग्निमवरोपयति ॥ ॐआजुह्वानः सुप्रतीकःपुरस्तादग्नेस्वांयोनिमासीदसाध्या ॥ अस्मिन्त्सधस्थेअध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत ॥ उद्बुध्यस्वाग्नेप्रतिजा

१ संस्काररत्नमालायां प्राशनेमंत्रउक्तः भद्रान्नःश्रेयःसमनैष्ट० इति । इदमेवयुक्तं.

गृह्येनमिष्टापूर्तेसꣳसृजेथामयंच ॥ पुनःकृण्वꣳस्त्वापितरंयुवानमन्वाताꣳसीत्त्वयितंतुमेतमितिद्वाभ्यामवरोप्यौपासनादिकंकुर्यात् ॥ अथात्मारूढाग्न्यवरोपः ॥ उद्धननादिसंस्कृतायतनेऽग्निमानीयप्रज्वाल्यतत्रमुखेननासिकयावाश्वासमवरोपयति ॥ ॐउपावरोहजातवेदःपुनस्त्वंदेवेभ्योहव्यंवहनःप्रजानन्॥आयुःप्रजाꣳरयिमस्मासुधेह्यजस्रोदीदिहिनोदुरोणइति ॥ इतिसभा०

## ॥ १७२ ॥ अर्कविवाहः ॥

श्रीः ॥ कर्ताआदित्यवारेहस्तनक्षत्रेशनिवासरेवायस्मिन्कस्मिंश्चिच्छुभदिनेवापूर्वाह्णेग्रामात्प्राच्यामुदीच्यांवादिशिविद्यमानंसुपुष्पपलाशशाखाढ्यंसलक्षणमेकमर्कंपरीक्ष्यस्नात्वालंकृतोऽहतवासाआरक्तगंधादिभूषितःअर्कसंनिधिमागत्यतंसंस्नाप्यवाससासंवेष्ट्यआरक्तगंधादिभिर्भूषयित्वाअर्ककन्यादानार्थमेकंविप्रमाचार्यत्वेनपरिकल्प्यअर्कसमीपएवमधुपर्कपर्यंतंसयथादृष्टिगोचरोनभवेत्तथोपविश्याचम्यप्राणानायम्यदेशकालौसंकीर्त्यममतृतीयमानुषीविवाहसूचितदोषनिरसनपूर्वकतृतीयमानुषीविवाहाधिकारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंस्वस्यतृतीयमर्कविवाहंकरिष्येइतिसंकल्प्यतदंगंगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंहिरण्येननांदीश्राद्धंचविधायअर्कस्योत्तरतःहोमार्थंस्थंडिलमुपकल्पयेत् ॥ ततोदातावरेणोपकल्पितयामधुपर्कसामग्र्याउष्णीषादिभिर्हस्तकर्णादिभूषणैश्चार्कप्रतिग्रहीतारंपूजयेत् ॥ दातृशाखयैवमधुपर्कः ॥ ततःप्रतिग्रहीता ॥ त्रिलोकवासिन्सप्ताश्वछाययासहितोरवे ॥ तृतीयोद्वाहजंदोषंनिवारयसुखंकुरु ॥ इत्यर्कस्यपुरतस्तिष्ठन्सूर्यंसंप्रार्थ्यश्वेतवस्त्रेणकार्पासतंतुभिश्चतंसंवेष्ट्य ॐआसत्येनरजसा० विपश्यन् इतिछाययासहितंरविंतत्रावाह्यतेनैवमंत्रेणासनाद्याचमनीयांतानुपचारान्समर्प्य ॐआसत्येनरजसा०विपश्यन् १ ॐआपोहिष्ठा०३ इतिसर्वांतेभिषिच्यआसत्येनेत्यनेनैवमंत्रेणवस्त्रोपवीतमाल्यगंधपुष्पधूपदीपैःसंपूज्यगुडौ

दनंनिवेद्यतांबूलादिसमर्पयेत् ॥ ममप्रीतिकरायेयंमयास्पृष्टापुरातनी ॥ अर्कजाब्रह्मणासृष्टाअस्माकंप्रतिरक्षतु ॥ इत्यर्कंप्रदक्षिणी कुर्वन्पठित्वा ॥ नमस्तेमंगलेदेविनमःसवितुरात्मजे ॥ त्राहिमांकृपयादेविपत्नीत्वंमइहागता ॥ अर्कत्वंब्रह्मणासृष्टःसर्वप्राणिहिताय च ॥ वृक्षाणामादिभूतस्त्वंदेवानांप्रीतिवर्धनः॥ तृतीयोद्वाहजंपापंमृत्युंचाशुविनाशय ॥ आयुर्देहियशोदेहिप्रजांदेहिपशूनपि ॥ देहिमेर्कश्रियंपुष्टिंस्वस्थानेर्कस्थिरोभव ॥ इतिपुनःप्रदक्षिणीकुर्यात् ॥ ततोर्ककन्यावरणं ॥ प्रतिग्रहीतृपक्षीयाअमुकप्रवरान्वितामुकगोत्रोत्पन्नायामुकप्रपौत्रायामुकपौत्रायामुकपुत्रायामुकशर्मणेवराय काश्यपगोत्रांआदित्यस्यप्रपौत्रींसवितुःपौत्रींअर्कस्यपुत्रीमिमामर्ककन्यांवृणीमहेइतिवदेयुः ॥ वृणीध्वमित्याचार्यःप्रतिवदेत् एवंपुनर्द्विः ॥ततोवरःसुमुहूर्ते ॐस्वस्तिनइंद्रोवृद्धश्रवाः ॐ अष्टौदेवावसवःसोम्यासइतिमंत्रौपठन्नर्कंनिरीक्षेत् ॥ ततआचार्यप्रमुखैराशीर्घोषवद्भिर्द्विजैर्युतः अर्ककन्यादानार्थंकल्पितमाचार्यंस्वसमीपआहूयोपवेश्यतस्मात्तांविधिवत्प्रतिगृह्णीयात् ॥ सविधिर्यथा ॥ आचार्यःसंकल्पपूर्वकंपूर्ववन्नामगोत्रादिकमुच्चार्यइमामर्कनाम्नींकन्यांतृतीयमानुषीविवाहसूचितदोषनिरसनपूर्वकतृतीयमानुषीविवाहाधिकारसिद्ध्येतुभ्यमहंसंप्रददेइतिदद्यात् ॥ प्रतिग्रहीताप्रतिगृह्णामीतिप्रतिगृह्णीयात् ॥ एवंपुनर्द्विः ॥ ततआचार्यःप्रतिग्रहीतारंप्रार्थयेत् ॥ अर्ककन्यामिमांविप्रयथाशक्तिविभूषितां ॥ अमुकगोत्रायामुकशर्मणेतुभ्यंदत्तांविप्रसमाश्रयेति ॥ ततःप्रतिग्रहीतातूष्णीमेवविवाहवत्कंकणबंधनपूर्वकं अंजल्यक्षतारोपणंकृत्वायावत्पंचवृतंसूत्रंतावदासत्येनेतिमंत्रेणगायत्र्यावासंवेष्टयेत् ॥ ततस्तत्सूत्रंपुनःपंचधाकृत्वार्कस्यवामस्कंधे ॐबृहत्सामक्षत्रभृद्वृद्धवृष्णियंत्रिष्टुभौजःशुभितमुग्रवीरं ॥ इंद्रस्तोमेनपंचदशेनमध्यमिदंवातेनसगरेणरक्षेतिवध्वैतेनैव तस्मिन्सूत्रेभस्मप्रक्षिपेत् ॥ ततस्तांनीराज्ययथाविभवंभूषणैर्भूषयेत् ॥ ततोर्कस्यप्रागाद्यष्टदिक्षुक्रमेणमहीद्यौरित्यादिना

भूमिंस्पृष्ट्वा ओषधयइतितंडुलपुंजान्कृत्वा आजिघ्रेतिकलशान्संस्थाप्यस्थापितानष्टौकलशान्प्रत्येकंवस्त्रसूत्राभ्यांवेष्टयित्वा इमंमेगंगइतिहरिद्रागंधयुक्तशीतलजलेनापूर्यतेषुप्रत्येकंगंधादिकंतत्तन्मंत्रैर्निक्षिप्यपूर्णपात्रैरपिदधाति ॥ सर्वत्रमंत्रावृत्तिः ॥ ततस्तेषुनाममंत्रेणैवमहाविष्णुमावाह्यासनाद्यैरुपचारैःपूजयेत् ॥ ततःअर्कस्योत्तरतउपकल्पितस्यस्थंडिलस्यपश्चादुपविश्य अर्कंसंस्पृशन्स्थंडिलस्योल्लेखनादिविधिनासंस्कारंविधायतत्रयोजकनामानंलौकिकाग्निंप्रतिष्ठाप्यप्रज्वाल्यध्यात्वासमित्रयमा दायश्रद्धएहीत्यादिप्राणायामांतंकृत्वाअर्कविवाहकर्मणियायक्ष्यमाणाइत्यादिव्याहृत्यंतंप्रसाधनीदेव्यंतंवोक्त्वाप्रधानहोमेबृह स्पतिंअग्निंवायुंसूर्यंप्रजापतिंचैकैकयाज्याहुत्यायक्ष्येइत्युक्त्वा अंगहोमेवरुणंद्विरित्यादिअग्निंस्विष्टकृतंहुतशेषाज्याहुत्यायक्ष्ये इत्यादिवाव्याहृतिहोमांतंप्रसाधनीदेवीहोमांतंवान्वाधानोत्कीर्तितपक्षानुसारेणकुर्यात् ॥ ततःप्रधानहोमः ॥ ॐसंगोभरां गिर्सोनक्षमाणोभगइवेदर्यमणंनिनाय ॥ जनेमित्रोनदंपतीअनक्तिबृहस्पतेवाजयाशूँरिवाजौस्वाहा ॥ बृहस्पतयइदं० ॥ ॐयस्मैत्वाकामकामायवयंसम्राड्यजामहे ॥ तमस्मभ्यंकामंदत्वाथेदंत्वंघृतंपिबस्वाहा ॥ अग्नयइदं० ॥ ॐभूस्वाहा अग्नयइदं० ॥ ॐभुवःस्वाहा वायवइदं० ॥ ॐसुवःस्वाहा सूर्यायेदं० ॥ ॐभूर्भुवःसुवःस्वाहा प्रजापतयइदं० ॥ ततोन्वाधानोत्कीर्तितप क्षानुसारेणअंगहोमादिस्विष्टकृदादिवासर्वहोमशेषंसमापयेत् ॥ नात्रत्रिवृदन्नहोमः ॥ ततोर्कंप्रदक्षिणीकृत्य ॥ मयाकृतमिदं कर्मस्थावरेषुजरायुणा ॥ अर्कापत्यानिनोदेहितत्सर्वंक्षंतुमर्हसि ॥ इतितंसंप्रार्थ्यशंनोवातइतिशांतिंपठित्वागोयुग्ममाचार्यायद त्वेतरेभ्योपिविप्रेभ्योयथाशक्तिदक्षिणांदद्यात् ॥ ततआचार्यःस्थापितकुंभस्थाभिरद्भिःसार्कंप्रतिग्रहीतारमभिषिंचेत् ॥ ततः प्रतिग्रहीतातानिवासांसित्यक्त्वान्यानिधारयेत् ॥ त्यक्तानिवासांस्याचार्यस्य ॥ ततःपंचमदिवसेपूर्ववदर्कंसंपूज्यविसृज्यअग्निं

संपूज्यपुण्याहादिवाचयित्वाब्राह्मणान्संभोज्यभूयसींदत्वार्कभूषणवस्त्रादिब्राह्मणायदत्वाकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ ततोमानुषींविधिनोद्वहेत् ॥ अयंबाह्वृचोहोमविधिरिदानींबौधायनोक्तहोमविधेरनुपलंभादुक्तः ॥ अयंचार्कविवाहःकाश्यपगोत्रिणोनभवतिगोत्रैक्यात् ॥ अथवासूर्येणचंद्रायदत्तांआचार्योविभाव्यवरणादौकाश्यपगोत्रस्थानेअत्रिगोत्रंकन्याविशेषणत्वेनसंकीर्त्यआदित्यसवित्रर्कस्थानेचंद्रसोमेंदुशब्दानुच्चारयेत् ॥ लौकिकेलौकिकंचरेदितिवचनमत्रप्रमाणंइतिकेचित् ॥ अत्रगोत्रंनदोषायेत्यन्ये ॥ काश्यपगोत्रवरःस्वगोत्राविरुद्धगोत्रिणमाचार्यंपरिकल्प्यतस्मादर्कंप्रतिगृह्णीयात् ॥ आचार्यस्तुसूर्येणदत्तांविभाव्यवरणादौकाश्यपगोत्रस्थानेस्वगोत्रंकन्याविशेषणत्वेनसंकीर्त्यआदित्यसवित्रर्कशब्दस्थानेस्वपितामहपित्रोःस्वस्यचक्रमेणनामानिसंकीर्तयेत् ॥ एवंरीत्यैवकाश्यपगोत्रवरस्यार्कविवाहोनिर्वाह्योभवतीतियुक्तंचेत्स्वीकार्यंसूरिभिः ॥ इतिसंस्काररत्न० ॥

## ॥ १७३ ॥ मोटनंमेरुतंत्रे ॥

श्रीः ॥ अथमोटनकंवक्ष्येदेवाविर्भावकारणं ॥ पाकक्रियाप्रकर्तव्याचतुर्भक्ष्यसमन्विता ॥ भार्ययासाधकेंद्रस्यपातिव्रत्यादियुक्तया ॥ अप्रसूताःस्त्रियःपंचआहूयसकुमारिकाः ॥ अलंकृताःपवित्राश्चएकपंक्त्योपवेशयेत् ॥ तत्रादौविघ्नपस्थानमन्नेतुवटुकस्यच ॥ चकारात्कुलदेवतायाः ॥ ताःसंपूज्यमहत्पात्रेपवित्रेतत्रचार्पयेत् ॥ क्रमाद्द्विगुणमानेनमध्वाज्येचसितांदधि ॥ दुग्धंचनिक्षिपेत्तत्रनैवेद्यंतत्रनिःक्षिपेत् ॥ कुमारिकायाहस्तेनमंथयेयुःस्त्रियश्चतत् ॥ स्त्रीभिस्तस्मिन्मथ्यमानेदेवावेशःप्रजायते ॥ देवावेशेजायमानेसुगंधोवातिमारुतः ॥ सर्वंमनोगतंवक्तिदेवताशुप्रसीदति ॥ सिद्ध्यंतिसर्वकार्याणिमोटनानांशतेनच ॥ नखैर्भवेद्विवाहस्तुपंचाशद्भिःसुतस्तथा ॥ नखैर्विंशैरित्यर्थः ॥ पंचाशद्भिःसुतलाभइत्यर्थः ॥ अशीत्यागतराज्याप्तिर्विंशत्यालभतेधनं ॥

अष्टोत्तरशतेनापिअसाध्येनतुमेलयेत् ॥ अष्टोत्तरशतसंख्यैरसाध्येनकार्येणापिमेलयेत् ॥ असाध्यमपिकार्यंसाधयेदित्यर्थः ॥ कौमारिकाचेष्टदेवंकौमार्याईइरितोविधिरिति ॥ कौमारिकाचेष्टदेवमुद्दिश्यउत्तमपतिलाभार्थमिमंविधिंकुर्यात् ॥ अयंविधिःकौमार्याएवईइरितःकुमारिकांविनाविधिर्नभवतीत्यर्थः ॥ कौमारीयोगेश्वरी ॥ तन्माहात्म्येतस्यास्तथैववर्णितत्वात् ॥ तदुद्देशेनायंविधिर्भवतीत्यर्थः ॥ एवमन्येष्वपिसंस्कारादिकर्मस्वाचारश्चेत्कार्यं ॥ इतिसंस्काररत्नमालायांमोटनविधिः ॥ अस्यैवबोडणईतिरूढंनाम

## ॥ १७४ ॥ कूष्मांडहोमः ॥

श्रीः ॥ यजमानःआचम्यप्राणानायम्यदेशकालौसंकीर्त्यममास्यकुमारस्यकरिष्यमाणउपनयने कन्यायाविवाहेवामंगलारंभात्पूर्वंमध्येवाउपस्थितसूतकनिवृत्तिपूर्वकंशरीरशुद्ध्याप्राप्तकर्मण्यधिकारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंजमदग्निप्रोक्तंकूष्मांडहोमंकरिष्ये ॥ तदंगंगणपतिपूजनादिकरिष्ये ॥ इतिसंकल्प्यकृत्वाचार्यंवृत्वा आचार्यस्तुयथास्वर्गेइत्यादिसंप्रार्थयेत् ॥ अथाचार्यआचम्यप्राणानायम्यदेशकालादिनिर्दिश्ययजमानेनकूष्मांडहोमकर्मणिवृतोहमाचार्यकर्मकरिष्येइतिसंकल्प्य आसनस्थलशुद्धिसर्षपविकिरणांतंकृत्वा ॥ कूष्मांडहोमंकर्तुंस्थंडिलादिसकलंकर्मकरिष्यइतिसंकल्प्य ॥ स्थंडिलसंस्कारंकृत्वापावकनामानमग्निंप्रतिष्ठाप्यचत्वारिशृंगेत्यादिभिर्ध्यात्वान्वादध्यात् ॥ समित्त्रयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वाकूष्मांडहोमकर्मणियायक्ष्यमाणादेवतास्ताःसर्वाःपरिग्रहीष्यामि जातवेदसमग्निमिध्मेनेत्यादिव्याहृत्यंतमुक्त्वावैशेषिकप्रधानहोमे चरुपक्षेसवितारंचरुणायक्ष्ये अग्निंस्विष्टकृतंचरुणायक्ष्ये देवानादित्यान् । विश्वान्देवान् । द्यावापृथिव्यौसरस्वतींच । इंद्राग्नीमित्रावरुणौसोमंधातारंबृ

१ आरब्धमांगलिकआशौचादिसंपातेसंस्कार्यमातूरजआद्यन्योपघातकप्राप्तौवाप्रसंगानुरोधेनसंकल्पेतत्तदूहःप्रायश्चित्तीयेस्मिन्नेवहोमेपूर्वक्षौरादि ।

हस्पतिंच। जातवेदसं। अग्निंगार्हपत्यं। ज्योतिः। अग्निं। अग्निंगार्हपत्यं। अग्निं। अग्निंगार्हपत्यंद्विः। अग्निं। अग्निंगार्हपत्यं। अपः शुंधनीः। अपोहिरण्यवर्णाः। वरुणंद्विः। अग्नीवरुणौद्विः। अयासमग्निं। अग्निमिंद्रंच। उग्रंपश्याꣳराष्ट्रभृतमप्सरसौच। उग्रंपश्याꣳराष्ट्रभृतंयमंच। वरुणंचतुः। अग्नीवरुणौद्विः। संकुसुकंविकुसुकंनिर्ऋथंनिःस्वनंच। कृत्यांनिर्ऋतिंच। दुःशꣳसानुशꣳसघणानुघणांश्च। त्वष्टारं। आयुरग्निं। आयुर्दामग्निं। अग्निंवरुणमदितिंविश्वान्देवांश्च। अग्निंपवमानंत्रिः। अग्निंजातवेदसं। जातवेदसं। अंग्निंवृत्रहणं। अग्निं। उषसंनिम्रुचंच। देवान्। जातवेदसमग्निं। अग्निं। ब्रह्माणंद्विः। वैश्वानरं ५१ चैताःप्रधानदेवताआज्येन। 'चरुपक्षे त्विषिंदेवींचतुः। अभ्यावर्तिनमग्निंचतुर्वारमाज्येन। अग्निंवैश्वानरंसमिधायक्ष्ये' ॥ अंगहोमेवरुणंद्विरित्यादिसꣳस्रावांतमुक्त्वासमिधोग्नावाधायपरिषेकादिसामान्यप्रधानांतंकृत्वा अवदानधर्मेणचरुमवदायसावित्रींपुरोनुवाक्यामनूच्यसावित्र्यैवयाज्ययास्वाहांतयाजुहुयात्॥ ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि धियोयोनःप्रचोदयादों३ तत्सवितु० प्रचोदयात्स्वाहा ॥ सवित्रइदं० ॥ ततःस्विष्टकृतमवदायहव्यवाहमितिपुरोनुवाक्यामनूच्यस्विष्टमग्नइतियाज्ययाजुहुयात्॥ ॐ हव्यवाहमभिमातिषाहꣳरक्षोहणंपृतनासुजिष्णुं॥ ज्योतिष्मंतंदीद्यंतंपुरंधिमग्निꣳस्विष्टकृतमाहुवेमों३ स्विष्टमग्नेअभितत्पृणाहिविश्वादेवपृतनाअभिष्य ॥ उरुंनःपंथांप्रदिशन्विभाहिज्योतिष्मद्धेह्यजरंनआयुःस्वाहा ॥ अग्नयेस्विष्टकृतइदं० ॥ अथप्रधानहोमः ॥ ॐ यद्देवादेवहेळनंदेवासश्चकृमावयं ॥ आदित्यास्तस्मान्मामुंचतर्तस्यर्तेनमामितस्वाहा ॥ देवेभ्यआदित्येभ्यइदं० ॥ ॐ देवाजीवनकाम्यायद्वाचानृतमूदिम ॥ तस्मान्नइहमुंचतविश्वेदेवाःसजोषसःस्वाहा ॥ विश्वेभ्योदेवेभ्यइदं० ॥ ॐ ऋतेनद्यावापृथिवीऋतेनत्वꣳसरस्वति ॥ कृतान्नःपाह्येनसोयत्किंचानृतमूदिमस्वाहा ॥ द्यावापृथिवीभ्यांसरस्वत्यैचेदं० ॥

ॐ इंद्राग्नीमित्रावरुणौसोमोधाताबृहस्पतिः ॥ तेनोमुंचंत्वेनसोयदन्यकृतमारिमस्वाहा ॥ इंद्राग्निमित्रावरुणसोमधातृबृहस्पति
भ्यइदं० ॥ ॐ सजातशꣳसादुतजामिशꣳसाज्ज्यायसःशꣳसादुतवाकनीयसः ॥ अनाधृष्टंदेवकृतंयदेनस्तस्मात्त्वमस्मान्जातवे
दोमुमुग्धिस्वाहा ॥ जातवेदसइदं० ॥ ॐ यद्वाचायन्मनसाबाहुभ्यामूरुभ्यामष्ठीवद्भ्याꣳशिश्नैर्यदनृतंचकृमावयं ॥ अग्निर्मात
स्मादेनसोगार्हपत्यःप्रमुंचतुचकृमयानिदुष्कृतास्वाहा ॥ अग्नयेगार्हपत्यायेदं० ॥ ॐ येनत्रितोअर्णवान्निर्बभूवयेनसूर्यंतमसोनिर्मु
मोच ॥ येनेंद्रोविश्वाअजहादरातीस्तेनाहंज्योतिषाज्योतिरानशानआक्षिस्वाहा ॥ ज्योतिषइदं० ॥ ॐ यत्कुसीदमप्रतीत्तंमयेह
येनयमस्यनिधिनाचरामि ॥ एतत्तदग्नेअनृणोभवामिजीवन्नेवप्रतितत्तेदधामिस्वाहा ॥ अग्नयइदं० ॥ ॐ यन्मयिमातागर्भेस
त्येनश्चकारयत्पिता ॥ अग्निर्मातस्मादेनसोगार्हपत्यःप्रमुंचतुदुरितायानिचकृमकरोतुमामनेनसꣳस्वाहा ॥ अग्नयेगार्हपत्यायेदं० ॥
ॐ यदापिपेषमातरंपितरंपुत्रःप्रमुदितोधयन् ॥ अहिꣳसितौपितरौमयातत्तदग्नेअनृणोभवामिस्वाहा ॥ अग्नयइदं० ॥ ॐ यदं
तरिक्षंपृथिवीमुतद्यांयन्मातरंपितरंवाजिहिꣳसिम ॥ अग्निर्मातस्मादेनसोगार्हपत्यःप्रमुंचतुदुरितायानिचकृमकरोतुमामनेनसꣳ
स्वाहा ॥ अग्नयेगार्हपत्यायेदं० ॥ ॐ यदाशसानिशसायत्पराशसायदेनश्चकृमानूतनंयत्पुराणं ॥ अग्निर्मा० नेनसꣳस्वाहा ॥
अग्नयेगार्हपत्यायेदं० ॥ ॐअतिक्रामामिदुरितंयदेनोजहामिरिप्रंपरमेसधस्थे ॥ यत्रयंतिसुकृतोनापिदुष्कृतस्तमारोहामिसुकृतां
नुलोकꣳस्वाहा ॥ अग्नयइदं० ॥ ॐत्रितेदेवाअमृजतैतदेनस्त्रितएतन्मनुष्येषुमामृजे ॥ ततोमायदिकिंचिदानशेग्निर्मातस्मादेन
सोगार्हपत्यःप्रमुंचतुदुरितायानिचकृमकरोतुमामनेनसꣳस्वाहा ॥ अग्नयेगार्हपत्यायेदं० ॥ ॐ दिविजाताअप्सुजातायाजा
ताओषधीभ्यः ॥ अथोयाअग्निजाआपस्तानःशुंधंतुशुंधनीःस्वाहा ॥ अब्द्यःशुंधनीभ्यइदं० ॥ ॐ यदापोनक्तंदुरितंचरामयद्वा

दिवानूतनंयत्पुराणं ॥ हिरण्यवर्णास्ततउत्पुनीतनस्वाहा ॥ अद्भ्योहिरण्यवर्णाभ्यइदं० ॥ ॐ इमंमेवरुणश्रुधीहवमद्याचमृडय ॥
त्वामवस्युराचकेस्वाहा ॥ वरुणायेदं० ॥ ॐ तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबो
ध्युरुशꣳसमानआयुःप्रमोषीःस्वाहा ॥ वरुणायेदं० ॥ ॐ त्वंनोअग्नेवरुणस्यविद्वान्देवस्यहेडोवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमः
शोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत्स्वाहा ॥ अग्नीवरुणाभ्यामिदं० ॥ ॐ सत्वंनोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ ॥
अवयक्ष्वनोवरुणꣳरराणोवीहिमृडीकꣳसुहवोनएधिस्वाहा ॥ अग्नीवरुणाभ्यामिदं० ॥ ॐ त्वमग्नेअयास्ययासन्मनसाहितः ॥
अयासन्हव्यमूहिषेयानोधेहिभेषजꣳस्वाहा ॥ अयासेग्नयइदं० ॥ ॐ यददीव्यंनृणमहंबभूवादित्सन्वासंजगरजनेभ्यः ॥
अग्निर्मातस्मादिंद्रश्चसंविदानौप्रमुंचताꣳस्वाहा ॥ अग्नयइंद्रायचेदं० ॥ ॐ यद्धस्ताभ्यांचकरकिल्बिषाण्यक्षाणांवग्नुमुपजिघ्न
मानः ॥ उग्रंपश्याचराष्ट्रभृच्चतान्यप्सरसावनुदत्तामृणानिस्वाहा ॥ उग्रंपश्यायैराष्ट्रभृतेप्सरोभ्यामिदं० ॥ ॐ उग्रंपश्येराष्ट्र
भृत्किल्बिषाणियदक्षवृत्तमनुदत्तमेतत् ॥ नेन्नऋणानृणवइत्संमानोयमस्यंलोकेअधिरज्जुरायुस्वाहा ॥ उग्रंपश्यायैराष्ट्रभृतेयमा
यचेदं० ॥ ॐ अवतेहेडोवरुणनमोभिरवयज्ञेभिरीमहेहविर्भिः ॥ क्षयन्नस्मभ्यमसुरप्रचेतोराजन्नेनाꣳसिशिश्रथःकृतानिस्वाहा ॥
वरुणायेदं० ॥ ॐ उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमꣳश्रथाय ॥ अथावयमादित्यव्रतेतवानागसोअदितयेस्यामस्वाहा ॥
वरुणायेदं० ॥ ॐ इमंमेवरुणश्रुधी० ॥ वरुणायेदं० ॥ ॐ तत्त्वायामि० ॥ वरुणायेदं० ॥ ॐ त्वंनोअग्नेवरुणस्यविद्वान्० ॥
अग्नीवरुणाभ्यामिदं० ॥ ॐ सत्वंनोअग्ने० ॥ अग्नीवरुणाभ्यामिदं० ॥ ॐ संकुसुकोविकुसुकोनिर्ऋथोयश्चनिःस्वनः ॥ तेयुस्म
द्यक्ष्ममनागसोदूराद्दूरमचीचतꣳस्वाहा ॥ संकुसुकविकुसुकनिर्ऋथनिःस्वनेभ्यइदं० ॥ ॐ निर्यक्ष्ममचीचतेकृत्यांनिर्ऋतिंच ॥

तेनुयो १ स्मत्समृच्छातैतमंस्मैप्रसुवामसिस्वाहा ॥ कृत्यायैनिर्ऋतयेचेदं० ॥ ॐदुःश४ंसानुश४ंसाभ्यांघृणेनानुघृणेनच ॥ तेनान्यो १ स्मत्समृच्छातैतमंस्मैप्रसुवामसिस्वाहा ॥ दुःश४ंसानुश४ंसघणानुघणेभ्यइदं० ॥ ॐसंवर्चसापयसासंतनूभिरगन्महिमनसासं४शिवेन ॥ त्वष्टानोअत्रविदधातुरायोनुमार्ष्टुतन्वो १ यद्विलिष्टं४स्वाहा ॥ त्वष्ट्रइदं० ॥ ॐआयुष्टेविश्वतोदधदयमग्निर्वरेण्यः ॥ पुनस्तेप्राणआयातिपरायक्ष्मं४सुवामितेस्वाहा ॥ आयुषेग्नयइदं० ॥ ॐआयुर्दाअग्नेहविषोजुषाणोघृतप्रतीकोघृतयोनिरेधि ॥ घृतंपीत्वामधुचारुगव्यंपितेवपुत्रमभिरक्षतादिमं४स्वाहा ॥ आयुर्देग्नयइदं० ॥ ॐइममग्नआयुषेवर्चसेकृधितिग्ममोजोवरुणसं४शिशाधि ॥ मातेवास्माअदितेशर्मयच्छविश्वेदेवाजरदष्टिर्यथासत्स्वाहा ॥ अग्नयेवरुणायादितयेविश्वेभ्योदेवेभ्यइदं० ॥ ॐ अग्नआयूं४षिपवसआसुवोर्जमिषंचनः ॥ आरेबाधस्वदुच्छुनां४स्वाहा ॥ अग्नयेपवमानायेदं० ॥ ॐअग्नेपवस्वस्वपाअस्मेवर्चःसुवीर्यं ॥ दधद्रयिंमयिपोषं४स्वाहा ॥ अग्नयेपवमानायेदं० ॥ ॐअग्निर्ऋषिःपवमानःपांचजन्यःपुरोहितः॥ तमीमहेमहागयं४स्वाहा ॥ अग्नयेपवमानायेदं० ॥ ॐअग्नेजातान्प्रणुदानःसपत्नान्प्रत्यजातान्जातवेदोनुदस्व ॥ अस्मेदीदिहिसुमनाअहेळन्छर्मन्तेस्यामत्रिवरूथउद्भौस्वाहा ॥ अग्नयेजातवेदसइदं० ॥ ॐसहसाजातान्प्रणुदानःसपत्नान्प्रत्यजाताञ्जातवेदोनुदस्व ॥ अधिनोब्रूहिसुमनस्यमानोवयं४स्यामप्रणुदानःसपत्नान्त्स्वाहा ॥ जातवेदसइदं० ॥ॐ अग्नेयोनोभितोजनोवृकोवारोजिघां४सति ॥ तां४स्त्वंवृत्रहन्जहिवस्वस्मभ्यमाभरस्वाहा ॥ अग्नयेवृत्रघ्नइदं० ॥ अग्नेयोनोभिदासतिसमानोयश्चनिष्ट्यः ॥ तंवयं४समिधंकृत्वातुभ्यमग्नेपिदध्मसिस्वाहा ॥ अग्नयइदं० ॥ ॐयोनःशपादशपतोयश्चनःशपतःशपात् ॥ उषाश्चतस्मैनिम्रुक्कसर्वंपापं४समूहतां४स्वाहा ॥ उषसेनिम्रुचइदं० ॥ ॐयोनःसपत्नोयोरणोमर्तोभिदासतिदेवाः ॥ इध्मस्येवप्रक्षा

यतोमातस्योच्छेषिकिंचनस्वाहा ॥ देवेभ्यइदं० ॥ ॐयोमांद्वेष्टिजातवेदोयंचाहंद्वेष्मियश्चमां ॥ सर्वाꣳस्तानग्नेसंदहयाꣳश्चाहं द्वेष्मियेचमाꣳस्वाहा ॥ जातवेदसेग्नयइदं० ॥ ॐयोअस्मभ्यमरातीयाद्यश्चनोद्वेषतेजनः ॥ निंदाद्योअस्मान्दिप्साच्चसर्वाꣳस्ता न्मंष्मषाकुरुस्वाहा ॥ अग्नयइदं० ॥ ॐसꣳशितंमेब्रह्मसꣳशितंवीर्यं१ वलं ॥ सꣳशितंक्षत्रंमेजिष्णुयस्याहमस्मिपुरोहितःस्वाहा ॥ ब्रह्मणइदं० ॥ ॐउदेषांबाहूअतिरमुद्वर्चोऽअथोवलं ॥ क्षिणोमिब्रह्मणामित्रानुन्नयामिस्वाँअहꣳस्वाहा ॥ ब्रह्मणइदं० ॥ ॐपुनर्मनःपुनरायुर्मआगात्पुनश्चक्षुःपुनःश्रोत्रंमआगात्पुनःप्राणःपुनराकूतंमआगात्पुनश्चित्तंपुनराधीतंमआगात् ॥ वैश्वानरोमे दब्धस्तनूपाअवबाधतांदुरितानिविश्वास्वाहा ॥ वैश्वानरायेदंनमम ॥ ५१॥ अथचरुपक्षेचरुः ॥ ॐसिꣳहेव्याघ्रउतयापृदाकौ ॥ त्विषिरग्नौब्राह्मणेसूर्येया ॥ इंद्रंयादेवीसुभगाजजान ॥ सानआगन्वर्चसासंविदानास्वाहा ॥ त्विष्यैदेव्याइदं० ॥ ॐयाराज न्येदुंदुभावायतायां ॥ अश्वस्यक्रंद्येपुरुषस्यमायौ ॥ इंद्रंया० ॥ सानआगन्व० दानास्वाहा ॥ त्विष्यैदेव्या० ॥ ॐयाहस्तिनि द्वीपिनियाहिरण्ये ॥ त्विषिरश्वेषुपुरुषेषुगोषु ॥ इंद्रं० सान० ॥ त्विष्यै० ॥ ॐरथेअक्षेषुवृषभस्यवाजे ॥ वातेपर्जन्येवरुणस्य शुष्मे ॥ इंद्रंयादेवीसुभगाजजान ॥ सानआगन्वर्चसासंविदानास्वाहा ॥ त्विष्यैदेव्याइ० ॥ ॐअग्नेभ्यावर्तिन्नभिनआवर्तस्वा युषावर्चसासन्यामेधयाप्रजयाधनेनस्वाहा ॥ अभ्यावर्तिनेग्नयइदं० ॥ ॐअग्नेअंगिरःशतंतेसंत्वावृतःसहस्रंतउपावृतः ॥ तासां पोषस्यपोषेणपुनर्नोनष्टमाकृधिपुनर्नोरयिमाकृधिस्वाहा ॥ अभ्या० ॥ ॐपुनरूर्जानिवर्तस्वपुनरग्नइषायुषा ॥ पुनर्नःपाहिविश्व तःस्वाहा ॥ अभ्या० ॥ ॐसहरैयानिवर्तस्वाग्नेपिन्वस्वधारया ॥ विश्वप्स्नियाविश्वतस्परिस्वाहा ॥ अभ्यावर्तिनेग्नय० ॥ तत उपस्थानं ॥ ॐवैश्वानरायप्रतिवेदयामोयदीनृणꣳसंगरोदेवतासु ॥ सएतान्पाशान्प्रमुचन्प्रवेदसनोमुंचातुदुरितादवद्यात् ॥

वैश्वानरःपर्वयान्नःपवित्रैर्यत्संगुरमभिधावाम्याशां ॥ अनाजानन्मनसायाचमानोयदत्रैनोअवतत्सुवामि ॥ अमीयेसुभगेदिवि विचृतौनामतारके ॥ प्रेहामृतस्ययच्छतामेतद्बद्धकमोचनं ॥ विजिहीर्ष्वलोकान्कृधिबंधान्मुंचासिबद्धकं ॥ योनेरिवप्रच्युतोगर्भः सर्वान्पथोअनुष्व ॥ सप्रजानन्प्रतिगृभ्णीतविद्वान्प्रजापतिःप्रथमजाऋतस्य ॥ अस्माभिर्दत्तंजरसःपरस्तादच्छिन्नंतंतुमनुसंच रेम ॥ ततंतंतुमन्वेकेअनुसंचरंतियेषांदत्तंपित्र्यमायनवत् ॥ अबंध्येकेददतःप्रयच्छादातुंचेच्छक्नवांसःस्वर्गएषां ॥ आरभेथा मनुसंरभेथांसमानंपंथामवथोघृतेन ॥ यद्वांपूर्तंपरिविष्टंयदग्नौतस्मैगोत्रायेहजायापतीसंरभेथां ॥ यदंतरिक्षंपृथिवीमुतद्यां यन्मातरंपितरंवाजिहिंसिम ॥ अग्निर्मातस्मादेनसोगार्हपत्यउन्नोनेषद्दुरितायानिचकृम ॥ भूमिर्मातादितिर्नोजनित्रंभ्रातांतरि क्षमभिशस्तएनः ॥ द्यौर्नःपितापितृयाच्छंभवासिजामिमित्वामाविवित्सिलोकात् ॥ यत्रसुहार्दःसुकृतोमदंतेविहायरोगंतन्व१ं स्वायाः ॥ अश्लोणांगैरह्रुताःस्वर्गेतत्रपश्येमपितरंचपुत्रं ॥ यदन्नमद्म्यनृतेनदेवादास्यन्नदास्यन्नुतवाकरिष्यन् ॥ यद्देवानांच क्षुष्यागोअस्तियदेवकिंचप्रतिजग्राहमग्निर्मातस्मादनृणंकृणोतु ॥ यदन्नमद्मिबहुधाविरूपंवासोहिरण्यमुतगामजामविं ॥ यद्देवा नां० कृणोतु ॥ इत्युपस्थाय ॥ त्रयोदश्यासमिधमादध्यात् ॥ ॐयन्मयामनसावाचाकृतमेनःकदाचन ॥ सर्वस्मात्तस्मा न्मेळितोमोग्धित्वंहिवेत्थयथातथंस्वाहा ॥ अग्नयेवैश्वानरायेदं० ॥ इतिसमिधंहुत्वाप्रधानहोमात्पूर्वंस्विष्टकृद्धोमाकरणपक्षे पूर्वावत्तेनहविषास्विष्टकृतंजुहोति ॥ पूर्वोक्तमंत्रौग्राह्यौ ॥ कर्मसमृद्ध्यर्थंजयादिहोमःकार्यः ॥ ततःत्वंनोअग्नइत्यादिसंस्त्रावां तंहुत्वाकर्मशेषसमापनाभ्यर्चनाचार्यपूजनदक्षिणादानसमंत्रपंचगव्यप्राशनकर्मेश्वरार्पणाद्यंतंकर्मशेषंसमापयेत् ॥ अयंहोमोबौ धायनमतेनपक्कचरुसहितोगुरुः जमदग्निप्रोक्तस्तद्रहितोलघुरिति ॥ इतिकूष्मांडहोमः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १७५ ॥ बृहस्पतिशांतिः ॥

श्रीः ॥ आचम्यपवित्रपाणिःप्राणानायम्यदेशकालौसंकीर्त्य ॥ अस्यकुमारस्योपनयनकाले–कन्यकायाविवाहकालेवा–बृहस्पत्यानुकूल्यसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंबृहस्पतिशांतिंकरिष्ये ॥ इतिसंकल्प्यगणेशपूजनाद्याचार्यवरणांतंकुर्यात् ॥ तत आचार्यः यथाशक्तिनिर्मितप्रतिमायामग्न्युत्तारणांतंकृत्वा ॥ यदत्रसंस्थितंभूतमित्यादिदेशसंस्कारांतेहोमदेशस्यैशानदेशेमहीद्यौरितिस्पृष्टभुविओषधयइतिधान्यंप्रक्षिप्याजिघ्रकलशमितिधवलकुंभंसंस्थाप्येमंमेगंगेइतितीर्थोदकेनापूर्याश्वत्थेवोनिषदनमितिअश्वत्थपल्लवान् गायत्र्यादिमंत्रैःपंचगव्यं देवस्यत्वा० भिषिंचामीतिकुशोदकंनिक्षिप्य युवासुवासाइतिपीतवस्त्रेणसंवेष्ट्यबृहस्पतेजुषस्वनइतिपंचरत्नानिप्रक्षिप्ययाओषधीरितिवक्ष्यमाणान्सर्वान्निक्षिपेत् यूथिकांदमनंमधुपुष्पाणिपत्रं ( भाषायांपत्रजमितिप्रसिद्धं ) पलाशंसर्षपान्जटामांसींगुडूचींअपामार्गंविडंगंशंखिनींवचांसहदेवीं विष्णुक्रांतांशतावरींकुष्टंमांसीं हरिद्रेद्वेमुराशैलेयचंदनंवचांकचोरंमुस्तांचेतिनिक्षिप्यपीतवस्त्रेणावेष्ट्य ॥ ततश्चंदनादिनाकुंभमभ्यर्च्यपूर्णादर्वीतियथाविभवंसौवर्णादिपूर्णपात्रंनिधायतत्राष्टदलोत्तरदलेहरिताक्षतनिर्मितदीर्घचतुरस्रपीठे हैमींबृहस्पतिप्रतिमांस्थापयित्वा स्थंडिलेऽग्निप्रतिष्ठापनादिअन्वाधानेव्याहृत्यंते बृहस्पतिमष्टोत्तरशतसंख्याभिरश्वत्थसमिद्भिस्तावतीभिराज्याहुतिभिस्तावतीभिःसर्पिर्मिश्रपायसाहुतिभिःतावतीभिःसाज्ययवव्रीहितिलाहुतिभिश्च अंगहोमेवरुणंद्विरित्यादिसंस्रावांतमुक्त्वासमिधोग्नावाधायसामान्यप्रधानहोमांतेकुंभोपरिस्थापितप्रतिमायामावाहनादिषोडशोपचारैर्बृहस्पतिंपूजयेत् ॥ तत्रविशेषः ॥ पीतवस्त्रयुग्मंपीतंयज्ञोपवीतंपीतंचंदनंपीताक्षतान् ॥ चंपकादिपीतपुष्पं ॥ बिल्वमज्जाधूपं ॥ घृतदीपं ॥ दध्योदनंनैवेद्यं ॥ दक्षिणायांपुष्परागोमाणिक्यंयथा

शक्तिहेमवा ॥ पूजांतेऽब्लिंगाभिर्वारुणीभिःपावमानीभिश्चकुंभानुमंत्रणं ॥ ततोयजमानोयथान्वाधानंबृहस्पतयइदंनममेति त्यागंकुर्यात् ॥ अथाचार्योबृहस्पतिमंत्रेणप्रणवादिनादधिमध्वाक्ताअष्टोत्तरशतमश्वत्थसमिधोजुहुयात् ॥ तावतीराज्याहुतीः सर्पिर्मिश्रलोकसिद्धपायसाहुतीः साज्ययवव्रीहितिलाहुतीश्च ॥ ततः इमंमेवरुणेत्यादिसंस्रावहोमांते परिस्तरणविसर्जना भ्यर्चनांतंकुर्यात् ॥ ततोबृहस्पतेःगंधादिभिःपूर्वोक्तैःफलतांबूलांतैःपूजनंकृत्वासयजमानोनमस्कुर्यात् ॥ ततस्ताम्रपात्रेशु द्धोदकंप्रक्षिप्यतत्रपीतानिगंधाक्षतपुष्पाणिफलंचप्रक्षिप्याघ्र्यंदद्यात् ॥ गंभीरदृढरूपांगदेवेज्यसुमतेप्रभो ॥ नमस्तेवाक्पतेशां तगृहाणार्घ्यंबृहस्पते इति ॥ ततोयजमानोबृहस्पतयेकृतकर्मार्पणंकुर्यात् ॥ भक्त्यायत्तेसुराचार्यहोमपूजादिकंकृतं ॥ तत्त्वंगृ हाणशांत्यर्थंबृहस्पतेनमोनमः इति ॥ ततःप्रार्थयेत् ॥ जीवोबृहस्पतिःसूरिराचार्योगुरुरंगिराः ॥ वाचस्पतिर्देवमंत्रीशुभंकुर्या त्सदाममेति ॥ ततोविसर्जनंकृत्वाचार्यंप्रणम्यसर्वोपचारसंयुक्तांगोयुक्तामिमांप्रतिमांतुभ्यमहंसंप्रददे ॥ इतितादृशप्रतिमांद द्यादभिषेकोत्तरंवाप्रतिमादानं ॥ कुंभोदकेनाचार्यःपुत्रदारसमेतंयजमानमभिषिंचेत् ॥ आपोहिष्ठेति० ३ ॥ समुद्रज्येष्ठा० ४ ॥ इदमापः० १ ॥ तामग्निवर्णा० १ ॥ याओषधीः० १ ॥ अश्वावतीर्गोमती० १ ॥ यद्देवादेवहेडनंयददीव्यमायुष्टेविश्वतोदध दित्याद्यनुवाकैश्चतच्छंयोरावृणीमहइति ॥ ततोब्राह्मणान्संपूज्यतेभ्योभूयसींदक्षिणांदत्वाशिषोवाचयित्वाकर्मेश्वरेसमर्प्ययथा शक्तिब्राह्मणान्भोजयेत् ॥ इतिबृहस्पतिशांतिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १७६ ॥ विनायकशांतिर्बौधायनतंत्रे ॥

श्रीः ॥ अथातोविनायककल्पंव्याख्यास्यामोमासिमासिचतुर्थ्यांशुक्लपक्षस्यपंचम्यांवाभ्युदयादौसिद्धिऋद्धिकामःपशुकामोवा

विनायकस्यबलिंहरेत्॥पूर्वेद्युःकृतैकभक्तोपआचम्यदेवयजनोल्लेखनाद्यग्निमुखांतंकृत्वादक्षिणामुखंहस्तिमुखंदैवतमावाहयति ॥ विघ्नविघ्नेश्वरागच्छविघ्नेत्येवनमस्कृत ॥ अविघ्नायभवास्माकंसदास्माकंभवोद्भवेत्यथदूर्वाक्षतसुमनोमिश्रमर्घ्यंददातिइमाआपः शिवतमाःपूताःपूततमामेध्यामेध्यतमाअमृताअमृतरसाः(तमाः)पाद्याअर्घ्याअर्हणीयाअभिषेचनीयाआचमनीयामार्जनीयाश्च प्रतिगृह्यतांभगवन्विनायकोमित्यथतूष्णींगंधपुष्पधूपदीपैरभ्यर्च्योपतिष्ठते ॥ नमोभूपतयेनमोभुवनपतयेनमोभूतानांपतयेन मइत्यथतिस्रस्तिस्रोविनायकाहुतीर्जुहोति ॥ विनायकायभूपतयेनमोविनायकायस्वाहा ॥ एवंविनायकायभुवनपतयेनमोवि नायकायस्वाहा ॥ विनायकायभूतानांपतयेनमोविनायकायस्वाहा ॥ जयप्रभृतिसिद्धमाधेनुवरप्रदानादपूपंकरंभोदकसक्तून्पा यसमित्यथास्माउपकिरति ॥ विघ्नायस्वाहा ॥ एवंविनायकाय वीराय शूरायोग्रायभीमायहस्तिमुखायवरदायविघ्नपारिषदेभ्यः स्वाहेत्यथभूतेभ्योवलिमुपहरेत् ॥ येभूताःप्रचरंतीत्यथपंचसूत्रंकंकणंहस्तेबध्नाति ॥ विनायकमहाबाहोविघ्नमेतत्त्वाज्ञया ॥ कामामेसाधिताःसर्वेइदंव्याहृतिभिराबध्नामिकंकणमित्यथाग्निप्रदक्षिणंकृत्वाप्रणम्याभिवाद्यविनायकंविसर्जयति ॥ कृतंयदिम याप्राप्तंमहाभागगणेश्वर ॥ उत्तिष्ठसगणःसाधुयाहिभद्रंप्रसीदतामिति ॥ दधिमधुपयआज्यविसर्जनंकल्पयति ॥ ॥ छ ॥

## ॥ १७७ ॥ विनायकशांतिः ॥

श्रीः ॥ पूर्वोक्तशुभदिनेकर्तादेशकालौस्मृत्वाविनायकोपसर्गशांत्यर्थंअमुककर्मणिनिर्विघ्नतासिद्ध्यर्थंअमुकफलसिद्ध्यर्थंलक्ष्मीप्रा

१ संकटेसमनुप्राप्तेयाज्ञवल्क्येनयोगिना ॥ शांतिरुक्तागणेशस्यकृत्वातांशुभमाचरेत् ॥ अकृत्वाशांतिकंयस्तुनिबिद्धेसतिदारुणे ॥ प्रकरोतिशुभं कर्मविघ्नस्तस्यपदेपदे ॥ बौधायनीयेस्मिन्प्रयोगेपूर्वनिर्दिष्टेपिसौकर्यार्थमयंपुनःशांतिरत्रस्थःयाज्ञवल्क्योक्तःप्रयोगःसंगृहीतः ॥

त्यर्थंवाविनायकशांतिंकरिष्यइतिसंकल्प्यगणेशपूजनपुण्याहवाचनमातृकापूजावृद्धिश्राद्धानिकृत्वाचार्यंवृत्वा चतुरः विज्ञाने श्वरमते पराशरमतेष्टौवाऋत्विजोवृणुयात् ॥ तेषुचत्वारःस्वस्तिवाचकाइतिमदनरत्ने ॥ अपरेपुण्याहवाचनंनेच्छंति अग्रेतस्यक र्तव्यत्वात् ॥ अस्मिन्पक्षेमातृकार्चावृद्धिश्राद्धयोर्लोपआर्थिकः ॥ अथाचार्यःपंचवर्णैःशुक्लैर्वापिष्टैर्मध्येस्वस्तिकंकृत्वातदुपरिरक्त मानडुहंचर्मप्राग्ग्रीवमुत्तरलोमास्तीर्यतत्रश्रीपर्णीकाष्ठजंपीठंसंस्थाप्यतत्रश्वेतवस्त्रमाच्छाद्यतच्चतुर्दिक्षुचत्वारिस्वस्तिकानिकृत्वा तेषुप्रागादितः ॐमहीद्यौरित्यादिनाकांडानुसमयेनएकवर्णांश्चतुरःकुंभान्धान्यराशौनिधायह्रदोदकेननदीसंगमोदकेनवापूर्य ॥ ॐउद्धृतासिवराहेणकृष्णेनशतबाहुना॥मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतमितिमंत्रेणतेषुपंचमृदःक्षिप्त्वा ॥ॐगंधद्वारामितिचं दनागुरुकेशरकस्तूरीकर्पूरादीन्गंधान्गोरोचनांगुग्गुलुंचक्षिप्त्वा ॥ ॐअश्वत्थेवइतिपंचपल्लवान्निक्षिप्यचंदनमालाभूषितान्कृत्वा ॐयाःफलिनीरितिफलं ॐबृहस्पतेजुष०पंचरत्नानि ॐअग्नेरेतइतिहेमक्षिप्त्वा ॐयुवासुवासाइतिवस्त्रेणावेष्ट्य ॐपूर्णादर्वीतिपूर्ण पात्रंनिधायैवंचतुर्दिक्षुकृत्वा प्रतिकलशंकलशस्यमुखे० देवदानवेत्यादिपठेत् ॥ ततश्चतुर्दिक्षुचत्वारऋत्विजःॐत्वंनोअग्ने०इतिव रुणमावाह्य षोडशोपचारैः(महार्णवेतुवरुणप्रकाशकमंत्रांतरैर्वाव्याहृतिभिर्वानाममंत्रेणवापूजापंचोपचारैर्वेतिच)संपूज्यॐआ नोभद्राः ॐशंनोवातःपवतामित्यादिस्वस्वशाखोक्तांशांतिंपठेयुः ॥ आचार्योभद्रासनस्यपूर्वतोहोमार्थंस्थंडिलंकृत्वातदैशान्यांह स्तमात्रवेदिकायांपीठेवस्त्रादौ ॐतत्पुरुषायविद्महेवक्रतुंडायधीमहि। तन्नोदंतिःप्रचोदयात् इतिविनायकं ॥ ॐसुभगायैविद्महे काममालिन्यैधीमहि॥तन्नोगौरीप्रचोदयात्॥ इत्यंबिकांचहैमप्रतिमायामावाहयेत् ॥ तत्परितोयथावकाशंप्रतिमास्वक्षतपुंजेषुवा

व्योमकेशं पार्वतीं भीमजं बसुदेवं अर्कं मंगलं शुक्रं बृहस्पतिं बुधं शनैश्चरं चंद्रं राहुं वाहुलेयं विष्णुं एतान् इंद्रादिलोकपालांश्चा वाह्यासनादिनैवेद्यांतैरुपचारैःसंपूज्यभद्रासनस्यपूर्वतःस्थंडिलेगृह्योक्तविधिनाग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ केचित्तुग्रहमखमेत त्समानतंत्रंकुर्वंति। तत्रविनायकादुत्तरेग्रहावाहनंकुर्यात् ॥ तत्रान्वाधानेसामान्यप्रधानोत्कीर्तनांते। ग्रहान्समिदाज्यचरुभिः मितं संमितं शालं कटंकटं कूष्मांडं राजपुत्रं चैकैकयाचर्वाहुत्या व्योमकेशादीनेकैकयाचर्वाहुत्या वरुणंद्विरित्याद्यंतेचरुंश्रपयि त्वाबर्हिष्यासाद्यगव्याज्यलोलितेन ( गोघृतमिश्रेण ) गौरसर्षपकल्केनोद्वर्तितसर्वांगंपूर्वोक्तैःसर्वौषधैःसर्वगंधैश्चविलिप्तशिरसंय जमानमाचार्योमंगलवेदघोषैर्भद्रासनेउपवेशयेदितिविज्ञानेश्वरमहार्णवादयः ॥ ( बृहत्पराशरोप्येवमाहउपवेश्योद्वर्तयेदितिम दनरत्नेउक्तं) ततोयजमानःपूर्ववृतैश्चतुर्भिरष्टभिर्वाब्राह्मणैःसहस्वगृह्योक्तविधिनास्वस्तिवाचनंकुर्यात् ॥ ततोजीवत्पतिपुत्राभिः सुवेषाभिः स्त्रीभिर्नीराजनंकार्यं। ताभ्यश्चयजमानोवस्त्राणिसकंचुकानिदद्यादित्याचारः ॥ ततआचार्यःपूर्वदेशस्थंकलशमा दाय ॥ ॐसहस्राक्षंशतधारमृषिभिःपावनंकृतं ॥ तेनत्वामभिषिंचामिपावमान्यःपुनंतुते ॥इतिमंत्रेणयजमानमभिषिंचेत् ॥ ॐभगंतेवरुणोराजाभगंसूर्योबृहस्पतिः ॥ भगमिंद्रश्चवायुश्चभगंसप्तर्षयोददुः इतिदक्षिणकुंभेन ॥ ॐयत्तेकेशेषुदौर्भाग्यंसीमंते यच्चमूर्धनि ॥ ललाटेकर्णयोरक्ष्णोरापस्तद्घ्नंतुसर्वदा इतिपश्चिमकुंभेन ॥ उत्तरकलशमादाय ॐसहस्राक्षमित्याद्यैस्त्रिभिर्मंत्रैर भिषिंचेत् ॥ अपरार्कमतेतुत्रिभिरेकैककुंभेनाभिषेकः॥ततश्चतुर्भिर्मिलितैःकुंभैर्बृहत्पराशरोक्तैर्मंत्रैरभिषिंचेत् ॥एतद्वैपावनंस्नानं सहस्राक्षमृषिस्मृतं ॥ तेनत्वाशतधारेणपावमान्यःपुनंत्विमाः ( त्वमूः )॥ शक्रादिदशदिक्पालाब्रह्मेशकेशवादयः ॥ आपस्ते घ्नंतुदौर्भाग्यंशांतिंददतुसर्वदा ॥ ॐसुमित्र्यानआपओषधयःसंतु दुर्मित्र्यास्तस्मैसंतुयोऽस्मान्द्वेष्टियंचवयंद्विष्मः ॥ समुद्रागिर

योनद्योमुनयश्चपतिव्रताः ॥ दौर्भाग्यंघ्नंतुतेसर्वेशांतिंयच्छंतुसर्वदा॥पादगुल्फोरुजंघास्यनितंबोदरनाभिषु ॥ स्तनोरोबाहुहस्ताग्र ग्रीवास्कंधांगसंधिषु॥नासाललाटकर्णभ्रूकेशांतेषुचयत्स्थितं॥तदापोघ्नंतुदौर्भाग्यंशांतिंयच्छंतुसर्वदा ॥(मिलितकुंभैरभिषेकइति केचित् चतुर्थकलशाभिषेचनएवैतेमंत्राःपठनीयाइतिमयूखे) ॥ ततआचार्यःप्राङ्मुखोयजमानस्यपश्चात्तिष्ठन्सव्यपाणिनाकुशा न्यजमानस्यमूर्धनिनिधायतत्रसार्षपंतैलंऔदुंबरेणस्रुवेणादाय ॐमितायस्वाहा मितायेदमितियजमानः एवमग्रेपित्यागः॥ ॐ संमितायस्वाहा ॥ ॐशालायस्वाहा॥ॐकटंकटायस्वाहा॥ॐकूष्मांडायस्वाहा॥ॐराजपुत्रायस्वाहेति षडाहुतीर्जुहुयात् ॥ अप रार्कमतेतुशालकटंकटाभ्यामेका कूष्मांडराजपुत्राभ्यांचैकाहुतिरितिचतस्रः॥आथर्वणकौशिकगृह्यपरिशिष्टयोरप्येवं॥ततोवह्ना विध्माधानादिकृत्वापूर्वोक्तैःषड्भिर्मंत्रैरग्नौचरुंहुत्वाव्योमकेशादिभ्यश्चैकैकामाहुतिंहुत्वा इमंमेवरुणेत्यादिसंस्रावहोमांतेपूर्वादि दिक्षुइंद्रादिदशलोकपालेभ्योनाममंत्रैश्चरुशेषेणबलीन्दत्वाशुद्धोदकेनस्नातोधौतांबरधरोयजमानःसाचार्योविनायकमंबिकांच पूर्वोक्तद्गायत्रीभ्यांषोडशोपचारैःसंपूज्य कृताकृततंडुलान् तिलयुक्तौदनंपक्वापक्वमत्स्यान्त्रिविधांसुरांतदभावेसैंधवयुतंपात्र त्रयेक्षीरंवा पक्वापक्वमांसं मूलकापूपपूरिकोंडेरकस्रग्दध्यन्नपायसगुडमिश्रपिष्टमोदकलड्डुकचित्रसुगंधपुष्पकुल्माषफलानिचैक पात्रेशूर्पेवाकृत्वा पूर्वोक्तमंत्रेण विनायकायैतमुपहारंनिवेदयामीत्युपहारंविनायकाय एवमंबिकायैचदत्वा कुसुमगंधदूर्वासर्षप सहितेनोदकेनांजलिमापूर्यप्रत्येकंपूर्वोक्तमंत्राभ्यामर्घ्यंदत्वादूर्वासर्षपपुष्पांजलिंचमंत्राभ्यांदत्वाभूमौशिरःकृत्वा ॥ रूपंदेहिय शोदेहिभगंभगवन्देहिमे ॥ पुत्रान्देहिधनंदेहिसर्वान्कामांश्चदेहिमेइतिविनायकं ॥ रूपंदेहिजयंदेहिभगंभगवतिदेहिमे ॥ पुत्रान्देहिधनंदेहिसर्वान्कामांश्चदेहिमे ॥ ( अचलांकुरुमेदेविविपुलांख्यातिसंभवामित्यर्धमधिकंहेमाद्रौभविष्ये ॥ ख्यातिसंभ

वालक्ष्मीः ) इत्यंबिकांचोपतिष्ठेत ॥ बृहत्पराशरोमंत्रांतरमाह ॥ सौभाग्यमंबिकेदेहिभगंरूपंयशोपिच ॥ स्त्रियंपुत्रांश्चकामांश्चतथाशौर्यंचदेहिमे ॥ गणेशमातरंबालेयत्किंचिन्मदभीप्सितं ॥ एकनाम्नैवतद्देविदेहिगौरिवरान्मम इति ॥ ( अर्घ्यदानमुपस्थानंचचतुष्पथेबल्यनंतरंकार्यमितिमदनरत्ने ॥ ) ततआचार्यःशूर्पेकुशानास्तीर्यकृताकृताद्युपहारं ( कृताकृताअवहताअनवहताश्चतंडुलाः ) तत्रनिधायचतुष्पथेभूमिमभ्युक्ष्यकुशानास्तीर्यतत्रशूर्पंनिधायवलिंदद्यात् ॥ मंत्रास्तु ॥ वलिंगृह्णंत्विमंदेवाआदित्यावसवस्तथा ॥ मरुतोथाश्विनौरुद्राःसुपर्णाःपन्नगाग्रहाः ॥ असुरायातुधानाश्चपिशाचामातरोरगाः ॥ शाकिन्योयक्षवेतालायोगिन्यःपूतनाःशिवाः ॥ जृंभकाःसिद्धगंधर्वानागाविद्याधरानगाः ॥ दिक्पालालोकपालाश्चयेचविघ्नविनायकाः ॥ जगतांशांतिकर्तारोब्रह्माद्याश्चमहर्षयः ॥ माविघ्नंमाचमेपापंमासंतुपरिपंथिनः ॥ सौम्याभवंतुतृप्ताश्चभूतप्रेताःसुखावहाः ॥ ( ततस्तुवाससीशुक्लेपरिधायाहतेशुभे ॥ सितचंदनलिप्तांगःसितस्रग्भूषणान्वितः ॥ तानन्यांश्चद्विजान्सर्वान्भोजयेद्विविधाशनैः ॥ वस्त्रयुग्मंगुरोर्देयंतेतुतस्यवराशिषः ॥ इत्युपस्थानानंतरंपराशरोक्तेः ) ॥ ततोयजमानोगृहमागत्यपादौप्रक्षाल्याचम्यपूर्णाहुतिंहुत्वाआचार्यंसंपूज्यतस्मैवस्त्रयुगंहेमचदक्षिणांदत्वाऋत्विग्भ्योयथाशक्त्यन्येभ्यश्चभूयसींदक्षिणांदत्वाविनायकांविकयोरुत्तरपूजांकृत्वाविसृज्याचार्यायदत्वाग्निंसंपूज्यविभूतिंधृत्वाग्निंविसृज्यब्राह्मणान्भोजयित्वाकर्मेश्वरार्पणंकुर्यात् ॥ ॥

## ॥ १७८ ॥ श्रीपूजनादिशांतिः ॥

श्रीः ॥ यजमानःआचम्यपवित्रपाणिःप्राणानायम्यदेशकालौसंकीर्त्य अस्यकुमारस्योपनयनेकन्यायाउद्वाहेवासंस्कारात्पूर्वमं



१ चौलेचव्रतबंधेचविवाहेयज्ञकर्मणि । भार्यारजस्वलायस्यप्रायस्तस्यनशोभनं । आपदि । श्रियंसंपूज्यविधिवत्ततोमंगलमारभेत् ।अलाभेसुमुहूर्तस्यरजोदोषेचसंगते । श्रियंसंपूज्यतत्कुर्यात्पाणिग्रहणमंगलं । वधूवरमात्रोर्देवकोत्थापनात्प्राग्रजसिशुद्ध्यंते ऽसंभवे पूर्ववाऐरिणीदानदेवकोत्थापनेकार्ये ।

तेवामातूरजोदोषोपस्थितिसूचितसकलानिष्टनिरासपूर्वकशुभफलप्राप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंश्रीपूजनादिशांतिंकरिष्ये॥आ दौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंपुण्याहवाचनंचकरिष्येइतिसंकल्प्यकृत्वा॥ गोत्रोच्चारपूर्वकमाचार्यंवृत्वासंपूज्यआचार्यःकर्म संकल्प्यप्रादेशकरणांतंकृत्वा रंगवल्ल्याद्यलंकृतेऐशानप्रदेशे ॐमहीद्यौः० इत्यादिभिर्मंत्रैर्विधिवत्कलशंसंस्थाप्यतदुपरिपूर्णाद वींतिपात्रंनिधायतदुपर्यग्न्युत्तारणपूर्वकंसौवर्णप्रतिमायां॥ॐहिरण्यवर्णां०ऋ०॥ ॥ॐभूर्भुवःसुवःश्रियैनमःश्रियमावाहयामीति श्रियमावाह्यश्रीसूक्तेनषोडशोपचारैःपूजयेत् ॥ ततःस्थंडिलोल्लेपनाद्यग्निप्रतिष्ठांतंकृत्वासमित्त्रयमादाय श्रद्धएहीत्यादिसामा न्यप्रधानांतमुक्त्वात्रप्रधानं ॥ श्रियंश्रीसूक्तेनप्रत्यृचंपायसाहुत्याअंगहोमेवरुणंद्विरित्याद्युक्त्वासामान्यप्रधानहोमांतेप्रधानहो मः ॥ ॐहिरण्यवर्णां० १५ ॥ इत्यादिपंचदशर्ग्भिःप्रत्यृचमेकैकांपायसाहुतिंहुत्वा इमंमेवरुणेत्यादिसंस्रावांतंहुत्वास्थापित कलशोदकेनश्रीसूक्तेनयजमानमभिषिच्यआवाहितदेवताःपंचोपचारैःसंपूज्याचार्यायगांदक्षिणांचदत्वापीठदानादिचकृत्वाय स्यस्मृत्येतिविष्णुस्मरणपूर्वकंकर्मेश्वरार्पणंकृत्वायथाशक्तिभूयसींदक्षिणांदत्वाशिषोग्राह्याः ॥ इतिश्रीपूजनादिशांतिः ॥ ॥

## ॥ १७९ ॥ प्रतिकूलशांतिः ॥

श्रीः ॥ कर्ताआचमनादिदेशकालस्मरणांतेममपुत्रस्यकन्यायावाविवाहनिश्चयोत्तरंअमुकस्यमृत्युवशेनोपस्थितप्रतिकूलदोषसू चितसकलारिष्टपरिहारपूर्वकंदीर्घायुःपुत्रपौत्रादिसुखैश्वर्यप्राप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंगर्गोक्तांशांतिंकरिष्ये ॥ तदंगगणपति पूजनपुण्याहवाचनाचार्यवरणानिकृत्वाआचार्यःप्रादेशकरणांतेपीठादौप्रतिमासुमध्ये॥ हिरण्यवर्णामितिश्रियं॥ इदंविष्णुरिति विष्णुं ॥ गौरीर्मिमायेति गौरीं ॥ त्र्यंबकमिति रुद्रं ॥ परंमृत्यो इतिमृत्युं चावाह्यषोडशोपचारैःसंपूज्यतत्पश्चिमतःस्थंडिले

ग्निंप्रतिष्ठाप्यध्यात्वान्वाधानेश्रद्धएहीत्यादिसामान्यप्रधानांते अग्निंप्रधानदेवंदूर्वातिलाज्यचरुभिःप्रतिद्रव्यमष्टोत्तरशतसंख्या हुतिभिःअग्निंवायुंसूर्यंप्रजापतिंचाज्येनअंगहोमेवरुणंद्धिरित्यादिसंस्रावांतमुक्त्वासमिधोन्नावाधायसामान्यप्रधानहोमांते ॥ ॐ भूःस्वाहामृत्युर्नश्यतुसुखांयवर्धतांस्वाहा अग्नयइदंनमम॥ इतिमंत्रेणोक्तद्रव्यैरुक्तसंख्यहोमंकृत्वाव्यस्तसमस्तव्याहृतिभिरा ज्यंहुत्वाइमंमेवरुणेत्यादिसंस्रावांतंहुत्वाकर्मशेषंसमाप्यदेवतोत्तरपूजांकुर्यात् ॥ ततोयजमानःआचार्यंसंपूज्यगांविसर्जितदे वतापीठंचतस्मैदत्त्वाविप्रान्संभोज्यभूयसींदत्त्वाशांतिंवाचयित्वाकर्मसमापयेत् ॥ इतिप्रतिकूलदोषशांतिः ॥ ॥ छ ॥

## ॥ १८० ॥ गोमुखप्रसवशांतिः[२] ॥

श्रीः ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यअस्यशिशोःअमुकनक्षत्रजननसूचितसकलारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थं बौधायनोक्तांगोप्रसवशांतिंकरिष्ये ॥ तदंगंगणेशपूजनंपंचशब्दैःपुण्याहवाचनंआचार्यवरणंचकरिष्येइतिसंकल्प्यगणेशपूजना दिकुर्यात् ॥ अथवृताचार्यआचम्यप्राणानायम्यदेशकालावुत्कीर्त्यगोप्रसवशांतिंकर्तुंआचार्यकर्मकरिष्ये पुरुषसूक्तजपंयदत्रेति सर्षपविकिरणादिप्रादेशकरणांते गृहस्यैशानभागेगोमयेनोपलिप्तभूमौश्वेतरजोभिःकर्णिकायुक्तंपंकजंकृत्वातत्रप्रस्थमात्रान्व्रीही न्प्रक्षिप्यतेषु नववैणवंशूर्पंसंस्थाप्यतस्मिन्रक्तवस्त्रंप्रसार्यतत्रतिलान्विकीर्यतस्मिन्शूर्पेप्राङ्मुखंशिशुंनिधायद्वितीयशूर्पेणाच्छा द्यरक्तसूत्रेणशूर्पद्वयंवेष्टयित्वाशूर्पसंनिधौगामानीयगोमुखसांनिध्यंकृत्वायजमानोगोमुखात्प्रसवंविभाव्य आचार्यःपूर्वकृतपं चगव्येनशिशुंप्रोक्षेदेभिर्मंत्रैः ॥ ॐविष्णुर्योनिंकल्पयतुत्वष्टारूपाणिपिंशतु ॥ आसिंचतुप्रजापतिर्धातागर्भंदधातुते ॥ गर्भंधे

१ सुषायैसुखंवर्धतां इत्यपिपाठः । २ मूलाश्लेषाज्येष्ठान्यतमनक्षत्रेष्वतिगंडेवैधृतौपातेअमाविष्टुपरागादिषुजननेगोप्रसवशांतिंकुर्यादित्याह-भगवान्बौधायनः ।

हिसिनीवालिगर्भंधेहिसरस्वति ॥ गर्भंतेअश्विनावुभावाधत्तांपुष्करस्रजा ॥ हिरण्ययीअरणीयंनिर्मंथतोअश्विना ॥ तंतेगर्भं हवामहेदशमेमासिसूतवे ॥ यथाग्निगर्भापृथिवीद्यौर्यथेंद्रेणगर्भिणी ॥ वायुर्यथादिशांगर्भएवंगर्भंदधामिते ॥ यस्ययोनिंप्र तिरेतोगृहाणपुमान्पुत्रोजायतांगर्भेअंतः ॥ तंमातादशमासोबिभर्तुसजायतांवीरतमःस्वानां ॥५॥ आपोहिष्ठेतितिसृभिःशुद्धो दकेनचस्नापयित्वा ॐगोमांऽअग्नेविमांऽअश्वीयज्ञोनृवत्संखासदमिदंप्रमृष्यः॥इडावांऽएषोअसुरप्रजावान्दीर्घोरयिःपृथुवुघ्नःस भावान्॥इतिमंत्रेणगांवामांगेसर्वांगेषुवास्पृशेत्॥ ॐविष्णोरराटमसिविष्णोःपृष्ठमसिविष्णोःस्यूरसिविष्णोर्ध्रुवमसिवैष्णवमसि विष्णवेत्वा॥इतिमंत्रेणपिताशिशुमादायमात्रेदद्यात् मातापित्रेदद्यात् पितामात्रेदद्यात् ॥ ततःपितातूष्णींपुत्रस्यमुखमीक्षते ॥ ॐअंगादंगात्संभवसिहृदयादधिजायसे॥आत्मावैपुत्रनामासिसजीवशरदःशतं इतिशिशुमूर्धनित्रिरवघ्राय गोमुखप्रसवाख्य स्यकर्मणःपुण्याहंभवंतोब्रुवंतुअस्तुपुण्याहं॥ स्वस्ति० आयुष्मतेस्वस्ति॥ ऋद्धि० कर्मऋद्ध्यतां॥ इतिवाचयित्वाततस्तांगांयस्मैक स्मैब्राह्मणायदद्यात् ॥ ततआचार्यःअद्यपू० गोप्रसवशांत्यंगंस्थंडिलादिकंकर्मकरिष्येतदंगंउद्धननादिकर्मकरिष्ये॥ स्थंडिलंगो मयेनोपलिप्यतत्सवि० उद्धन्यमा० वरदनामानमग्निंप्रतिष्ठाप्य चत्वारिशृंगा० वरदोभव ॥ अस्यांशांतौग्रहहोमःकृताकृत इतिरुद्रधरः ॥ तदभावेपूजनमपिकृताकृतं ॥ कर्तव्यमित्यन्ये ॥ अग्नेःपूर्वतःव्रीहिमयंस्थंडिलंकृत्वामध्येष्टदलंकृत्वातत्रमही द्यौरित्यादिनाकलशंसंस्थाप्यतस्मिंस्तिरःपवित्रमंतर्धाय ॐआपोवाइद॑०सुवरापओमृइत्युदकमासिच्यसर्वौषधीःपंचरत्नकुश दूर्वागंधान्निक्षिप्यवस्त्रयुग्मेनसंवेष्ट्यकुंभमलंकृत्यकुंभाभ्यंतरेजलमध्येएवक्रमेणदेवताआवाहयेत्। मध्ये ॐसद्योजातं० ॐभू०

१ अन्यस्मिन्पुस्तकेतुकलशमध्येएवपूर्वेसद्योजातंदक्षिणेवामदेवंप्रतीच्यांअघोरंउदीच्यांतत्पुरुषमितिक्रमोदृश्यते ।

सद्योजातायनमः सद्योजातमावाहयामि ॥ पूर्वे ॐ वामदेवायनमों० ॐ भू० वामदेवायनमःवामदेवं० ॥ दक्षिणे ॐअघोरे भ्योथ० ॐ भू० अघोरायनमःअघोरं० ॥ पश्चिमे ॐ तत्पुरुषाय० ॐ भू० तत्पुरुषायनमःतत्पुरुषं० ॥ उत्तरे ॐ ईशानः सर्वं० ॐ भू० ईशानायनमःईशानं०ॐ नर्यप्रजां० ॐ भूर्भुवःसुवःपंचास्यरुद्रायनमइतिचंदनादिभिःसंपूज्य ॥ कुंभमुखेबिल्व पल्लवनिर्मितंमंडलाकारंकृत्वातदुपरिपूर्णपात्रंनिधायतत्राष्टदलंकृत्वा सुवर्णनिर्मितावरुणविष्णुयक्ष्मप्रतिमाः अश्मन्नूर्जमित्यनु वाकेनसंततधारयाऽग्न्युत्तारणप्राणप्रतिष्ठादिनासंस्कृत्य पूर्णपात्रेउदक्संस्थयाऽऽवाहयेत् ॥ ॐइमंमेवरुण०ॐभू०वरुणायनमः वरुणं आ० ॐइदंविष्णुर्वि० ॐभू० विष्णवेनमःविष्णुमा० ॐअक्षीभ्यांते० ॐभू०यक्ष्मणेनमःयक्ष्माणमा०इत्यावाह्यषोडशोप चारैःसंपूज्यऋत्विक्सहितआचार्यः कुंभमन्वारभ्यमहान्यासपूर्वकंरुद्रैकादशिनींरुद्रंवाजपेत्॥शतायुधायेतिपंचाज्यानीमंत्रान् ॥ ॐशतायुधाय० तानिविश्वा १ येचत्वारः० हुसवै २ ग्रीष्मोहेमंत० येस्याम ३ इदुवत्सराय० स्याम ४.भद्रांनःश्रेयः०स्योनः ५ आशुःशिशानइत्यनुवाकं कृणुष्वपाजइत्यनुवाकं तन्मध्येमदेचिदस्येतिवर्जं दधिक्राव्णइतिसुरभिमतींआपोहिष्ठेतित्रीन् हिरण्यवर्णाःशुचयइत्यनुवाकं पवमानःसुवर्जनइत्यनुवाकं ऋचांप्राचीमहतीत्यनुवाकंचजपेत् ॥ ततोन्वाधानं ॥ समित्रयमा दायश्रद्धएहीत्यादिप्राणायामांतंकृत्वा गोमुखप्रसवशांत्याख्येकर्मणियायक्ष्यमाणादेवता० जातवेदसमग्निमिध्मेनेत्यादिसा मान्यप्रधानांतमुक्त्वावैशेषिकप्रधानहोमे वरुणंषड्ऋचेनवरुणसूक्तेनप्रत्यृचमष्टादशाहुतिभिः संसृष्टदधिमध्वाज्यद्रव्येण विष्णुं षड्ऋचेनविष्णुसूक्तेनप्रत्यृचमष्टादशाहुतिभिः संसृष्टदधिमध्वा०यक्ष्माणंषड्ऋचेनयक्ष्मसूक्तेनप्रत्यृचमष्टादशाहुतिभिः संसृष्टदधि मध्वाज्यद्रव्येणयक्ष्ये ॥ अंगहोमेवरुणंद्विः०स्विष्टकृद्धोमेअग्निंस्विष्टकृतंहुतशेषेण०प्रायश्चित्तहोमेअग्निंत्रिः०॥ ॐभूर्भुवःसुवः

स्वाहा प्रजा०॥ ॐएषहिदेवः प्र० ॥ सामान्यप्रधानांतंहुत्वाअन्यस्मिन्पात्रेदधिमध्वाज्यानिसंसृज्यप्रधानहोमंकुर्यात् तत्रवरुणसूक्तं ॥ ॐउदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमंश्रथाय ॥ अथावयमादित्यव्रतेतवानागसोअदितयेस्यामस्वाहा ॥ १ ॥ ॐअस्तभ्नाद्द्यामृषभोअंतरिक्षममिमीतवरिमाणंपृथिव्याआसीदद्विश्वाभुवनानिसम्राड्विश्वेत्तानिवरुणस्यव्रतानिस्वाहा ॥ २ ॥ ॐयत्किंचेदंवरुणदैव्येजनेभिद्रोहंमनुष्याश्चरामसि॥अचित्तीयत्तवधर्मायुयोपिममानस्तस्मादेनसोदेवरीरिषःस्वाहा ॥३॥ ॐकितवासोयद्रिरिपुर्नदीवियद्वाघासत्यमुतयन्नविद्म ॥ सर्वाताविष्यशिथिरेवदेवाथातेस्यामवरुणप्रियासःस्वाहा ॥४॥ ॐअवतेहेडोवरुणनमोभिरवयज्ञेभिरीमहेहविर्भिः ॥ क्षयन्नस्मभ्यमसुरप्रचेतोराजन्नेनांसिशिश्रथःकृतानिस्वाहा ॥ ५ ॥ ॐतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशंसमानआयुःप्रमोषीःस्वाहा ॥ ६ ॥ यथादैवतंत्यागः ॥ अथविष्णुसूक्तं ॥ ॐविष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजांसि ॥ योअस्कभायदुत्तरंसधस्थंविचक्रमाणस्त्रेधोरुगायःस्वाहा ॥ १ ॥ ॐतदस्यप्रियमभिपाथोअश्यांनरोयत्रदेवयवोमदंति ॥ उरुक्रमस्यसहिबंधुरित्थाविष्णोःपदेपरमेमध्वउत्सःस्वाहा ॥ २ ॥ ॐप्रतद्विष्णुस्तवतेवीर्यायमृगोनभीमःकुचरोगिरिष्ठाः ॥ यस्योरुषुत्रिषुविक्रमणेष्वधिक्षियंतिभुवनानिविश्वास्वाहा ॥ ३ ॥ ॐपरोमात्रयातन्वावृधाननतेमहित्वमन्वश्नुवंति ॥ उभेतेविद्मरजसीपृथिव्याविष्णोदेवत्वंपरमस्यवित्सेस्वाहा ॥ ४ ॥ ॐविचक्रमेपृथिवीमेषएतांक्षेत्रायविष्णुर्मनुषेदशस्यन् ॥ ध्रुवासोअस्यकीरयोजनासउरुक्षितिंसुजनिमाचकारस्वाहा ॥ ५ ॥ ॐत्रिर्देवःपृथिवीमेषएतांविचक्रमेशतर्चसंमहित्वा ॥ प्रविष्णुरस्तुतवसस्तवीयान्त्वेषंह्यस्यस्थविरस्यनामस्वाहा ॥ ६ ॥ यक्ष्मसूक्तं ॥ ॐअक्षीभ्यांतेनासिकाभ्यांकर्णाभ्यांछुबुकादधि ॥ यक्ष्मंशीर्षण्यंमस्तिष्काज्जिह्वायाविवृहामिते

स्वाहा ॥ १ ॥ ॐग्रीवाभ्यस्तउष्णिहाभ्यःकीकसाभ्योअनूक्यात् ॥ यक्ष्मंदोषण्य१ मंसाभ्यांबाहुभ्यांविवृहामितेस्वाहा ॥ २ ॥
ॐआंत्रेभ्यस्तेगुदाभ्योवनिष्ठोर्हृदयादधि ॥ यक्ष्मंमतस्नाभ्यांयक्नःप्लाशिभ्योविवृहामितेस्वाहा ॥ ३ ॥ ॐऊरुभ्यांतेअष्ठीवद्भ्यांपा
र्ष्णिभ्यांप्रपदाभ्यां ॥ यक्ष्मंश्रोणिभ्यांभासदाद्भंससोविवृहामितेस्वाहा ॥ ४ ॥ ॐमेहनाद्वनंकरणाल्लोमभ्यस्तेनखेभ्यः ॥ य
क्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामितेस्वाहा ॥ ५ ॥ ॐअंगादंगाल्लोम्नोलोम्नोजातंपर्वणिपर्वणि ॥ यक्ष्मंसर्वस्मादात्मनस्तमिदं
विवृहामितेस्वाहा॥६॥ ततइमंमेवरुणेत्यादि स्विष्टकृतमवदायॐहव्यवाहमभिमाति०वेमो३मितिपुरोनुवाक्यामनूच्यस्विष्टमग्ने
अ० आयुःस्वाहाइतियाज्ययाजुहोति ॥ अग्नयेस्विष्टकृतइदं० ॥ ततःशुल्वप्रहरणादिसंस्थाजपांतंसमाप्यप्रधानकलशोदकंपा
त्रांतरेगृहीत्वातेनसर्त्विगाचार्यःसपत्नीकंयजमानमभिषिंचेदेभिर्मंत्रैः॥ॐआपोहिष्ठेति ३ ॐहिरण्यवर्णाइति ४ ॐपवमानःसुव
र्जनइत्यनुवाकेन ॐइमंमेवरुण० १ ॐइदंविष्णु० १ ॐअक्षीभ्यांते० १ ॐदेवस्यत्वा० इत्यादिमंत्रैःसपत्नीकंयजमानंशिशुंचा
भिषिंचेत् स्थापितदेवतानामुत्तरपूजांकृत्वादेवताविसृज्यआचार्यायदत्वाअग्निपूजांकृत्वा ॥ यजमानःअद्येत्यादिमयाआचार्या
दिद्वाराकृतस्य गोप्रसवशांतिकर्मणःसांगतासिद्ध्यर्थंआचार्यायगोप्रदानंब्रह्मणेवृषदानंऋत्विग्भ्योदक्षिणाप्रदानंचकरिष्ये ॥ ब्रा
ह्मणान्संपूज्यनमोस्त्वनंताय० इदंआवाहितदेवतापीठंसोपस्करंआचार्यायतुभ्यमहंसंप्रददेदानसांगतार्थंदक्षिणां० प्रतिगृह्यतां ॥
कर्मणःसांगतासिद्धयेब्राह्मणान्भोजयिष्येतेभ्योभूयसींदक्षिणांदातुमहमुत्सृजे ॥ अनेनगोप्रसवशांत्याख्येनकर्मणाश्रीपरमेश्वरः
प्रीयतां ॥ वषट्तेवि० ॥ गच्छगच्छसुरश्रेष्ठ० ॥ इतिशंकरभट्टीस्थाबौधायनीयागोमुखप्रसवशांतिः ॥ ॥ छ ॥

## ॥ १८१ ॥ मूलनक्षत्रशांतिः ॥

श्रीः ॥ अभुक्तमूलोत्पत्तौवर्षाष्टकांते भुक्तमूलोत्पत्तावव्यवहितागामिमूलर्क्षेद्वादशाहेवान्यतमेवाशुभादेवसे गोमुखप्रसव शांतिंविधाययजमानःआचम्यप्राणानायम्यदेशकालौसंकीर्त्य अस्यशिशोः मूलनक्षत्रजन्मसूचितसकलारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थंबौधायनोक्तांसग्रहमखांमूलशांतिंकरिष्ये ॥ तदंगंगणेशपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धमाचा र्यर्त्विग्वरणंचकरिष्यइतिसंकल्प्योक्तरीत्याकुर्यात्॥ वृताचार्यःआचम्यप्राणानायम्यदेशकालौसंकीर्त्यअमुकगोत्रेणामुकशर्मणा यजमानेनवृतोहंमूलशांतिंकर्तुंआचार्यकर्मकरिष्ये॥ शरीरशुद्ध्यर्थंपुरुषसूक्तंजप्त्वायदत्रेतिसर्षपान्विकीर्यपंचगव्यशुद्धोदकाभ्यां भूमिप्रोक्षणादिप्रादेशकरणांतंकृत्वा गोमयेनगोचर्ममात्रमुपलिप्यतन्मध्येहस्तमात्रंस्थंडिलंविधाय आचार्यःअद्यपू० मूलशांत्यं गत्वेनस्थंडिलादिसकलंकर्मकरिष्येइतिसंकल्प्य उद्धननादिभूसंस्कारंविधायतत्रवरदनामानमग्निंप्रतिष्ठाप्यप्रोक्षितेंधनानिनि क्षिप्यवेणुधमन्याप्रबोध्यध्यायेत् ॥ ॐचत्वारिशृंगा० वरदोभव ॥ स्थंडिलस्यपूर्वभागेवेदिद्वयंप्रकल्प्यतत्रदक्षिणवेद्यांग्रहमखो क्तविधानेनग्रहानावाह्यसंपूज्यतदीशान्यांकलशंसंस्थाप्यपूजयेत् ॥ उत्तरवेद्यांचतुर्विंशतिदलान्वितंसकर्णिकंपंकजंनिर्मायसि तासितरक्तपीतरजोभीरंजितंकृत्वामध्यकर्णिकायांद्रोणपरिमितान्व्रीहीन्तदर्धंतंडुलान्तदर्धंतिलांश्चान्योन्योपरिप्रसार्यचतुर स्रंविधायतत्राव्रणंतंतुवेष्टितकंठंतैजसंकलशंमहीद्यौरित्यादिनागोमुखप्रसवशांतिवत्संस्थाप्य ॐमहीद्यौः० ॐओषधयःसं० ॐआ जिघ्र० ॐइमंमे० ॐआपोवाइद९० उदकेनपूरयेत् ओषध्यादिक्षिपेत् ॥ तस्मिन्कुंभेजलमध्येएवक्रमेणदेवताआवाहयेत् ॥ म ध्ये ॐसद्योजातंप्र० सद्योजातायनमः सद्योजातंआ० पूर्वे ॐवामदेवाय० वामदेवमा० ॥ दक्षिणस्यां ॐअघोरेभ्यो० अघोरा

यनमः अघोरं॰ ॥ प्रतीच्यां ॐतत्पुरुषाय॰ तत्पुरुषायनमः तत्पुरुषमा॰॥ उदीच्यां ॐईशानः सर्वे॰ईशानायनमः ईशानं॰ ॥ ॐनयैप्रजां॰ॐभूर्भुवःसुवःपंचास्यरुद्रायनमःइतिमंत्रेणगंधाद्युपचारैःपूजयेत् ॥ कुंभमुखेबिल्वपल्लवनिर्मितंमंडलाकारंकृत्वात त्रपूर्णपात्रंनिधायतस्मिन्सुवर्णनिर्मिताःनिर्ऋतींद्रापांप्रतिमाःअग्न्युत्तारणप्राणप्रतिष्ठादिनासंस्कृत्यवक्ष्यमाणमंत्रैरावाहयेत् ॥ ॐमूलंप्रजांवीरवर्तीं॰इत्यष्टवाक्यात्मकमंत्रेणपूर्णपात्रोपरिमध्येप्रतिमायांनिर्ऋतिमावाहयेत् ॥ तद्दक्षिणतः ॐइंद्रोज्येष्ठामनु॰ इत्यष्टवाक्यात्मकमंत्रेणप्रतिमायांइंद्रमावाहयेत्॥तदुत्तरतःॐयादिव्याआपःपयसा॰इत्यष्टवाक्यात्मकमंत्रेणअपआवाह्य प्रागा दिचतुर्विंशतिभूमिस्थदलेषुप्रदक्षिणंप्रतिमास्वक्षतपुंजेषुवाउत्तराषाढाद्यनूराधांतनक्षत्रदेवताः तत्तन्मंत्रेणनाममंत्रेणवाआवाहये त् ॥ तद्यथा ॥ ॐविश्वेभ्योदेवेभ्योनमः विश्वान्देवानावाहयामि १ ॐविष्णवे॰ २ ॐवसुभ्यो॰ ३ ॐवरुणाय॰ ४ ॐअजायैक पदे॰ ५ ॐअहयेबुध्नियाय॰ ६ ॐपूष्णे॰ ७ ॐअश्विभ्यां॰ ८ ॐयमाय॰ ९ ॐअग्नये॰ १० ॐप्रजापतये॰ ११ ॐसोमाय॰ १२ ॐरुद्राय॰ १३ ॐअदितये॰ १४ ॐबृहस्पतये॰ १५ ॐसर्पेभ्यो॰ १६ ॐपितृभ्यो॰ १७ ॐअर्यम्णे॰ १८ ॐभगाय॰ १९ ॐसवित्रे॰ २० ॐत्वष्ट्रे॰ २१ ॐवायवे॰ २२ ॐइंद्राग्निभ्यां॰ २३ ॐमित्राय॰ २४ ॥ ॐभूर्भुवःसुवःनिर्ऋत्यादिदे वताभ्योनम इतिषोडशोपचारैःपूजयेत् ॥ तदुत्तरतःशतच्छिद्रंकलशंसंस्थाप्यतत्रवरुणमावाह्यपूजयेत् नात्रजलपूरणं ॥ न्यास पूर्वकंरुद्रैकादशिनींरुद्रंवासकृज्जपेत् ॥ ततःसर्त्विगाचार्यःप्रधानकलशमन्वारभ्यवक्ष्यमाणान्मंत्रान्जपेत् ॥ शतायुधायेतिपंच मंत्राः ५ आशुःशिशानो॰ कृणुष्वपाजः॰ मदेचिदस्येतिवर्जं ममाग्नेवर्चो॰ प्रजापतेरक्ष्यश्वयत्तत्प॰ पवमानः

१ पूर्वाफल्गुन्याभगदेवतात्वादुत्तरायाश्चार्यमदेवत्वाद्वैलोम्यंप्रतीयतेतथापिअर्यमाराजेतिमंत्रलिंगादत्रयथान्यासएवसाधुः ॥

सुवर्जनः० सर्वेषुवाएषुलोकेषु० एतानुवाकान्जपेत् ॥ हरिꣳहरंत० शल्कैरग्निमिंधानं० माछिदोमृ० मानोमहां
तमुत० मानस्तोकेत० प्रजापतेनत्व० स्वस्तिदाविश० त्र्यंबकंयजामहे० अपमृत्युमपक्षुधं० इतिमंत्रांश्चजपेत् ॥ ॐप्रजाप
तेरक्ष्यश्वयत्तत्परापतत्तदश्वोभवद्यदश्वयत्तदश्वस्याश्वत्वंतद्देवाअश्वमेधेनैवप्रत्यंदधुरेषवैप्रजापतिꣳसर्वंकरोतियोश्वमेधेनयज
तेसर्वंएवभवतिसर्वस्यवाएषाप्रायश्चित्तिःसर्वस्यभेषजꣳसर्वंवाएतेनपाप्मानंदेवाअतरन्नपिवाएतेनब्रह्महत्यामतरन्त्सर्वंपाप्मानंत
रतितरतिब्रह्महत्यांयोश्वमेधेनयजतेयउचैनमेवंवेदोत्तरंवैतत्प्रजापतेरक्ष्यश्वयत्तस्मादश्वस्योत्तरतोवद्यंतिदक्षिणतोन्येषांपशूनां
वैतसःकटोभवत्यप्सुयोनिर्वाअश्वोप्सुजोवैतसस्स्वएवैनंयोनौप्रतिष्ठापयतिचतुष्टोमःस्तोमोभवतिसरड्ढवाअश्वस्यसक्थ्यावृहत्त
द्देवाश्चतुष्टोमेनैवप्रत्यंदधुर्यच्चतुष्टोमःस्तोमोभवत्यश्वस्यसर्वत्वाय ॥ सर्वंपाप्मानंमवृहद्वादशच ॥ ॐसर्वेषुवाएषुलोकेषुमृत्य
वोन्वायत्ताः ॥ तेभ्योयदाहुतीर्नजुहुयात् ॥ लोकेलोकएनंमृत्युर्विंदेत् ॥ मृत्यवेस्वाहामृत्यवेस्वाहेत्यभिपूर्वमाहुतीर्जुहोति ॥ लो
काल्लोकादेवमृत्युमवयजते ॥ नैनंलोकेलोकेमृत्युर्विंदति ॥ यदमुष्मैस्वाहामुष्मैस्वाहेतिजुहुयात्संचक्षीत ॥ बहुंमृत्युममित्रंकुर्वी
त ॥ मृत्यवेस्वाहेत्येकस्माएवैकांजुहुयात् ॥ एकोवाअमुष्मिन्लोकेमृत्युः ॥१॥ अशनयामृत्युरेव ॥ तमेवामुष्मिन्लोकेवयजते ॥
भ्रूणहत्यायैस्वाहेत्यवभृथआहुतिंजुहोति ॥ भ्रूणहत्यामेवावयजते ॥ तदाहुः ॥ यद्भ्रूणहत्यापात्र्यार्थ ॥ कस्माद्यज्ञेपिक्रियतइति ॥ अमृ
त्युर्वाअन्योभ्रूणहत्यायाइत्याहुः ॥ भ्रूणहत्यावावमृत्युरिति ॥ यद्भ्रूणहत्यायैस्वाहेत्यवभृथआहुतिंजुहोति ॥२॥ मृत्युमेवाहुत्यातर्पयि
त्वापरिपाणंकृत्वा ॥ भ्रूणघ्नेभेषजंकरोति ॥ एताꣳहवैमुंडिभऔदन्यवः ॥ भ्रूणहत्यायैप्रायश्चित्तिंविदांचकार ॥ योहास्यापिप्र
जायांब्राह्मणꣳहंति ॥ सर्वस्मैतस्मैभेषजंकरोति ॥ जुंबकायस्वाहेत्यवभृथउत्तमामाहुतिंजुहोति ॥ वरुणोवैजुंबकः ॥ अंततएववरुं

णमर्वयजते ॥ खलतेर्वैक्लिधस्यंशुक्कस्यपिंगाक्षस्यंमूर्धन्जुहोति ॥ एतद्वैवरुणस्यरूपं ॥ रूपेणैववरुणमर्वयजते ॥ ३ ॥ लोकेमृ त्युर्जुहोतिमूर्धन्जुहोतिद्वेच ॥ ॐमृत्युर्नश्यत्वायुर्वर्धतांभूःस्वाहा ॥ ॐमृत्युर्न० भुवःस्वाहा ॥ ॐमृत्यु० ताँसुवःस्वाहा ॥ ॐ मृत्यु० भूर्भुवःसुवःस्वाहा इतिजपेत् ॥ ततआचार्यःअग्नेःपश्चादुपविश्यकृष्णव्रीहितंडुलचरुंतदभावेकृसरंवादेवतात्रयहोमपर्या संनवग्रहहोमार्थंचशालाग्नौपरिकर्मिणापाचयेत् ॥ तिलमिश्रौदनःकृसरः ॥ समित्त्रयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वासग्र हमखमूलशांतिहोमकर्मणियायक्ष्यमाणादेवताइत्यादिसामान्यप्रधानांतमुक्त्वावैशेषिकप्रधानहोमे सवितारं० एताआदित्यादि नवग्रहदेवताअष्टाष्टसंख्याकाभिःअर्कादिजातीययथालाभसमित्कृसराज्याहुतिभिःईश्वरंउमां० एताअधिदेवताःप्रत्यधिदेवता श्चतैरेवद्रव्यैश्चतुश्चतुःसंख्याकाभिराहुतिभिः गणपतिंदु० इंद्रंअग्निं० एताःक्रतुसाद्गुण्यदेवताःदिक्पालदेवताश्चतैरेवद्रव्यैःद्वा भ्यांद्वाभ्यामाहुतिभ्यां निर्ऋतिंइंद्रंअपःअष्टवाक्यात्मकैस्तत्तन्मंत्रैश्चरुणाकृसरान्नेनवाप्रत्येकमष्टोत्तरशतसंख्याभिराहुतिभिः अष्टाविंशतिभिर्वा ॥ देवतात्रयोपहोमान्एकैकयाहुत्याआज्येन निर्ऋतिंनवर्चेननिर्ऋतिसूक्तेनप्रत्यृचमेकैकयाहुत्याआज्येनइंद्रं द्वादशर्चेनेंद्रसूक्तेनप्रत्यृचमेकैकयाहुत्याआज्येन अपःनवर्चेनाप्सूक्तेनप्रत्यृचमेकैकयाहुत्याआज्येन उत्तराषाढाद्यनूराधांतान क्षत्रदेवताःनाममंत्रेणप्रत्येकमेकैकयाहुत्याआज्येन अंगहोमेवरुणंद्विरित्यादिसामान्यप्रधानांतंहुत्वाअन्वाधानोक्तसंख्ययाग्र हहोमंकुर्यात् ॥ ततःप्रधानहोमःकृसरान्नेनमूलंप्रजामितिपुरोनुवाक्यामनूच्यअहर्नोअद्येतियाज्ययास्वाहाकारांतेनजुहोतित

१ यत्र याज्यापुरोनुवाक्याधर्मउक्तस्तत्रवाक्यद्वयंसंधायएकश्रुत्यामंत्रःपठनीयःचतुरवत्तताचकर्तव्या श्रौतधर्मस्यतत्रप्राप्तत्वादित्येके ॥ यावद्वाचनिकंप्रमाणमितिन्यायेननगृह्येश्रौतधर्मप्राप्तिरित्यन्ये ॥

द्यथा ॥ ॐ मूलंप्रजांवीरवतीं० ४ मह्यो ३ महंर्नोअद्य० ४ मह्यंस्वाहा १०८ वा २८ कृसरान्नेन ॥ ॐ इंद्रोज्येष्ठामनु० रिष्टों ३ पुरंदरायवृष० ८ लोकंस्वाहा १०८ वा २८ ॥ ॐयादिव्याआपः० भवंतों ३ याश्चकूप्याया० ८ भेवंतुस्वाहा १०८ वा २८ ॥ उपहोमआज्येन ॐप्रजापतयेस्वाहा ॥ ॐमूलायस्वाहा॥ ॐप्रजायैस्वाहा॥ ॐइंद्रायस्वाहा॥ ॐज्येष्ठायैस्वाहा॥ ॐज्यैष्ठ्याय स्वाहा॥अभिजित्यैस्वाहा ॥ २ ॐ अद्भ्यःस्वाहा ॥ ॐअषाढाभ्यःस्वाहा ॥ ॐसमुद्रायस्वाहा ॥ ॐकामायस्वाहा ॥ ॐअभिजित्यै स्वाहा ॥ ३ इतिदेवतात्रयोपहोमः ॥ अथनिर्ऋतिसूक्तं ॥ ॐ चक्षुषोहेते० कृणुस्वाहा १ ॐ योमाचक्षुषा० कृणुस्वाहा २ ॐ य त्किंचासौ० हंतुस्वाहा ३ ॐ यातुधानानि० करोतिस्वाहा ४ ॐ हन्मितेहं० स्यंस्वाहा ५ ॐ अपनह्यामि० तंस्वाहा ६ पुरा मुष्यव० तयःस्वाहा ७ ॐ अंतिदूरेस० महंस्वाहा ८ ॐ योमानक्तं० मसिस्वाहा ९ ॥ अथेंद्रसूक्तं ॥ ॐतिष्ठाहरीरथ० दाय स्वाहा १ ॐ कस्यवृषा० धनेस्वाहा २ ॐइंद्रमभैह० क्रतुःस्वाहा ३ ॐ उपनोहरिं० अर्कैःस्वाहा ४ ॐ व्युस्त्रियोअस्तो० दयत्स्वाहा ५ ॐ भरेष्विंद्रं० येस्वाहा ६ ॐ महिक्षेत्रं० मग्निंस्वाहा ७ ॐ उरुंनोलोक० बृहंतास्वाहा ८ ॐ आनोविश्वाभि० मिंद्र स्वाहा ९ ॐ इंद्रायगावआ० नःस्वाहा १० ॐ गर्भस्तयो० महीस्वाहा ११ ॐ अस्यस्तो० नुस्वाहा १२ ॥ अप्सूक्तं ॥ ॐहिरण्यवर्णाः० तुस्वाहा १ ॐ यासांरा० तुस्वाहा २ ॐ यासांदेवा० तुस्वाहा ३ ॐशिवेनंमा० धत्तस्वाहा ४ ॐआपो भद्रा० गन्स्वाहा ५ ॐ आदित्पश्याम्यु० दावःस्वाहा ६ ॐआपोहिष्ठा० सेस्वाहा ७ ॐयोवःशिव० तरःस्वाहा ८ ॐतस्माअरं ग० नःस्वाहा ९ ॥ इतिसूक्तत्रयेणहुत्वा यथादैवतंत्यागःकार्यः ॥ ततश्चतुर्विंशतिदेवताभ्योनाममंत्रैर्होमः ॥ ॐ विश्वेभ्यो देवेभ्यःस्वाहा० ॐ विष्णवे० ॐवसुभ्यः० ॐ वरुणाय० अजायैकपदे० ॐ अहयेबुध्नियाय० ॐ पूष्णे० ॐअश्विभ्यां०

ॐ यमाय ॐ अग्नये० ॐ प्रजापतये० ॐ सोमाय० ॐ रुद्राय० ॐ अदित्यै० ॐ बृहस्पतये० ॐ सर्पेभ्यः ॐ पितृभ्यः ॐ अर्यम्णे० ॐ भगाय० ॐ सवित्रे० ॐत्वष्ट्रे० ॐ वायवे० ॐइंद्राग्निभ्यां० ॐ मित्रायस्वाहा ॥ यथादैवतंत्यागः॥ततःइमं मेवरुणेत्यादिस्विष्टकृदंतंहुत्वा शुल्वप्रहरणादिप्रायश्चित्तहोमांतेयजमानोवलीन्दद्यात् ॥ यजमानआचम्यप्राणानायम्यअद्यपू० मयाकृतस्यआचार्यादिद्वारासग्रहमखमूलजननशांतिकर्मणःसांगतासिद्ध्ये इंद्रादिलोकपालेभ्यआदित्यादिदेवताभ्यः मुख्यदेवताभ्यश्चसदीपमाषभक्तवलिप्रदानमहंकरिष्ये॥ॐत्रातारमिंद्र० ॐभूर्भुवःसुवःइंद्रायनमः सर्वोपचारार्थेगंधाक्षतान्समर्पयामि॥ इंद्रायसांगायसपरिवारायसायुधायसशक्तिकायेमंसदीपमाषभक्तवलिंसमर्पयामि ॥ भोइंद्रदिशंरक्षवलिंभक्षममसकुटुंवस्यायुःकर्ताक्षेमकर्ताशांतिकर्तापुष्टिकर्तातुष्टिकर्तानिर्विघ्नकर्ताआरोग्यकर्तावरदोभव अनेनवलिदानेनेंद्रःप्रीयतां॥१॥ एवंपूर्वग्रहयज्ञोक्तप्रकारेणलोकपालेभ्योग्रहेभ्यश्चवलीन्दत्वा ॐ मूलंप्रजांवीरवतीं० ८ निर्ऋत्याद्यावाहितदेवताभ्योनमः सर्वोपचारार्थेगंधाक्षतान्समर्प० निर्ऋत्याद्यावाहितदेवताभ्यःसांगाभ्यः० ॥ भोनिर्ऋत्याद्यावाहितदेवताःअमुंवलिंगृह्णीतममसकुटुंवस्यायुःकर्त्र्यः० वरदाभवतअनेननिर्ऋत्याद्यावाहितदेवताःप्रीयंतां ॥ पुनःसंकल्पपूर्वकंक्षेत्रपालायचपूजनपूर्वकंवलिंदत्वा बलौनीतेहस्तौपादौ प्रक्षाल्यब्राह्मणैर्दशशांतीःपाठयेत्॥अद्यपूर्वो० मयाकृतस्यआचार्यादिद्वारासग्रह० मूलशांति० सर्वकर्मप्रपूरणींभद्रद्रव्यदांपूर्णा

१ ताश्च ॐभद्रंकर्णेभिःशृ० स्वस्तिनइंद्रो० ॥ १ ॥ ॐनमोब्रह्मणे० २ ॐतच्छंयोरावृणीमहे० ।। ३ ॥ ॐनमोवाचेयाचोदिता० ४ ॐशंनोवातःपवतां० ५ ॐसंत्वासिंचामिय० ६ ॐशंनोमित्रःशंवरुणः० ७ ॐसहनाववतु० ८ ॐसहनाववतु० ९ ॐसहनाववतु० १० इत्येतादशशांतयः ।

हुतिंहोष्यामिअग्नेत्वमिडनामासि ॥ आज्यंद्वादशवारंगृहीत्वा ॐसप्तते अग्नेसमिधः० घृतेनस्वाहा॥सप्तवतेग्नयइदं०॥ॐपूर्णाहु तिमुत्तमांजुहोति॥ सर्वंवैपूर्णाहुतिः ॥ सर्वमेवाप्नोति॥ अथोइयंवैपूर्णाहुतिः ॥ अस्यामेवप्रतितिष्ठति ॥ पूर्णाहुतिमुत्तमांजुहोति॥ प्रत्युत्तंध्यैसयत्वाय ॥ ॐ वसुभ्योरुद्रेभ्यआदित्येभ्यः स्वाहा ॥ वसुभ्योरुद्रे० ॥ कर्मपरिपूरणार्थंप्रायश्चित्ताहुतिंहुत्वाबर्हिषि पूर्णपात्रंनिनयेत् ॥ ॐ सदसि० ॐ यज्ञनमस्ते० उपतेनमः ॥ कर्मशेषंसमापयेत् ॥ अद्यपू० स्थापितदेवतानामुत्तरपूजांक रिष्यइतिसंकल्प्य गंधाद्युपचारैःपूजयेत् ॥ ततःकलशोदकंपात्रांतरेगृहीत्वासर्त्विगाचार्यःशतच्छिद्रकलशेनसकुटुंबंयजमानम भिषिंचेद्वक्ष्यमाणैर्मंत्रैः ॥ तेचमंत्राः ॥ मूलंप्रजांवीर० ८ इंद्रोज्येष्ठाम० ८ यादिव्याआपः ८ चक्षुषोहेतेइतिनवर्ग्भिः (वाक्यानि ३६) तिष्ठाहरीर० अनुवाकेन ॥ हिरण्यवर्णाः शु० ऋ० १३ शतायुधायेतिपंचभिर्मंत्रैः ॥ योसौखड्गधरोदेवो निर्ऋतीराक्षसाधिपः ॥ प्रशामयतुमूलोत्थंदोषंगंडांतसंभवं १ योसौवज्रधरोदेवोमहेंद्रोगजवाहनः॥ मूलजातशिशोर्दोषंमाता पित्रोर्व्यपोहतु २ योसौनिधिपतिर्देवःखड्गभृद्वाजिवाहनः ॥ प्रशामयतुमूलोत्थंदोषंबालस्यशांतिदः ३ योसौदंडधरोदेवोध र्मोमहिषवाहनः ॥ मूलजातशिशोर्दोषंव्यपोहतुयमोमम ४ योसौशक्तिधरोदेवोहुतभुङ्मेषवाहनः ॥ सप्तजिह्वश्चदेवोग्निर्मूल दोषंव्यपोहतु ५ योसौपाशधरोदेवोवरुणश्चजलेश्वरः ॥ नक्रवाहश्चेकितानोमूलदोषंव्यपोहतु ॥ योसौदेवोजगत्प्राणोमारुतोमृ गवाहनः ॥ मातापित्रोःशिशोश्चैवमूलदोषंव्यपोहतु ७ योसौपशुपतिर्देवःपिनाकीवृषवाहनः ॥ आश्लेषामूलगंडांतदोषमाशु

१ एषक्रमोदिक्क्रमेणायुक्तोभाति ॥ शौनकादिकैस्तु योसौवज्रध० १ योसौशक्तिधरोदेवोहुतभु० २ योसौदंडधरोदे० ३ योसौखड्गधरोदेवो निर्ऋ० ४ योसौपाशधरो० ५ योसौदेवोजगत्प्राणो० ६ योसौनिधिपतिर्दे० ७ योसौपशुपतिर्दे० ८ इतिक्रमउक्तः ॥

व्यपोहतु ८ विघ्नेशःक्षेत्रपोदुर्गालोकपालानवग्रहाः ॥ सर्वदोषप्रशमनंशीघ्रंकुर्वंतुशांतिदाः ९ इतिपौराणमंत्रैः ॥ ॐ देवस्य त्वास० अश्विनो०पूष्णोहस्ता० अश्विनोर्भै० इत्यादिमंत्रैरभिषिंचेत् ॥ ततोयजमानःस्नात्वाधौतेवाससीपरिधायाचम्यविभूतिधारणंकुर्यात् ॥ अग्निंपूजयेत् ॥ प्रमादात्कुर्व० ॥ अनेनआचार्यादिद्वारामत्कृतेनमूलशांतिहोमाख्येनकर्मणायज्ञभोक्तापरमेश्वरःप्रीयतां ॥ पुनरद्येत्यादि०मयाकृतस्यसग्रहमखमूलशांत्याख्यस्यकर्मणःसांगतासिद्ध्यातत्संपूर्णफलावाप्त्यर्थंआचार्यायकृष्णधेनुनिष्क्रयद्रव्यंब्रह्मणेकृष्णानडुन्निष्क्रयद्रव्यंरुद्रजापिनेहवनकर्तृभ्यऋत्विग्भ्योयथाशक्तिसुवर्णनिष्क्रयद्रव्यदानंचकरिष्ये ॥ आचार्यादीन्पूजयिष्ये ॥ नमोस्त्वनंतायेतिसंपूज्य ॥ सतिसंभवेदशदानानिदद्यात् ॥ पीठदेवताःयांतुदेवेतिविसृज्यआचार्यायदत्वा आचार्यो ॐ देवस्यत्वासवितुः०प्रतिगृह्णामि ॥ कृतस्यकर्मणःसांगतासिद्ध्यर्थंयथाशक्तिब्राह्मणभोजनंनानानामगोत्रेभ्योब्राह्मणेभ्योभूयसीदक्षिणाप्रदानंचकरिष्ये ॥ नमोस्त्वनंताय० ॥ अनेनसग्रहमखमूलशांत्याख्येनकर्मणा० ॐ तत्सत्० वषट्ते० कर्मांतेद्विराचमनं ॥ तस्मिन्नेवदिनेन्यस्मिन्वाशुभेह्निजातकर्मादिकुर्यात् ॥ इतिसंस्कारनिर्णयेबौधायनोक्तामूलजननशांतिःसमाप्ता ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १८२ ॥ ज्येष्ठाजननशांतिः ॥

श्रीः ॥ आचमनादिदेशकालोत्कीर्तनांतेममास्यशिशोःज्येष्ठानक्षत्रजननसूचितसकलारिष्टनिरसनद्वाराशुभतासिद्ध्ययेश्रीपरमेश्वरप्रीत्यर्थंबौधायनोक्तांसग्रहमखांज्येष्ठाजननशांतिंकरिष्ये ॥ तदंगंगणेशपूजनस्वस्तिवाचनमातृकापूजननांदीश्राद्धाचार्यवरणादि० ॥ आचार्यः प्रादेशकरणांते स्थंडिलेउद्धननादिनाभूसंस्कारंविधायवरदनामानमग्निंप्रतिष्ठाप्यध्यात्वा स्थंडिलपूर्वभा

गे ग्रहानावाह्यसंपूज्यतदीशान्यांवरुणंचावाह्यसंपूज्य ग्रहमंडलोत्तरतश्चतुर्विंशतिदलान्वितंपंकजंनिर्मायेत्यादिमूलशांतिवत् पंचास्यरुद्रावाहनपूजनादिकृत्वा कुंभमुखेबिल्वपत्राणिनिधायपूर्णपात्रनिधानांतंकृत्वा मध्येसुवर्णप्रतिमायां ॐ इंद्रोंज्येष्ठाम नु० यजमानायलोकं ॥ ८ ॥ इतींद्रमावाह्यतद्दक्षिणे ॐ ऋध्यास्मह्वयैर्न० वितंतैरंतरिक्षे ॥ ८ ॥ इतिमित्रमधिदेवतां इंद्रो त्तरे ॐ मूलंप्रजांवीरवंतीं० शिवमस्तुमह्यं ॥८ ॥ इतिनिर्ऋतिंप्रत्यधिदेवतामावाह्य पंकजदलेषुप्रादक्षिण्येन ॐ अद्भ्योनमः अपःआवा० ॥ १ ॥ ॐ विश्वेभ्योदेवेभ्यो० ॥ २ ॥ विष्णवे० ३ ॐ वसुभ्यो० ४ ॐ वरुणाय० ५ ॐ अजायैकपदे० ६ ॐ अहयेबुध्नियाय० ७ ॐ पूष्णे० ८ ॐ अश्विभ्यां० ९ ॐ यमाय० १० ॐ अग्नये० ११ ॐ प्रजापतये० १२ ॐ सो माय० १३ ॐ रुद्राय० १४ ॐ अदितये० १५ ॐ बृहस्पतये १६ ॐ सर्पेभ्यो० १७ ॐ पितृभ्यो० १८ ॐ अर्यम्णे० १९ ॐ भगाय० २० ॐ सवित्रे० २० ॐ त्वष्ट्रे० २२ ॐ वायवे० २३ ॐ इंद्राग्निभ्यां० २४ इत्यावाह्यसंपूज्यसर्त्विगा चार्यःकुंभमन्वारभ्य शतायुधायेतिपंच आशुःशिशानोवृ० कृणुष्वपाजःप्र० मदेचिदस्येतिवर्जं ममाग्नेवर्चो० ३ प्रजापतेरक्ष्य० ४ पवमानःसुवर्जनः० ५ सर्वेषुवाएषुलोकेषु ६ एताननुवाकान् हरिंहरंत० १ शल्कैरग्नि० २ माछिदोमृ० ३ मानोमहां त० ४ मानस्तोके० ५ प्रजापतेनत्व० ६ स्वस्तिदाविशस्प० ७ त्र्यंबकंयजा० ८ येतेसहस्र० इतिमंत्रान् ॐ मृत्युर्नश्यत्वा युर्वर्धतांभूःस्वाहा ॥ मृत्युरित्यादिसर्वत्रभुवःस्वाहा ॥ सुवःस्वाहा ॥ भूर्भुवःसुवःस्वाहा ॥ एकादशावृत्तिभिःसकृद्वारुद्रंच जपेत् ॥ वैशेषिकप्रधानहोमे ग्रहान्वाधानांते इंद्रं मित्रं निर्ऋतिंचअष्टवाक्यात्मकतत्तन्मंत्रैः प्रत्येकं अष्टोत्तरशत (२८वां) संख्याकाभिः कृसराहुतिभिः देवतात्रयोपहोमदेवताः प्रत्येकमेकैकयाज्याहुत्या इंद्रं द्वादशर्चेनइंद्रसूक्तेनप्रत्यृचमेकैकयाज्या

हुत्या मित्रं षडृचेनमित्रसूक्तेनप्रत्यृचमेकैकयाज्याहुत्या निर्ऋतिंनवर्चेननिर्ऋतिसूक्तेनप्रत्यृचमेकैकयाज्याहुत्या अवादींद्रा
ग्न्यंताश्चतुर्विंशतिनक्षत्रदेवताःनाममंत्रेणप्रत्येकमेकैकयाज्याहुत्यायक्ष्ये ॥ अङ्गहोमेवरुणंद्विरित्यादि० ॥ अथहोमः ॐ इंद्रो
ज्येष्ठाम० ८ ॐ ऋद्ध्यास्महव्यै० ॥ ॐ मूलंप्रजांवीर० ८ ॐ इंद्रायस्वाहा ॐ ज्येष्ठायैस्वाहा ॐ ज्यैष्ठ्यायस्वाहा
ॐ अभिजित्यैस्वाहा ॐ मित्रायस्वाहा ॐ अनूराधेभ्यःस्वाहा ॐ मित्रधेयायस्वाहा ॐ अभिजित्यैस्वाहा ॐ प्रजापतयेस्वाहा
ॐ मूलायस्वाहा ॐ प्रजायैस्वाहा ॥ सूक्तहोमे ॥ इंद्रसूक्तंद्वादशर्चं ॐ तिष्ठाहरीरथ० दायस्वाहा १ ॐ कस्यवृषा० धनेस्वाहा
२ ॐ इंद्रमभैंहवा० क्रतुःस्वाहा ३ ॐ उपनोहरिं० अर्कैःस्वाहा ४ ॐ व्युंस्त्रिधोअस्रो० दयत्स्वाहा ५ भरेष्विंद्रंꣳसु० ये
स्वाहा ६ ॐ महिक्षेत्रं० मन्निꣳस्वाहा ७ ॐ उरुंनोलोक०वृहंतास्वाहा ८ ॐ आनोविश्वाभि० मिंद्रस्वाहा ९ ॐ इंद्रायगा
वआ० नःस्वाहा १० ॐ गर्भस्तयो० महीꣳस्वाहा ११ अस्यस्तो० नुस्वाहा १२ मित्रसूक्तंषडृचं ॐमित्रोजनान्यातयति० १
ॐप्रसमित्र० २ॐअयंमित्रो० ३अनमीवासइडया० ४ मित्रंनईꣳशिम्या० ५ महाꣳआदित्यो० जुहोत ६ निर्ऋतिसूक्तंनवर्चं
ॐ चक्षुषोहेते० कृणुस्वाहा १ ॐ योमाचक्षुषा० कृणुस्वाहा २ ॐ यत्किंचासौम०हंतुस्वाहा ३ ॐ यातुधानानि० करोति
स्वाहा ४ ॐ हन्मितेहं० म्यास्यꣳस्वाहा ५ ॐ अपनह्यामिते० कृतꣳस्वाहा ६ ॐ पुरामुष्यव० तयुःस्वाहा ७ ॐ अंति
दूरेसतो०महꣳस्वाहा ८ ॐ योमानक्तं०मसिस्वाहा ९ देवताहोमअद्भ्यःस्वाहाइंद्राग्निभ्याꣳस्वाहाइतिचतुर्विंशतिनाममंत्रैर्मूल
शांतिवत्कार्यः ॥ शेषंमूलशांतिवत् ॥ मूलशब्दस्थानेज्येष्ठाशब्दः इतिबौधायनोक्ताज्येष्ठाजननशांतिः ॥ ॥ छ ॥

 

## आश्लेषाशांतिः ॥

श्रीः॥जन्मतोद्वादशेन्यतमेवाशुभदिवसेगोमुखप्रसवशांतिंविधाययजमानआचम्यप्राणानायम्यदेशकालौस्मृत्वाममास्यशिशोः आश्लेषानक्षत्रजन्मसूचितसकलारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थं सग्रहमखांबौधायनोक्तांआश्लेषानक्षत्रशांतिंकरिष्ये ॥ तदंगंगणेशपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंआचार्यवरणंचकरिष्यइतिसंकल्प्यउक्तरीत्याकुर्यात् ॥ अथाचार्यः अमुकगोत्रेणशर्मणावृतोहंआचार्यकर्मकरिष्येइतिसंकल्प्यशरीरशुद्ध्येपुरुषसूक्तंजप्त्वासर्षपान्विकीर्यपंचगव्यशुद्धोदकाभ्यांभुवं प्रोक्ष्य ॥ आश्लेषाशांत्यंगंस्थंडिलादिसर्वंकर्मकरिष्ये ॥ गोमयेनोपलिप्यउद्धननादिभूसंस्कारंविधायवरदनामानमग्निंप्रतिष्ठाप्यचत्वारिशृंगेतिध्यात्वा ॥ स्थंडिलस्यपूर्वभागेग्रहानावाह्यपूजयेत् ॥ ग्रहमंडलस्योत्तरतश्चतुर्विंशतिदलान्वितंपंकजंविलिख्यसितासितरक्तपीतरजोभीरंजितंकृत्वातदुपरिद्रोणपरिमितान्व्रीहीन्निधायतदुपरिद्रोणार्धपरिमितांस्तंडुलान्निधायतदुपरिद्रोणपरिमितांस्तिलान्प्रसार्यचतुरस्रंकृत्वातत्रअव्रणंनवंतंतुवेष्टितकंठंकलशंमहीद्यौरित्यादिनाप्रतिष्ठापयेत् ॥ ॐमहीद्यौः० ॐओषधयः० ॐआजिघ्र० ॐइमंमेगंगे० ॐआपोवाइद९० उदकेनपूरयेत्॥ ओषध्यादिक्षिप्त्वातस्मिन्कुंभेजलमध्यएवक्रमेणदेवताआवाहयेत्॥ मध्येॐसद्योजातं० इतिमंत्रेण सद्योजातंआवाहयामि॥ पूर्वे ॐवामदेवाय० वामदेवं०॥दक्षिणे ॐअघोरेभ्यो० अघोरं० ॥ प्रतीच्यांॐतत्पुरुषाय० तत्पुरुषं०॥ उदीच्यांॐईशानःसर्वं० ईशानंआवाहयामीत्यावाह्यनर्यप्रजामितिप्रतिष्ठाप्य ॐभूर्भुवःसुवःपंचास्यरुद्रायनमः इतिगंधाद्युपचारैःपूजयेत् ॥ कुंभमुखेबिल्वपत्राणिनिधायपूर्णादर्वि० इतिपूर्णपात्रंनिधायतत्रसुवर्णाद्रिनिर्मितास्तिस्रःप्रतिमावक्ष्यमाणमंत्रैःप्रतिष्ठाप्य प्रधानदेवतासर्पाः ॐइदंसर्पेभ्यो० मधुमज्जुहोमि ॥ अस्यांप्रतिमा

यांसर्पेभ्योनमःसर्पानावाहयामि ॥ अधिदेवताबृहस्पतिः ॐबृहस्पतिःप्रथमं० पतयःस्याम ॥ दक्षिणेबृहस्पतिमावाहयामि ॥ प्रत्यधिदेवतापितरः ॐउपहूताःपितरोयेमघासु० सुकृतंजुषंतां॥ पितृभ्योनमः पितृनावाहयामि ॥ ततःप्रागादिचतुर्विंशति दलेषुप्रदक्षिणंप्रतिमासुअक्षतपुंजेषुवाअर्यमाद्याअदित्यंताश्चतुर्विंशतिदेवताआवाहयेत् ॥ ॐअर्यम्णे० १ ॐभगाय० २ ॐसवित्रे० ३ ॐत्वष्ट्रे० ४ ॐवायवे० ५ ॐइंद्राग्निभ्यां० ६ मित्राय० ७ ॐइंद्राय० ८ ॐनिर्ऋतये० ९ अद्भ्यो० १० ॐविश्वेभ्योदेवेभ्यो० ११ ॐविष्णवे० १२ ॐवसुभ्यो० १३ ॐवरुणाय० १४ ॐअजायैकपदे० १५ ॐअहयेबुध्नियाय० १६ ॐपूष्णे० १७ ॐअश्विभ्यां० १८ ॐयमाय० १९ ॐअग्नये० २० ॐप्रजापतये० २१ ॐसोमाय० २२ ॐरुद्राय० २३ ॐअदितये० २४ तत्तन्मंत्रेणनाममंत्रेणवा ॥ सर्पादिदेवताभ्योनमःइतिषोडशोपचारैःपूजयेत् ॥ ततःसर्त्विगाचार्यःकुंभमन्वारभ्यमंत्रान्जपेत् ॥ ॐशतायुधायेतिपंच ॐआशुःशिशानो० १ ॐकृणुष्वपाज० २ मदेचिदस्येतिवर्जं ॐममाग्नेवर्चो० ३ ॐप्रजापतेरक्ष्य० ४ ॐपवमानःसुव० ५ ॐसर्वेषुवाएषुलोके० ६ एताननुवाकान्जपेत्॥ ॐहरिंहरंत० ॐशल्कैरग्नि० ॐमाछिंदोमृ० ॐमानोमहांत० ॐमानस्तोके० ॐप्रजापतेन० ॐस्वस्तिदावि० ॐत्र्यंबकंयजा० ॐयेतेसहस्र० ॥ इतिमंत्रान्जपेत् ॥ मृत्युर्नश्यत्वायुर्वर्धतांभूःस्वाहा मृत्युरित्यादिसर्वत्र भुवःस्वाहा सुवःस्वाहा भूर्भुवःसुवःस्वाहा ॥ एकादशावृत्तिभिःसकृद्वारुद्रंजपेत् ॥ ततआचार्योग्नेःपश्चादुपविश्यक्रियमाणेसग्रहमखाश्रेषाशांतिहोमेदेवता० करिष्ये ॥ समित्रयमादाय

१ अत्रलिखितःक्रमएवसुवचः अर्यमाराजाजरस्तुविष्मान् ॥ फल्गुनीनामितिश्रुतिलिंगात् ॥ २ रुद्रंरुद्राध्यायंएकादशनमकानुवाकानित्यर्थः। महाग्निचयनादौरुद्रशब्देननमकानुवाकानामेवग्रहणात् ॥

श्रद्धएहीत्यादिप्राणायामांतंकृत्वा सग्रहमखाश्लेषाशांतिहोमकर्मणियायक्ष्यमाणादेवतास्ताःसर्वाःपरिग्रहीष्यामि ॥ वैशेषिक होमेआदित्यादिनवग्रहदेवताःअष्टाष्टसंख्याकाभिःसमिच्चर्वाज्याहुतिभिः अधिदेवताःप्रत्यधिदेवताश्चतैरेवद्रव्यैश्चतुश्चतुःसंख्याकाभिराहुतिभिः गणपत्यादिदेवतादिक्पालदेवताश्चतैरेवद्रव्यैःद्वाभ्यांद्वाभ्यामाहुतिभ्यां ॥ सर्पान्बृहस्पतिंपितॄन् आवाहनोक्तमंत्रैः कृसरान्नेनप्रत्येकंअष्टोत्तरशतसंख्याकाभिराहुतिभिः देवतात्रयोपहोमेमंत्रोक्तदेवताःएकैकयाहुत्याआज्येन ॥ सर्पान्षड्ऋचेनसर्पसूक्तेनप्रत्यृचमेकैकयाहुत्याआज्येन बृहस्पतिंषड्ऋचेनबृहस्पतिसूक्तेनप्रत्यृचमेकैकयाहुत्याआज्येन पितॄन्अष्टादशर्चेनपितृसूक्तेनप्रत्यृचमेकैकयाहुत्याआज्येन ॥ अर्यमाद्याअदित्यंतानक्षत्रदेवताः नाममंत्रेणएकैकयाहुत्याआज्येन॥अंगहोमेवरुणंद्विरित्यादि ॥ सामान्यप्रधानांतंहुत्वाग्रहहोमंकुर्यात् ततःप्रधानहोमःकृसरान्नेन ॐइदंसर्पेभ्यो० मधुमज्जुहोमिस्वाहा १०८ ॐबृहस्पतिःप्रथमं० पतयःस्यामस्वाहा १०८ ॐउपहूताःपितरो० सुकृतंजुषंतांस्वाहा १०८ ॥ उपहोमआज्येनैकैकयाहुत्या ॐसर्पेभ्यःस्वाहा ॐआश्लेषाभ्यः० ॐदंदशूकेभ्यः० ॐबृहस्पतये० ॐतिष्याय० ॐब्रह्मवर्चसाय० ॐपितृभ्यःस्वाहा ॐमघाभ्यःस्वाहा ॐनघाभ्यःस्वाहा ॐगदाभ्यः० ॐअरुंधतीभ्यः० ॥ सर्पसूक्तं ॥ ॐभूमिर्भूम्नाद्यौ० उपस्थेतेदे० दंधेस्वाहा १ ॐआयंगौःपृ० पितरं० सुवःस्वाहा २ ॐत्रिंशद्धामवि० प्रत्य० द्युभिःस्वाहा ३ ॐअस्यप्राणाद० व्यख्य० षःसुवःस्वाहा ४ ॐनमोअस्तुसर्पेभ्यो० सर्पेभ्योनमःस्वाहा ५ ॐयेदोरोचने० सर्पेभ्योनमःस्वाहा ६ ॐयाइषवोयातु० सर्पेभ्योनमःस्वाहा ७ इतिसर्पसूक्तं ॥ बृहस्पतिसूक्तं ॥ ॐआवेधसंनीलपृष्ठंवृहन्तं ॥ बृहस्पतिंसदनेसादयध्वं ॥ सादद्योनिंदमआदींदिवांसं ॥ उपह्वुवाधोनमसासदेमस्वाहा॥ १ ॐसहिशुचिःशतपत्रःसशुंध्यूः॥ हिरण्यवाशीऋषिरःसुवर्षाः । बृहस्पतिः

सस्वांवेशकृष्वाः ॥ पूरूसखिभ्यआसुतिंकरिष्ठःस्वाहा ॥ २ ॐबृहस्पतिःप्रथमंजायमानः ॥ महोज्योतिषःपरमेव्योमन् ॥ सप्तास्य स्तुविजातोरवेण ॥ विसप्तरश्मिरधमत्तमांश्ससिस्वाहा १ ॐबृहस्पतिःसमजयद्वसूनि ॥ महोव्रजान्गोमतोदेवएषः ॥ अपःसिषा सन्त्सुवरप्रतीत्तः ॥ बृहस्पतिर्हंत्यमित्रमकैःस्वाहा २ ॐबृहस्पतेपरिदीयारथेनरक्षोहामित्रांश्अपबाधमानः ॥ प्रभंजन्सेनाःप्रमृ णोयुधाजयन्नस्माकमेध्यविताराथानांश्स्वाहा ३ ॐएवापित्रेविश्वदेवायवृष्णेयज्ञैर्विधेमनमसाहविर्भिः ॥ बृहस्पतेसुप्रजावीरवं तोवयंश्स्यामपतयोरयीणांश्स्वाहा ४ इतिबृहस्पतिसूक्तं ॥ अथपितृसूक्तं ॥ ॐउशंतस्त्वाहवामह० अत्तवेस्वाहा १ ॐआनो अग्नेसुकेतुना ॥ रयिंविश्वायुपोषसं ॥ मार्डीकंधेहिजीवसेस्वाहा २ ॐत्वंश्सोममहेभगं ॥ त्वंयूनऋतायते ॥ दक्षंदधासिजीवसे ॥ रथंयुंजतेमरुतःशुभेसुगंश्स्वाहा ३ ॐत्वंश्सोमप्रचिकितोम० तधीराःस्वाहा ४ ॐत्वयाहिनःपितरःसो० भवानःस्वाहा ५ ॐत्वंश्सोमपितृभिःसं० रयीणांश्स्वाहा ६ ॐबर्हिषदःपितरऊ० दधातस्वाहा ७ ॐआहंपितृन्सुविदत्रांश्अ० गमिष्ठाः स्वाहा ८ ॐउपहूताःपितरःसोम्यासो० त्वस्मान्स्वाहा ९ ॐअग्निष्वात्ताःपितरए० दधातनस्वाहा १० ॐअग्निष्वात्तानृतु मतोहवामहे ॥ नराशंश्सेसोमपीथंयआशुः ॥ तेनोअर्वंतःसुहवाभवंतु ॥ शंनोभवंतुद्विपदेचतुष्पदेस्वाहा ११ ॐयेअग्निष्वा त्तायेनग्निष्वात्ताः ॥ अंश्होमुचःपितरःसोम्यासः ॥ परेवरेमृतासोभवंतः ॥ अधिब्रुवंतुतेअवंत्वस्मान्स्वाहा १२ ॐवान्यायै दुग्धेजुषमाणाःकरंभं ॥ उदीराणाअवरेपरेच ॥ अग्निष्वात्ताऋतुभिःसंविदानाः ॥ इंद्रवंतोहविरिदंजुषंताश्स्वाहा १३ ॐयद ग्नेकव्यवा० पितृभ्यआस्वाहा १४ ॐत्वमग्नईडितोजातवेदो० हवींश्षिस्वाहा १५ ॐमातलीकव्यैर्य० मदंतिस्वाहा १६ ॐयेतातृपुर्देवत्राजेहमानाः ॥ होत्रावृधःस्तोमतष्टासोअर्कैः ॥ आग्नेयाहिसुविदत्रेभिरर्वाङ् ॥ सत्यैःकव्यैःपितृभिर्घर्मसद्भिःस्वाहा

१७ ॐहव्यवाहममजरंपुरुप्रियं ॥ अग्निंघृतेनहविषासपर्यन् ॥ उपासदंकव्यवाहंपितॄणां ॥ सनःप्रजांवीरवतीꣳसमृण्वतुस्वाहा
१८ इतिपितृसूक्तं ॥ ततश्चतुर्विंशतिनक्षत्रदेवतानाममंत्रैरेकैकयाहुत्याआज्येन यथालिंगंत्यागः ॥ ॐअर्यम्णेस्वाहा १ ॐभ
गाय० २ ॐसवित्रे० ३ ॐत्वष्ट्रे० ४ ॐवायवे० ५ ॐइंद्राग्निभ्यां० ६ ॐमित्राय० ७ ॐइंद्राय० ८ ॐनिर्ऋतये० ९
ॐअद्भ्यः० १० ॐविश्वेभ्योदेवेभ्यः० ११ ॐविष्णवे० १२ ॐवसुभ्यः १३ ॐवरुणाय० १४ ॐअजायैकपदे० १५ ॐअह
येबुध्नियाय० १६ ॐपूष्णे० १७ ॐअश्विभ्यां० १८ ॐयमाय० १९ अग्नये० २० ॐप्रजापतये० २१ ॐसोमाय० २२
ॐरुद्राय० २३ अदित्यै० २४ इतिनक्षत्रहोमः ॥ ततइमंमेवरुणेत्यादिस्विष्टकृदंतंहुत्वाशुल्वप्रहरणादिप्रायश्चित्तहोमांतंकृत्वा
इंद्रादिदेवताभ्योबलीन्दत्वाक्षेत्रपालायबलिंदत्वापूर्णाहुतिंजुहुयात् ॥ ॐवसुभ्योरुद्रे० वसुभ्योरुद्रेभ्यआदित्येभ्यःसꣳस्राव
भागेभ्यइदं० ॥ ततोबर्हिंषिपूर्णपात्रंनिनयेत् ॥ ॐयुज्ञनमस्तेयज्ञ० कर्मसमापयेत् ॥ स्थापितदेवतानामुत्तरपूजांविधायकल
शोदकंपात्रांतरेगृहीत्वा सकुटुंबंयजमानमभिषिंचेद्वक्ष्यमाणैर्मंत्रैः ॥ ॐइदꣳसर्पेभ्यो० ८ ॐबृहस्पतिःप्रथमं० ८ ॐउपहू
ताःपितरो० ८ सर्पसूक्तेनबृहस्पतिसूक्तेनपितृसूक्तेनशतायुधायेतिपंचभिर्मंत्रैः ॥ योसौपशुपतिर्देवःपिनाकीवृषवाहनः ॥ आ
श्रेषामूलगंडांतदोषमाशुव्यपोहतु ॥ विघ्नेशःक्षेत्रपोदुर्गालोकपालानवग्रहाः ॥ सर्वदोषप्रशमनंशीघ्रंकुर्वंतुशांतिदाः ॥ ॐदेव
स्यत्वा० ॐआसत्येनेति ९ मंत्रैः समुद्रज्येष्ठाइत्यादिमंत्रैः॥ अग्निपूजांकृत्वा प्रमादात्० विष्णुंस्मृत्वा ॥ अनेनसग्रहमखाश्रेषा
शांतिहोमेनभगवान्यज्ञनारायणःप्रीयतां ॥ यजमानःअद्येत्यादिमयाकृतस्यआचार्यद्वारासग्र० आश्रेषाशांतिकर्मणःसांगतासि
द्ध्यर्थं आचार्यायकृष्णधेनुनिष्क्रयद्रव्यंब्रह्मणेकृष्णवृषनिष्क्रयद्रव्यदानंहवनकर्तृभ्योजपकर्तृभ्यऋत्विग्भ्यः सुवर्णनिष्क्रयद्रव्य

दानंआचार्यादीनांपूजनं आवाहितदेवतानांपीठदानंपंचाधिकब्राह्मणभोजनंतेभ्योभूयसीदक्षिणादानंचकरिष्ये ॥ नमोस्त्वनंताय० पीठदानसांगतार्थमाचार्यायदक्षिणादानं ॥ गच्छगच्छ० ॥ अनेनकर्मणाभगवान्परमेश्वरःप्रीयतांनमम ॐ तत्सद्ब्रह्मार्पणमस्तु ॐवषट्ते० ॥ इतिबौधायनोक्ताआश्रेषाशांतिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १८४ ॥ कृष्णचतुर्दशीजननशांतिः ॥

श्रीः ॥ षडंशानांमध्येद्वितीयतृतीयषष्ठांशजननेगोमुखप्रसवंकृत्वा आचम्यप्राणानायम्यदेशकालौसंकीर्त्यअस्यशिशोःकृष्णचतुर्दश्याअमुकांशजननसूचितसर्वारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंसग्रहमखांगगर्गोक्तांकृष्णचतुर्दशीजननशांतिंकरिष्ये ॥ तदंगत्वेनगणपतिपूजनंआचार्यर्त्विग्वरणंचकरिष्ये॥आचार्यःकर्मकरिष्येइतिसंकल्प्ययदत्रसंस्थितमित्यादिप्रादेशकरणांतेस्थंडिलपूर्वभागेमहीद्यौरित्यादिमंत्रावृत्त्यापदार्थानुसमयेनमध्येशतच्छिद्रं तस्यआग्नेय्यादिविदिक्षुचतुरःकलशांश्चसंस्थाप्यशतच्छिद्रेस्योनापृथिवीतिसप्तमृदःअश्वत्थेवइतिपंचपल्लवान् बृहस्पतेजुषस्वनइतिपंचरत्नानि रुवतिभीमेतिपंचत्वचः ओषधयःसमितिपंचधान्यानि अग्नेरेतइतिसुवर्णं याओषधीरितिसर्वौषधीःशतावरींचनिक्षिप्य युवासुवासाइतिश्वेतवस्त्रैःश्वेतपुष्पैश्चसंवेष्ट्यपूर्णादर्वीतिपूर्णपात्रनिधानांतेरुद्रप्रतिमांकर्षतदर्धतदर्धान्यतमपरिमितहेमनिर्मितांवराभयांकितहस्तद्वयांवृषभारूढांस्थापयित्वा ॐत्र्यंबकंयजामहे०॥ऋक् १॥शुद्धस्फटिकसंकाशंश्वेतमाल्यांवरावृतंतंध्यात्वा एकादशिन्यभिषेकघटितोपचारैरुद्रंसंपूज्यआग्नेय्यादिचतुर्षुकलशेषुइमंमेगंगेइत्यपः गंधद्वारामितिगंधमोषधयइतियवान् अश्वत्थेवइतिपंचपल्लवान् कांडात्कांडादितिदूर्वाः बृहस्पतेजुषस्वनइतिपंचरत्नानि अग्नेरेतइतिहिरण्यं याःफलिनीरितिफलम् युवासुवासाइतिवस्त्रवेष्टनं पूर्णादर्वीतिपूर्णपात्रनि

धानं एतावत्कांडानुसमयेनकृत्वा आग्नेयकुंभेइमंमेवरुणइतिसर्वेसमुद्राइतिचसमुद्रादिसहितंवरुणमावाहयेत् ॥ ॐइमंमेवरु णश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥ ॐभूर्भुवःसुवःवरुणायनमःवरुणमावाहयामीति समुद्रादिसहितंवरुणमावाह्य उत्तरकलशेष्वपिसमुद्रानावाह्यनदीसहितवरुणपूजनेक्रमेणतत्त्वायामित्वंनोअग्नेसत्वंनोअग्नेइत्यादयोमंत्राः ॥ नैर्ऋते ॥ ॐत त्त्वायामि० ॥ वायव्ये ॥ ॐत्वंनोअग्नेवरुणस्यविद्वान्देवस्यहेडोवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषांसि प्रमुमुग्ध्यस्मत् ॥ ऐशाने ॥ ॐसत्वंनोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ ॥ अवयक्ष्वनोवरुणंरराणोवीहिमृडीकंसु हवोनएधि ॥ सर्वपूजांतेदेवदानवइतिप्रतिकलशंप्रार्थना ॥ तत्रक्रमेणचतुर्षुकलशेषुसूक्तजपः ॥ ॐआनोभद्राःक्रतवोयंतु० ऋचः १० ॥ ॐभद्राअग्नेर्वैध्यश्वस्य० ऋचः १२॥ ॐसहस्रशीर्षा० ऋचः १८ ॥ ॐकद्रुद्रायप्रचेतसे० इतिसूक्तम् ॥ ततोग्निंवे द्यांग्रहांश्चप्रतिष्ठाप्यान्वाधानंकुर्यात् ॥ समित्रयमादायश्रद्धएहीत्यादिव्याहृत्यंतेवैशेषिकप्रधानहोमे ॥ आदित्यादिग्रहान्प्रत्ये कंप्रतिद्रव्यंअष्टाष्टसंख्याकाभिःअर्कादिजातीयसमिच्चर्वाज्याहुतिभिः अधिदेवताप्रत्यधिदेवताद्याग्रहपीठदेवताः प्रत्येकंप्र तिद्रव्यंएकैकसंख्याकाभिःसमिच्चर्वाज्याहुतिभिः रुद्रंप्रतिद्रव्यमष्टोत्तरशतसंख्याकाभिरश्वत्थप्लक्षपलाशखदिरजातीयसमिदा हुतिभिश्चर्वाहुतिभिराज्याहुतिभिः संमिश्राभिस्तिलमाषसर्षपाहुतिभिश्च अग्निवायुसूर्यप्रजापतीनष्टोत्तरशतसंख्याकाभिस्तिला हुतिभिरंगहोमेवरुणंद्विरित्यादिसामान्यप्रधानहोमांते यजमानोयथादैवतंत्यागंकुर्यात् ॥ ततःप्रधानहोमानंतरंप्रायश्चित्तहोमां तेवलिदानंपूर्णाहुतिःप्रणीतानिनयनांतंसंस्थाजपः दंपत्योरभिषेकःधौतवस्त्रचंदनादिधारणंविधिनाऽऽज्यमवलोक्यसदक्षिणंद त्त्वाकृतंकर्मरुद्रार्पणंकृत्वा आचार्यायवस्त्रयुग्मसहितोपस्करगोनिष्क्रयदानंऋत्विग्भ्यःहिरण्यनिष्क्रयदानं स्थापितदेवतानांपूज

नविसर्जने आचार्यहस्तेप्रतिमादानंचअग्नेःपूजनविसर्जनेयथाशक्तिब्राह्मणभोजनस्यसंकल्पः ॥ इतिकृष्णचतुर्दशीजननशांतिः॥

## ॥ १८५ ॥ सिनीवालीकुहूजननशांतिः ॥



श्रीः ॥ कर्ताआचम्यप्राणानायम्यदेशकालौनिर्दिश्यअस्यशिशोःसिनीवालीजननसूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थसग्रहमखांगगर्गोक्तांसिनीवालीजननशांतिंकरिष्ये ॥ इतिसंकल्प्यगणेशपूजनाद्याचार्यवरणांतंकुर्यात् ॥ कुहू[1]जननेकुहूजनन सूचितेत्यूहः ॥ ततआचार्यःसर्षपविकिरणादिप्रार्थनांतंकृत्वोक्तप्रतिमानामग्न्युत्तारणंकृत्वा स्थंडिलपूर्वभागेविदिक्षुआग्नेयीमारभ्यमहीद्यौरित्यादिमंत्रैःपदार्थानुसमयेनचतुरःकुंभानासाद्यमध्येशतच्छिद्रंसंस्थाप्यचतुर्षुजलसेचनगंधक्षेपांते तत्सवितुरित्यादिभिःपंचगव्यानि स्योनापृथिवीतिसप्तमृदः बृहस्पतेजुषस्वनइतिपंचरत्नानि रुवतिभीमइतिपंचत्वचः ओषधयःसंवदंतइति सप्तधान्यानि अग्नेरेतइतिहिरण्यंचप्रक्षिप्यपंचस्वपिपूर्णादर्वीतिपूर्णपात्रनिधानांतेमध्यमेयथाशक्तिनिर्मितामुक्तलक्षणांरुद्रप्रतिमांनिधाय॥ ॐत्र्यंबकंयजा० ॥ इतिमंत्रेणरुद्रंश्वेतगंधपुष्पादिभिःसंपूज्यतद्दक्षिणतः ॥ ॐयतइंद्रभयामहेततोनोअभयंकृधि ॥ मघवन्छग्धितवतन्नऊतयेविद्विषोविमृधोजहि ॥ ॐ भूर्भु० इतिइंद्रंसंपूज्य ॥ ॐ येचेहपितरोयेचने० ॥ ॐ भूर्भु० इत्युत्तरतः पितॄनावाह्यसंपूज्यचतुर्षुकुंभेषुवरुणंसंपूज्य आनोभद्राइतिपठेदृग्वेदी ॥ यजुर्वेदीनमोवाचइति ॥ गवामंगे[2]ष्वितिगांदद्यात् ॥ शरण्यंसर्वलोकानांलज्जायारक्षणंपरं ॥ सुवेषधारिवस्त्रत्वमतःशांतिंप्रयच्छमेइतिवस्त्रम् ॥ हिरण्यगर्भगर्भस्थमितिसुवर्णम् ॥ सर्वभूताश्रयाभूमिर्वराहेणसमुद्धृता ॥ अनंतसस्यफलदाअतःशांतिंप्रयच्छमेइतिभूमिं ॥ ततोदशदानानि गोभूतिलहिरण्याज्य



१ कुहूजनने गोप्रसवोऽपीतिकेचित् ।२ गोदानंवस्त्रदानंचसुवर्णंचोर्वरांशुभां । दशदानानिचोक्तानिक्षीरमाज्यंगुडस्तथा।।एवंसर्वाणिसप्तदशसंपद्यंते ।

वासोधान्यगुडानिच ॥ रौप्यंलवणमित्याहुर्दशदानानिपंडिताः ॥ गांभुवंचोक्तमंत्राभ्यांपुनर्दत्वातिलान्दद्यात् ॥ महर्षेर्गोत्रसंभूताःकश्यपस्यतिलाःस्मृताः ॥ तस्मादेषांप्रदानेनममपापंव्यपोहत्विति ॥ उक्तमंत्रेणपुनर्हिरण्यंदत्वाज्यंदद्यात् ॥ कामधेनुषुसंभूतंसर्वक्रतुषुसंस्थितम् ॥ देवानामाज्यमाहारमतःशांतिंप्रयच्छमे ॥ उक्तमंत्रेणवासःपुनर्दत्वाधान्यंदद्यात् ॥ सर्वदेवमयंधान्यंसर्वोत्पत्तिकरंमहत् ॥ प्राणिनांजीवनोपायमतःशांतिंप्रयच्छमेइति ॥ यथादेवेषुविश्वात्माप्रवरश्चजनार्दनः ॥ सामवेदस्तुवेदानांमहादेवस्तुयोगिनाम् ॥ प्रणवःसर्वमंत्राणांनारीणांपार्वतीयथा ॥ तथारसानांप्रवरःसदैवेक्षुरसोमतः ॥ ममतस्मात्परांशांतिंददस्वगुडसर्वदेतिगुडम् ॥ प्रीतिर्यतःपितॄणांचविष्णुशंकरयोःसदा ॥ शिवनेत्रोद्भवंरूप्यमतःशांतिंप्रयच्छमेइतिरूप्यम् ॥ यस्मादन्नरसाःसर्वेनोत्कृष्टालवणंविना ॥ शंभोःप्रीतिकरंनित्यमतःशांतिंप्रयच्छमेइतिलवणम् ॥ इतिदशदानानि ॥ ततःक्षीरंदद्यात् ॥ क्षीरजातास्तथाशंखाःक्षीरादमृतसंभवः ॥ क्षीरात्क्षीरोदवत्कीर्तिःक्षीरेप्राणस्यसंभवः ॥ तस्मात्क्षीरप्रदानेनह्यतःशांतिंप्रयच्छमेइति ॥ आज्यगुडावुक्तमंत्राभ्यांपुनर्दत्वाज्यपूर्णेकांस्यपात्रेविधिनासकुटुंबःप्रतिरूपंवीक्ष्यदद्यात् ॥ आज्यंतेजःसमुद्दिष्टमाज्यंपापहरंस्मृतम् ॥ आज्यंसुराणामाहारआज्येदेवाःप्रतिष्ठिताइति ॥ आचार्योग्निंप्रतिष्ठाप्यग्रहानावाह्यसंपूज्यान्वाधानंकुर्यात् ॥ व्याहृत्यंतेवैशेषिकप्रधानहोमे ॥ ग्रहान् अधिदेवताःप्रत्यधिदेवताःक्रतुसाद्गुण्यदेवताःक्रतुसंरक्षकदेवताश्चान्वाधाय त्र्यंबकंअश्वत्थप्लक्षपलाशखदिरसमिच्चर्वाज्याहुतिभिःसंमिश्रसर्षपतिलमाषाहुतिभिश्चप्रतिद्रव्यमष्टोत्तरशतसंख्याकाभिराहुतिभिः इन्द्रंपितॄंश्चतैरेवद्रव्यैःप्रत्येकंप्रतिद्रव्यमष्टाविंशतिसंख्याभिरष्टसंख्याभिर्वाहुतिभिः रुद्रंत्र्यंबकमितिमंत्रेण

१ लक्ष्मींददस्वेतिप्रचुरःपाठः ।

२८वा८तिलाहुतिभिः प्रजापतिं व्यस्तसमस्तव्याहृतिभिः २८वा८ संख्याकाभिस्तिलाहुतिभिः अंगहोमेवरुणंद्विरित्यादियथा न्वाधानंत्यागेकृतेसंस्रावहोमांतेबलिदानम् ॥ मूर्धानमितिपूर्णाहुतिश्च ॥ ततोग्रहकुंभसहितचतुःकुंभजलयुतशतच्छिद्रेण मातृपितृशिशूनामभिषेकः ॥ ॐ इमंमेवरु० ॥ ॐ तत्त्वायामि ॥ ॐ देवस्यत्वा० ॥ इत्यभिषिच्य ॥ ततोविभूतिधारणांते षोडशोपचारैरुद्रस्येतरेषांचपंचोपचारैःपूजनम् ॥ ततोविसृज्यताःप्रतिमाआचार्यहस्तेप्रतिपाद्याऽग्निंसंपूज्यविसृज्ययथाशक्ति द्विजानुज्ञयाब्राह्मणानन्यांश्चांधपंग्वादीन्भोजयेदिति ॥ इतिगर्गोक्तासिनीवालीकुहूजननशांतिः ॥ छ ॥

## ॥ १८६ ॥ दर्शजननशांतिः ॥

श्रीः ॥ कर्ताकृतनित्यक्रियःपवित्रपाणिःसपत्नीकःस्वासनेउपविश्यदेशकालसंकीर्तनांते अस्यबालस्यदर्शजननसूचितसर्वारिष्ट निरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंसग्रहमखांनारदोक्तांदर्शजननशांतिंकरिष्ये ॥ (अखंडाऽमाजननेइत्थंसंकल्पः) ततोगणेश पूजनपुण्याहवाचनाचार्यर्त्विग्वरणाचार्यादिपूजनानिकुर्यात् ॥ ततआचार्योयदत्रसंस्थितमित्यादिभद्रंकर्णेभिः० स्वस्तिन इंद्रो० इतिप्रार्थनांतंकुर्यात् ॥ ततःकुंडात्स्थंडिलाद्वापूर्वेसर्वतोभद्रपर्याप्तंस्थलमंतिक्रम्यमहीद्यौरित्यादिनाकुंभस्थापनादिज लसेचनांतंकृत्वा तत्रआप्यायस्वेत्यादिमंत्रैःक्षीरदधिघृतानिप्रक्षिप्य गायत्र्यागंधद्वारामितिचगोमूत्रगोमयेप्रक्षिप्य रुवतिभीम इतिन्यग्रोधोदुंबराश्वत्थचूतनिंबमूलानांत्वचः अश्वत्थेवइतितत्पल्लवान् बृहस्पतेजुषस्वनइतिपंचरत्नानिनिक्षिप्य युवासुवा साइतिवस्त्रयुग्मेनावेष्ट्य ॥ सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः ॥ आयांतुयजमानस्यदुरितक्षयकारकाः ॥ इतिसमुद्रादिदे

वतासहितंवरुणमावाह्यसंपूज्य कलशोदकंआपोहिष्ठेतितृचेनकयानश्चित्रइत्यृचायत्किंचेदमितिसमुद्रज्येष्ठाइतिऋग्भ्यांचाभि
मंत्र्य ॥ तत्पश्चिमेअग्नेःपूर्वभागेकृष्णनीलहरितरक्तवर्णतंडुलैःयथोचितंपूरितंशृंखलावल्लीभद्रादिगर्भंसर्वतोभद्रंअग्रेनिर्दिश्यमा
नव्रतोद्यापनोक्तरीत्याविरच्य तत्रब्रह्मादिप्रसिद्धदेवतापूजांतेमध्येसुवर्णप्रतिमायांपितॄनावाहयेत् ॥ ॐयेचेहपितरो० १ ॥
दक्षिणतःरजतप्रतिमायांसोमम् ॐआप्यायस्वस० ॥ ऋक् १ उत्तरतःताम्रप्रतिमायांसूर्यं ॐ सवितापश्चातात्० ऋक् १॥ततो
देवतात्रयंसंपूज्याऽग्निंप्रतिष्ठाप्यसर्वतोभद्रस्यैशान्यांग्रहप्रतिष्ठापनादिवरुणपूजांतंकृत्वाऽन्वादध्यात् ॥ व्याहृत्यंतेआदित्यादि
ग्रहान्चिकीर्षितसंख्याकाभिःसमिच्चर्वाज्याहुतिभिःपितॄनष्टाविंशतिसंख्याकाभिःसमिच्चर्वोराहुतिभिः सोमंसूर्यंचताभ्यामेवद्र
व्याभ्यांप्रत्येकंप्रतिद्रव्यंअष्टोत्तरशतसंख्याकाभिराहुतिभिः अंगहोमेवरुणंद्विरित्यादि॥ ततःआज्येनसहचरोःपर्यग्निकरणादि॥
व्याहृतिहोमांतेआयुरारोग्यमितिमंत्राभ्यांयजमानेनहोमसंकल्पपूर्वकंत्यागेकृतेसार्त्विगाचार्यःप्रधानहोमंकुर्यात् ॥ तदंतेस्विष्ट
कृतःपूर्वंहिरण्यवर्णामितिआयुष्यंवर्चस्यमितिसूक्ताभ्यांसमुद्रज्येष्ठाइत्यृचाचकुंभद्वयोदकेनसवालौपितरावभिषिच्यस्विष्टकृदा
दिकुर्यात् ॥ ततोबलिदानपूर्णाहुतीकृत्वाहोमशेषंसमापयेत् ॥ ततोयजमानःहिरण्यरजतेसदक्षिणांकृष्णांधेनुंचआचार्यायदत्वा
ऋत्विग्भ्यश्चयथाशक्तिदक्षिणांदत्वास्थापितदेवतोत्तरपूजाविसर्जनेकृत्वाप्रतिमांआचार्यायप्रतिपाद्यअग्निंसंपूज्यविसृज्यशांतीः
पाठयित्वाब्राह्मणान्भोजयित्वा तेभ्योदक्षिणादानांतेस्वस्तिभवंतोब्रुवंत्वितिवाचयेत् ॥ तेचस्वस्ती० इति नारदोक्तादर्शशांतिः॥

१ आयुरारोग्यसिद्ध्यर्थंसर्वानिष्टप्रशांतये । पुत्रस्यदर्शजननदोषनिर्हरणायच ॥ मातापित्रोःकुमारस्यसर्वानिष्टप्रशान्तये । तेषामायुःश्रियेचैव
शांतिहोमंकरोम्यहम् ॥ इत्येतौमंत्रौ ॥

## ॥ १८७ ॥ व्यतीपातसंक्रमणजननशांतिः ॥

श्रीः॥गोमुखप्रसवमुक्तविधिनाकृत्वादेशकालौसंकीर्त्यास्यशिशोर्व्यतीपात-संक्रमण-जन्मसूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंसग्रहमखांशौनकोक्तांव्यतीपातशांतिंकरिष्यइतिसंकल्प्यगणेशपूजनाद्युक्तलक्षणाचार्यवरणंकुर्यात् ॥ वृतायतस्मैपट्टवस्त्रयुगंकुंडलयुगमंगुलीयकंचदद्यात्॥आचार्योयदत्रसंस्थितमितिसर्षपान्विकीर्यशुचीवइतिपंचगव्येनआपोहिष्ठेत्यद्भिश्चगृहपूर्वदिग्भागंप्रोक्ष्यभद्रंकर्णे० स्वस्तिनइतिमंत्राभ्यांप्रार्थ्य तत्रैवगोमयलिप्तेरंगवल्ल्याद्यलंकृतेसमदेशेमहीद्यौरितिभुवमभिमृश्यओषधयःसमितिपंचद्रोणपरिमितव्रीहिराशिंकृत्वातदुपरिसार्धद्रोणद्वयमिततंडुलराशिं तदुपरिसपादद्रोणमिततिलराशिंचकृत्वोपरिभागंसमंकृत्वातत्राऽष्टदलंकृत्वाआजिघ्रकलशमितितत्राऽव्रणंकुंभंप्रतिष्ठाप्य इमंमेगंगेइतितीर्थोदकेनापूर्य स्योनापृथिवीतिसप्तमृदः याओषधीरितिसर्वौषधीरश्वत्थेवइतिपंचपल्लवान् गायत्र्यागंधद्वारामाप्यायस्वदधिक्राव्णःशुक्रमसीतिपंचगव्यानिगंधद्वारामितिगंधंबृहस्पतेजुषस्वनइतिपंचरत्नानिचनिक्षिप्य वस्त्रयुग्मेनावेष्ट्यतदुपरिसूक्ष्मवस्त्रयुतंपूर्णपात्रंपूर्णादर्वीतिनिधाय तदुपरिनिष्कतदर्धतदर्धान्यतममानेनहेम्नानिर्मितांसूर्यप्रतिमांनिधाय तत्रसूर्यमावाहनाद्युपचारैःपूजयेत् ॥ ॐ भूर्भुवः॒सुवः उत्सूर्यो॒बृ॒हद॒र्चीं० ऋक् १ ॥ तद्दक्षिणतोग्निमावाहयेत् ॥ ॐ भूर्भुव॒ःसुवः अ॒ग्निंदू॒तं० ऋक् १ ॥ उत्तरतोरुद्रमावाहयेत् ॥ ॐ भूर्भुव॒ःसुवः त्र्यंबकंयजामहे० ऋक् १ ॥ एवमेवसंक्रांतिशांतौसंक्रांतिशांतिंकरिष्यइतिसंकल्पेविशेषः॥ व्यतीपातसंक्रमणयोर्जन्मनितुव्यतीपातसंक्रांतिशांतीतंत्रेणकरिष्येइतिसंकल्पः ॥ तिस्रोदेवताःषोडशोपचारैःवस्त्रयुग्मसहितैःपंचोपचारैर्वासंपूज्यगंधपुष्पाद्यर्चितफलनैवेद्यंसमर्प्यप्रधानप्रतिमांस्पृशन्सर्वसौरमंत्रान्जपेत् ॥ ततोरुद्रप्रतिमांस्पृशन्मृत्युंजयमंत्रमष्टोत्तर

सहस्रमष्टोत्तरशतमष्टाविंशतिवारंवाजपेत् ॥ ततश्चत्वारऋत्विजश्चतुर्दिक्षुकुंभंस्पृष्ट्वाक्रमेणसूक्तानिजपेयुः ॥ पूर्वस्याम् ॥ ॐ आनोभद्राः० ऋचः १० ॥ दक्षिणस्याम् ॥ ॐ भद्राअग्नेर्वैध्र्यश्वस्य० ऋचः १२ ॥ प्रतीच्यां ॥ ॐ सहस्रशीर्षा० ऋचः १८ ॥ उत्तरस्याम् ॥ त्र्यंबकंजया० १ ॥ अथकुंभपश्चिमदेशेस्थंडिलेऽग्निंस्वगृह्योक्तविधिनाप्रतिष्ठाप्यकुंभस्योत्तरतो ग्रहाणामावाहनादिपूजांकृत्वातदीशान्यांकलशस्थापनंकृत्वाऽग्नेःपश्चिमतउपविश्यान्वादध्यात् ॥ व्याहृत्यंतेवैशेषिकप्रधान होमे आदित्यादिग्रहांश्चिकीर्षितसंख्याकाभिःअर्कादिजातीयसमिच्चर्वाज्याहुतिभिः ॥ ग्रहपीठदेवताअमुकसंख्याभिःसमिच्च-र्वाज्याहुतिभिः ॥ सूर्यंप्रतिद्रव्यमष्टोत्तरशतसंख्याकाभिःसमिच्चर्वाज्याहुतिभिः ॥ अग्निंरुद्रंचतैरेवद्रव्यैःप्रत्येकंप्रतिद्रव्यमष्टा विंशतिसंख्याकाभिराहुतिभिः॥मृत्युंजयंअष्टोत्तरशतसंख्याकाभिस्तिलाहुतिभिः॥ अंगहोमेवरुणंद्विरित्यादि० प्रायश्चित्ताहुत्यं तेंबलिदानं ततःपूर्णाहुतिःप्रणीताविमोकःसंस्थाजपेनोपस्थानंच॥ ततोधृतनूतनवस्त्रयोर्दंपत्योःसबालयोरभिषेकः॥ तत्रमंत्राः॥ समुद्रज्येष्ठाः० ४ आपोहिष्ठा ३ अक्षीभ्यांते० ६ स्वादिष्ठयेति १० ॐ उत्सूर्यो० १ अग्निंदूतं० १ त्र्यंबकं० १ ॥ सुरा स्त्वामभिषिंचंत्वित्यादिपौराणमंत्रैश्चाभिषेकांतेऽभिषेकवासआचार्यायसमर्पयेत् ॥ सपत्नीकःश्वेतवस्त्रचंदनादिधृत्वाभूषण मालादिनालंकृतआज्यमवेक्ष्यतत्पात्रंसदक्षिणंब्राह्मणायदत्वा वस्त्रहेमांगुलीयकैःआचार्यंसंपूज्यव्यतीपातजननदोषशांत्यर्थं गोवस्त्रस्वर्णानितुभ्यंसंप्रददेइतिआचार्यायतानिदत्वातदर्थंप्रच्छादनपटंतथैवदद्यात् ॥ ऋत्विग्भ्योयथाशक्तिदक्षिणांदत्वादी नांधकृपणेभ्योभूयसींदत्वाशतंब्राह्मणान्ऋत्विग्भिःसहमिष्टान्नैर्भोजयित्वाकर्मेश्वरार्पणंकृत्वावंधुभिःसहभुंजीत ॥ इतिशौन कोक्ताव्यतीपातसंक्रांतिशांतिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १८८ ॥ वैधृतिजननशांतिः ॥

श्रीः ॥ वैधृतिशांतौतुगोमुखप्रसवःकार्यः ॥ संकल्पेवैधृतेरुल्लेखः ॥ आवाहनेमध्येसव्याहृतिकेनत्र्यंबकमितिमंत्रेणरुद्रमावाह्यद क्षिणेउत्सूर्योबृहदर्चींषीतिसूर्यंउत्तरतश्चाप्यायस्वेतिसोममावाह्यपूजनम् ॥ रुद्रप्रतिमांस्पृष्ट्वामृत्युंजयमंत्रमष्टोत्तरसहस्रमष्टोत्तर शतमष्टाविंशतिवारंवाजपः ॥ सूर्यप्रतिमांस्पृष्ट्वासर्वसौरजपः ॥ सोमप्रतिमांस्पृष्ट्वाआप्यायस्वेत्यस्याष्टोत्तरशतजपः ॥ अन्वा धानेरुद्रंसमिच्चर्वाज्यैःप्रतिद्रव्यमष्टोत्तरशतसंख्याहुतिभिःसूर्यसोमौप्रत्येकंप्रतिद्रव्यमष्टाविंशतिसंख्याभिस्तदाहुतिभिःमृत्युंज यमष्टोत्तरसहस्राष्टोत्तरशताष्टाविंशत्यन्यतमसंख्याभिस्तिलाहुतिभिः ॥ अंगहोमेवरुणंद्विरित्यादितथैवहोमःकार्यइतिविशेषः ॥ अंतेकर्मेश्वरार्पणंकुर्यात् ॥ इतिवैधृतिशांतिःशौनकोक्ता ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १८९ ॥ भद्राजननशांतिः ॥

श्रीः ॥ कर्ताउक्तकालेगोमुखप्रसवंकृत्वादेशकालौसंकीर्त्यअस्यशिशोःभद्राजननसूचितसकलारिष्टपरिहारद्वारा० सग्रहमखांग गोक्तांशांतिंक० इतिसंकल्प्यगणेशपूजनपुण्याहवाचनांतेआचार्यादीन्वृणुयात्॥ततआचार्यःप्रादेशकरणांतेगृहस्यपूर्वभागेस्थं डिलात्प्राच्यांमहीद्यौरित्यादिमंत्रावृत्त्यामध्येएकंपूर्वादिदिक्षुचतुरइत्येवंपंचकुंभान्संस्थाप्य तत्रजलपूरणादिपूर्णपात्रनिधानांते प्रतिमासुदेवताआवाहयेत्॥मध्यकुंभे ॐ भद्राअग्नेर्वध्र्यश्वस्यसंदृशौवामीप्रणीतिःसुरणाउपेतयः॥यदींसुमित्राविशोअग्रइंधतेघृ तेनाहुतोजरतेदविद्युतत् ॥ इतिभद्रां॥ पूर्वे ॐआसत्येनरजसा० इतिसूर्यं॥ दक्षिणे ॐकद्रुद्रायेतिरुद्रं ॥ पश्चिमे ॐगणानांत्वेतिग णपतिं ॥ उत्तरे ॐ तत्पुरुषायविद्महेचक्रतुंडायधीमहि ॥ तन्नोनंदिःप्रचोदयात् ॥ इतिऋषभंचावाह्यसर्वान्संपूज्यपुष्पमालादि

भिःकलशान्भूषयित्वाग्निंग्रहांश्चप्रतिष्ठाप्यान्वादध्यात् ॥ ग्रहोत्कीर्तनांते भद्रां सूर्यं रुद्रं गणपतिं ऋषभं चैताःप्रधानदेवताःस मिच्चर्वाज्यतिलैःप्रत्येकंप्रतिद्रव्यंअष्टोत्तरसहस्राष्टोत्तरशताष्टाविंशतिसंख्याकाभिर्वाहुतिभिःअंगहोमेवरुणंद्विरित्यादिप्रायश्चि त्तहोमांतेबलिदानंपूर्णाहुतिंचकृत्वासंस्रावहोमादिशेषंसमाप्य धृतनववस्त्रंपत्नीशिशुसहितंयजमानं समुद्रज्येष्ठाइत्यादिवारु णैर्ग्रहादिमंत्रैश्चाभिषिंचेत् ॥ ततोयजमानोधृतनवशुक्लांबरोभिषेकवस्त्रमाचार्यायदत्वाविभूतिंधृत्वोत्तरपूजांकृत्वाचार्यंसंपूज्य तस्मैगांपीठंचदत्वानिरीक्षिताज्यंदत्वाब्राह्मणभोजनंसंकल्प्यभूयसींदत्वाशिषोगृहीत्वाकर्मसमापयेत् ॥ इतिभद्राजननशांतिः ॥

## ॥ १९० ॥ अधोमुखजननशांतिः ॥

श्रीः॥ जन्मतोद्वादशाहेजन्मनक्षत्रेन्यस्मिन्वाशुभदिनेकर्तागोमुखप्रसवंकृत्वादेशकालौसंकीर्त्य अस्यशिशोःअधोमुखजननसूचि तसर्वारिष्टपरिहारद्वारा श्रीपरमेश्वर० सग्रहमखांबृहच्छौनकोक्तांशांतिंकरिष्यइतिसंकल्प्यगणेशपूजादिऋत्विग्वरणांतंकुर्यात्॥ अत्रऋत्विजश्चत्वारः ॥ ततोगृहस्यैशानभागेस्थंडिलंकृत्वाआचार्यःप्रादेशांतेतत्पूर्वभागेमहीद्यौरित्यादिस्थापितकलशेपूर्णपात्रे सुवर्णप्रतिमायां त्र्यंबकं इतिरुद्रमावाह्यवस्त्रादिभिःसंपूज्याग्निंग्रहांश्चप्रतिष्ठापयेत् ॥ ततएकऋत्विक्रुद्रकुंभंस्पृष्ट्वाएकादशवारं रुद्रंजपेत् ॥ ततआचार्योन्वाधानेग्रहोत्कीर्तनांते ॥ रुद्रंप्रधानंसमिदाज्यतिलचरुभिःप्रतिद्रव्यंअष्टोत्तरसहस्राहुतिभिः १०८। २८ वाअंगहोमेवरुणंद्विरित्यादिप्रणीताप्रणयनांतेतूष्णींनिर्वापप्रोक्षणेकृत्वाचरुंश्रपयित्वाज्यसंस्कारादिग्रहहोमांतेउक्तमंत्रेणप्रधा नहोमंकृत्वाइमंमेवरुणेत्यादिबलिपूर्णाहुतिसंस्रावादिशेषंसमापयेत् ॥ अथमाताबालंकार्पासराशौनिधायपराङ्मुखीभवेत् ॥ विप्रास्तंगृहीत्वास्वाभिमुख्यैमात्रेदद्युः ॥ तत्रमंत्रः ॥ बालेऽस्माभिरयंबालोयुष्मद्दत्तःप्रगृह्यच ॥ दीर्घायुरपिबालोयंपूर्ववत्कुल

वर्धनः ॥ ततोयजमानंपत्नीशिशुसहितंकलशोदकेनसमुद्रज्येष्ठाइत्यादिभिरभिषिंचेत् ॥ ततोयजमानोग्निंसंपूज्यविभूतिंधृत्वोत्तर पूजांविधायाचार्यादिभ्योयथाशक्तिदक्षिणांदत्वापीठंदत्वाब्राह्मणभोजनंसंकल्प्यभूयसींदत्वाशिषोगृहीत्वाकर्मेश्वरार्पणंकुर्यात् ॥



## ॥ १९१ ॥ एकनक्षत्रजननशांतिः ॥

श्रीः ॥ जनकनक्षत्रोत्पत्तौउक्तसमयेगोमुखप्रसवंकृत्वाएकोदरनक्षत्रोत्पत्तौतमकृत्वादेशकालौसंकीर्त्य ॥ अस्यशिशोःपित्रेकनक्षत्रोत्पत्तिसूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंसग्रहमखांवृद्धगर्गोक्तांपित्रेकनक्षत्रजननशांतिंकरिष्येइतिसंकल्प्य ॥ गणपतिंसंपूज्यआचार्यंचतुरऋत्विजश्चवृत्वापुण्याहंवाचयीत ॥ ( मात्रेकनक्षत्रेत्याद्यूहेनान्यत्रसंकल्पः ) ॥ तत आचार्योयदत्रसंस्थितमितिसर्षपविकिरणप्रोक्षणप्रार्थनादिकृत्वास्थंडिलादैशान्यांकलशंमहीद्यौरित्यादिनासंस्थाप्य ॥ तत्ररक्तवस्त्राच्छादितेनक्षत्रतद्देवतान्यतरप्रतिमांकृताग्न्युत्तारणांतन्मंत्रेणावाहनाद्युपचारैःपूजयेत् ॥ वस्त्रार्पणेतद्युग्ममर्पयेत् ॥ पूजांतेऽग्निंप्रतिष्ठाप्यान्वाधाने व्याहृत्यंतेअदोनक्षत्रमिमांदेवतांवा प्रतिद्रव्यमष्टोत्तरशतसंख्याभिःसमिच्चर्वाज्याहुतिभिःअंगहोमेवरुणंद्विरित्यादिप्रायश्चित्तहोमांतंप्रणीताविमोकादि ॥ आचार्यःकलशोदकेनययोरेकनक्षत्रजन्मतयोरभिषेकंकुर्यात् ॥ ततःपूजितप्रतिमाग्रेआचार्यायवस्त्रालंकारगाःदद्यात् ॥ ज्योतिर्निबंधोक्त्यास्वर्णरूप्यमयौहरिहरौसंपूज्यतौवादद्यात् ॥ विविधस्यास्यविश्वस्यपितरौविश्वतोमुखौ ॥ प्रीयेतांमूर्तिदानेनदेवौहरिहरावुभाविति ॥ माषत्रयसुवर्णमृत्विग्भ्योदत्वाउत्तरपूजाविसर्जनेआचार्यहस्तेप्रतिमाप्रतिपादनंधान्यवस्त्रयानशय्यासनादीनांब्राह्मणांतरेभ्योदानंकृत्वातैःसहाचार्यमृत्विजश्चभोजयित्वासंपूर्णतांवाचयित्वातेभ्यःशुभाआशिषःप्रतिगृह्यकर्मेश्वरार्पणंकुर्यादिति ॥ इत्येकनक्षत्रजननशांतिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १९२ ॥ ग्रहणजननशांतिः ॥

श्रीः ॥ सूर्यग्रहणेप्रसूतौतत्कालीननक्षत्रस्ययाधिष्ठात्र्यग्न्यादिदेवतातस्याःसूर्यस्यचयथाशक्तिहेम्नाप्रतिमेविधायराहोःसीसेनना गाकृतिंकृत्वाऽऽशौचांतेगोमुखप्रसवंकृत्वा ममास्यशिशोःसूर्यग्रहणकालोत्पत्तिसूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्य र्थंसग्रहमखांशौनकोक्तांशांतिंकरिष्येइतिसंकल्प्य ॥ गणेशपूजनाद्याचार्यवरणपूजांतंकुर्यात् ॥ चंद्रग्रहेतुसूर्यस्थानेराजतंचंद्र बिंबंकुर्यात् ॥ अन्यद्वयंपूर्ववत् ॥ संकल्पेसूर्यस्थानेचंद्रपदप्रयोगः ॥ ततआचार्योयदत्रेत्याद्यंतेशुचिदेशंगोमयेनोपलिप्य तत्र नवंसदशंक्षालितंश्वेतवस्त्रंप्रसार्यतत्रोक्तदेवतानांरूपत्रयंनिधाय ॥ ॐ आसत्येनरजसा० ॥ मध्येसूर्यंरक्तवर्णैर्वस्त्रगंधाक्षतपुष्पै र्धूपदीपादिभिश्चपूजयेत् ॥ तद्दक्षिणतोराहुंकृष्णवर्णैर्गंधादिभिर्धूपादिभिश्चपूजयेत् ॥ ॐ स्वर्भानोरधयदिंद्रमायाअवोदिवोव र्तमानाऽअवाहन् ॥ गूढंसूर्यंतमसापव्रतेनतुरीयेणब्रह्मणाविन्ददत्रिः ॥ सूर्यस्योत्तरतः नक्षत्रदेवतामग्निर्नःपातुकृत्तिकाइति वाक्याष्टकेनपूजयेत् चंद्रग्रहेतुमध्येचंद्रपूजनम् ॥ ॐ आप्यायस्व० इतिमंत्रेणश्वेतगंधादिभिर्धूपादिभिश्चेतिविशेषः ॥ अन्यदे वतयोःपूजनंपूर्ववत् ॥ ततोऽग्निस्थापनंग्रहपूजाकलशस्थापनांतंकृत्वाऽन्वाधानंकुर्यात् ॥ व्याहृत्यंतेग्रहान्वाधानंकृत्वा सवि तारंअर्कसमिदाज्यचरुतिलैःप्रतिद्रव्यमष्टोत्तरशताहुतिभिः ॥ स्वर्भानुंदूर्वाज्यचरुतिलैः प्रतिद्रव्यमष्टोत्तरशताहुतिभिः ॥ नक्षत्रदेवतामग्निंपलाशसमिदाज्यचरुतिलैःप्रतिद्रव्यमष्टोत्तरशताहुतिभिर्यक्ष्ये ॥ अंगहोमेवरुणंद्विरित्यादि ॥ चंद्रग्रहेअर्कस्था नेचंद्रस्यार्कसमित्स्थानेपालाशसमिधांचनिर्देशः ॥ गृहसिद्धान्तस्यपर्यग्निकरणादि ॥ यथान्वाधानंत्यागः ॥ प्रायश्चित्तांतेबलि पूर्णाहुती संस्थाजपांतेपंचगव्यपंचरत्नपंचत्वक्पंचपल्लवैरोषधिकल्कैश्चमिश्रितलौकिकजलैर्ग्रहकलशोदकैश्चाभिषेकः॥ आपोहि

ष्ठेतितृचं ॥ इमंमेगंगइत्येकां ॥ पितरःपितामहाःपरेवरेइतिच ॥ तत्त्वायामीत्यृचं ॥ ग्रहमंत्रांश्च ॥ अभिषेकांतेआचार्यंसंपूज्यतस्मै प्रतिमात्रयंदक्षिणांचदद्यात् ॥ततोग्रहाणांपूजनविसर्जनेप्रतिमाप्रतिपादनंब्राह्मणभोजनसंकल्पश्चेति ॥ इतिग्रहणजननशांतिः ॥

## ॥ १९३ ॥ नक्षत्रगंडांतशांतिः ॥

श्रीः ॥ षण्मासोत्तरंद्वादशेवाहनिप्रथमतोगोप्रसवंकृत्वा ॥ देशकालौसंकीर्त्यममाऽस्यशिशोःरेवत्यश्विनीसंध्यात्मकगंडांतजनन सूचितसर्वारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंगर्गोक्तांनक्षत्रगंडांतशांतिंकरिष्येइतिसंकल्प्य॥गणेशपूजनादिकृत्वायजुर्वेदवि दंदैवज्ञंआचार्यत्वेनवृणुयात् ॥ ततस्तंचंदनशुक्लमाल्यैःक्षौमशुक्लवासोभ्यांचपूजयेत् ॥ ततआचार्योनिर्मितस्यापिनिमित्तानुसारि परिमाणकांस्यपात्रस्यपुनर्निर्माणमाप्यायस्वेतिमंत्रेणकुर्याच्चंद्रप्रतिमाभ्युत्तारणंच ॥ ततोयदत्रेतिसर्षपविकिरणदिनाभूसंस्कारं कृत्वाऽपलिप्तेदेशेकांस्यपात्रेपायसंपयोवानिक्षिप्य तत्रनवनीतपूर्णशंखंपूर्वाग्रंनिधायतत्रराजतंचंद्रबिंबंस्थापयित्वा सोमोहमि तिध्यानपूर्वकंसमाहितचेताआप्यायस्वेतिमंत्रेणावाहनादिषोडशोपचारैस्तत्रचंद्रपूजनंकुर्यात् ॥ तत्रश्वेतंसदशंवस्त्रद्वयंसमर्पणीयं पुष्पाणिश्वेतानिसहस्रमर्पणीयानि मौक्तिकंदक्षिणातदसंभवेइष्टमन्यत् ॥ पूजांतेतमेवमंत्रंसविश्वासंचंद्रंध्यायन् सहस्रंसप्रणवं जपेत् ॥ तदुत्तरतस्ताम्रकलशंमहीद्यौरित्यादिविधिनास्थापयित्वा तत्ररजतप्रतिमायांबृहस्पतिमंत्रेणवागीश्वरंसंपूज्यतदुत्तरतः क्रमेणतेनैवविधिनाउदक्संस्थयानिहितकुंभचतुष्टये अश्वत्थेवोनिषदनमित्याम्रपल्लवप्रक्षेपांतंकृत्वाचतुर्षुक्रमेणद्रवीभूतानिकुंकु मचंदनकुष्ठगोरोचनानिसिंचेत् ॥ तेषुवरुणंपूजयेत् ॥ ततःपश्चिमदेशेस्थंडिलेग्निप्रतिष्ठापनांतंकृत्वा स्थापितकलशोत्तरभागेग्रहा वाहनादिवरुणपूजांतंकृत्वाग्रहान्वाधानादिग्रहहोमंपूर्णाहुत्यंतंकुर्यात् ॥ नात्रशांतिहोमः॥ अभिषेककालेवारुणकलशचतुष्टयस्यो

दकेनदिवागंडांतजातंबालंपित्रासहरात्रिजातंमात्रासहसंध्ययोर्जातमुभाभ्यांसहाभिषिंचेत् ॥ ॐसहस्राक्षेण० ऋक् १॥ततःसर्वक
लशोदकैः समुद्रज्येष्ठाइत्यादिभिःसुरास्त्वामित्यादिभिर्मंत्रैश्चाभिषेकांतेसुस्नातःसपत्नीकःकर्ता धृतश्वेतचंदनादिर्विभूतिधारणं
कृत्वा आचार्यायशंखदानंकुर्यात् ॥ इमंसचंद्रंशंखंसवस्त्रयुगंसमौक्तिकंनवनीताद्युपस्करसहितंगंडदोषापनुत्तयेदैवज्ञाययजुर्वेद
विदेआचार्यायतुभ्यमहंसंप्रददइति ॥ तत्सांगतासिद्ध्यर्थंसहिरण्यांधेनुंदद्यात् ॥ ततोवागीश्वरंताम्रपात्रसहितंगंडदोषशांत्यर्थंतु
भ्यंसंप्रददइतिबृहस्पतिप्रतिमादानंतदंगत्वेनयथाशक्तिदक्षिणादानंच ॥ ततःस्थापितेतरदेवतानांउत्तरपूजापूर्वकंविसर्जनमाचा
र्यहस्तेप्रतिपादनंच ॥ ततःसहस्राक्षेणेतिमंत्रस्यायुर्वृद्ध्यर्थंयथाशक्तिजपंदशावरब्राह्मणभोजनंचकुर्यात्॥इतिनक्षत्रगंडांतशांतिः॥

## ॥ १९४ ॥ तिथ्यादिगंडांतशांतिः ॥

श्रीः ॥ तिथिगंडांतपूर्वार्धजन्मनिकर्तातत्कालंस्नात्वापुत्रमनालोक्याऽस्यशिशोस्तिथिगंडांतपूर्वार्धजन्मसूचितसर्वारिष्टनिरस
नद्वाराश्रीपरमेश्वरप्रीत्यर्थंअनडुद्दानंकरिष्येइतिसंकल्प्यनालच्छेदनात्पूर्वंब्राह्मणपूजनपूर्वकंअनड्वाहंदद्यात् ॥ असंभवेकार्षाप
णाष्टकंवा ॥ सूतकांतेशुभदिनेवास्नातोऽनडुद्दानमित्यस्यस्थानेगर्गोक्तांशांतिमित्यूहेनसंकल्प्यगणेशपूजादिआचार्यवरणांतंकु
र्यात् ॥ सचयदत्रेत्यादिनाभूशुद्धिकलशस्थापनेकृत्वा कलशेयाओषधीः बृहस्पतेजुषस्वनःस्योनापृथिविरुवत्यश्वत्थेवइतिशतौष
धीरत्नानिमृदंत्वचःपल्लवांश्चनिक्षिप्य पूर्णादर्वीतिस्थापितपूर्णपात्रेस्थापितहैमवरुणप्रतिमायांतत्त्वायामीतिवरुणंपूजयेत् ॥ ततो
ऽग्निंप्रतिष्ठाप्यग्रहान्संपूज्यान्वादध्यात् ॥ व्याहृत्यंतेग्रहानुत्कीर्त्य ॥ वरुणंप्रतिद्रव्यमष्टोत्तरशतसंख्याभिःसमिच्चर्वाज्यतिलयवा
हुतिभिः अंगहोमेवरुणंद्विरित्यादिबलिदानपूर्णाहुतिप्रणीताविसर्गांते कलशद्वयोदकेनसमुद्रज्येष्ठाइत्यादिभिःपित्रादित्रयाणा

मभिषेकोयवव्रीहिमाषतिलमुद्गानांदक्षिणात्वेनदानंविसर्जनादि यथाशक्तिब्राह्मणभोजनंचेति ॥ तिथिगंडोत्तरार्धजन्मनितुनतात्कालिकंदानं ॥ शांतौमातुःशिशोश्चाभिषेकइतिविशेषः ॥ लग्नगंडपूर्वार्धजन्मनिकांचनमितिविशेषः ॥ नक्षत्रगंडस्योत्तरादिनिषिद्धभागस्यचपूर्वार्धेजन्मनिधेनोस्तिलपात्रादेश्चदानम् ॥ शांतौनक्षत्रप्रतिमायास्तत्तद्वाक्याष्टकेनपूजनम् ॥ उत्तरार्धेजन्मनिनदानं ॥ दक्षिणाकाले उत्तरादौतिलपात्रादेर्दानं॥इतरत्रयवव्रीह्यादेः ॥ अभिषेकव्यवस्थाचपूर्ववत् ॥ इतितिथ्यादिगंडांतशांतिः ॥

## ॥ १९५ ॥ विषनाडीजननशांतिः ॥

श्रीः॥कर्ताऽऽशौचांतेदेशकालौसंकीर्त्यविषनाड्यामेतच्छिशुजननसूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंवृद्धगर्गोक्तांसग्रहमखांशांतिंकरिष्यइतिसंकल्प्यगणेशपूजनाद्याचार्यर्त्विग्वरणांतंकुर्यात् ॥ आचार्योयदत्रसंस्थितमितिस्थलशुद्धिंकृत्वायथाशक्तियथालक्षणंनिर्मितानांहैमीनांरुद्रादिप्रतिमानांचतसृणामग्न्युत्तारणंकृत्वा पूर्वभागेमहीद्यौरितिभुवंस्पृष्ट्वातत्रओषधयःसंवदंतइतिचतुःप्रस्थपरिमितान्व्रीहीन्प्रक्षिप्य तैःस्थंडिलंपरिकल्प्यतत्रकलशस्थापनोदकपूरणेसमंत्रकेकृत्वायाओषधीरितिसर्वौषधीःप्रक्षिप्यस्योनेतिसप्तमृदःअश्वत्थेवइतिपंचपल्लवान् कांडात्कांडादितिदूर्वाःअग्नेरेतइतिहिरण्यं याःफलिनीरितिफलंयुवासुवासाइतिवस्त्रद्वयेनावेष्ट्य बृहस्पतेजुषस्वनइतिपंचरत्नानिनिक्षिप्य गंधद्वारामितिगंधादिनाकलशंसंपूज्यपूर्णादर्वीतिपूर्णपात्रंनिधाय तत्रप्रतिमाचतुष्टयंनिधायतास्वावाहनादिषोडशोपचारैर्देवताःपूजयेत्॥कद्रुद्रायेतिरुद्रं॥ यमायसोममितियमं ॥ अग्निर्मूर्धादिवइत्यग्निं॥परंमृत्योरितिमृत्युं ॥ पूजांतेस्थंडिलेपश्चिमभागस्थेऽग्निंप्रतिष्ठाप्यस्थापितोत्तरभागेग्रहपूजनकलशस्थापनांतंकृत्वाऽन्वादध्यात्॥व्याहृत्यंतेग्रहपीठदेवतान्वाधानंप्रसिद्धरीत्याकृत्वा रुद्रंयमंअग्निंमृत्युंचप्रत्येकंप्रतिद्रव्यमष्टोत्तरशतसंख्याभिःसमि

च्चरुघृततिलाहुतिभिः ॥ अंगहोमेवरुणंद्विरित्यादिप्रणीताप्रणयनांतेआज्यनिर्वापः आज्येनसहगृहसिद्धान्नस्यपर्यग्निकरणंसंमा र्गांतेचरोरग्नावधिश्रपणमभिघारणंचकृत्वोदगुद्वासनादिसामान्यप्रधानहोमांतेग्रहपीठदेवतानांयथान्वाधानंत्यागेकृते प्रत्येक मष्टोत्तरशतसंख्याहुतिपर्याप्तंसमिच्चरुघृततिलात्मकंद्रव्यचतुष्टयंरुद्रायमायअग्नयेमृत्यवेचनममेतित्यागेकृते ऋत्विक्सहित आचार्यस्तत्तन्मंत्रैर्जुहुयात् ॥ प्रायश्चित्तहोमांतेलोकपालेभ्योग्रहपीठदेवताभ्यश्चबलिदानंरुद्रयमाग्निमृत्युभ्यश्चांतेक्षेत्रपालायच ॥ पूर्णाहुत्यंतेप्रणीताविमोकः ॥ कलशद्वयोदकेनाभिषेकः समुद्रज्येष्ठाइत्यादिभिर्मंत्रैः ॥ प्रीयतांभगवानीशः पिनाकीसर्वतोमुखः ॥ तवमूर्तिप्रदानेनसर्वाभीष्टप्रदोभव ॥ ईषत्पीनोयमःकालोदंडहस्तःप्रसन्नधीः ॥ रक्तदृङ्नीलकायश्चमहिषस्थःशिवंकुरु ॥ पिंगभ्रू श्मश्रुकेशांतःसाक्षसूत्रकमंडलुः ॥ सप्तार्चिःशक्तिधारीचममपापंव्यपोहतु ॥ दंष्ट्राकरालवदनोनीलांजनसमाकृतिः ॥ रक्ताक्षो सिगदापाणिर्मृत्युर्मांपातुसर्वदा ॥ इत्यादिभिश्चतुर्भिःश्लोकैश्च ॥ ततएतैरेवश्लोकैःसमाहितएकैकांदेवतामाचार्यायदद्यात् ॥ ततस्तस्मैगोभूहिरण्यवस्त्रादितन्निष्क्रयंवादद्यात् ॥ कृतस्यकर्मणःसांगतायैइमांदक्षिणांतुभ्यमहंसंप्रददेइति ॥ एवमृत्विग्भ्योपि यथाशक्तिदक्षिणादानं ततोग्रहपीठदेवतानांपूजनविसर्जनेआचार्यहस्तेप्रतिपादनंब्राह्मणभोजनंच॥इतिविषनाडीजननशांतिः

## ॥ १९६ ॥ यमलजननशांतिः ॥

श्रीः ॥ ममभार्यायायमलप्रसूतिसूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंइष्ट्यायक्ष्येइतिश्रौताग्निमतः गृह्याग्निमतस्तुमारु तस्थालीपाकेनयक्ष्यइतिसंकल्पः ॥ अकृतप्रत्यारंभस्यतत्स्थानेपूर्णाहुतिंहोष्यामीति ॥ अग्निशून्यस्तुसग्रहमखंकात्यायनोक्तं प्रायश्चित्तंकरिष्येइतिसंकल्प्यगणेशपूजनाद्याचार्यवरणांतंकुर्यात् ॥आचार्योयदत्रेत्यादिनाभूशुद्धिंविधायप्रागादिक्रमेणईशान्यं

तासुदिक्षुमहीद्यौरित्यादिविधिनाकलशाष्टकपूरणांतंकृत्वाअग्नेरेतइतिहिरण्यंकषायादिसहितंप्रक्षिप्य काडात्कांडादितिदूर्वाः याओषधीरितिसर्वौषधीश्चप्रक्षिप्य गंधादिप्रक्षेपादिवरुणपूजांतंकुर्यात् ॥ अथकलशोदकैराचार्योदंपत्योरभिषेकंकुर्यात् ॥ आपोहिष्ठेतितृचं ॥ कयानइति २ ॥ आनस्तुतइतिपंच ५ ॥ मोष्वितिपंच ५ ॥ इदमापइत्येकां १ ॥ अपनःशोशुच दघमिति ८ एवमभिषिक्तौदंपतीश्वेतैर्वस्त्रचंदनपुष्पैःसौवर्णभूषणैश्चाऽलंकृत्यदर्भेषूदङ्मुखावुपवेशयति ॥ तत्समीपेप्राङ्मुख आचार्यःस्थंडिलेऽग्निंप्रतिष्ठाप्यैशान्यांग्रहपूजाकलशस्थापनांतंकृत्वाऽन्वाधानंकुर्यात् ॥ व्याहृत्यंतेग्रहानुत्कीर्त्य ॥ अपस्ति सृभिः इंद्रंसप्तभिः वरुणंपंचभिः अपएकया अग्निंचाष्टाभिराज्याहुतिभिः अग्निंसोमंपवमानंपावकंमारुतंमरुतःयमंअंत कंमृत्युंचएकैकयाचर्वाहुत्या अंगहोमेवरुणंद्विरित्यादि ॥ तूष्णींषट्त्रिंशद्वारंनिर्वापप्रोक्षणे ॥ यथान्वाधानमाज्याहुति षुत्यागः ॥ अग्नयेस्वाहेत्यवदानसंपदानवाहुतयः ॥ यथालिंगंत्यजतापिअस्याद्यात्मनामरुतोध्येयाः ॥ प्रयाजेषुसमिन्धइति त्यागेपिसमिदाद्यात्मनानिरुक्तोक्ताग्निध्यानवत् ॥ ततःइमंमेवरुणेत्यादिवलिदानांतेपूर्णाहुतिःपूर्णपात्रनिनयनंग्रहकलशेना भिषेकःआचार्यायदक्षिणादानंस्थापितदेवतानांपूजनादिआचार्यहस्तेप्रतिपादनांतंचकृत्वा ब्राह्मणान्भोजयित्वास्वस्तिभवंतो ब्रुवंत्वितिवाचयित्वा आशिषोगृहीत्वेश्वरार्पणंकुर्यादिति ॥ इतियमलजननशांतिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १९७ ॥ त्रिकप्रसवशांतिः ॥

श्रीः ॥ द्वादशेअन्यस्मिन्वाशुभेऽहनिसभार्योगोमुखप्रसवंकृत्वादेशकालौसंकीर्त्यममसुतत्रयजन्मानंतरंसुताजननसूचितसर्वारि ष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंसग्रहमखांगगर्गोक्तांशांतिंकरिष्ये ॥ सुतात्रयजननोत्तरंसुतजननेतथोहःकार्यः ॥ ततोगणेश

पूजनाद्याचार्यर्त्विग्वरणतत्पूजांतेआचार्योयदत्रेत्याद्यभ्युत्तारणंचकृत्वा ॥ ततःस्थंडिलपूर्वभागेग्रहपूजाकलशस्थापनवरुणपूज नांतंकृत्वा तदुत्तरतउदक्संस्थानांपंचकलशानांमहीद्यौरित्यादिविधिना यथाशक्तिधान्योपरिस्थापितानामुपरियथाशक्तिहेम निर्मिताःब्रह्मविष्णुमहेशेंद्ररुद्रप्रतिमाःस्थापयित्वातासुदेवताःपूजयेत् ॥ ब्रह्मजज्ञानमितिब्रह्माणं ॥ इदंविष्णुरितिविष्णुं ॥ तत्पु रुषायेतिमहेशं ॥ यतइंद्रेतींद्रं ॥ कद्रुद्रायेतिरुद्रं ॥ पूजांतेरुद्रकलशंस्पृष्ट्वाएकादशवारंरुद्रंजपेत् ॥ तदंतेकृणुष्वपाजइत्यादिशांति सूक्तानिजपेत् ॥ ततोऽग्निप्रतिष्ठापनादि अन्वाधानेव्याहृत्यंतेप्रसिद्धंग्रहपीठगतदेवतान्वाधानंकृत्वा ब्रह्माणंविष्णुंमहेशंइंद्रंरुद्रं चसमिदाज्यतिलचरुभिःप्रत्येकंप्रतिद्रव्यमष्टोत्तरसहस्राहुतिभिः १०८।२८ अंगहोमेवरुणंद्विरित्यादि ॥ सामान्यप्रधानांतेय थान्वाधानंत्यागः ॥ ततःप्रधानहोममुक्तमंत्रैराचार्यऋत्विक्कर्तृकग्रहहोमपुरःसरंकुर्यात् ॥ प्रायश्चित्तहोमांतेबलिःपूर्णाहुतिश्च ॥ ततःप्रणीताविमोकसंस्थाजपपरिस्तरणविमोकांतेषट्कलशोदकेनसमुद्रज्येष्ठाइत्यादिमंत्रैःसकुटुंबयजमानाभिषेकः ॥ ततआ चार्यायसहिरण्यधेनुंदत्वाऋत्विग्भ्योयथाशक्तिदानंचकृत्वास्थापितदेवतानामुत्तरपूजनविसर्जनांतेतत्प्रतिमाआचार्यहस्तेप्रति पाद्यकांस्यपात्रेसकुटुंबःस्वरूपमवेक्ष्यसदक्षिणंतद्दानंकृत्वा ब्राह्मणभोजनंयथाशक्तिसंकल्प्यशांतिपाठंकारयित्वापरमेश्वरार्पणंकु र्यात् ॥ इतित्रिक० ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १९८ ॥ सदंतजननशांतिः ॥

श्रीः ॥ उक्तकालेगोमुखप्रसवंकृत्वादेशकालौसंकीर्त्यअस्यशिशोःप्रथममूर्ध्वदंतजननसूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्री त्यर्थंपाद्मोक्तांपुष्करोक्तांचशांतिंकरिष्ये ॥ निमित्तांतरेसदंतजननसूचितेत्यूहः द्वितीयमासदंतजननसूचितेत्येवमूहश्चकल्प्यः ॥

गणेशपूजनाद्याचार्यवरणांतेआचार्योयदत्रेत्यादिप्रतिमानामग्न्युत्तारणांतंकृत्वाहोमदेशोत्तरभागेगजपृष्ठेनौकायांतदभावेसौव र्णपीठेवाभद्रासनत्वेनकल्पिते वालमुपवेश्यसर्वौषधिसर्वगंधादियुक्तजलैःस्नापयित्वा होमदेशपूर्वभागेस्थापितकलशोपरिधा तारंवह्निंसोमंवायुंपर्वतान्केशवंचषट्प्रतिमासुसंपूज्याऽग्निंप्रतिष्ठाप्यग्रहान्संपूज्याऽन्वादध्यात् ॥ ग्रहान्वाधानांते ॥ धाता रंसकृच्चरुणा वह्न्याद्यादेवताएकैकयाज्याहुत्या अंगहोमेवरुणंद्विरित्यादि ॥ धात्रेत्वाजुष्टंनिर्वपामीतिप्रोक्षामीतिसमंत्रेनिर्वाप प्रोक्षणे॥ग्रहानुदिश्यत्यागहोमांते ॐधात्रेस्वाहेत्यवदानधर्मेणसकृदाहुतिः ॥ ॐवह्नयेस्वाहा ॥ ॐसोमाय० ॥ ॐवायवे० ॥ ॐपर्वतेभ्यः० ॥ ॐ केशवाय०॥ इतिस्रुवेणाज्याहुतयः॥ यथालिंगंत्यागः॥ चर्वाज्याभ्यांस्विष्टकृद्बलिपूर्णाहुत्यंतेकलशद्वयोदके नाभिषेकः ॥ यथाशक्त्याचार्यायदक्षिणादानंतद्धस्तेप्रतिमाप्रतिपादनांतेभूयसींदक्षिणामन्येभ्योयथाशक्तिदत्वासप्ताहंब्राह्मणा न्भोजयेत् ॥ अष्टमेहनिशक्त्यनुसारेणकांचनादिदानंतेभ्यःकार्यं ॥ दिनाष्टकंब्रह्मचर्यादिव्रतचर्यांतेपरमेश्वरार्पणंकुर्यादितिस दंतजननादिशांतिः ॥ षष्ठेऽष्टमेवामासेदंतोत्पत्तौतुतदनुसारिसंकल्पपूर्वकंबृहस्पतेरेवमंत्रेणतत्पूजनविधिनापूजनंदधिमधुघृ ताक्तानांअश्वत्थसमिधामष्टोत्तरशतंतन्मंत्रेणहोमः आज्येनस्विष्टकृदादि तत्कलशोदकेनाभिषेकः ब्राह्मणभोजनांतेईश्वरार्पणं॥ इतिसदंतोत्पत्तिशांतिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १९९ ॥ सिंहादिप्रसूतगवादिशांतिः ॥

श्रीः॥कर्तादशाहोत्तरंशुभदिनेस्नात्वाआचमनादिदेशकालस्मरणांतेममपत्न्याःपौषेप्रथमप्रसूति–(ममगृहेसिंहस्थेरवौगोप्रसूति सूचित–माघेमहिषीप्रसूतिसूचित–श्रावणेदिवावडवाप्रसूति) सूचितसर्वारिष्टपरिहारद्वारासग्रहमखांशौनकोक्तांशांतिंकरिष्य

इतिसंकल्प्यगणेशपूजनस्वस्तिवाचनादिऋत्विग्वरणांतंकुर्यात् ॥ ततआचार्यःकर्मसंकल्प्यप्रादेशकरणांते गृहस्यैशानभागेमही द्यौरित्यादिविधिनाकलशंसंस्थाप्यवस्त्रयुग्मेनावेष्ट्य पूर्णपात्रेसौवर्णराजतताम्रान्यतमप्रतिमयोः कद्रुद्रायेतिरुद्रं ॥ आसत्येने तिसूर्यंचावाह्यपूजयेत् ॥ ततएकऋत्विक्होमसमाप्त्यंतंरुद्रमपरश्चसौरमंत्रान्जपेत् ॥ यद्वातत्तन्मूलमंत्रजपःकार्यः ॥ ततोग्निं ग्रहांश्चप्रतिष्ठाप्यान्वादध्यात् ॥ ग्रहादिकीर्तनांते रुद्रंसूर्यंच तिलाज्यचरुभिःप्रत्येकंप्रतिद्रव्यं १०८ वा २८ संख्याकाहुतिभिः अंगहोमेवरुणंद्विरित्यादि ग्रहादिहोमांतेपूजामंत्राभ्यांप्रधानहोमंकुर्यात् ॥ ततःअंगहोमादिप्रायश्चित्तहोमांतेबलिदानंपूर्णाहुतिं चकृत्वासंस्त्रावहोमादिशेषंसमाप्यस्थापितकलशोदकेनसकुटुंबंयजमानंसमुद्रज्येष्ठाइत्यादिमंत्रैरभिषिंचेत् ॥ ततोयजमानोविभू तिंधृत्वोत्तरपूजांविधायाचार्यंसंपूज्यतस्मैप्रसूतांगांमहिषींवादत्वाऋत्विग्भ्योदक्षिणामाचार्यायविसर्जितदेवतापीठंचदत्वायथा शक्तिब्राह्मणान्संभोज्यभूयसींदद्यात् ॥ इतिसिंहादिप्रसूतगवादिशांतिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २०० ॥ प्रसववैकृतशांतिः ॥

श्रीः ॥ वृद्धगर्गः ॥ यत्रगर्भेविपर्यासोमानुषाणांगवामपि ॥ अद्भुतानिप्रसूयंतेतत्रदेशस्यविप्लवः ॥ अत्रापिदिव्यजाशांतिः कार्यापंचदशींबुधैः ॥ पंचदशींप्राप्येतिशेषः ॥ पर्वणीत्यर्थः ॥ मानुषामानुषाणांचगोजाश्वमृगपक्षिणाम् ॥ जायंतेजातिभेदा श्चसदंताविकृतास्तथा ॥ बहुशीर्षाअशीर्षावाबहुकर्णाअकर्णकाः ॥ एकशृंगाद्वित्रिशृंगास्तथैवत्रिचतुर्भुजाः ॥ दीर्घकर्णामहा कर्णागजकर्णाश्चमानवाः ॥ वानरश्वापदव्याघ्रमार्जारतनुधारिणः ॥ जायंतेपुरुषायत्रतत्रसंग्राममादिशेत् ॥ राजश्रेष्ठकुलेनाशो धनस्यचकुलस्यच ॥ यमलायत्रजायंतेनारीणांगजवाजिनाम् ॥ ब्रह्मशांतिंततःकुर्याद्यत्रब्रह्माप्रशासिता ॥ अष्टोत्तरसहस्रा

णिचरुंवैजुहुयाद्धृतम् ॥ समिधांतुपलाशानांतर्पयेत्पूर्ववद्द्विजान् ॥ दासीदाससमायुक्तोगोधान्यफलसंयुतम् ॥ कांचनंवृषभं वस्त्रंदद्याद्विप्रायदक्षिणाम् ॥ अशिराजायतेजंतुस्तथाद्वित्रिशिराअपि ॥ सूर्याद्भुतंविजानीयात्पूजयित्वादिवाकरम् ॥ दध्याज्य मधुसंयुक्ताःसमिधस्त्वर्कसंभवाः ॥ यद्वाजनःप्रसृतिभिर्जुहुयाद्धृतमेवच ॥ धेनुंसुवर्णंवस्त्रंचदद्याद्धात्रेचदक्षिणाम् ॥ सर्वेदो षाविनश्यंतिततःसंपद्यतेशुभम् ॥ मृगीजनयतेसर्पान्मंडूकांश्चाप्यमानुषान् ॥ बृहस्पत्यद्भुतमिदंतद्वारेतंप्रपूजयेत् ॥ उदुंबर स्यसमिधोदधिसर्पिःसमन्विताः ॥ दोषोपशमनार्थायजुहुयान्नियमेस्थितः ॥ वस्त्रंसुवर्णंधेनुंचदद्याद्विप्रायदक्षिणाम् ॥ स्त्रीगर्भ पातोयमलंप्रसूयंतेऽथवास्त्रियः ॥ सदंताश्चैवजायंतेजातमात्राहसंतिच ॥ बुधाद्भुतंविजानीयात्तद्वारेतंप्रपूजयेत् ॥ वस्त्रंगांच सुवर्णंचदद्याद्विप्रायदक्षिणाम् ॥ अद्भुतसागरेनारदः ॥ भानौसिंहगतेचैवयस्यगौःसंप्रसूयते ॥ मरणंतस्यनिर्दिष्टंषड्भिर्मासैर्न संशयः ॥ तत्रशांतिंप्रवक्ष्यामियेनसंपद्यतेशुभम् ॥ प्रसूतांतत्क्षणादेवतांगांविप्रायदापयेत् ॥ ततोहोमंप्रकुर्वीतघृताक्तैराज सर्षपैः ॥ अयुतोहोमोव्याहृतिभिःकार्यइति ॥ तथा ॥ अस्यवामस्यसूक्तेनतद्विष्णोरितिमंत्रतः ॥ जुहुयाच्चतिलाज्येनशतम ष्टोत्तराधिकम् ॥ मृत्युंजयेनमंत्रेणजुहुयाच्चतथायुतं ॥ श्रीसूक्तेनततःस्नायाच्छांतिसूक्तेनवापुनरिति ॥ यत्कांत्यासूर्यचंद्राद्या अभवन्प्रौढकांतयः ॥ श्रीकांतस्यमुदेतस्यप्रोक्ताजननशांतयः ॥ इतिजननशांतयः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २०१ ॥ सर्वशांत्युपयोगिनिर्णयः ॥

श्रीः॥तत्रशांतिकंनाम अस्पष्टपापविशेषनिदानकैहिकमात्रानिष्टनिवर्तकंपापाप्रयोजकंवैधंकर्म॥सर्वेषुशांतिकर्मसुगणपतिपूजनंपु ण्याहवाचनंनांदीश्राद्धंचावश्यकं ॥ सर्वत्राऽऽचार्यःयजमानसमशाखीयएव ॥ अन्यथा आचार्यस्ययजमानशाखाध्ययना

भावेनतच्छाखीयपदार्थानांनिर्वाहएवनस्यात् ॥ स्वशाखयाऽननुष्ठानेतुवैगुण्यं ॥ तथाच पराशरः ॥ यःस्वशाखांपरित्यज्यपर शाखांसमाश्रयेत् ॥ अप्रमाणमृषिंकृत्वासोंऽधेतमसिमज्जतिइति ॥ ऋत्विजस्तुभिन्नशाखीयाअपि ॥ आचार्यादयःसतिविभवे मधुपर्केणपूज्याः ऋत्विजोवृत्वामधुपर्कमाहरेत् इत्याश्वलायनोक्तेः ॥ सचमधुपर्कःयजमानशाखयैवभवति । विवाहेतुवर शाखयैव । अर्च्यशाखयामधुपर्कइतितत्रोक्तेः ॥ यजमानेनस्वशाखांस्वसूत्रंचोच्चार्यऋत्विग्वरणंकार्यं । तत्र हिरण्यकेशीये नयजमानेन अमुकप्रवरान्वितामुकसगोत्रोत्पन्नःयजुर्वेदस्यतैत्तिरीयशाखाहिरण्यकेशिसूत्राध्यायीअमुकशर्माहंइतिनिर्देशःकर्त व्यः । इदानींतनाःकेचित् यजुर्वेदस्यतैत्तिरीयशाखांतर्गतहिरण्यकेशिशाखाध्यायी इतिप्रयुंजतेतच्चिंत्यं ॥ शाखाहि वेदः नसूत्राणि। हिरण्यकेशीसत्याषाढोवाआचार्यःएकएव । भगवतःसत्याषाढस्यैवाचार्यस्यातिजरठतयाऽन्येनवाकेनचित्का रणेनहिरण्यमिवपीताःकेशाआसन्नितिसएवसत्याषाढःहिरण्यकेशीत्युच्यते ॥ यजुर्वेदस्यैकाशाखातैत्तिरीयसंज्ञा तच्छाखायां बहूनिसूत्राणि तत्रेदंहिरण्यकेशिनआचार्यस्यसूत्रं तच्चनवेदः ॥ तस्मादुपर्युक्तप्रकारेणशाखासूत्रोच्चारःकर्तव्यः । एवमाश्वलाय नैरपिऋग्वेदस्यशाकलशाखाऽऽश्वलायनसूत्राध्यायीइतिप्रयोज्यं। यजुर्वेदस्यशाखापरिगणनंकुर्वताचरणव्यूहकारेणआपस्तंबी सत्याषाढीहिरण्यकेशीवौधायनीत्यादिपरिगणनंकृतंतत्सत्याषाढहिरण्यकेशिनोरैक्येऽपितयोःपृथक्त्वेनोपादानात् सूत्रकारा णामपिशाखाप्रवर्तकत्वेनोपादानाच्चचिंत्यं । सत्याषाढमुनिंवंदेस्वर्णकेशसमन्वितं । इत्यत्रसत्याषाढस्यैवस्वर्णसमकेशित्वेन हिरण्यकेशीतिसंज्ञेतिसुधीभिरालोच्यं ॥ तथाचचरणव्यूहकारःसर्वाणिसूत्राणिशाखाएवमन्यतेतदपिचिंत्यमेवेत्यलं ॥ सति विभवे ब्रह्मसदस्यगाणपत्यादीनामपिकर्मणोगौरवलाघवेविचार्यवरणंकर्तव्यं ॥ एकस्मिन्नेवकाले एकस्याद्वयोस्तिसृणां चतसृणांवाशांतीनांसहानुष्ठानप्राप्तौ पुण्याहवाचननांदीश्राद्धग्रहयज्ञस्थंडिलोद्धननादिसामान्यप्रधानांतःप्रयोगःसकृदेवानुष्ठे

यःतेषामंगत्वात् ॥ प्रधानमात्राण्येवावर्तंते । बहुकर्तृकहोमेप्रत्याहुतित्यागाशक्तेर्होमारंभएवदेवताश्चतुर्थ्यंतेनोदिश्यत्यागः कार्यः ॥ यन्नाम्नातंस्वशाखायांपारक्यमविरोधियत् ॥ विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥ इत्युक्तेःस्वाऽविरोधिअन्यशाखोक्तमपिग्राह्यं ॥ शाखांतरेस्वशाखायांयच्छांत्यादिकमीरितं ॥ स्वशाखोक्तंतदाकार्यंपरोक्तंनसमाचरेत् ॥ स्वशाखाश्रयमुत्सृज्यपरशाखोक्तमाचरन् ॥ शाखारण्डःसविज्ञेयःसर्वकर्मबहिष्कृतःइति ॥ सर्वशांत्यादिकंजातकर्मनामकर्मचास्माकंहिरण्यकेशीयानांजननाद्द्वादशाहएवभवतिनैकादशेऽहनि द्वादश्यांमातापुत्रौस्नातःशुच्यगारंकुर्वंति इतिसूत्रकृदुक्तेः ॥ मातापुत्रौइत्यनेन उपलक्षणयापितुरपिग्रहणं ॥ अतएकादशेह्निपितुराशौचापगमाभावात्कर्मणिनाधिकारः ॥ मुख्यकालंप्रवक्ष्यामिशांतिहोमस्ययत्नतः ॥ जातस्यद्वादशाहेतुजन्मर्क्षेवाशुभेदिने॥जननाद्द्वादशाहेशांतिकरणेशांत्युक्तनक्षत्राहुतिवह्निचक्रावलोकनादिकंनावश्यकं कालांतरेआवश्यकं ॥ तद्यथा सैकातिथिर्वारयुताकृताऽऽप्ताशेषेगुणेऽभ्रेभुविवह्निवासः ॥ सौख्यायहोमःशशियुग्मशेषेप्राणार्थनाशौदिविभूतलेच ॥ तरणिविद्भृगुभास्करिचंद्रमःकुजसुरेज्यविधुंतुदकेतवः ॥ रविभतोदिनभंगणयेत्क्रमात्स्रतिपदंत्रितयंत्रितयंन्यसेत् ॥ नेष्टाहोमाहुतिःखले ॥ संस्कारनित्यकर्मसुनिमित्ताऽव्यवहितनैमित्तिकेषुरोगातुरेचवह्निचक्रादिकंनापेक्षितमस्तादिविचारश्चनास्ति ॥ अग्नेःस्थापनवेलायांपूर्णाहुत्यामथाऽपिवा ॥ आहुतिर्वह्निवासश्चविलोक्यौशांतिकर्मणि ॥ व्यतीपातेक्षयदिनेग्रहणेवैधृतावपि ॥ अमासंक्रांतिविष्ट्यादौप्राप्तकालेऽपिनाचरेत् ॥ तत्रापिसूत्रकृदुक्तकर्मणिकर्तव्ये व्यतीपातादिकंनविचार्यं । तत्रतुसूत्रोक्तमेवदिनंशस्तं॥ उदगयनआपूर्यमाणपक्षेकल्याणेनक्षत्रे इत्यादिसूत्रोक्तंदिनं ॥ अथशांत्यंगानांक्रमउच्यते ॥ संकल्पःस्वस्तिवाग्विप्रवरणंभूतनिःसृतिः ॥ पंचगव्यैर्भूमिशुद्धिर्मुख्यदेवतपूजनं ॥ अग्निप्रतिष्ठासूर्यादिग्रहस्थापनपूजनं ॥ देवतान्वाहितिःपात्रासादनंहविषांकृतिः ॥ यथाक्रमंत्यागहोमावितिपौर्वांगकःक्रमः ॥ पूजास्विष्टंनवाहुत्या

बलिः पूर्णाहुतिस्तथा ॥ पूर्णपात्रविमोकाद्यभ्यर्चनांतेऽभिषेचनं ॥ मानस्तोकेविभूतिश्चदेवपूजाविसर्जने॥ श्रेयोग्रहोदक्षिणादि दानंकर्मेश्वरार्पणं ॥ क्रमोऽयमुत्तरांगानांप्रायःस्मार्तेष्वितिस्थितिः ॥ इतिक्रमेऽपियत्रयत्रविशेषउक्तस्तत्रतत्रसोऽनुसंधेयः येयेविशेषालघवोयत्रयत्रप्रदर्शिताः इत्युक्तेः ॥ इतिप्रसंगात्सर्वशांत्युपयोगिदिनादिनिर्णयः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २०२ ॥ बालग्रहशांतिप्रयोगः ॥

श्रीः ॥ कर्ताप्रदोषाद्युक्तकालेआचमनादिदेशकालस्मरणांतेअस्यशिशोःशरीरेअमुकाख्यपूतनाग्रहणजन्यज्वरच्छर्दिकासश्वास मूर्छाग्रहणीशूलहिक्कांऽगसंकोचाऽकस्मिकभयप्रकंपाक्षिमीलनगात्रभंगमुखशोषदंतखादनतनुवैवर्ण्यशिरःस्फोटपुलकव्रणोद्गम हृद्रोगवैकल्याहारद्वेषदिवारात्रिरोदनाद्यनेकविधव्याधिपीडानां सद्योनिरासेनआरोग्यावाप्तिपूर्वकंक्षेमायुरभिवृद्धिद्वाराश्रीप० तत्कल्पोक्तविधिनाशांतिंकरिष्येइतिसंकल्प्य ( अत्राऽमुकपदस्थानेपूतनायाःदिनमासाब्दभेदानुसारेणतत्तन्नामकीर्तयेत् ) गणे शंसंपूज्यपुण्याहवाचनंकृत्वानदीतीरस्थमृदाद्युक्तद्रव्येणपुत्तलिकांविधायनवेशरावेसंस्थाप्यप्राणप्रतिष्ठांते ॐ नमोभक्तवत्सले विमोचनिस्वाहेतिमंत्रेणनाममंत्रेणवाषोडशोपचारैःपूजयेत् ॥ तत्रवस्त्रगंधपुष्पधूपदीपनैवेद्यादितत्तदुक्तंग्राह्यं ॥ ततस्तस्याः पुरतोभक्तपोलिकामुष्टिकमत्स्यमांससुराद्युक्तद्रव्यात्मकंबलिंनिधायतत्रैवतत्तद्वर्णध्वजान्पिष्टदीपांश्चयथोक्तसंख्ययासंस्थाप्यदे व्यैनिवेदयेत् ॥ तत्रसाधरणोमंत्रः ॥ ॐनमश्चामुंडेभगवतिविद्युज्जिह्वेह्रांह्रांह्रींह्रींअपसरंतुदुष्टग्रहाहुंतद्यथागच्छंतुयातान्यतः स्थानेरुद्रोज्ञापयतिस्वाहा विद्युज्जिह्वेह्रांह्रींहूंहूंमुंचमुंचस्वाहा ॥ यत्रविशेषमंत्रउक्तस्तत्रसोऽपिग्राह्यः ॥ मंत्रांतेअमुकाख्यपूतना

१ दिनमासादिभेदेनपृथग्देवतामंत्राश्चशांतिरत्नादावालोचनीयाः ।

यैसांगायै० अमुंसदीपंसर्वोपस्करयुतंबलिंसमर्पयामि ॥ भोभोःअमुकपूतने इमंबलिंगृहाणममास्यबालकस्यआयुःकर्त्रीत्यादि ॥ ततःकश्चिद्वटाम्रोदुंबराश्वत्थजंबूपल्लवानार्द्रान्कुसुमाक्षतानेकीकृत्यबालकांगेभ्यःसमुत्तार्यशरावेनिक्षिप्यबालंनीराजयेत् ॥ मंत्रस्तु ॥ ब्रह्माविष्णुश्चरुद्रश्चस्कंदोवैश्रवणस्तथा ॥ रक्षंतुत्वरितंबालंमुंचमुंचकुमारकमिति ॥ ततस्तत्सर्वमादायसशस्त्रकंबलः ॐनमोभक्तवत्सलेविमोचनिस्वाहेतिमंत्रमुच्चारयन्नप्रमत्तोग्रामाद्बहिर्गत्वाचतुष्पथनदीतीराद्युक्तस्थलेनिक्षिपेत् ॥ कर्ताचतंद्वारप्रदेशांतमनुव्रजन्सर्षपविकिरणंजलसेकंचकृत्वाभार्यापुत्राभ्यांसहहस्तपादंप्रक्षाल्यगृहंप्रविश्यब्राह्मणैःशांतिंपाठयेत् ॥ ततःपलाशोदुंबराश्वत्थबिल्ववटपल्लवकषायेणनमश्चामुंडेइत्यादिपूर्वोक्तमंत्रेणबालंसंस्नाप्यगंधादिनाऽलंकृत्यधातकीलोध्रमंजिष्ठातालचंदनचूर्णेनतस्यांगान्यनुलिप्यगुग्गुलुधूपेनधूपयेत् ॥ ततोभूर्जपत्रे रक्षरक्षमहादेवनीलग्रीवजटाधर ॥ ग्रहैस्तुसहितोरक्षमुंचमुंचकुमारकमितिमंत्रंलिखित्वातत्पत्रंशिशोर्दक्षिणभुजेबद्ध्वातस्याशिखांस्पृशन्मंत्रंजपेत् ॥ ॐ सर्वामातरइमंग्रहंसंहरंतुहुंरोदयरोदयस्फोटय २ स्वाहागर्ज २ सर २ गृह्ण २ आमर्दय २ हिम २ हन २ एवंसिद्धिंरुद्रोज्ञापयतिस्वाहा ॥ ततःसतिसंभवे चतुष्पथेकुंडंस्थंडिलंवाकृत्वा ॐकूष्मांडिभगवतिसुरागिणिसुमुंडितेमुंच २ दह २ पच २ सर २ गच्छ २ स्वाहेतिमंत्रेणसहस्रसंख्ययापूतनायैविधिवत्तिलहोमःकार्यः ॥ ततोबालरोदनपरिहारार्थंभूर्जपत्रादौषडस्रंतन्मध्येह्रींकारंतत्रशिशोर्नामचलिखित्वाषट्सुकोणेषुक्रमेणआंलुलुवेस्वाहाइतिषडक्षराणितद्बाह्येनेमिवद्वर्तुलद्वयंतद्बहिरधोमुखानर्धचंद्रांश्चविलिख्यपंचोपचारैःसंपूज्यतद्यंत्रंबालहस्तेवध्नीयात् ॥ ततःपूर्वोक्तंबालग्रहस्तवंपठित्वाहरिवंशोक्तेनपारिजातोक्तेनवारक्षामंत्रेणविभूतिमभिमंत्र्यबालस्यांगेलेपयेत् ॥ ततोब्राह्मणेभ्योदक्षिणांदत्वाभोजनंचसंकल्प्यतान्प्रणम्याशिषोगृहीत्वाकर्मेश्वरायार्पयेत् ॥ इतिबालग्रहशांतिः ॥

॥ इतिद्वितीयंसंस्कारशांत्यादिप्रकरणंसंपूर्णम् ॥

भिः १०० वनस्पतेशतवल्शोविरोहसहस्रवल्शाविवयꣳरुहेमयंत्वायꣳस्वधितिस्तेतिजानःप्रणिनायमहतेसौभगायइतियजुषा परोमात्रयेतिसूक्तेनप्रत्यृचंचरुणा पुरुषसूक्तेनप्रत्यृचमाज्येन लोकपालमीशानंपूर्वोक्तन्यग्रोधादिभिः २८ अभित्वादेवसवित रितिमंत्रेण ब्रह्मादिमंडलदेवतास्तैरेवद्रव्यैःयक्ष्ये अंगहोमेवरुणंद्विरित्यादिसामान्यप्रधानांतंकुर्यात् ॥ पूर्वकुंडेलक्ष्मीनारायणं न्यग्रोधादितैरेवद्रव्यैः १०० इंद्रमग्निंचत्रातारमग्निंदूतमितिमंत्राभ्यांतैरेवद्रव्यैः २८ ॥ दक्षिणेलक्ष्मीनारायणंपूर्ववत् १०० यमंनिर्ऋतिंचयमायसोममसुन्वंतमितिमंत्राभ्यांतैरेवद्रव्यैः २८ पश्चिमेलक्ष्मीनारायणंपूर्ववत् १०० वरुणंवायुंचइमंमेवरु णआनोनियुद्भिरितिमंत्राभ्यांतैरेवद्रव्यैः २८ ॥ उत्तरेलक्ष्मीनारायणंपूर्ववत् १०० कुवेरंअभित्यंदेवमितितैरेवद्रव्यैः २८॥ एवं होमःकार्यः॥ होमकालेद्वारजापकैरग्रेतनदेवप्रतिष्ठापंचकुंड्युक्तक्रमेणसूक्तजपःकार्यः ॥ ततःअंगहोमादिप्रायश्चित्तहोमांतेइंद्रा दिभ्यःक्षेत्रपालायचवलिंदद्यात् ॥ सर्वेआचार्याःपूर्णाहुत्यादिहोमशेषंसमाप्योत्तरदिनावध्यग्निंरक्षेयुरुपवसेयुश्च ॥ इत्यधिवा सनं ॥ प्रातर्घटीस्थापनंआचार्योमंडपदेवताःसंपूज्याश्वत्थंपंचामृतैरभिषिच्यतैलहरिद्रारोपणाद्युपहारांतंलौकिकमेवकुर्यात् ॥ ततःपूर्वोक्ताश्वत्थोद्यापनविधिनास्थापिताष्टकलशैःपवमानःसुवर्जनइतित्रिरभिषिच्य वस्त्रदक्षिणांतोपचारैःसंपूज्यस्थंडिलेश्व त्थस्यब्रह्मत्वप्रसन्नताशांत्यभीष्टदातृत्वादिसिद्ध्येनामकरणनिष्क्रमणान्नप्राशनचौलोपनयनमहानाम्नीमहाव्रतगोदानसमावर्त



नविवाहेषुप्रतिसंस्कारंव्याहृत्याचतुराज्यंहुत्वाश्वत्थंकरेणस्पृशेत् ॥ अधिवासितसूच्याकर्णवेधंकृत्वाआयुष्यमितिसूक्तेनकुंडले वध्नीयात् शलाकयानेत्रांजनंकार्यं॥ ततोश्वत्थमूलेतुलसींरोपयित्वायजमानकरेमालतींदत्वामध्येंतःपटंधृत्वा मंगलाष्टकानिपठि त्वापटमुन्नमय्यमालतीमश्वत्थमूलेरोपयित्वासर्वेयेयज्ञेनबृहस्पतेप्रथमंतेवदन्भद्रंकर्णेभिरित्यादिपठेयुः ततःकौपीनंयुवंवस्त्राणी

तिवस्त्रंमित्रस्यचक्षुरित्यजिनंयज्ञोपवीतमित्युपवीतंआचमनंचइयंदुरुक्तादितिद्वाभ्यांमेखलामाबध्यस्वस्तिनइतिदंडंततोभिक्षां
दत्वाततोविवाहाशिषः ऋक्कवाइदमग्रेगृहावैप्रतिष्ठेतिपठित्वांतेलाजहोमंकृत्वाऽकृत्वावाहोमशेषंसमाप्य ॥ अश्वत्थोत्तरतःऊ
र्ध्वऊषुणइतियूपंरोपयित्वातुलस्यासहाश्वत्थस्यसुवासिनीभिस्तैलहरिद्रारोपणंमंगलस्नानंचकारयित्वाततःकर्मसाद्गुण्यावाप्तयेल
क्ष्मीनारायणप्रीतयेचदुकूलवस्त्रादिनानाद्रव्यपूरितंवंशपात्रदानंकार्यं ॥ तत्रादौपूजनम् ॥ ब्रह्मविष्णुशिवादीनांस्थानंत्वंवृक्षराट्
स्वयं ॥ अंगैःसर्वैरहोस्वामिंस्थातव्यंतुत्वयाविभो ॥ इत्यावाहनं ॥ मूलानिब्राह्मणायस्यऋगाद्याश्चांगपल्लवाः ॥ फलानियज्ञ
शाखाश्चवाङ्मयोमेदयांकुरु ॥ आसनं ॥ सर्वतीर्थमयोयस्मात्सर्वदेवमयोयतः ॥ सर्वतीर्थांबुभिस्तस्मात्पाद्यमाधत्स्ववृक्षराट् ॥
पाद्यं ॥ आपोधर्मस्यययद्वीजमापोधर्मःसनातनः ॥ अद्भ्यःपवित्रंनास्त्यन्यदपामर्घ्यंगृहाणमे ॥ अर्घ्यं ॥ शुद्ध्यंतिद्रव्यमात्राणि
गंगातोयेननित्यशः ॥ अतःसर्वाणिगात्राणिस्नापयेयज्ञवृक्षराट् ॥ स्नानं ॥ सर्वभूताधिवासायसर्वदेवमथायच ॥ सर्वलज्जानि
रासार्थवाससीकल्पयाम्यहं ॥ वस्त्रं ॥ यतोगंधवतीभूमिर्भूमिरूपाहिपादपाः ॥ राजात्वंपादपानांचचंदनंप्रतिगृह्यतां ॥ गंधं॥
वृक्षराजनमस्तुभ्यंयज्ञराजनमोस्तुते ॥ यज्ञांगरूपयज्ञेशवृक्षाश्वत्थनमोस्तुते॥ पुष्पं ॥ निर्यासंवृक्षराजानांधूपार्थंकल्पयाम्यहं ॥
धर्मरूपेणवर्ततेवृक्षाश्वत्थायतेनमः ॥ धूपं ॥ चक्षुर्दंसर्वलोकानांतिमिरस्यनिवारणं ॥ आर्तिक्यंकल्पयेभक्त्यापरिगृह्णीष्ववृक्ष
राट् ॥ दीपं ॥ अन्नाद्भवंतिभूतानियज्ञश्चान्नात्प्रवर्तते ॥ अश्वत्थयज्ञरूपोसिनैवेद्यंतेर्पयाम्यहं ॥ नैवेद्यं ॥ पायसंलड्डुकांश्चार्प
येत् ॥ फलतांबूलदक्षिणाःसमर्प्यनमस्कारप्रदक्षिणापुष्पांजल्यंतेप्रार्थयेत् ॥ अश्वत्थोसिजगन्नाथपुरादेवैर्विनिर्मितः ॥ पापात्सं
त्राहिनोदेवपुण्यंदेहिमहाफलं ॥ क्षीरोदधिसमुद्भूतेतुलसिहरिवल्लभे ॥ अश्वत्थोद्यापनफलंदेहिमह्यंसदाशिवेइति ॥ ततःपूर्णाहु

तिंवसोर्धारांचहुत्वाचार्यादीन्पूजादक्षिणादिभिस्तोषयेत् ॥ ततोभिषेकः ॥ मंडपाद्युपस्करजातमाचार्यहस्तेप्रतिपाद्यसंभवेदश धान्यानिदद्यादिति ॥ इतिअश्वत्थोद्यापनंवौधायनीयंसंपूर्णम् ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २६१ ॥ वटोद्यापनम् ॥



श्रीः ॥ तिथ्यादिसंकीर्त्यआत्मनःसकलपापक्षयकुलकोटिसमुद्धरणैहिकामुष्मिकनिरवधिसुखप्राप्तिपूर्वकब्रह्मपदप्राप्तिकामोव टोद्यापनंतथाभीष्टदातृत्वसिद्ध्यर्थंसर्वप्राणिसुखनिवासार्थंचवटसंस्कारंकरिष्येइतिसंकल्प्य ॥ तदंगविहितंगणपतिपूजनंपुण्या हवाचनंमातृकापूजनंनांदीश्राद्धमाचार्यादिवरणंचकरिष्ये ॥ स्वगृह्यविधिनातानिकृत्वाचार्यादीन्वृणुयात् ॥ ततःसर्त्विग्यज मानःपूर्णकलशहस्तःमंगलवाद्यतूर्यघोषेणसहशाकुनसूक्तंपठन्वटमंडपप्रादक्षिण्येनपश्चिमद्वारमागत्यतत्रस्योनापृथिविमहीद्यौ रितिमंत्राभ्यांधरांसंपूज्यअर्घ्यंदत्वाप्रविश्यवटसमीपेकलशंनिधायवरुणनिर्ऋतिमध्येउपविशेत् ॥ ततआचार्यःकर्मसंकल्प्य भूत शुद्ध्यादिविधायमंडपांतर्गौरसर्षपलाजान्यदत्रसंस्थितमितिविकीर्य साधितपंचगव्येनकुशैःआपोहिष्ठाइत्यादिमंत्रैःसर्वत्रप्रोक्षणं कृत्वा भद्रंकर्णेभिःस्वस्तिनइतिमंत्रद्वयंपठित्वादेवाआयांतुयातुधानाअपयांतुविष्णोदेवयजनंरक्षस्वभूमौप्रादेशंकुर्यात् ॥ यथोक्त मंडपेउक्ततोरणपताकाध्वजान्बध्वाशांतिसूक्तजपार्थंवेदादिक्रमेणद्वावेकंवाब्राह्मणंप्रागादिक्रमेणप्रतिद्वारंवृणुयात् ॥ ततआचा र्योवटपश्चिमेचतुरस्रांवेदिकांनिर्मायतत्रसर्वतोभद्रेउक्तप्रकारेणब्रह्मादिदेवताआवाह्य तदुपरिअक्षतपुंजेकलशत्रयंएकंवाप्रतिष्ठा प्य ॥ तत्रमध्यमकुंभेब्रह्मजज्ञानमितिब्रह्माणं तद्दक्षिणेवषट्तेइतिविष्णुं उत्तरेत्र्यंबकमितिरुद्रं एकएवकलशश्चेत्तत्रैवआग्नेय्या दिकोणेषुगणानांत्वेतिगणपतिं जातवेदसइतिदुर्गां जज्ञानमितिमातॄः क्षेत्रस्यपतिनेतिक्षेत्रपालं ततःपरितोलोकेशांस्तत्तन्मन्त्रै

रावाह्यसंपूज्य वेदीपरितोष्टौकलशान्स्थापनप्रकारेणसंस्थाप्य तत्रपूर्वादिकलशेषुपंचगव्यंसप्तमृदःपंचपल्लवान्चंदनंपंचरत्नानि
क्षीरंसर्वौषधीःगंगोदकंचक्षिप्त्वाशुद्धजलेनापूर्यपूर्णपात्रंनिधाय तेषुइंद्रादीनावाह्यसंपूजयेत् ॥ ततस्तैलहरिद्रारोपणादिवटस्य
कृत्वावस्त्रेणावेष्टयेत् ॥ इत्यधिवासनम् ॥ परेद्युःप्रातर्नित्यकर्मनिर्वर्त्यपीठदेवताःसंपूज्यप्रागादिद्वारचतुष्टयेचतुरःकुंभान्संस्था
प्यतेषुउदकंपंचरत्नपल्लवादिचनिधायइंद्रयमवरुणसोमांस्तत्तन्मंत्रैरावाह्यसंपूज्य चतुर्द्वारेषुचतुर्वेदविदोद्विजाःशांतिसूक्तानि
पठेयुः ॥ ततईशान्यांकुंडेस्थंडिलेवाग्निंप्रतिष्ठाप्य तदुत्तरेवेदिकायामुक्तप्रकारेणग्रहानावाह्यसंपूज्यतदीशान्यांकलशंप्रतिष्ठाप्य
जपार्थंब्राह्मणंवृणुयात् ॥ ततःप्रागाद्याचार्याश्चत्वारःस्वस्वकुंडेस्वगृह्यविधिनाआचार्यकुंडात्श्रोत्रियागाराद्वाऽग्नीन्प्रणीयध्या
येयुः ॥ कुंडचतुष्टयपक्षेप्राक्कुंडादग्निप्रणयनंतत्रैवमुख्यहोमः ॥ अन्वाधानम् ॥ तत्रेशानकुंडेब्रह्मविष्णुरुद्रान्घृताक्तदूर्वाज्या
भ्यांप्रत्येकंप्रतिद्रव्यमष्टोत्तरशतमिताहुतिभिर्यक्ष्ये ॥ इंद्राद्यष्टौलोकपालान्पलाशसमिच्चर्वाज्यद्रव्यैःअष्टाविंशतिसंख्यययायक्ष्ये ॥
दक्षिणेगणपतिंदुर्गांसप्तमातृःक्षेत्रपालंचघृताक्ततिलद्रव्येणाष्टाविंशत्याहुतिभिर्यक्ष्ये ॥ पश्चिमेसाधिप्रत्यधिदेवतानादित्यादिनव
ग्रहानर्कादिसमिच्चर्वाज्यतिलव्रीहिद्रव्यैःअष्टाविंशतिसंख्याकाहुतिभिर्यक्ष्ये ॥ उत्तरेसोमंसोमोधेनुमितिमंत्रेणघृताक्तचरुप्लक्षस
मिद्द्रव्याभ्यांप्रतिद्रव्यंअष्टोत्तरशताहुतिभिःब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ एवंतत्तन्मंत्रैःहोमंसंपाद्य वटस्यतैलहरिद्रा
दिदत्वापंचोपचारैःसंपूज्यपूर्वस्थापिताष्टकलशान्ब्राह्मणैर्ग्राहयित्वा आपोहिष्ठा० ३ समुद्रज्येष्ठाः० ४ इमाआपः० ३ एतोन्विंद्र
मिति० ३ प्रत्येकंजपन्वटस्याभिषेकंकुर्यात् ॥ ततआचार्यःप्रतीच्यांवटसंस्कारार्थंस्थंडिलंनिर्मायवटस्यपुंसवनादिविवाहांतान्सं
स्कारान्व्याहृतिद्वाराकरिष्ये ॥ अग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ अग्निंवायुंसूर्यंप्रजापतिंआज्यद्रव्येण प्रतिसंस्कारंचतुःसंख्याका

हुतिभिर्यक्ष्ये ॥ प्रतिसंस्कारहोमांतेवनस्पतेशतवल्शइतिमंत्रेणवटंस्पृशेत् ॥ एवमुपनयनपर्यंतंहुत्वायजमानवटांतरालेपटंधृत्वा सुमुहूर्तेतदेवलग्नमितिपठितेअंतःपटंनिःसार्यध्रुवसूक्तंयेयज्ञेनेतिपठित्वाकौपीनंयज्ञोपवीतंमेखलांदंडंचतत्तन्मंत्रैर्दत्वाउपदेशव ज्ञायत्रींश्रावयित्वानमेत् ॥ ततोमहानाम्न्यादिसमावर्तनांतंकर्मकृत्वालंकारान्दत्वाआयुष्यंवर्चस्यमितिपठित्वामौंजींविसर्जयेत् ॥ ततोवटंदूर्वांचदुग्धादिनासिक्त्वावटंदूर्वांवस्त्रयुग्मेनसंवेष्ट्यवस्त्रंकंचुकीमाभरणादिदत्वापूर्ववद्धुत्वा गृभ्णामीतिमंत्रेणवटदूर्व योःपल्लवमयान्हस्तान्योजयेत् ॥ ततःसंस्कारसंबंधिहोमशेषंसमाप्यवटंपुरुषसूक्तेनसंपूज्यप्रार्थयेत् ॥ मूलतोब्रह्मरूपायमध्यतो विष्णुरूपिणे ॥ अग्रतोरुद्ररूपायवटवृक्षायतेनमः ॥ अकारमूलरूपायउकारस्कंधशाखिने ॥ मकारफलपुष्पायवटवृक्षायतेनमः ॥ ततआचार्याःस्वस्वकुंडेअंगहोमादिहुत्वाबलिंपूर्णाहुतिंचकृत्वा ॥ यजमानोवटोद्यापनसांगतासिद्ध्यर्थेदक्षिणांगांचदास्येइतिसंक ल्प्यक्रमेणदत्वा ततऋत्विजःकलशोदकैःयजमानंसमुद्रज्येष्ठाइत्यादिमंत्रैरभिषिच्यकर्मशेषंसमापयेयुः ॥ ततोयजमानःपीठदेव ताःसंपूज्यउत्तिष्ठब्रह्मणस्पतइतिउत्थाप्य यांतुदेवगणाःसर्वेइतिविसृज्य पीठादिआचार्यायदत्वा मंडपंसदस्यायदत्वाभूयसींद त्वाशताधिकान्यथाशक्तिवाब्राह्मणान्भोजयेत् ॥ आशिषोगृहीत्वावटोद्यापनपूर्णतांवाचयित्वाइष्टजनैःसहभुंजीत ॥ इति ॥

## ॥ २६२ ॥ शालाकरणप्रयोगः ॥

श्रीः ॥ कर्ताउदगयनेशुक्लपक्षेरोहिण्युत्तराफल्गुन्युत्तराषाढोत्तराभाद्रपदान्यतमेज्योतिःशास्त्रोक्तनक्षत्रेवाकृतनित्यक्रियआचम्य प्राणानायम्यदेशकालौसंकीर्त्यममास्मिन्वास्तौचिरकालनिवासार्थंश्रीपरमेश्वरप्रीत्यर्थंशालाकरणंकरिष्ये ॥ तदंगंगणपतिपूजनं स्वस्तिपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्ये॥एतान्युक्तरीत्याकुर्यात्॥पुण्याहेशालाकरणकर्मणःपुण्याहमित्यूहः वास्तो

ष्पतिःप्रीयतामितिच ॥ अद्यपू० शालाकरणहोमंकर्तुमग्नेर्ध्यानादिकरिष्ये ॥ औपासनाग्निंप्रज्वाल्यचत्वारिशृंगेतिध्यात्वावरदो भव ॥ ततोन्वाधानं ॥ समित्त्रयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वाशालाकरणहोमकर्मणियायक्ष्यमाणादेवताइत्यादिव्याहृ त्यंतमुक्त्वा ॥ नास्तिवैशेषिकप्रधानहोमः॥ अंगहोमेवरुणंद्विरित्यादि ॥ जयादिहोमावैकल्पिकाः॥ स्विष्टकृदंतमुक्त्वात्रिवृदन्नहो मेअग्निं० एतादेवताःसद्योयक्ष्ये ॥ एषहिदेवः० संस्थाजपांतंपुण्याहवाचनांतंसमापयेत् ॥ ततः अहतंवासःपरिधायद्विराचम्य ॐ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामाददेभ्रिरसिनारिरसि ॥ इत्यभ्रिं(कुदळी)आदाय ॥ ॐ परिलिखितꣳरक्षः परिलिखिताअरातयइदमहꣳरक्षसोग्रीवाअपिकृंतामियोस्मान्द्वेष्टियंचवयंद्विष्मइदमस्यग्रीवाअपिकृंतामि ॥ इतिप्रदक्षिणमवटं (खळगी)परिलिखति सकृन्मंत्रेणद्विस्तूष्णीं ॥ एवंप्रत्यवटंयावद्भिरवटैःप्रयोजनंतावतःखात्वाऽवटसंबंधिपांसून्शालायाअभ्यं तरेप्रकिरति ॥ उच्छ्रयणक्रमेणैवावटानांक्रमोज्ञेयः ॥ ॐ इहैवध्रुवांनिमिनोमिशालांक्षेमेतिष्ठघृतमुक्षमाणा ॥ तांत्वाशालेसुवीराः सर्ववीराअरिष्टवीराअनुसंचरेम ॥ इतिद्वारस्थूणयोर्दक्षिणांस्थूणां ( मेड ) उच्छ्रयति ॥ अवटेस्थापयतीत्यर्थः ॥ ॐ इहैवध्रुवा प्रतितिष्ठशालेअश्वावतीगोमतीसूनृतावती ॥ ऊर्जस्वतीपयसापिन्वमानोच्छ्रयस्वमहतेसौभगाय ॥ इत्युत्तरांस्थूणामुच्छ्रयति ॥ आत्वाकुमारस्तरुणआवत्सोजगतासह ॥ आत्वाहिरण्मयःकुंभआदध्नःकलशैरयन्निव ॥ इतिसम्यक्स्थापयित्वासंमितेद्वारस्थू णेअभिमृशति ॥ एवमेवस्थूणाराज्यौ(स्थूणापंक्ती)उच्छ्रयतिएवमेवाभिमृशतिच ॥ प्रतिस्थूणंमंत्रावृत्तिरुच्छ्रयणाभिमर्शनयोः॥ ॐऋतेनस्थूणावधिरोहवꣳशोध्र्वोविराजन्नपसेधशत्रून् ॥ अथास्मभ्यꣳसहवीराꣳरयिंदाः ॥ इतितयोःस्थूणाराज्योरुपरिमध्य मंपृष्ठवंशमारोपयति ॥ ॐ मानःसपत्नःशरणःस्योनादेवोदेवेभिर्विमितास्यग्रे ॥ तृणंवसानाःसुमनाअसित्वꣳशंनएधिद्विपदेशं

चतुष्पदे ॥ इतिसर्वतश्छन्नांशालामभिमृशति ॥ अग्निपूजनंविभूतिधारणंचकुर्यात् ॥ अनेनशालाकरणहोमेनवास्तोष्पतिःप्रीयतां ॥ इतिहिरण्यकेशिसूत्रानुसारीशालाकरणहोमप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २६३ ॥ वास्तुशमनप्रयोगः ॥

श्रीः ॥ सिद्धायांशालायांवास्तुशमनं ॥ एवंविहित ँ संवत्सरेसंवत्सरेवास्तुशमनं ॥ ऋतावृतावित्येकेइतिसूत्रं ॥ तच्चानूराधानक्षत्रेकर्तव्यं ॥ निशायांगृहमध्येउल्लेखनादिनासंस्कृतेस्थलेऔपासनाग्निंप्रतिष्ठाप्यआचम्यप्राणानायम्यदेशकालौसंकीर्त्यममास्यवास्तोःशुभतासिद्धिद्वारावास्तुदेवताप्रीत्यर्थंवास्तुशमनहोमंकरिष्ये ॥ तदंगंगणपतिपूजनंपुण्याहवाचनंचकरिष्ये ॥ उक्तरीत्याकुर्यात् ॥ अद्यपू० वास्तुशमनहोमंकर्तुमग्निध्यानादिकरिष्ये ॥ अग्निंप्रज्वाल्यचत्वारिशृंगेतिध्यात्वावरदोभव ॥ ततोन्वाधानं ॥ समित्त्रयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वावास्तुशमनहोमकर्मणियायक्ष्यमाणादेवता० व्याहृत्यंतमुक्त्वावैशेषिकप्रधानहोमे वास्तोष्पतिंतिसृभिराज्याहुतिभिःशचीपतिमाज्याहुत्या वास्तोष्पतिमाज्याहुत्याशचीपतिंचाज्याहुत्यायक्ष्ये ॥ अंगहोमेवरुणं० जयाभ्यातानराष्ट्रभृदादित्रिवृदन्नहोमांतं ॥ सामान्यप्रधानांतंहुत्वाप्रधानहोमः ॥ आज्येनषडाहुतीर्जुहुयात् ॥ ॐ वास्तोष्पतेप्रतिजानीह्यस्मान्स्वावेशोअनमीवोभवानः ॥ यत्त्वेमहेप्रतितन्नोजुषस्वशंनएधिद्विपदेशंचतुष्पदेस्वाहा ॥ वास्तोष्पतयइदं० १॥ ॐ वास्तोष्पतेशग्मयासँसदातेसक्षीमहिरण्वयागातुमत्या ॥ आवःक्षेमउतयोगेवरंनोयूयंपातस्वस्तिभिःसदानःस्वाहा॥वास्तो० २॥ ॐ वास्तोष्पतेप्रतरणोनएधिगयस्फानोगोभिरश्वेभिरिंदो॥अजरासस्तेसख्येस्यामपितेवपुत्रान्प्रतिनोजुषस्वस्वाहा॥वास्तो० ३॥ ॐ अपैतुमृत्युरमृतंनआगन्वैवस्वतोनोअभयंकृणोतु॥पर्णंवनस्पतेरिवाभिनःशीयताँरयिःसचतांनःशचीप

पतिःस्वाहा ॥ शचीपतयइदं० ४ ॥ ॐ परंमृत्योअनुपरेहिपंथांयस्तेस्वइतरोदेवयानात् ॥ वास्तोष्पतेशृण्वतेतेब्रवीमिमानःप्र जाश्रीरिषोमोतवीरान्स्वाहा ॥ वास्तोष्पतयइदं० ५ ॥ ॐ इदमूनुश्रेयोवसानमागन्मयद्गोजिद्धनजिदश्वजिद्यत् ॥ पर्णवनस्प तेरिवाभिनःशीयताश्रयिःसचतांनःशचीपतिःस्वाहा शचीपतयइदं० ॥६॥ ॐइमंमेवरुण० ॥ इतिअंगहोमजयाद्युपहोमादि कृत्वात्रिवृदन्नहोमंकुर्यात् ॥ संस्थाजपांतंसमाप्य ॥ अनेनवास्तुशमनहोमेनवास्तोष्पतिःप्रीयतां ॥ इतिवास्तुशमनं ॥ ७ ॥

## ॥ २६४ ॥ स्मृत्युक्तवास्तुशांतिः ॥

श्रीः ॥ तत्रसिद्धंगृहंसिद्धेमंत्राःप्रयोक्तव्याःइतिन्यायेनपूर्वोक्तेनसूत्रोक्तेनशालाकरणविधिनासंस्कृत्यसूत्रोक्तंवास्तुशमनविधिंकु र्यात् ॥ अथवावक्ष्यमाणांसूत्रस्मृतिमात्स्यादीनांसमुच्चयेनोक्तांवास्तुशांतिंकुर्यात् ॥ पक्षद्वयेऽपिशालाकरणविधिर्नियतः ॥ अथ हिरण्यकेशिसूत्रमत्स्यपुराणनारदवसिष्ठसंहितादीनांसमुच्चयेनवास्तुशांतिप्रयोगउच्यते॥तत्रवैशाखश्रावणमार्गशीर्षपौषफाल्गुन मासाःशुभाः॥रिक्तापर्ववर्जंसर्वास्तिथयःशुभाः॥रविभौमरहिताःसर्वेवाराःशुभाः॥रोहिणीमृगशीर्षपुष्योत्तराहस्तचित्रास्वात्यनू राधोत्तराषाढाधनिष्ठाशततारकोत्तराभाद्रपदारेवत्योनक्षत्राणिशुभानि ॥ वृषवास्तुचक्रेसूर्यनक्षत्रादष्टममारभ्यएकादशनक्षत्रा णिशुभानि ॥ कलशचक्रेसूर्यनक्षत्रात्षष्ठसप्तमाष्टमनवमदशमैकादशद्वादशत्रयोदशद्वाविंशत्रयोविंशचतुर्विंशपंचविंशषड्विंश सप्तविंशनक्षत्राणिशुभानि॥स्थिरलग्नंस्थिरनवांशःशुभःकेंद्राष्टमयोःपापराहित्यंच॥आचम्यप्राणानायम्यदेशकालौसंकीर्त्यमम सपरिवारस्य अस्मिन्वास्तौचिरकालसुखनिवाससिद्धिपूर्वकं सर्वसंकटनानाविधरोगक्लेशबंधुधनक्षयदुःखरक्षोविघ्नोपशमसंपदा रोग्यपुत्रपौत्रादिधनधान्यसमृद्धिचिरजीवनस्वर्निवाससिद्धिद्वारा अस्यवास्तोः शुभतासिध्यर्थंसग्रहमखांवास्तुशांतिंकरिष्ये ॥

तदंगंगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंआचार्यादिवरणंचकरिष्ये ॥ आचार्यःप्रादेशकरणांतेगृहमध्येयजमानहस्तैकमितंकुंडंचतुरस्रंचतुरंगुलोत्सेधंस्थंडिलंवाविधायतत्पूर्वतस्तदीशान्यांचहस्तमितंवेदिद्वयंकृत्वा ॥ ईशानवेदेरीशानादिकोणेषु ॥ विशंतुभूतलेनागालोकपालाश्चसर्वशः ॥ अस्मिन्गृहेवतिष्ठंतुआयुर्वलकराःसदा ॥ इतिमंत्रावृत्त्याप्रतिकोणंशंकुंरोपयेत् ॥ ततःशंकुपार्श्वेईशान्यादिक्रमेण ॥ अग्निभ्योप्यथसर्पेभ्योयेचान्येतत्समाश्रिताः ॥ तेभ्योवलिंप्रयच्छामिपुण्यमोदनमुत्तमं ॥ इतिमंत्रावृत्त्यामाषभक्तवलीन्दद्यात् ॥ ततोवेद्युपरिवस्त्रेकुंकुमादिनासुवर्णशलाकया ॥ ॐ शांतायैनमः ॐ यशोवत्यै० ॐ कांतायै० ॐ विशालायै० ॐ प्राणवाहिन्यै० ॐ सत्यै० ॐ सुमत्यै० ॐ नंदायै० ॐ सुभद्रायै० ॐ सुरथायै० एतैर्नामभिःपश्चादारभ्यप्रागायताउदक्संस्थाअंगुलद्वयांतरालादशरेखालिखित्वा ॥ ॐ हिरण्यायै० ॐ सुव्रतायै० ॐ लक्ष्म्यै० ॐ विभूत्यै०ॐ विमलायै०ॐ प्रियायै० ॐ जयायै० ॐ ज्वालायै० ॐ विशोकायै० ॐ इडायै० एतैर्नामभिःदक्षिणामारभ्योदगायताःप्राक्संस्थादशरेखाःकृत्वा ॥ ततःपूर्वकृतेकुंडेस्थंडिलेवाउद्धननादिभूसंस्कारंविधायपूर्वाहृतमौपासनंलौकिकंवाग्निंप्रतिष्ठाप्यदक्षिणवेद्यांसांगानादित्यादिग्रहान्संस्थाप्यसंपूज्य तदीशान्यांकलशंचसंस्थाप्य कलशस्य०देवदानव०इतिसंप्रार्थ्य अथेशानवेद्यांवास्तुमंडलेप्रतिमादौदेवताआवाहयेत् ॥ तद्यथा ॥ ईशानकोणपदेवास्तोःशिरसि ॥ ॐ शिखिनेनमःशिखिनमावाहयामि १ ॐ कारोनमःशब्दश्चसर्वत्र ॥ तद्दक्षिणैकपदेतद्दक्षिणनेत्रेपर्जन्यायं० पर्जन्यं २ तद्दक्षिणपदेतत्पश्चिमपदेचदक्षिणश्रोत्रेजयंतं ३ तद्दक्षिणपदद्वयेदक्षिणांसेकुलिशायुधं ४ तद्दक्षिणपदद्वयेदक्षिणवाहौसूर्यं ५ तद्दक्षिणपदद्वयेदक्षिणवाहावेवसत्यं ६ तद्दक्षिणपदद्वयेदक्षिणकूर्परेभृशं ७ तद्दक्षिणैकपदेदक्षिणप्रवाहौआकाशं ८ तद्दक्षिणाग्नेयकोणपदेदक्षिणप्रवाहावेव

वायुं ९ तत्पश्चिमैकपदेदक्षिणमणिबंधेपूषणं १० तत्पश्चिमपदेतदुत्तरपदेचदक्षिपार्श्वेवितथं ११ तत्पश्चिमपदद्वयेदक्षिणपार्श्व एवगृहक्षतं १२ तत्पश्चिमपदद्वयेदक्षिणोरौयमं १३ तत्पश्चिमपदद्वयेदक्षिणजानौगंधर्वं १४ तत्पश्चिमपदद्वयेदक्षिणजंघायांभृगराजं १५ तत्पश्चिमोपरिस्थैकपदेदक्षिणस्फिचिमृगं १६ तत्पश्चिमेनैर्ऋत्यकोणपदेपादयोःपितॄन् १७ तदुत्तरैकपदेवामस्फिचिदौवारिकं १८ तदुत्तरपदेतत्प्राक्पदेचवामजंघायांसुग्रीवं १९ तदुत्तरपदद्वयेवामजानौपुष्पदंतं २० तदुत्तरपदद्वयेवामोरौवरुणं २१ तदुत्तरपदद्वयेवामपार्श्वेअसुरं २२ तदुत्तरपदद्वयेवामपार्श्वएवशोषं २३ तदुत्तरोपरिस्थैकपदेवाममणिबंधेपापं २४ तदुत्तरवायव्यकोणपदेवामप्रबाहौरोगं २५ तत्प्रागेकपदेवामप्रबाहावेवअहिं २६ तत्प्राक्पदेतद्दक्षिणपदेचवामकूर्परेमुख्यं २७ तत्प्राक्पदद्वयेवामबाहौभल्लाटं २८ तत्प्राक्पदद्वयेवामबाहावेवसोमं २९ तत्प्राक्पदद्वयेवामांसेसर्पान् ३० तत्प्राक्पदद्वयेवामश्रोत्रेअदितिं ३१ तत्प्रागुपरिस्थैकपदेवामनेत्रेदितिं ३२ तद्दक्षिणेशिखिपदाधःकोणपदेमुखेआपं ३३ आग्नेयेवायुपदाधःकोणपदेदक्षिणहस्तेसावित्रं ३४ नैर्ऋत्येपितृपदाधःकोणपदेमेढ्रेजयं ३५ वायव्येरोगपदाधःकोणपदेवामहस्तेरुद्रं ३६ मध्यपदेष्वीशानकोणपदाद्दक्षिणपदत्रयेदक्षिणस्तनेअर्यमणं ३७ तद्दक्षिणाग्नेयैककोणपदेदक्षिणहस्तेसवितारं ३८ तत्पश्चिमपदत्रयेजठरदक्षिणभागेविवस्वंतं ३९तत्पश्चिमैकपदेनैर्ऋत्यकोणेवृषणयोर्विबुधाधिपं ४० तदुत्तरपदत्रयेजठरवामभागेमित्रं ४१ तदुत्तरवायव्यकोणपदेवामहस्तेराजयक्ष्माणं ४२ तत्प्राक्पदत्रयेवामस्तनेपृथ्वीधरं ४३तत्प्रागीशानकोणपदेउरसिआपवत्सं ४४ मध्यनवपदेषुहृन्नाभ्योर्ब्रह्माणं ४५ तदुत्तरेसुवर्णनिर्मितंवृषवास्तुंवास्तोष्पतइतिमंत्रेणसंस्थाप्य ततोमंडलाद्बहिरीशानादिकोणेषु ॥ चरकीं विदारीं

१ मध्यवर्तिनवकोष्ठात्मकब्रह्मपदसंलग्नेप्राग्गतेत्रिपदेइत्यर्थः ।

पूतनां पापराक्षसीं ततःपूर्वादिदिक्षु स्कंदं अर्यमणं जृंभकं पिलिपिच्छं इत्यावाह्यप्रागाद्यष्टदिक्षुइंद्राद्यष्टौलोकपालांस्तत्प्रकाश कैर्मंत्रैर्नाममंत्रैर्वावाह्यनर्यप्रजामितिप्रतिष्ठाप्यशिख्यादिदेवताःषोडशोपचारैःपंचोपचारैर्वापूजयेत् ॥ मंडलादीशान्यांमहीद्यौ रित्यादिनाकलशेवरुणमावाह्यपूजयेत् ॥ ततोन्वाधानं ॥ आचार्यःसमित्त्रयमादायश्रद्धएहीत्यादिव्याहृत्यंतमुक्त्वावैशेषिक प्रधानहोमे॥ आदित्यादिनवग्रहदेवताः अन्वाधानोक्तरीत्योत्कीर्त्य वास्तुदेवताअन्वादध्यात्॥ शिखिनं पर्जन्यं जयंतं कुलिशा युधं सूर्यं सत्यं भृशं आकाशं वायुं पूषणं वितथं गृहक्षतं यमं गंधर्वं भृंगराजं मृगं पितॄन् दौवारिकं सुग्रीवं पुष्पदंतं वरुणं असुरं शोषं पापं रोगं अहिं मुख्यं भल्लाटं सोमं सर्पं अदितिं दितिं आपं सावित्रं जयं रुद्रं अर्यमणं सवितारं विव स्वंतं विबुधाधिपं मित्रं राजयक्ष्माणं पृथ्वीधरं आपवत्सं ब्रह्माणं एताःपंचचत्वारिंशद्देवताःऔदुंबरसमित्तिलपायसाज्यद्र व्यैःप्रत्येकंप्रतिद्रव्यंअष्टोत्तरशताष्टाविंशत्यष्टान्यतमसंख्याकाभिराहुतिभिः वास्तोष्पतिंवास्तोष्पतइतिषड्भिर्मंत्रैःप्रतिद्रव्यमष्टो त्तरशतसंख्याकाभिराहुतिभिः वास्तोष्पतिंवास्तोष्पतइतिचतसृभिःवास्तोष्पतेध्रुवास्थूणामित्यनयाचपंचबिल्वाहुतिभिस्तद्बी जाहुतिभिर्वा ( तत्पत्राहुतिभिर्वा ) यक्ष्ये॥ चरकीं विदारीं पूतनां पापराक्षसीं स्कंदं अर्यमणं जृंभकं पिलिपिच्छं इंद्रं अग्निं यमं निर्ऋतिं वरुणं वायुं सोमं ईशानं च पूर्वोक्तद्रव्यैःप्रत्येकंप्रतिद्रव्यंअष्टचतुरन्यतमसंख्याहुतिभिर्यक्ष्ये॥अंगहोमेवरुणंद्विरित्यादिसा मान्यप्रधानांतंहुत्वा ॥ इमानिउपकल्पितानिहवनीयद्रव्याणियायायक्ष्यमाणदेवतास्ताभ्यस्ताभ्योमयापरित्यक्तानिनमम॥ ततः अन्वाधानोक्तसंख्ययाग्रहहोमंसमाप्यप्रधानहोमंकुर्यात् ॥ प्रत्येकंप्रणवः ॐ शिखिनेस्वाहा १ पर्जन्याय० २ जयंताय० ३ कुलिशायुधाय० ४ सूर्याय० ५ सत्याय० ६ भृशाय० ७ आकाशाय० ८ वायवे० ९ पूष्णे० १० वितथाय० ११ गृह

क्षताय० १२ यमाय० १३ गंधर्वाय० १४ भृंगराजाय० १५ मृगाय० १६ पितृभ्यः० १७ दौवारिकाय० १८ सुग्रीवाय० १९ पुष्पदंताय० २० जलाधिपाय० २१ असुराय० २२ शोषाय० २३ पापाय० २४ रोगाय० २५ अहये० २६ मुख्याय० २७ भल्लाटाय० २८ सोमाय० २९ सर्पाय० ३० अदित्यै० ३१ दित्यै० ३२ आपाय० ३३ सावित्राय० ३४ जयाय० ३५ रुद्राय० ३६ अर्यम्णे० ३७ सवित्रे० ३८ विवस्वते० ३९ विबुधाधिपाय० ४० मित्राय ४१ राजयक्ष्मणे० ४२ पृथ्वीधराय० ४३ आपवत्साय० ४४ ब्रह्मणे० ४५ ॐ वास्तोष्पतेप्रतिजानीह्यस्मान्स्वावेशोअनमीवोभवानः ॥ यत्त्वेमहेप्रतितन्नोजुषस्वशंनएधिद्विपदेशंचतुष्पदेस्वाहा ॥ १ ॥ ॐ वास्तोष्पतेशग्मयासꣳसदातेसक्षीमहिरण्वयागातुमत्या ॥ आवःक्षेमउतयोगेवरंनोयूयंपातस्वस्तिभिःसदानःस्वाहा ॥ २ ॥ ॐ वास्तोष्पतेप्रतरणोनएधिगयस्फानोगोभिरश्वेभिरिंदो ॥ अजरासस्तेसख्येस्यामपितेवपुत्रान्प्रतिनोजुषस्वस्वाहा ॥ ३ ॥ ॐ अपैतुमृत्युरमृतंनआगन्वैवस्वतोनोअभयंकृणोतु ॥ पर्णंवनस्पतेरिवाभिनःशीयताꣳरयिःसचतान्नःशचीपतिःस्वाहा ॥ ४ ॥ ॐ परंमृत्योअनुपरेहिपंथांयस्तेस्वइतरोदेवयानात् ॥ वास्तोष्पतेश्रृण्वतेतेब्रवीमिमानःप्रजाꣳरीरिषोमोतवीरान्स्वाहा ॥ ५ ॥ ॐ इदमूनुश्रेयोवसानमागन्मयद्गोजिद्धनजिदश्वजिद्यत् ॥ पर्णंवनस्पतेरिवाभिनःशीयताꣳरयिःसचतान्नःशचीपतिःस्वाहा ॥ ६ ॥ वास्तोष्पतइतिचतसृणांवसिष्ठोवास्तोष्पतिस्त्रिष्टुबंत्या गायत्री । वास्तोष्पतेध्रुवास्थूणामित्यस्यइरिंबिठिर्वास्तोष्पतिर्बृहती बिल्वफलहोमेवि० ॥ एतेषामृग्धर्मेणपाठः ॥ ॐ वास्तोष्प

---

१ अस्मिन्मंत्रषट्के सूत्रोक्ते द्वयोर्मंत्रयोः शचीपतिदेवतात्वेऽपिनक्षतिः । अमरसिंहेन इंद्रनामसु वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः । इति वास्तोष्पतिशचीपत्योरेकत्वाभिधानात् ।

तेप्रतिजानी॰ देस्वाहा ॥ १ ॥ ॐ वास्तोष्पतेप्रतर॰ स्वस्वाहा ॥ २ ॥ ॐ वास्तोष्पतेशग्मया॰ नःस्वाहा ॥ ३ ॥ ॐ अमीवहा॰ एधिनःस्वाहा ॥ ४ ॥ ॐ वास्तोष्पतेध्रुवास्थूणांसंत्रंसोम्यानां ॥ द्रप्सोभेत्तापुरांशश्वतीनामिंद्रोमुनीनांसखास्वाहा ॥ ५ ॥ इतिबिल्वफलैरभावेतद्बीजैर्वाहुत्वा ॥ ॐ चरक्यैस्वाहा ॐ विदार्यै॰ ॐ पूतनायै॰ ॐ पापराक्षस्यै॰ ॐ स्कंदाय॰ ॐ अर्यम्णे॰ ॐ जृंभकाय॰ ॐ पिलिपिच्छाय॰ ॐ इंद्राय॰ ॐ अग्नये॰ ॐ यमाय॰ ॐ निर्ऋतये॰ ॐ वरुणाय॰ ॐ वायवे॰ ॐ सोमाय॰ ॐ ईशानाय॰ ॥ ततइमंमेवरुणेत्यादिपूर्णपात्रदानांतंकृत्वा आपूर्विकपक्षेणत्रिवृदन्नहोमंपुण्याहवाचनांतं समापयेत् ॥ ततःवास्तुमंडलपश्चिमदेशे ॐ शिखिनेनमः इमंपायसबलिंसमर्पयामीत्येवंशिख्यादिभ्यःप्रत्येकंसमुच्चयेनवाद द्यात् ॥ चरक्यादिभ्यःनवग्रहेभ्योदिक्पालेभ्यश्चसदीपमाषभक्तबलीन्दत्वाप्रक्षालितपादपाणिर्द्वादशाष्टचतुर्गृहीतेनवाज्येनपूर्णाहुतिंजुहुयात् ॥ अग्नेत्वमिडोसि ॥ ॐ सप्ततेअग्नेसमिधःसप्तजिह्वाःसप्तर्षयःसप्तधामप्रियाणि ॥ सप्तहोत्राःसप्तधात्वायजंतिसप्तयोनीरापृणस्वाघृतेनस्वाहा ॥ सप्तवतेग्नयइदं॰ ॥ शिख्यादिप्रीतयेकांचनंब्रह्मप्रीतयेधेनुंचब्राह्मणायदद्यात् ॥ ततआचार्यादयः आपोहिष्ठेतितिसृभिर्हिरण्यवर्णाःशुचयइतिचतसृभिःपवमानानुवाकेनसुरास्त्वामभिषिंचंत्वित्यादिपौराणमंत्रैश्चसपत्नीकंयजमानंशांतिकलशोदकेनाभिषिच्यसर्वौषधीभिरनुलिप्यस्नापयेयुः ॥ ततोयजमानःब्रह्मस्थानेमध्यनवपदेगृहमध्यदेशेसुरूपांभूषितांस्त्रीरूपांपृथ्वींध्यात्वा ॥ ॐ धरायैनमइतिसंपूज्य सर्वदेवमयंवास्तुसर्वदेवमयंपरं ॥ इतिप्रार्थयेत् ॥ ततोगृहंप्रागादितस्त्रिसूत्र्यापावमानेनसूक्तेनराक्षोघ्नेनचवेष्टयेत् ॥ ॐ पवमानःसुवर्जनः॰ ॥ जातवेदामोर्जयंत्यापुनातु ॥ इतिपावमानं ॥ ॐ कृणुष्वपाजःप्रसिं॰ परिबाधोअदेवीः ॥ इतिराक्षोघ्नं ॥ ततोदुग्धपूर्णयाजलपूर्णयाचसस्तनकुंभ्यायजमानेनतत्पत्न्याचधृ

तयातथैवसूक्तद्वयेनधाराद्वयमविच्छिन्नंदंपतीकुर्यातां ॥ अथयजमानःगृहस्याग्नेयकोणदेशेजानुदघ्नमवटंखात्वातंगोमयेनोपलिप्यपुष्पाक्षतादिभिरलंकृत्य तत्रशैवालंसप्तबीजानिचंदनंचप्रक्षिप्य जलपूर्णंशुक्लैकपुष्पयुतंगंधादिभिरर्चितंकुंभंहस्तद्वयेनादायजानुभ्यामवनिंगत्वा ॐनमोवरुणायेतितज्जलेनगर्तंपूरयेत् ॥ जलेप्रदक्षिणावर्तेपुष्पेचोर्ध्वमुखेशुभं ॥ वैपरीत्येत्वशुभं ॥ ततोमृन्निर्मितपेटिकायांसप्तबीजदध्योदनशैवालपुष्पाणिप्रक्षिप्यपूर्वस्थापितंवृषवास्तुंमंगलतूर्यघोषेणानीयतस्यांसंस्थाप्यगंधादिभिःपूजयेत्प्रार्थयेच्च ॥ पूजितोसिमयावास्तोहोमाद्यैरर्चनैःशुभैः ॥ प्रसीदपाहिविश्वेशदेहिमेगृहजंसुखं ॥ वास्तुमूर्तेनमस्तेस्तुभूशय्याभिरतप्रभो ॥ मद्गृहंधनधान्यादिसमृद्धंकुरुसर्वदा ॥ ततःपेटिकामाच्छाद्यतस्मिन्गर्तेशनैर्निक्षिपेदनेनमंत्रेण ॥ सशैलसागरांपृथ्वींयथावहसिमूर्धनि ॥ तथामांवहकल्याणसंपत्संततिभिःसह ॥ गर्तंमृदापूर्यमृदाधिक्येउत्तमंसाम्येमध्यमंन्यूनेत्वधमंफलं ॥ गर्तोपरिभूमिंगोमयेनोपलिप्य शुक्लगंधपुष्पाक्षतैर्भूषयेत् ॥ ततोग्नेःपश्चादाचार्यादीन्संपूज्यसवत्सांअलंकृतांगांवासोयुगंचब्रह्मणेनड्वाहंसदस्यायाश्वंवासोयुगंचान्येभ्यऋत्विग्भ्योयथाशक्तिदक्षिणांचदत्वाकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ ब्राह्मणान्भोजयित्वाभूयसींदत्वा ग्रहाणांशिख्यादिवास्तुदेवतानांचपूजांकृत्वाक्षमाप्य यांतुदेवेतिविसृज्याचार्यहस्तेप्रतिपाद्याग्निंसंपूज्यगच्छगच्छेतिविसृज्यब्राह्मणैःशिवंवास्तुशिवंवास्तुशिवंवास्तुइतिभवंतोब्रुवंतुइतिवाचयेत् ॥ यस्यस्मृत्येतिविष्णुंस्मृत्वाकर्मेश्वरार्पणंकुर्यात् ॥ इतिवास्तुशांतिप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २६५ ॥ गृहप्रवेशः ॥

श्रीः ॥ एवंशांतिंविधायतस्मिन्नहनिद्वितीयेहनिवाघटिकास्थापनंकृत्वापरिभाषोक्तेसुमुहूर्तेसूत्रोक्तंगृहप्रवेशंकुर्यात् ॥ सयथा ॥

द्विजवरानग्रतःकृत्वापश्चाद्यजमानपत्न्यादध्यक्षतयुक्तंगंधपुष्पाम्रपल्लवफलोपेतंजलपूर्णकुंभंग्राहयित्वाकृतशुक्लवस्त्रपरिधानोय जमानोधान्यमूतकंवस्त्राणिद्रव्यंचकेनचिद्ग्राहयित्वास्वयंगृहदेवतापात्रंगृहीत्वादीपकलशहस्ताभिःसुवासिनीभिःसहितःकनि क्रदज्ज० इयमेऽसाया० इत्यादिपठनपरैर्द्विजैःसहमंगलगीतवाद्यपुरःसरंगृहंप्रविशेत् ॥ तत्रमंत्राः ॥ ॐ गृहामाविभीतमावेपि ढ्वमूर्जंबिभ्रतएमासं ॥ ऊर्जंबिभ्रद्वसुवनिःसुमेधागृहानेमिमनसामोदमानः ॥ येषामभ्येतिप्रवसन्नेतिसौमनसोबभुः ॥ गृहानु पह्वयामहेतेनोजानंतुजानतः ॥ उपहूताइहगावउपहूताअजावयः ॥ अथोअन्नस्यकीलालउपहूतोगृहेषुनः ॥ उपहूताभूरिस खाःसखायःस्वादुसंमुदः ॥ अरिष्टाःसर्वपूरुषागृहानःसंतुसर्वदा ॥ ऊर्जस्वंतःपयस्वंतइरावंतोहसामुदः ॥ अनश्याअतृष्यागृ हामास्मद्विभीतन ॥ इतिगृहसमीपंगच्छति ॥ ॐ क्षेमायवःशांत्यैप्रपद्येशिवꣳशग्मꣳशंयोःशंयोः ॥ इतिगृहंप्रविशति ॥ नत दहरागतःकलहंकरोति ॥ ॐ गृहानहꣳसुमनसःप्रपद्येवीरघ्नोवीरतमःसुशेवान् ॥ इरांवहंतःसुमनस्यमानास्तेष्वहꣳसुमनाः संविशामि ॥ इतिगृहमध्येसंविशति ॥ विश्वाउतत्वयावयंधाराउदन्याइव ॥ अतिगाहेमहिद्विषः ॥ इतिभार्यांसमीक्षते ॥ ततआचम्यप्राणानायम्यदेशकालौसंकीर्त्यमयाकृतनूतनगृहप्रवेशांगंगणेशपूजनंपुण्याहवाचनंचकरिष्ये॥ नूतनगृहप्रवेशकारि णेपुण्याहंभवंतोब्रुवंत्वितिविशेषः ॥ सांगतासिद्ध्यर्थेब्राह्मणभोजनंसंकल्प्यभूयसींदत्वाकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ ततोदेवता विसर्जनं ॥ इतिहिरण्यकेशिसूत्रोक्तोगृहप्रवेशप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

वास्तुमंडलंग्रहमंडलंचारंभे आलोचनीयं ।

श्रीगणेशायनमः ॥ अथग्रहयज्ञः ॥ सचनित्यनैमित्तिककाम्यभेदेनत्रिविधः ॥ शुभवारत्रिजन्मनक्षत्रायनविषुवोपरागादिषु नित्यः ॥ उपनयनादिकर्मप्रारंभेषुनैमित्तिकः ॥ विपदपगमसंपदादिकामनासुकाम्यः ॥ तत्रकाम्येमंडपकुंडादिकंनित्यंनित्यनैमित्तिकयोरनित्यं ॥ नित्यंनैमित्तिकंहित्वासर्वमन्यत्समंडपमितिमात्स्योक्तेः ॥ यदास्थंडिलंतदावेदिरेवनमंडपः तथैवशिष्टाचारदर्शनादितिप्रयोगपारिजाते ॥ ॥ मंडपलक्षणंहेमाद्रौमात्स्ये ॥ गृहस्योत्तरपूर्वेणमंडपंकारयेद्बुधः ॥ रुद्रायतनभूमौवाचतुरश्रमुदक्प्लवं ॥ दशहस्तमथाष्टौवाहस्तान्कुर्याद्विधानतः ॥ तस्यद्वाराणिचत्वारिकर्तव्यानिविचक्षणैरिति ॥ उत्तरपूर्वेणेतितृतीयासप्तम्यर्थे ॥ उदक्प्लवंउदक्क्रमनिम्नं ॥ अष्टौवाहस्तान्मीत्वातावत्प्रमाणंमंडपंकुर्यादित्यर्थः ॥ दशहस्तमष्टहस्तंवामंडपंकुर्यादितिफलितोर्थः ॥ विधानतइत्यनेनभूमिशोधननवभागकरणादिसर्वाक्रियागृह्यते ॥ तस्यमंडपस्य ॥ ॥ कुंडंस्कांदे ॥ नवग्रहमखेकुंडंहस्तमात्रंसमंततः ॥ चतुरश्रमधोहस्तंयोनिवक्त्रंसमेखलं ॥ चतुरंगुलविस्तारामेखलातद्वदुच्छ्रितेति ॥ अधोहस्तमधोभागेहस्तपरिमितखातं योनिवक्त्रंयोनिवक्त्रवत्वक्त्रंकंठः॥तद्वत् विस्तारवत् ॥इदंकुंडंमंडपपक्षेतदीशानभागेउदीच्यांवाकार्यमिति हेमाद्रिः ॥ मध्यइतिकेचित् ॥ ॥ योनिर्मात्स्ये ॥ वितस्तिमात्रायोनिःस्यात्षट्सप्तांगुलविस्तृता ॥ कूर्मपृष्ठोन्नतामध्येपार्श्वयोश्चांगुलोच्छ्रिता ॥ गजोष्ठसदृशीतद्वदायताछिद्रसंयुता ॥ मेखलोपरिसर्वत्रअश्वत्थदलसंनिभेति ॥ तद्वत्अंगुलोच्छ्रायवत् पार्श्वयोर्विस्तृतेत्यर्थः ॥ गजोष्ठसदृशीअश्वत्थदलसदृशीवेतिविकल्पः ॥ साचयोनिःपश्चिमतःकार्या ॥ पश्चिमेमध्यभागेतुयो

१ सर्वसामान्योग्रहयज्ञःपूर्वसंस्कारप्रकरणेगतोपिपुनःसंस्काररत्नमालास्थोललितोविस्तृतश्चेतिपुनःसंगृहीतः ।

निंकुर्याद्विधानतइतिगर्गोक्तेः ॥ कुंडाभावेस्थंडिलेहोमःकार्यः ॥ नित्यंनैमित्तिकंहोमंस्थंडिलेवासमाचरेदितिशारदातिल
कात् ॥ अत्रद्वयोर्ग्रहणेनकाम्येस्थंडिलंनेत्यर्थादुक्तंभवति ॥ मात्स्ये ॥ तस्यचोत्तरपूर्वेणस्थंडिलंहस्तमात्रकं ॥ त्रिवप्रंचतुरश्रंच
वितस्त्युच्छ्रायसंयुतं ॥ द्विरंगुलोच्छ्रितोवप्रःप्रथमःसमुदाहृतः ॥ अंगुलोच्छ्रायसंयुक्तंवप्रद्वयमथोपरि ॥ त्र्यंगुलस्तत्रविस्तारः
सर्वेषांकथितोबुधैरिति ॥ तस्यकुंडस्य ॥ स्थंडिलंवेदिः ॥ वप्रोमेखला ॥ वितस्तिर्द्वादशांगुलातयापरिमितोयउच्छ्रायस्तेनसंयु
तंसंबद्धमित्यर्थः ॥ द्विरंगुलोच्छ्रितइत्यत्रसुच्प्रयोगआर्षः ॥ उपरिप्रथमवप्रोपरि ॥ सर्वेषांवप्राणां ॥ ॥ काम्येग्निचक्रमावश्यकं ॥
तच्चज्योतिर्निबंधे ॥ सैकातिथिर्वारयुताकृताप्ताशेषेगुणेभ्रेभुविवह्निवासः ॥ सौख्यायहोमःशशियुग्मशेषेप्राणार्थनाशौदिविभू
तलेचेति ॥ शुक्लप्रतिपदमारभ्यात्रगणनेतिसांप्रदायिकाज्योतिर्विदः ॥ एकयासहितासैकागणितासुतिथिषुअधिकाएकातिथिर्गण
यितव्येत्यर्थः ॥ अत्रैकवचनंद्वित्र्यादितिथिविषयेजात्यभिप्रायंज्ञेयं ॥ वारैर्युताकृताप्तेत्येतद्द्वयंतिथिविशेषणं ॥ कृतशब्देनकृ
तादियुगचतुष्टयबोधितचतुःसंख्यालक्ष्यते ॥ आप्ताभाजिता गुणास्त्रयःअभ्रंशून्यं शशीएकः युग्मंद्वौअन्यत्स्पष्टं ॥ एतदपवाद
स्तत्रैव ॥ नित्येनैमित्तिकेकर्मण्यग्निचक्रंनविद्यतइति ॥ अग्निचक्रंनविद्यतेअग्निचक्रापेक्षानास्तीत्यर्थः ॥ ॥ अथाहुतिपातो
ज्यौतिषे ॥ तरणिविद्भृगुभास्करिचंद्रमःकुजसुरेज्यविधुंतुदकेतवः ॥ रविभतोदिनभंगणयेत्क्रमात्प्रतिखगंत्रितयंत्रितयंन्यसेत् ॥
दिनकरार्किंतमःकुजकेतवोहुतभुजोनशुभास्त्वितरेशुभाः ॥ दहनचक्रमिदंप्रविलोक्यतांहवनकर्मणिसर्वसमृद्धयइति ॥ तरणिः
सूर्यः वित्बुधः भृगुःशुक्रः भास्करिःशनैश्चरः चंद्रमाःप्रसिद्धः कुजोभौमःसुरेज्योगुरुः विधुंतुदोराहुः केतुःप्रसिद्धः दिनकरः
सूर्यः आर्किःशनैश्चरः तमोराहुः कुजोमंगलः केतुश्चेत्येतेहुतभुजश्चेन्नशुभाः ॥ इतरेवशिष्टाःचंद्रबुधबृहस्पतिशुक्राःहुतभुजश्चेच्छु

भाइत्यर्थः ॥ अत्रापवादःक्रियासारे ॥ नित्येनैमित्तिकेदुर्गाहोमादौनविचारयेत् इति ॥ ॥ सर्वतोभद्रपीठंतुसर्वाधारंप्रकीर्तितमितिस्मृतिवचनात्सर्वतोभद्रपीठंवेदिकायांपूर्वंव्रतोद्यापनारंभोक्तप्रकारेणरचयित्वातत्रब्रह्मादिदेवताआवाह्यसंपूज्यतदुपरिवेदिपरिमितेश्लक्ष्णेक्षौमवस्त्रेकार्पासवस्त्रेवाग्रहपीठानिनिष्पादयेत्तत्प्रकारइत्थं॥वेदिपरिमितंश्लक्ष्णंक्षौमंवस्त्रंकार्पासंवाप्रसार्यवस्त्रप्रांतेऽवध्यर्थंचतुर्दिक्षुसमंतादेकैकांरेखांलिखित्वाततोऽतरेकैकांगुलांतरालास्तिस्रस्तथैवलिखित्वाऽवशिष्टंचतुरश्रमंतर्गतंप्रागुदक्तत्रेधाविभज्यतेननिष्पन्नेषुनवकोष्ठेषु मध्यकोष्ठेसूर्यस्य आग्नेयकोष्ठेसोमस्य दक्षिणकोष्ठेभौमस्य ऐशानकोष्ठेबुधस्य उत्तरकोष्ठेगुरोः पूर्वकोष्ठेशुक्रस्य पश्चिमकोष्ठेशनैश्चरस्य नैर्ऋतकोष्ठेराहोः वायव्यकोष्ठेकेतोःइत्येवंक्रमेणवक्ष्यमाणप्रकारेणलिखित्वातत्तद्वर्णाक्षतैःपूरयेत्॥ अथवायथाग्रहपीठानांपत्रेषुनिवेशोभवतितावत्प्रमाणपत्रंसकर्णिकमष्टपत्रंपद्मंविलिख्यकर्णिकायांसूर्यस्याग्नेयपत्रेसोमस्यदक्षिणपत्रेभौमस्यैशानपत्रेबुधस्योत्तरपत्रेगुरोःपूर्वपत्रेशुक्रस्यपश्चिमपत्रेशनैश्चरस्यनैर्ऋतपत्रेराहोर्वायव्यपत्रेकेतोरिति॥ अथपीठरचनाप्रकारः॥प्रसारितवस्त्रस्यमध्येरक्तवर्णचूर्णेनषड्यूकासप्तयवसहितैकांगुलात्मकव्यासार्धेनकर्कटकेनसूर्यस्यवृत्तंपीठंविदध्यात्॥ आग्नेय्यांश्वेतचूर्णेनयूकाद्वयसप्तयवसहितचतुरंगुलात्मकभुजचतुष्टयेनचतुरश्रंसोमस्यपीठं॥याम्यायांरक्तवर्णचूर्णेनचतुर्यूकाधिकांगुलत्रयात्मकभुजत्रयेणैकयूकापंचयवसहितद्व्यंगुललंबकंत्रिकोणंदक्षिणाग्रंभौमस्यपीठं॥ ईशान्यांपीतचूर्णेनचतुर्यवांतरंचतुरंगुलदीर्घंउदक्संस्थंभुजसंज्ञकंरेखाद्वयंसमाग्रंलिखित्वाएतद्रेखाद्वयोदग्गताग्रयोरंतरालेतदग्रसंगतांअंतरालप्रदेशपरिमितामेकांरेखांलिखित्वापौरस्त्यभुजोत्तरदिग्गताग्रात्पुरतोग्रसंलग्नांचतुर्यवात्मिकांप्राचींरेखांविधायतथैवपाश्चात्यभुजोत्तरदिग्गताग्रात्पश्चादग्रसंलग्नांचतुर्यवात्मिकांप्रतीचींरेखांविधायभुजद्वयमध्यतउत्तरेऋजुतिर्यक्सूत्रंदत्वाभुजद्वयमध्य

तउत्तरेलीक्षापंचकयूकाद्वयसहितपंचयवाधिकांगुलद्वयंनीत्वातत्रचिह्नंकृत्वाचतुर्यवात्मकप्राक्प्रत्यग्रेखावहिःप्रांतावारभ्यचि
ह्नपर्यंतंषड्यवाधिकद्व्यंगुलात्मकंभुजद्वयंकुर्यादित्येवंबाणाकारंपीठंबुधस्य ॥ उत्तरस्यांपीतचूर्णेनपूर्वपश्चिमभुजद्वयंत्र्यंगुलंदक्षि
णोत्तरभुजद्वयंद्व्यंगुलमित्येवंदीर्घचतुरश्रपीठंगुरोः॥ पूर्वस्यांश्वेतचूर्णेनपंचयूकासप्तयवैकांगुलात्मकव्यासार्धेनकर्काटकेनवृत्तंकृ
त्वातस्मिन्वृत्तेपूर्वादिशमारभ्ययूकात्रययवद्वयसहितद्व्यंगुलमिताःपंचज्याःकृत्वावशिष्टंमार्जयेदित्येवंपंचकोणपीठंशुक्रस्य,अथ
वायूकाषट्कसहितद्व्यंगुलात्मकव्यासार्धेनवृत्तंकृत्वातस्मिन्वृत्तेपूर्वादिशमारभ्ययूकाषट्कयवषट्कसहितत्र्यंगुलपरिमितप्रदेशेचिह्नं
कृत्वाततआरभ्यान्येषुप्रदेशेष्वेवमेवचिह्नानीत्येवंपंचचिह्नानिकर्काटकेनकृत्वायस्मात्कस्मादेकस्माच्चिह्नादनंतरंचिह्नंविहायतृ
तीयचिह्नसंलग्नंयूकाद्वययवत्रयाधिकांगुलपंचकपरिमितंबाहुंकृत्वैवमेवेतरांश्चतुरोबाहून्संपाद्यकोणाधःस्थान्बाहून्वृत्तंचमार्जये
दित्येवमुत्कलसंज्ञकंपंचकोणंशुक्रस्यपीठं ॥पश्चिमायांकृष्णचूर्णेनलीक्षाचतुष्टययूकाचतुष्टययवचतुष्टयाधिकचतुरंगुलात्मकव्या
सार्धेनवृत्तंकृत्वावृत्तसंगतांयूकापंचकयवत्रयाधिकषडंगुलमितांज्यांकुर्यादित्येवंप्रत्यग्ज्यंषडंगुलक्षेत्रफलंशनेःपीठं, अथवालीक्षा
षट्कयवपंचकाधिकांगुलद्वयात्मकव्यासार्धेनवृत्तंकृत्वायूकाषट्कयवपंचकाधिकांगुलत्रयपरिमितांवृत्तरेखासंलग्नांज्यासंज्ञकांरेखां
दद्यादित्येवंद्व्यंगुलक्षेत्रफलंशनैश्चरस्यपीठं ॥ नैर्ऋत्यांनीलचूर्णेनचतुरंगुलपरिमितचतुर्भुजंचतुरश्रंकृत्वातस्यचतुरश्रस्याग्नेयको
णाद्दक्षिणतोयूकाषट्कैकयवाधिकैकांगुलात्मकप्रदेशंऋजुतयावर्धयित्वातत्रचिह्नंकृत्वैवमेवोत्तरतोवर्धयित्वाचिह्नंकृत्वादक्षिण
दिग्गतचिह्नान्नैर्ऋतकोणपर्यंतांरेखांलिखित्वोत्तरदिग्गतचिह्नाद्वायव्यकोणपर्यंतांरेखांलिखित्वाधःस्थद्व्यंगुलात्मकभुजार्धयोश्चि
ह्नंकृत्वाताभ्यांचिह्नाभ्यामेकैकांगुलात्मकव्यासार्धेनकर्काटकेनवृत्तद्वयंलिखित्वामध्यस्थितंसर्वंमार्जयेदित्येवंशूर्पाकारंराहोः ॥

वायव्यांनानावर्णैःपूर्वापरमष्टांगुलदीर्घंचतुर्थवांतररेखाद्वयंविलिख्यअधआरभ्यपंचांगुलप्रमाणंउपरिभागादेकांगुलप्रमाणंप्रदेशंउत्तररेखायास्त्यक्त्वाशिष्टद्व्यंगुलप्रमाणांरेखांसंमार्ज्यैकयवाधिकचतुरंगुलात्मकौभुजौउत्तरतोमिथोलग्नास्यौकुर्यादित्येवंध्वजाकारंपीठंकेतोः ॥ सर्वत्रकोष्ठमध्यभागानुसारेणपीठमध्यभागकल्पना ॥ आदित्याभिमुखाःसर्वेइत्येतस्मिन्पक्षेसोमचतुरश्रपीठस्यदिक्षुकोणाःकल्पनीयाः ॥ भौमस्यतुपूर्ववदेव ॥ बाणस्याग्रंईशानकोष्ठनैर्ऋतकोणसंमुखंयथाभवतितथाबुधबाणाकारपीठं ॥ बृहस्पतेःपूर्ववदेव ॥ शुक्रपीठस्यपश्चिमांदिशमारभ्यपंचज्याकल्पनं ॥ शनेःपीठंप्राग्ज्यंकल्पनीयं ॥ नैर्ऋतकोष्ठेशानकोणाभिमुखंशूर्पाग्रंकल्पनीयं ॥ ध्वजस्योत्तराग्रतापूर्वत्रोक्ताअत्रदक्षिणाग्रतेतिकेतुपीठमितिविशेषः ॥ सर्वतोभद्रादिपीठेमूलमंत्रेणजुहुयादितिवचनाभावान्नमूलमंत्रेणहोमः किंतु ॥ प्रणवादिचतुर्थ्यंतंस्वाहाशब्दसमन्वितं ॥ स्यात्पीठदेवताहोमेमंत्रोनामैवकीर्तितइतिमंत्रप्रकाशकारोक्तेर्नमःशब्दरहितेनैवनाममंत्रेणहोमइतिद्रष्टव्यं ॥ मूलमंत्रस्वरूपंगारुडे ॥ प्रणवादिचतुर्थ्यंतंनमोंतंचैवसत्तम ॥ देवतायाःस्वकंनाममूलमंत्रःप्रकीर्तितइति ॥ तथाचयत्रमूलमंत्रेणजुहुयादितिवचनंविशेषविहितमंत्राभावश्चतत्रायंमूलमंत्रः ॥ तेनकर्तव्येहोमेनमःशब्दोत्तरंस्वाहाकारोभवति ॥ इतिग्रहयज्ञोपकरणनिर्णयः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २६७ ॥ ग्रहयज्ञप्रयोगः ॥

श्रीः ॥ कर्तास्नात्वानित्यकर्मनिर्वर्त्यज्योतिर्विदोक्तेकालेआचम्यप्राणानायम्यदेशकालौसंकीर्त्यकरिष्यमाणामुककर्मणिग्रहानुकूल्यसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंग्रहयज्ञंकरिष्येइत्युपनयनादिकर्मप्रारंभेषुनैमित्तिकग्रहयज्ञसंकल्पः ॥ त्रिजन्मनक्षत्रायनविषुवोपरागेषुत्रिजन्मनक्षत्रेग्रहयज्ञंकरिष्ये अयनेविषुवेउपरागेवाग्रहयज्ञंकरिष्येइतिनित्यग्रहयज्ञसंकल्पः ॥ विपदपगमसंपदादि

कामनासुविपदपगमार्थंसंपत्प्राप्त्यर्थंपुष्टिप्राप्त्यर्थंइत्येवंतत्तत्कामनानुसारेणकाम्यग्रहयज्ञसंकल्पः ॥ तत्रनित्यनैमित्तिकयोर्यथो क्तवस्तूनितदभावेप्रतिनिधिरूपाणियथासंभवंसंपादयेत् ॥ काम्येतुप्रतिनिध्यभावाद्यथोक्तवस्तून्येव ॥ ततोगणपतिपूजनादि नांदीश्राद्धांतंकृत्वाआचार्यादिवरणंकुर्यात् ॥ अमुकप्रवरान्वितामुकगोत्रोत्पन्नोमुकशाखाध्यायीअमुकशर्माहं अमुकप्रवरान्वि तामुकगोत्रोत्पन्नममुकशाखाध्यायिनममुकशर्माणमस्मिन्ग्रहयज्ञआचार्यत्वेनत्वांवृणेइतिविधिज्ञंकुशलंस्वशाखाविदंसदाचारि णंब्राह्मणंपाणिनापाणिंसंस्पृश्यवृणुयात् ॥ तद्धस्तेफलादिदद्यादित्याचारः ॥ ततस्तंसंपूज्यप्रार्थयेत् ॥ आचार्यस्तुयथास्वर्गेशक्रादी नांबृहस्पतिः ॥ तथात्वंममयज्ञेस्मिन्नाचार्योभवसुव्रतेति ॥ ततोब्रह्माणंवृत्वासंपूज्य ॥ यथाचतुर्मुखोब्रह्मास्वर्गेलोकेपितामहः ॥ तथात्वंममयज्ञेस्मिन्ब्रह्माभवमहीसुरेतितंप्रार्थयेत् ॥ ततःसदस्यंवृत्वासंपूज्य ॥ भगवन्सर्वधर्मज्ञसर्वधर्मभृतांवर ॥ विततेममयज्ञे स्मिन्सदस्योभवसुव्रतेतितंप्रार्थयेत् ॥ ततोहोमानुसारेणार्त्विजोवृत्वासंपूज्य ॥ अस्ययागस्यनिष्पत्तौभवंतोभ्यर्थितामया ॥ सुप्र सन्नैःप्रकर्तव्यंकर्मेदंविधिपूर्वकमितितान्प्रार्थयेत् ॥ आचार्यःअग्न्यायतनस्यपश्चादुपविश्याचम्यप्राणानाम्य यदत्रसंस्थितंभूतं स्थानमाश्रित्यसर्वदा ॥ स्थानंत्यक्त्वातुतत्सर्वंयत्रस्थंतत्रगच्छतु ॥ अपक्रामंतु० ब्रह्मकर्मसमारभे इतिप्रागादिक्रमेणसर्वतःसर्ष पान्विकीर्य ॥ शुचीवइत्यस्यविश्वेदेवामरुतस्त्रिष्टुप् अग्निःशुचिव्रततमइतिद्वयोर्विश्वेदेवाअग्निःशुचिर्गायत्री पंचगव्येनभूमेःप्रो क्षणेविनियोगः ॥ ॐ शुचीवोहव्यामरुतःशुचीनां ॥ शुचिꣳहिनोम्यध्वरꣳशुचिभ्यः ॥ ऋतेनंसत्यमृतसापआयन् ॥ शुचिज न्मानःशुचयःपावकाः ॥ अग्निःशुचिव्रततमः ॥ शुचिर्विप्रःशुचिःकविः ॥ शुचीरोचतआहुतः ॥ उदग्नेशुचयस्तवशुक्राभ्राजंत ईरते ॥ तवज्योतींꣳष्यर्चयः ॥ इतिपंचगव्येनसर्वतोयागभूमिंप्रोक्ष्य ॥ आपोहिष्ठेतितृचस्याग्निरापोगायत्रीशुद्धोदकेनभूमिप्रो

क्षणेवि० ॥ ॐ आपोहिष्ठामयोभुव० जनयंथाचनः ॥ इतिशुद्धोदकेनसर्वतोयागभूमिंप्रोक्ष्य ॥ स्वस्तिनइत्यस्ययाज्ञिक्योदेव
ताउपनिषदइंद्रादयोविराट्त्रिष्टुप्जपेवि० ॐ स्वस्तिनइंद्रो० दधातुइतिजपेत् ॥ देवाआयांतु यातुधानाअपयांतु विष्णोदेवय
जनंरक्षस्व इत्यन्यायतनस्यपश्चाद्भूमिमभिमृशेत् ॥ मंडपपक्षेमंडपार्थभूमिशोधनादितदीयदेवतापूजनांतंशांतिरत्नमालायां
वक्ष्यमाणप्रकारेणकुर्यात् ॥ उक्तलक्षणकुंडसत्वेतत्कुशमुष्टिनासंमृज्यकुंडोपरितनमेखलायांश्वेतवर्णभूषितायां इदंविष्णुरित्य
स्यसोमोविष्णुर्गायत्रीविष्ण्वावाहनेवि०ॐ इदंविष्णुर्विचक्रमे० पाꣳसुरे ॐविष्णवेनमः विष्णुमावाहयामीतिविष्णुमावाहयेत्॥
ततोमध्यमेखलायांरक्तवर्णभूषितायां ब्रह्मजज्ञानमित्यस्याग्निर्ब्रह्मात्रिष्टुप्ब्रह्मावाहनेवि०ॐ ब्रह्मजज्ञानं०श्चविवः ॐ ब्रह्मणेनमः
ब्रह्माणमावाहयामिइतिब्रह्माणमावाहयेत् ॥ ततोधोमेखलायांकृष्णवर्णभूषितायां मृडानोरुद्रेत्यस्याग्नीरुद्रोविराड्जगती रुद्रा
वाहनेवि० ॐ मृडानोरुद्रोतनो० प्रणीतौ ॐरुद्रायनमःरुद्रमावाहयामिइतिरुद्रमावाहयेत्॥उदकस्पर्शः॥ततोयोन्यांरक्तवर्णभू
षितायां गौरीमिमायेत्यस्यविश्वेदेवागौरीजगतीगौर्यावाहनेवि० ॐ गौरीमिमायसलिलानितक्षती॥ एकपदी० व्योमन् ॐगौर्यै
नमः गौरीमावाहयामि इतिगौरीमावाहयेत्॥ ततःपदार्थानुसमयेनतैरेवमंत्रैःक्रमेणषोडशोपचारैःसंपूज्यायतनंसमंताद्रंगवल्लि
कयाभूषयित्वाद्न्यायतनंगोमयेनोपलिप्योल्लेखनादिकृत्वा वरदनामानंमथितंश्रोत्रियागारादाहृतंवाग्निंमध्येप्रतिष्ठाप्यचत्वारिशृं
गेतिध्यायेत्॥ पुष्टिकामनायांतुबलवर्धननामाग्निः॥ ततोमंडपस्यैशानकोष्ठेमध्येएकहस्तप्रमाणांचतुरश्रांद्वादशांगुलोच्चांवेदिंवि
धायतस्याअधस्तादेकांगुलोच्छ्रायंद्व्यंगुलविस्तारंएकंवप्रंकृत्वातस्याधस्तात्तथैवान्यमेकंवप्रंकृत्वातस्याधस्तादेकंवप्रंद्व्यंगुलोच्छ्रा
यविस्तारंकृत्वातद्वप्रत्रयंउपरितनवप्रमारभ्यक्रमेणश्वेतरक्तकृष्णचूर्णैरंजयेत् ॥ एतानिवप्राणिवेदिप्रमाणांतर्गतान्येवभवंति ॥

ततोवेद्यांसतिसंभवेसर्वतोभद्रंपीठंविरच्यतत्रपूर्वंव्रतोद्यापनारंभोक्तप्रकारेणब्रह्मादिदेवताआवाह्यनर्यप्रजामितिप्रतिष्ठाप्यपदार्थानुसमयेनपूजयेत् ॥ कांडानुसमयपक्षेआवाहनादिषोडशोपचारैरेकस्यपूजांकृत्वापरस्यावाहनादिषोडशोपचारैःपूजांकुर्यादित्येवंक्रमेणसर्वदेवतापूजनं ॥ ततआयतनकरणादिआघारवत्तंत्रेणैतदुद्देशेनदशदशतिलाहुतीर्घृताहुतीर्वाजुहुयात् ॥ एकैकाआहुतिरितिसंप्रदायः ॥ मेर्वादीनांनमःशब्दरहितैःप्रणवादिचतुर्थ्यंतैःस्वाहाशब्दसमन्वितैर्नाममंत्रैर्होमः ॥ होमकर्मणिसमाप्तेग्रहपीठवस्त्रंप्राच्यांशुक्रपीठंयथाभवतितथासर्वतोभद्रपीठोपर्यास्तीर्यप्रतिमानामग्न्युत्तारणंकुर्यात् ॥ अश्मन्नूर्जमित्यनुवाकमंत्राणामग्निर्ऋषिःअग्निर्देवतात्रिष्टुबादीनिछंदांसिअग्न्युत्तारणेवि० ॐ अश्मन्नूर्जंपर्वते० इत्यनुवाकेनप्रतिमानामग्न्युत्तारणंकृत्वा पंचामृतैःशुद्धोदकेनचप्रक्षाल्यसूर्यप्रतिमायाःकपोलौस्पृष्ट्वाप्राणप्रतिष्ठांविदध्यात् ॥ ॥ अस्यश्रीप्राणप्रतिष्ठामंत्रस्यब्रह्मविष्णुमहेश्वराऋषयः ऋग्यजुःसामानिच्छंदांसि चिद्रूपापराप्राणशक्तिर्देवता आंबीजं ह्रींशक्तिः क्रोंकीलकं सूर्यप्रतिमायांप्राणप्रतिष्ठापनेवि० ॥ ॐ आंह्रींक्रोंयंरंलंवंशंषंसंहोंहंसःसोहंसूर्यप्रतिमायाःप्राणाइहप्राणाः ॥ पुनः ॐ आंह्रीमित्यादि० सूर्यप्रतिमायाजीवइहस्थितः ॥ पुनः ॐ आंह्रीमित्यादि० सूर्यप्रतिमायाःसर्वेंद्रियाणि ॥ पुनः ॐ आंह्रीमित्यादिवाङ्मनश्चक्षुःश्रोत्रत्वग्जिह्वाघ्राणपाणिपादपायूपस्थाइहैवागत्यस्वस्तयेसुखंचिरंतिष्ठंतुस्वाहा इतिजपित्वा ॥ अस्यैप्राणाःप्रतिष्ठंतुअस्यैप्राणाःक्षरंतुच ॥ अस्यैदेवत्वमर्चायैस्वाहाइतिमंत्रमुक्त्वाप्रतिमांसजीवांध्यायेत् ॥ सर्वेंद्रियाणिवाङ्मनश्चक्षुःश्रोत्रत्वग्जिह्वाघ्राणपाणिपादपायूपस्थाइत्येकमेववा एवंप्राणप्रतिष्ठांविधायप्रतिमांपंचामृतैःसंस्नाप्यशुद्धोदकेनस्नापयेत् ॥ ततउदुत्यमित्यस्यसोमःसूर्योगायत्रीसू

१ ब्रह्मादिमंडलदेवताःसंस्काररत्नमालास्थेस्मिन्प्रयोगेनैवोक्ताअपिपूर्वमुद्यापनोपक्रमेसंगृहीताएवेतिविस्तरभियानात्रपुनःसंगृहीताः ।

र्यप्रतिमानेत्रोन्मीलनेवि० ॥ ॐ उदुत्यंजा० सूर्यं इतिमंत्रेणसुवर्णशलाकयादर्भशलाकयावागोघृतंगृहीत्वातेनप्रतिमायादक्षवा मनेत्रेमंत्रावृत्त्याक्रमेणोन्मील्य ॥ ॐ अंजंतित्वामध्वरेदेवयंतः ॥ वनस्पतेमधुना० रस्याउपस्थे ॥ इतिमंत्रावृत्त्याक्रमेणनेत्रे मधुनाभ्यज्योपहारंनिवेदयेत् ॥ नेत्रोन्मीलनमारभ्योपहारनिवेदनपर्यंतंप्रतिमायाःपुरतःस्वयंअन्योपियःकश्चननैवतिष्ठेत् ॥ एवंसोमादिप्रतिमानामक्ष्युत्तारणादिकमूहेन प्रत्येकंकर्तुमशक्तौसर्वासांसहैवोहेन तत्रहंसःसोहमित्यनंतरंसूर्यादिप्रतिमासुप्राण प्रतिष्ठापनेवि० सूर्यादिप्रतिमानांप्राणाइत्यादिरूहोयथायथं ॥ ॥ ततोग्रहानावाहयेत् ॥ यथा ॥ आसत्येनेत्यस्यविश्वे देवाःसूर्यस्त्रिष्टुप् समस्तव्याहृतीनांप्रजापतिःप्रजापतिर्बृहती सूर्यावाहनेविनियोगः ॥ ॐ आसत्येनरजसा० विपश्यन् ॥ ॐ भूर्भुवःसुवःभगवन्ग्रहाधिपतेकिरीटिन्त्रिदेवतामयपद्मासनपद्माभयकरद्विभुजलोहितमाल्यांबरधरलोहितगंधानुलेपनमाणि क्याभरणभूषितजपापुष्पोपमद्युतेसप्ताश्वरथारूढकलिंगदेशोद्भवकाश्यपसगोत्रसूर्येहागच्छेतिमध्येद्वादशांगुलवर्तुलेआरक्ताक्ष तपूरितेपीठेप्राङ्मुख्यांताम्रप्रतिमायांरक्ताक्षतैःसूर्यमावाह्येहाधितिष्ठेतिस्थापयेत् ॥ ॥ भूर्भुवःसुवरित्यादिदेवतापदां तमुक्त्वापूजार्थंत्वामावाहयामीत्यावाह्येहाधितिष्ठेतिस्थापयेदित्येवंवासर्वत्रप्रयोगः ॥ ॥ आप्यायस्वेत्यस्यसोमोविश्वेदेवावा सोमोगायत्रीसमस्तव्या०सोमावाहनेवि० ॐ आप्यायस्व० गथे ॐ भूर्भुवःसुवः भगवन्नक्षत्राधिपतेकिरीटिन्सुधामयगदावर करद्विभुजश्वेतमाल्यांबरधरश्वेतगंधानुलेपनमौक्तिकाभरणभूषितगोक्षीरोपमद्युतेदशाश्वरथारूढयमुनातीरोद्भवआत्रेयसगोत्र सोमेहागच्छेत्याग्नेय्यांचतुर्विंशत्यंगुलेचतुरश्रेश्वेताक्षतपूरितेपीठेप्रत्यङ्मुख्यांस्फटिकप्रतिमायांरजतप्रतिमायांवाश्वेताक्षतैःसोम मावाह्येहाधितिष्ठेतिस्थापयेत् ॥ अग्निर्मूर्धेत्यस्यप्रजापतिरग्निर्वांगारकोगायत्रीसमस्तव्या० अंगारकावा० ॐ अग्निर्मूर्धादिवः०

जिन्वति ॐभूर्भुवःसुवः भगवन्अङ्ग्याकृतेकिरीटिन्शक्तिशूलगदावरकरचतुर्भुजलोहितमाल्यांवरधरलोहितगंधानुलेपनप्रवालाभरणभूषितज्वलत्पुंजोपमद्युतेरक्तमेषरथारूढअवंतिकासमुद्भवभारद्वाजसगोत्रअंगारकेहागच्छेतिदक्षिणेत्र्यंगुलेत्रिकोणेरक्ताक्षतपूरितेपीठेदक्षिणामुख्यांरक्तचंदनप्रतिमायांसुवर्णप्रतिमायांवारक्ताक्षतैरंगारकमावाह्येहाधितिष्ठेतिस्थापयेत् ॥ उद्बुध्यस्वेत्यस्याग्निर्बुधस्त्रिष्टुप् समस्तव्या० बुधावाह० ॐ उद्बुध्यस्वाग्ने० तंतुमेतं ॐभूर्भुवःसुवः भगवन्सौम्याकृतेकिरीटिन्सर्वज्ञानमयखड्गचर्मगदावरकरचतुर्भुजपीतमाल्यांवरधरपीतगंधानुलेपनमरकताभरणभूषितकुंकुमोपमद्युते पीतसिंहरथारूढमगधदेशोद्भवात्रेयसगोत्रबुधेहागच्छेतिऐशान्यांचतुरंगुलेबाणाकारेपीताक्षतपूरितेपीठेउदङ्मुख्यांसुवर्णप्रतिमायांपीताक्षतैर्बुधमावाह्येहाधितिष्ठेतिस्थापयेत् ॥ बृहस्पतइत्यस्यविश्वेदेवाबृहस्पतिस्त्रिष्टुप् समस्तव्या० बृहस्पत्यावा० ॐ बृहस्पतेअतियदर्यो० चित्रं ॐभूर्भुवःसुवः भगवन्सर्वदेवताचार्यकिरीटिन्सर्वविद्यामयदंडाक्षसूत्रकमंडलुवरकरचतुर्भुजपीतमाल्यांवरधरपीतगंधानुलेपनपुष्परागाभरणभूषितसुवर्णोपमद्युतेपीताश्वरथारूढसिंधुदेशोद्भवांगिरससगोत्रबृहस्पतइहागच्छेत्युत्तरेषडंगुलेदीर्घचतुरश्रेपीताक्षतपूरितेपीठेउदङ्मुख्यांसुवर्णप्रतिमायांपीताक्षतैर्बृहस्पतिमावाह्येहाधितिष्ठेतिस्थापयेत् ॥ शुक्रंतइत्यस्यविश्वेदेवाःशुक्रस्त्रिष्टुप्समस्तव्या० शुक्रावाह० ॐ शुक्रंतेअन्य० रातिरस्तु ॐभूर्भुवःसुवः भगवन्सर्वदैत्याचार्यकिरीटिन्सर्वविद्यामयदंडाक्षसूत्रकमंडलुवरकरचतुर्भुजश्वेतमाल्यांवरधरश्वेतगंधानुलेपनवज्राभरणभूषितरजतोपमद्युतेश्वेताश्वरथारूढभोजकटदेशोद्भवभार्गवसगोत्रशुक्रेहागच्छेतिपूर्वेनवांगुलेपंचकोणेश्वेताक्षतपूरितेपीठेप्राङ्मुख्यांरजतप्रतिमायांश्वेताक्षतैःशुक्रमावाह्येहाधितिष्ठेतिस्थापयेत् ॥ शंनोदेवीरित्यस्याग्निःप्रजापतिर्वाशनैश्चरोगायत्रीसमस्तव्या० ॐ शंनोदेवीरभिष्टये आपोभवंतु० स्त्रवंतुनः ॐभूर्भुवःसुवः भग

वन्क्रूराकृतेकिरीटिन् शूलवाणधनुर्वरकरचतुर्भुजनीलमाल्यांबरधरनीलगंधानुलेपननीलाभरणभूषितकज्जलपुंजोपमद्युतेनी
लगृध्ररथारूढसौराष्ट्रदेशोद्भवकाश्यपसगोत्रशनैश्चरेहागच्छेतिपश्चिमेद्व्यंगुलेषडंगुलेवाधनुराकारेनीलाक्षतपूरितेपीठेप्रत्यङ्मु
ख्यांलोहप्रतिमायांनीलाक्षतैःशनैश्चरमावाह्येहाधितिष्ठेतिस्थापयेत् ॥ कयानइत्यस्यविश्वेदेवाराहुर्गायत्रीसमस्तव्या० राह्वावा०
ॐ कयानश्चित्र० वृता ॐभूर्भुवःसुवः भगवन्क्रूराकृतेकिरीटिन्करालवदनासिंहिकानंदनखड्गचर्मशूलवरकरचतुर्भुजकृष्णमा
ल्यांबरधरकृष्णगंधानुलेपनगोमेदाभरणभूषितकालमेघोपमद्युतेकृष्णसिंहरथारूढराठिनापुरोद्भवपैठीनसिसगोत्रराहोइहागच्छे
तिनैर्ऋत्यांद्वादशांगुलेशूर्पाकारेकृष्णाक्षतपूरितेपीठेदक्षिणामुख्यांसीसप्रतिमायांकृष्णाक्षतैराहुमावाह्येहाधितिष्ठेतिस्थापयेत् ॥
केतुंकृण्वन्नित्यस्यविश्वेदेवाःकेतुर्गायत्रीसमस्तव्या० केत्वावा० ॐ केतुंकृण्वन्नकेतवे० रजायथाः ॐभूर्भुवःसुवः भगवन्क्रूराकृते
किरीटिन्गदावरकरद्विभुजचित्रमाल्यांबरधरचित्रगंधानुलेपनवैडूर्याभरणभूषितधूम्रोपमद्युते चित्रकपोतरथारूढअंतर्वेदिस
मुद्भवजैमिनिसगोत्रकेतोइहागच्छेतिवायव्यांषडंगुलेध्वजाकारेचित्राक्षतपूरितेपीठेदक्षिणामुख्यांकांस्यप्रतिमायांचित्राक्षतैःकेतु
मावाह्येहाधितिष्ठेतिस्थापयेत् ॥ बहुवचनांतोवाकेतुशब्दः अस्मिन्पक्षेऋष्यादिस्मरणवाक्येकेतवोगायत्रीत्यूहः भगवंतःक्रू
राकृतयःकिरीटिनोगदावरकराद्विभुजाश्चित्रमाल्यांबरधराश्चित्रगंधानुलेपनावैडूर्याभरणभूषिताधूम्रोपमद्युतयश्चित्रकपोतर
थारूढाअंतर्वेदिसमुद्भवाजैमिनिसगोत्राःकेतवइहागच्छतेत्यावाहनवाक्यऊहःइहाधितिष्ठतेतिस्थापनवाक्ये ॥ अथवादेश
गोत्रेएवोच्चार्ये ॥ यथोक्तप्रतिमानामलाभेसर्वाःसुवर्णमय्यःतदलाभेपूगीफलेषुअक्षतपुंजेषुवा ॥ यथोक्ताक्षतालाभेसर्वाःश्वेता
एव ॥ सर्वेग्रहाआदित्याभिमुखाएववास्थापनीयाः ॥ अस्मिन्पक्षेसूर्यःप्रसिद्धप्राच्यभिमुखएव ॥ अथाधिदेवताः ॥ त्र्यंबकमि

त्यस्यविश्वेदेवाईश्वरोनुष्टुप् समस्तव्या० ईश्वरावा० ॐत्र्यंबकंयजामहे० मामृतात् ॐभू० ईश्वरायनमः पंचवक्त्रंप्रतिवक्त्रंत्रिलोचनं वृषारूढंचंद्रमौलिंचतुर्भुजंकपालशूलखट्वांगवरधारिणंईश्वरमावाहयामीतिसूर्यदक्षिणपार्श्वेईश्वरं ॥ गौरीमिमायेत्यस्यविश्वेदेवा उमाजगती समस्तव्या० उमावाह० ॐ गौरीमिमायसलिलानितक्षती एकपदी० व्योमन् ॐभू० उमायैनमः त्रिदशपूजितांश्वेता सनांपुरोगतसिंहांचतुर्भुजांअक्षसूत्रकमलदर्पणकमंडलुधारिणींउमामावा० इतिसोमदक्षिणपार्श्वेउमां ॥ यदक्रंदइत्यस्याग्निः स्कंदस्त्रिष्टुप् समस्तव्या० स्कंदावा० ॐ यदक्रंदः० अर्वन् ॐभू० स्कंदायनमः षण्मुखंरक्तांवरधरंशिखंडकविभूषणंमयूरवाहनं चतुर्भुजंकुक्कुटघंटावैजयंतीपताकाशक्तिधारिणंस्कंदमावा० इत्यंगारकदक्षिणपार्श्वेस्कंदं ॥ सहस्रशीर्षेत्यस्यप्रजापतिर्नारायणो नुष्टुप् समस्त० नारायणावा० ॐ सहस्रशीर्षापुरुषः ॥ सहस्रा० दशांगुलं ॐभू० नारायणायनमः नीलमेघच्छविंश्रीवत्सांकंकौस्तु भवक्षसंगरुडारूढंचतुर्भुजंपद्मकौमोदकीचक्रशंखधारिणंनारायणमा० इतिबुधदक्षिणपार्श्वेनारायणं ॥ ब्रह्मादेवानामित्यस्य विश्वेदेवाब्रह्मात्रिष्टुप् समस्तव्या० ॐ ब्रह्मादेवानां० रेभन् ॐभू० ब्रह्मणेनमः यज्ञोपवीतिनंपद्मासनस्थंजटिलचतुर्मुखंचभुर्तुजं अक्षमालास्रुवपुस्तककमंडलुधारिणंपार्श्वभागस्थापितपीतवस्त्रकृष्णाजिनंपार्श्वभागस्थितहंसंब्रह्माणमा० इतिबृहस्पतिदक्षिणपा र्श्वेब्रह्माणं ॥ सजोषाइंद्रेत्यस्यसोमइंद्रस्त्रिष्टुप् समस्तव्या० इंद्रावा० ॐ सजोषाइंद्र० विश्वतोनः ॐभू० इंद्रायनमः चतुर्दंतगजारू ढवज्रांकुशपाणिंशचीपतिंनानाभरणभूषितंइंद्रमा० इतिशुक्रदक्षिणपार्श्वेइंद्रं ॥ इमंयमेत्यस्यविश्वेदेवायमस्त्रिष्टुप् समस्तव्या० यमावा० ॐ इमंयमप्रस्तर० मादयस्व ॐभू० यमायनमः ईषत्पीतंदंडपाशपाणिंकृष्णवर्णंरक्तनेत्रंनानाभरणभूषितंमहिषारूढंय ममा० इतिशनैश्चरदक्षिणपार्श्वेयमं ॥ कार्षिरसीत्यस्यसोमःकालोयजुःएकपदागायत्रीवासमस्तव्या० कालावा० ॐ कार्षिरस्य

पापांमृध्रं ॐभू० कालायनमः करालवदनंविभीषणंनित्यगंसर्पवृश्चिकरोमाणंपाशदंडपाणिंकालमा० इतिराहुदक्षिणपार्श्वेकालं॥
चित्रावसोइत्यस्यप्रजापतिश्चित्रगुप्तोयजुःएकपदाजगतीवा समस्त०चित्रगुप्तावा०ॐचित्रावसोस्वस्तितेपारमशीय ॐभू०चित्र
गुप्तायनमः उदीच्यवेषसाकारंलेखनीपत्रिकापाणिंसौम्यदर्शनंचित्रगुप्तमा० इतिकेतुदक्षिणपार्श्वेचित्रगुप्तं ॥ इत्यधिदेवताःसु
वर्णप्रतिमासुपूगीफलेषुअक्षतपुंजेषुवाआवाहयेत्॥ अथप्रत्यधिदेवताः ॥ अग्निंदूतमित्यस्यप्रजापतिरग्निर्गायत्रीसमस्त० अग्न्या
वा० ॐ अग्निंदूतंवृणीमहे होतारं० सुक्रतुं ॐभू० अग्नयेनमः पिंगभ्रुवंश्मश्रुलंपिंगलनेत्रंछागस्थंअरुणंसप्तार्चिषंअक्षसूत्रशक्तिधा
रिणंअग्निमा० इतिसूर्योत्तरपार्श्वेग्निं॥ अप्सुमइत्यस्यविश्वेदेवाआपोनुष्टुप् समस्तव्या०अवावा०ॐ अप्सुमेसोमोअब्रवीत् अंत०
विश्वभेषजीःॐभू०अद्भ्योनमः स्त्रीरूपिणीःश्वेतामकरवाहनामुक्ताभरणभूषिताःपाशकलशधारिणीरपआ०इतिसोमोत्तरपार्श्वे
ऽपः॥स्योनापृथिवीत्यस्ययाज्ञिक्योदेवताउपनिषदःपृथिवीगायत्री समस्त०पृथिव्यावा०ॐस्योनापृ० सप्रथाःॐभू०पृथिव्यैनमः
शुक्लवर्णांदिव्याभरणभूषितांचतुर्भुजांरत्नपात्रसस्यपात्रौषधपात्रपद्मधारिणींसौम्यवपुषंचंडांशुसदृशांबरांचतुर्दिङ्नागपृष्ठगतांपृ
थिवीमा० इतिअंगारकोत्तरपार्श्वेपृथिवीं॥इदंविष्णुरित्यस्यसोमोविष्णुर्गायत्रीसमस्त०विष्ण्वावा०ॐइदंविष्णु०पांसुरे ॐभू०
विष्णवेनमः नीलमेघच्छविंश्रीवत्सांकंकौस्तुभवक्षसंगरुडारूढंचतुर्भुजंपद्मशंखचक्रकौमोदकीधारिणंविष्णुमा० इतिबुधोत्तरपा
र्श्वेविष्णुं॥ इंद्रंवइत्यस्यविश्वेदेवाइंद्रोगायत्री समस्तव्या० इंद्रावा० ॐ इंद्रंवोवि० केवलः ॐभू० इंद्रायनमः चतुर्दंतगजारूढंव
ज्रांकुशपाणिंनानाभरणभूषितंशचीपतिमिंद्रमा० इतिबृहस्पत्युत्तरपार्श्वेइंद्रं ॥ इंद्राणीमित्यस्यविश्वेदेवाइंद्राण्यनुष्टुप् समस्त०
इंद्राण्यावा० ॐ इंद्राणीमासुनारिषुसुपत्नीं० मरंतेपतिः ॐभू० इंद्राण्यैनमः नानालंकारमंडितांदिव्यवस्त्रांश्वेतमाल्यांबरधरांश्वे

तगंधानुलेपनांसौम्यांसंतानमंजरीवरकरांइंद्राणीमा० इतिशुक्रोत्तरपार्श्वेइंद्राणीं ॥ प्रजापतइत्यस्यविश्वेदेवाःप्रजापतिस्त्रिष्टुप् समस्त० प्रजापत्यावा० ॐ प्रजापतेनत्वदेता०रयीणां ॐभू० प्रजापतयेनमः यज्ञोपवीतिनंहंसस्थंएकवक्त्रंचतुर्भुजमक्षस्रक्स्रुव पुस्तककमंडलुधारिणंप्रजापतिमा० इतिशनैश्चरोत्तरपार्श्वेप्रजापतिं॥ आयंगौरित्यस्याग्निःसर्पागायत्री समस्तव्या० सर्पावा०ॐ आयंगोःपृश्नि० न्त्सुवः ॐभू० सर्पेभ्योनमः अक्षसूत्रधरान्कुंडिकाकारपुच्छसंयुतान्भीषणानेकभोगांस्त्रिभोगान्वासर्पानावा० इतिराहूत्तरपार्श्वेसर्पान् ॥ ब्रह्मादेवानामित्यस्यविश्वेदेवाब्रह्मात्रिष्टुप् समस्तव्या० ब्रह्मावा०ॐब्रह्मादेवानांपदवीः०रेभन् ॐभू० ब्रह्मणेनमःयज्ञोपवीतिनंपद्मासनस्थंजटिलंचतुर्मुखंचतुर्भुजंअक्षस्रक्स्रुवपुस्तककमंडलुधारिणंपार्श्वभागस्थापितपीतवस्त्रकृष्णा जिनंपार्श्वभागस्थितहंसंब्रह्माणमा० इतिकेतूत्तरपार्श्वेब्रह्माणं इतिप्रत्यधिदेवताःसुवर्णप्रतिमासुपूगीफलेषुअक्षतपुंजेषुवावा हयेत् ॥ अथवाग्न्यादयोधिदेवताईश्वरादयःप्रत्यधिदेवताः तत्तद्ग्रहावाहनानंतरमेवतत्तदधिदेवताप्रत्यधिदेवतावाहनंवा॥अथ कर्मसंरक्षणदेवताः ॥ गणानांत्वेत्यस्यविश्वेदेवागणपतिर्जगती समस्तव्या० गणपत्यावा० ॐ गणानांत्वा०सादनं ॐभू० गण पतयेनमः गजाननंमूषकवाहनंनागयज्ञोपवीतिनंशशांककृतशेखरंसिद्धिबुद्धियुतंत्रिनेत्रंचतुर्भुजंदंताक्षस्रक्परशुमोदकधारिणं गणपतिमा० इतिराहोरुत्तरतोगणपतिं॥ तामग्निवर्णामित्यस्ययाज्ञिक्योदेवताउपनिषदोदुर्गात्रिष्टुप् समस्त० दुर्गावा० ॐताम ग्निवर्णा० तरसेनमः ॐभू०दुर्गायैनमः सिंहारूढांदशभुजांशक्तिबाणशूलखड्गचक्रचंद्रबिंबखेटकपालशुकटंकहस्तांदुर्गदैत्यासुहा रिणींदुर्गामा० इतिशनैश्चरस्योत्तरतोदुर्गां ॥ वायोशतमित्यस्यविश्वेदेवावायुरनुष्टुप् समस्त० वाय्वावा० ॐ वायोशत९० पा जसा ॐभू० वायवेनमः धावद्धरिणपृष्ठस्थंध्वजवरकरंधूम्रवर्णंवायुमा० इतिसूर्यस्योत्तरतोवायुं॥घृतंघृतपावानइत्यस्यसोमआ

काशोयजुः समस्त० आकाशावा० ॐ घृतंघृतपावानः० त्वांतरिक्षाय ॐभू०आकाशायनमः नीलोत्पलाभंनीलांबरंसौम्यंषंढं चंद्रार्ककरंआकाशमा० इतिराहोर्दक्षिणतआकाशं ॥ यावांकशेत्यस्यसोमोश्विनौगायत्री समस्त० अग्न्यावा० ॐ यावांकशा० मिमिक्षतं ॐभू०अश्विभ्यांनमः दिव्यौषधिदर्शनीयपुस्तककरौअन्योन्ययुक्तदेहौसुरूपचारुदर्शनरत्नभांडकरचंद्रशुक्लांबरनारी युगपार्श्वौदेवभिषजावश्विनावा० इतिकेतोर्दक्षिणतोश्विनौ ॥ वास्तोष्पतइत्यस्यप्रजापतिर्वास्तोष्पतिस्त्रिष्टुप् समस्त० वास्तोष्प त्यावा०ॐवास्तोष्पतेप्रति० चतुष्पदे ॐभू०वास्तोष्पतयेनमः भगवंतंवास्तुपुरुषंमहाबलपराक्रमंसर्वदेवाधिवासाश्रयशरीरंब्रह्म पुत्रंसकलब्रह्मांडधारिणंभूमिभारार्पितमस्तकंपुरपत्तनप्रासादप्रपावापीसरःकूपादिसंनिवेशसांनिध्यकरंसर्वसिद्धिप्रदंप्रसन्नवदनं विश्वंभरंपरमपुरुषरूपंचक्रशार्ङ्गधरंवरदाभयहस्तंवास्तोष्पतिमा० इतिबृहस्पतेरुत्तरतोवास्तोष्पतिं ॥ क्षेत्रस्यपतिनेत्यस्यविश्वेदे वाःक्षेत्रपालोनुष्टुप् समस्तव्या० क्षेत्रपालावा० ॐक्षेत्रस्यपतिना०तीदृशे ॐभू०क्षेत्रपालायनमः श्यामवर्णंत्रिलोचनंऊर्ध्वकेशंसु दंष्ट्रभृकुटीकुटिलाननंनूपुरालंकृतांघ्रिंसर्पमेखलायुतंसर्पांगंअतिक्रूरंक्षुद्रघंटामयींकरोटिकामयींगुल्फावलंबिनींमालांदधानंउर गाबद्धंचंद्ररेखासुमुखंअष्टहस्तंशूलकुंतखड्गदुंदुभियुतदक्षिणहस्तंकपालघंटाचर्मचापयुतवामहस्तंभीमंदिग्वाससममितद्युतिंक्षेत्र पालमा० इतिअंगारकोत्तरतःक्षेत्रपालं॥अथवासूर्यगुरुशनिकेतुमध्येगणपत्यादीन्यथावकाशंस्थापयेत्॥अथलोकपालाः॥ त्राता रमिंद्रमित्यस्यविश्वेदेवाइंद्रस्त्रिष्टुप्समस्तव्या० इंद्रावा० ॐत्रातारमिंद्रं० ॐभू० इंद्रायनमः ऐरावतारूढंवज्रपाणिंसुवर्णवर्णं नाकपममरेश्वरमिंद्रमा० इतिशुक्रमंडलपुरतइंद्रं ॥ अग्नेनयेत्यस्यविश्वेदेवाअग्निस्त्रिष्टुप् समस्तव्या० अग्न्यावा० ॐ अग्नेनयसुप थां० ॐभू०अग्नयेनमः सुलोहितवर्णंसप्तार्चिषंसप्तहस्तंस्वाहास्वधाप्रियंचतुःशृंगंसप्तजिह्वंद्विवक्त्रंत्रिपादंमेषारूढंशक्त्यन्नस्रुक्स्रु

वतोमरव्यंजनघृतपात्रधारिणंअग्निमा० इतिसोममंडलतआग्नेय्यांअग्निं ॥ इमंयमेत्यस्यविश्वेदेवायमस्त्रिष्टुप् समस्त० यमावा०
ॐ इमंयमप्र० ॐभू०यमायनमः दंडधारिणंइलाप्रियंमहिषवाहनंकृष्णवर्णंशुभाशुभकर्मफलप्रदंयममावा०इत्यंगारकमंडलाद
क्षिणतोयमं ॥ असुन्वंतमित्यस्याग्निर्निर्ऋतिस्त्रिष्टुप् समस्त०निर्ऋत्यावा०ॐअसुन्वंतमयंजमानमि० ॐभू०निर्ऋतयेनमः खड्ग
चर्मधरंनरारूढंऊर्ध्वकेशंविरूपाक्षंकरालंकालिकाप्रियंनिर्ऋतिमा० इतिराहुमंडलान्नैर्ऋत्यांनिर्ऋतिं ॥ तत्त्वायामीत्यस्यविश्वेदे
वावरुणस्त्रिष्टुप् समस्त० वरुणावा० ॐ तत्त्वायामि० ॐभू०वरुणायनमः नागपाशधरमंबुपतिंश्वेतभूषणंपद्मिनीप्रियंमकरारू
ढंवरुणमा० इतिशनिमंडलात्पश्चिमेवरुणं ॥ आनोनियुद्भिरित्यस्यविश्वेदेवावायुस्त्रिष्टुप् समस्तव्या० वाय्वावा० ॐआनोनियु
द्भिःशतिनीभिरध्वरं॥सहस्रिणी० ॐभू० वायवेनमः जगत्प्राणरूपंकृष्णमृगारूढंहेमदंडधरंश्यामवर्णंमोहिनीप्रियंवायुमावा०
इतिकेतुमंडलाद्वायव्यांवायुं॥संतेपयाꣳसीत्यस्याग्निःसोमस्त्रिष्टुप् समस्तव्या० सोमावा०ॐसंतेपयाꣳसि० ॐभू० सोमायनमः
मृगारूढंगदापाणिंश्वेतवर्णंरोहिणीप्रियंसोममा० इतिबृहस्पतिमंडलादुत्तरतःसोमं ॥ कुबेरपक्षे राजाधिराजायेत्यस्यारुणःकुबेरो
ष्टिः समस्तव्या० कुबेरावा०ॐ राजाधिराजाय०महाराजायनमः ॐभू०शिविकारूढंकुंतपाणिंनिधीश्वरंसुवर्णवर्णंधनदंप्रभुंचि
त्रिणीप्रियंकुबेरमा० इतिकुबेरं स्थानंसोमस्यैवैतस्यापि॥ अभित्वेत्यस्यविश्वेदेवाईशानोगायत्री समस्त० ईशानावा० ॐ अभि
त्वादेव० ॐ भू० ईशानायनमः शुद्धस्फटिकसंकाशंवृषारूढंवराभयशूलाक्षसूत्रधारिणंपंचवक्त्रंत्रिनेत्रंनानाभरणभूषितंपार्वती
प्रियमीशानमा० इतिबुधमंडलादीशान्यांईशानं॥इतिप्रतिमासुपूगीफलेषुअक्षतपुंजेषुवालोकपालानावाहयेत् ॥ ईश्वरादिष्वपी
हागच्छेत्यावाह्येहाधितिष्ठेतिसंस्थापनमित्येवंवाप्रयोगः॥ तत्रेहागच्छतइहाधितिष्ठतेतिसर्पेष्वप्सुचोहः इहागच्छतंइहाधितिष्ठत

मित्यश्विनोरूहः ॥ अन्यत्समानं ॥ ततःनर्यप्रजांमित्यस्याग्निर्नर्योनुष्टुप् ॥ देवताप्रतिष्ठापनेवि० ॐ नर्यंप्रजांमेगोपाय ॥ अमृत
त्वाय० प्रतिष्ठितां इतिदेवताप्रतिष्ठापनंकुर्यात् ॥ मंत्रावृत्तिःप्रतिदैवतं तत्तदावाहनानंतरमेवतत्तत्प्रतिष्ठापनंतत्तत्पूजनंचेति
कांडानुसमयएवात्रनियतः सौकर्यात् ॥ आवाहनंप्रतिष्ठापनंचक्रमेणैकैकस्यादेवतायाःकृत्वैकैकस्यैतंतमुपचारंनिवेदयेदित्येवं
रूपोहिपदार्थानुसमयः ॥ तस्यशुक्राकौंप्राङ्मुखौज्ञेयावित्यस्मिन्पक्षेप्रतिदेवतंयथायथंयथायोग्यप्राप्तप्राङ्मुखोदङ्मुखतयोस्तत्त
दभिमुखतायावाविलंबावहत्वान्नभवति ॥ विलंबसहनेप्रधानस्यतदारंभस्यवापूर्वाह्णकालताबाध्येत अतःकांडानुसमयएवात्र ॥
ग्रहाणांपूजनेऽयंविशेषः ॥ ग्रहवर्णानिवासांसि ॥ सूर्यायरक्तचंदनं चंद्रायश्वेतचंदनं भौमायरक्तचंदनं बुधायकेशरयुक्तंचंदनं
गुरवेकेशरयुक्तंचंदनं शुक्रायश्वेतचंदनं शनिराहुकेतुभ्योऽगुरुः॥सूर्यायरक्तंकरवीरं सोमायश्वेतंकरवीरं भौमायरक्तोत्पलंबुधा
यचंपकपुष्पं गुरवेऽगस्त्यपुष्पं शुक्रायातसीपुष्पं शनैश्चरायकालांजनीपुष्पं राहवेसर्षपपुष्पं केतवेशंखिनीपुष्पं ॥ रवयेसल्लकीनि
र्यासधूपः सोमायघृतयुक्ताक्षतधूपः भौमायसारफलीतिप्रसिद्धस्यसर्जरसस्यधूपः बुधायागुरुधूपः गुरवेलोहवाणइतिप्रसिद्धस्य
सिह्लाद्रव्यस्यधूपः शुक्रायबिल्वफलनिर्याससहितस्यागुरोर्धूपः शनैश्चरायगुग्गुलुधूपः राहुकेतुभ्यांलाक्षाधूपः॥घृतदीपःसर्वेषां॥
रवयेगुडौदनः सोमायघृतयुक्तंपायसं भौमायहविष्यान्नं बुधायषाष्टिकपायसं गुरवेदध्योदनः शुक्रायघृतौदनः शनयेतिलमाष
मिश्रितौदनः राहवेलवणमिश्रितक्षीरयुक्तओदनः केतवेआरक्तपुष्पयुतलवणमिश्रिताजाक्षीरयुततिलतंदुलमिश्रितओदनः ॥
रवयेद्राक्षाफलानि सोमायेक्षवः भौमायपूगानि बुधायनारिंगाणि गुरवेजंबीराणि शुक्रायबीजपूराणि शनैश्चरायखर्जूरफलानि
राहवेनारिकेलफलानि केतवेदाडिमीफलानि ॥ ग्रहवर्णवस्त्राभावेश्वेतरंजितान्निकृत्वासमर्पणीयानि एतदसंभवेश्वेतानि ॥ यथो

क्तचंदनपुष्पालाभेयानिकानिचित्तत्तद्वर्णानि ॥ तदलाभेश्वेतानि ॥ यथोक्तधूपालाभेगुग्गुलुःतस्याप्यलाभेयःकश्चनसौरभयुक् ॥ यथोक्तौदनालाभेतत्तद्वर्णयुक्तपिष्टौदनोघृतौदनोवानैवेद्यं यथोक्तफलालाभेनारिकेरफलानिखर्जूरफलानिवा ॥ सतिसंभवेफल पुष्पसमन्वितंवितानमप्यर्पणीयं ॥ अधिदेवताप्रत्यधिदेवतानांचैतएवोपचाराः गणपत्यादिषुतुश्वेतमेवचंदनं शतपत्राण्येवपु ष्पाणि धूपोगुग्गुलुरेव गोघृतदीपः घृतौदनोनैवेद्यंशतपत्रपुष्पालाभे यथासंभवंपुष्पं फलंनारिकेरंखर्जूरफलंवेतिद्रष्टव्यं ॥ ततःपीठादीशान्यामुदीच्यांवा महीद्यौरितिभूमिंस्पृष्ट्वा तत्ररंगवल्लीपद्मंविधाय ओषधयःसंवदंतइतिप्रस्थपरिमितधान्यपुंजंतत्र कृत्वा तत्राजिघ्रेत्यनेननवमव्रणंतैजसंमृन्मयंवाचंदनेनानुलिप्तंदध्यक्षतपुष्पमालाद्यलंकृतंत्रिसूत्रवेष्टितग्रीवंकलशंसंस्थाप्य इ मंमइत्युदकेनपूरयित्वा आप्यायस्वेत्यस्याग्निःसोमोगायत्रीक्षीरप्रक्षेपेवि० ॐ आप्यायस्वसमे० संगथेइतिकलशेक्षीरंप्रक्षिप्य ॥ दधिक्राण्वइत्यस्यविश्वेदेवादधिक्रावानुष्टुप् दधिप्रक्षेपे० ॐ दधिक्राव्णो० तारिषत् इतिकलशेदधिप्रक्षिप्य ॥ शुक्रमसीत्यस्य प्रजापतिराज्यंयजुःआज्यप्रक्षेपे० ॐ शुक्रमसिज्योतिरसितेजोसि इतिकलशेआज्यंप्रक्षिप्य ॥ मधुवाताइतिमंत्रस्याग्निर्विश्वेदे वागायत्री मधुप्रक्षेपे० ॐ मधुवाताऋतायते० गावोभवंतुनः ३ इतिमधुप्रक्षिप्य ॥ त्वेक्रतुमित्यस्यसोमःप्रजापतिस्त्रिष्टुप् शर्क राप्रक्षेपेवि० ॐ त्वेक्रतु० योधि इतिशर्करांप्रक्षिप्य ॥ तत्सवितुरित्यस्यागायत्र्याविश्वामित्रःसवितागायत्री गोमूत्रप्रक्षेपे० ॐ त त्सवितुर्वरेण्यं० चोदयात्इतिकलशेगोमूत्रंप्रक्षिप्य गंधद्वारामित्यस्ययाज्ञिक्योदेवताउपनिषदःश्रीरनुष्टुप् गोमयप्रक्षेपे० ॐ गं धद्वारां० श्रियंइतिकलशेगोमयंप्रक्षिप्य पुनराप्यायस्वेत्यादिभिस्त्रिभिःक्षीरदधिघृतानिकलशेप्रक्षिप्य नूतनाहृतचित्रपर्वतधातूं स्तूष्णींप्रक्षिप्य उद्धृतासिवराहेणेत्यस्ययाज्ञिक्योदेवताउपनिषदोमृत्तिकानुष्टुप् सप्तमृत्प्रक्षेपेवि० ॐ उद्धृतासिव० कृतं इतिकल

शेऽश्वशालागजशालावल्मीकनदीसंगमह्रदराजद्वारगोष्ठप्रदेशाहृताःसप्तमृत्तिकाःप्रक्षिप्य गंधद्वारामित्यस्ययाज्ञिक्योदेवताउप
निषदःश्रीरनुष्टुप् गंधप्रक्षेपेवि० ॐ गंधद्वारांदु० श्रियंइतिकलशेगंधंप्रक्षिप्य याजाताओषधयइत्यस्याग्निरोषधयोनुष्टुप् ओषधि
प्रक्षेपेवि० ॐ याजाताओषधयो० सप्तचंइतिकुष्ठमांसीहरिद्राद्वयमुराशैलेयचंदनसटीचंपकमुस्तात्मिकादशौषधीःसहैवकलशे
निक्षिपेत् कुष्ठंकोष्ठं मांसीजटामांसी हरिद्राएकाप्रसिद्धाद्वितीयादारुहळदइति मुरामोरवेलइतिपरशुरामक्षेत्रेप्रसिद्धा शैलेयं
शिलारसः चंदनंप्रसिद्धं सटीकचोरः चंपकश्चंपकवृक्षस्तस्यत्वक् मुस्ताभद्रमोथेति एतासामभावेशतावरी ॥ कांडात्कांडादित्य
स्याग्निरोषधयोनुष्टुप् दूर्वाप्रक्षेपेवि० ॐकांडात्कांडात्प्र० शतेनच इतिकलशेदूर्वाःप्रक्षिप्य ॥ अश्वत्थेवइत्यस्याग्निरोषधयोनुष्टुप्
पंचत्वक्प्रक्षेपणेवि० ॐ अश्वत्थेवो० पूरुषंइतिन्यग्रोधपिप्पलप्लक्षजंबूचूततरूणांत्वचःसहैवकलशेक्षिपेत् जंबूस्थानेउदुंबरोवा
पुनरश्वत्थेवइत्यनेनएषामेवतरूणांसहैवपल्लवान्कलशेक्षिपेत् ॥ याःफलिनीरित्यस्याग्निरोषधयोनुष्टुप् फलप्रक्षेपणेवि० ॐ याः
फलिनीर्या० त्वꣳहंसःइतिकलशेफलंप्रक्षिप्य ॥ अग्नेरेतश्चंद्रमित्यस्याग्निर्हिरण्यंत्रिष्टुप् हिरण्यप्रक्षेपेवि० ॐ अग्नेरेतश्चंद्रꣳहिरण्यं
अद्भ्यः० तरेयंइतिकलशेहिरण्यंप्रक्षिप्य ॥ बृहस्पतेजुषस्वनइत्यस्यविश्वेदेवाबृहस्पतिर्गायत्री पंचरत्नप्रक्षेपणेवि० ॐ बृहस्प
तेजु० दाशुषेइतिकलशेसुवर्णरजतमुक्तामाणिक्यप्रवालात्मकपंचरत्नानिप्रक्षिपेत् ॥ एतेषामलाभेसुवर्णंप्रक्षिपेत् मंत्रस्तुयःपंच
रत्नानांसएव ॥ ततोदूर्वाम्रपल्लवैःकलशस्यमुखमाच्छाद्य ॥ युवंवस्त्राणीत्यस्यविश्वेदेवामित्रावरुणौत्रिष्टुप् कलशवेष्टनेवि० ॐ
युवंवस्त्राणिपीवसावसाथे० सचेथे इतिकलशंश्वेतवस्त्रयुग्मेनवेष्टयित्वा ॥ पूर्णादर्विपरापतेत्यस्यविश्वेदेवाःशतक्रतुरनुष्टुप् कल
शाननेतंडुलपूर्णपात्रनिधानेवि० ॐ पूर्णादर्विपरापत० इतिकलशाननेतंडुलपूर्णपूर्णपात्रंनिदध्यात् ॥ ततःकलशस्यमुखे० सर्वेस

मुद्राःसरितः० क्षयकारकाः गंगेचयमुनेचैवं० जलेस्मिन्संनिधिंकुरुइतिकलशेदेवताआवाह्यसंपूज्यतत्त्वायामीतिकलशेवरुण
मावाह्यसंपूजयेत् ॥ ततः देवदानवसंवादेमथ्यमानेमहोदधौ ॥ उत्पन्नोसितदाकुंभविधृतोविष्णुनास्वयं ॥ त्वत्तोयेसर्वतीर्थानि
देवाःसर्वेत्वयिस्थिताः ॥ त्वयितिष्ठंतिभूतानित्वयिप्राणाःप्रतिष्ठिताः ॥ शिवःस्वयंत्वमेवासिविष्णुस्त्वंचप्रजापतिः॥ आदि
त्यावसवोरुद्राविश्वेदेवाःसपैतृकाः ॥ त्वयितिष्ठंतिसर्वेपियतःकामफलप्रदाः ॥ त्वत्प्रसादादिमंयज्ञंकर्तुमीहेजलोद्भव ॥ सांनि
ध्यंकुरुदेवेशप्रसन्नोभवसर्वदा ॥ इतिकलशंप्रार्थयेत् ॥ ततःआपोहिष्ठेतिमंत्रत्रयस्याग्निरापोगायत्री ॥ हिरण्यवर्णाइतिमंत्रचतु
ष्टयस्याग्निरापस्त्रिष्टुप्॥पवमानानुवाकमंत्राणांसोमऋषिः पवमानसुवर्जनादयोदेवताः अनुष्टुबादीनिछंदांसि जपेवि० ॐ आपो
हिष्ठा० ३ हिरण्यवर्णाःशुचयः० ४ पवमानःसुवर्जनः १७ इतिस्थापितंकलशमभिमृश्यजपेत् ॥ काम्येस्वयमेवाचार्येणायं
जपःकार्यः॥नित्येनैमित्तिकेचस्वाशक्तौमंत्रविदंअन्यंब्राह्मणंजपार्थंवृत्वासंपूज्यतेनजपःकरणीयः॥ ग्रहपीठेग्रहमंत्रजपार्थंत्रीन्ब्रा
ह्मणान्‌एकंवावृत्वासंपूज्यजपंकारयेत् ॥ कलशसंबंधिजपसंख्यातुअष्टोत्तरशतमष्टाविंशतिर्वाग्रहमंत्रजपोपिएवमेवप्रतिमंत्रं ॥
अथान्वाधानं ॥ आचार्यःसमित्त्रयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वाग्रहयज्ञहोमकर्मणियायक्ष्यमाणादेवतास्ताइत्यादि
प्रसाधनीदेव्यंतंव्याहृत्यंतंवोक्त्वा॥ गणपतिंएकयापलाशसमिदाहुत्याचर्वाहुत्याआज्याहुत्याचयक्ष्येइतिवदेत् ॥अथवाकेवलच
र्वाहुत्याकेवलाज्याहुत्यावायक्ष्यइत्येवंवदेत् ॥ इदंचप्रथमंतुवराहुतिरितिपाठे ॥ प्रथमातुवराहुतिरितिपाठेतुकेतुप्रत्यधिदेवता
न्वाधानोत्कीर्तनांतेगणपतिंप्रथमयासमिच्चर्वाज्यवराहुत्यायक्ष्यइतिकेवलचरुवराहुत्यायक्ष्येकेवलाज्यवराहुत्यायक्ष्येइतिवा ॥ व
रत्वंउक्तप्रमाणद्विगुणप्रमाणत्वंअर्धाधिकप्रमाणत्वंवा॥ समिधिद्दैर्घ्यविषयकमेवद्वैगुण्यंअर्धाधिकत्वंवा स्पष्टवचनंविनाएकदास

मिद्ध्याभ्याधानेदोषश्रवणात् ॥ वैशेषिकप्रधानहोमे सूर्यंसोमंअंगारकंबुधंबृहस्पतिंशुक्रंशनैश्चरंराहुंकेतुं एतत्संख्याभिरेतत्सं ख्याभिः यथायथमर्कादिसमिद्भिः तावतीभिश्चर्वाहुतिभिः तावतीभिराज्याहुतिभिश्च ॥ एतदित्यस्यस्थानेअष्टोत्तरसहस्रमष्टो त्तरशतमष्टाविंशतिंवाकीर्तयेत् ॥ ईश्वरंउमांस्कंदंनारायणंब्रह्माणंइंद्रंयमंकालंचित्रगुप्तं एताअधिदेवताः अग्निंअपःभूमिंविष्णुं इंद्रंइंद्राणींप्रजापतिंसर्पान्ब्रह्माणंएताःप्रत्यधिदेवताश्चएतत्संख्याभिरेतत्संख्याभिर्यथायथमर्कादिसमिद्भिस्तावतीभिश्चर्वाहुति भिस्तावतीभिराज्याहुतिंभिश्च एतदित्येतस्यस्थानेप्रधानदेवतानांयोत्कीर्तितासंख्यातत्तन्न्यूनांसंख्यांप्रतिदेवतमष्टोत्तरशतम ष्टाविंशतिमष्टौवाकीर्तयेत्॥गणपतिंदुर्गांवायुंआकाशंअश्विनौवास्तोष्पतिंक्षेत्रपालं इंद्रंअग्निंयमंनिर्ऋतिंवरुणंवायुंसोमंईशानंएत त्संख्याभिरेतत्संख्याभिःपलाशसमिद्भिस्तावतीभिश्चर्वाहुतिभिस्तावतीभिराज्याहुतिभिश्च एतदित्येतस्यस्थानेधिदेवताप्रत्यधि देवतानांयोत्कीर्तितासंख्यातत्तन्न्यूनांसंख्यांप्रतिदेवतमष्टाविंशतिमष्टौचतुर्वाकीर्तयेत् ॥ अधिदेवताप्रत्यधिदेवतानांप्रधानाहु तिसंख्यादशांशेनहोमः कर्मसंरक्षणदेवतानांप्रतिदेवतंप्रधानाहुतिसंख्याविंशांशेनेत्येवंवा ॥ अस्मिन्कल्पेप्रधानदेवतानांप्रति देवतंसहस्रंशतंवेत्येवमेवसंख्याद्वयंभवतिनतुसहस्रशतात्मकसंख्ययोरष्टोत्तरत्वंनवाऽष्टाविंशतिसंख्या॥दशांशविंशांशयोरत्रा संभवात् ॥ प्रधानाहुतिसंख्यायदिसहस्रंतदाधिदेवताप्रत्यधिदेवतानांशतंशतंकर्मसंरक्षणदेवतानांदशदश ॥ प्रधानाहुतिसं ख्यायदिशतंशतंतदाधिदेवताप्रत्यधिदेवतानांदशदश कर्मसंरक्षणदेवतानांपंचपंचेतिविवेकः ॥ सर्वतोभद्रपीठदेवतानांपूजो त्तरंहोमाकरणपक्षेप्रधानोत्तरमेवहोमस्यकर्तव्यत्वादत्रान्वाधानंपूर्ववत्कर्तव्यं ॥ ततःअंगहोमेवरुणंद्वाभ्यामाहुतिभ्यामित्यादि व्याहृत्यंतत्वपक्षे ॥ प्रसाधनीदेव्यंतत्वपक्षेतुअग्निंस्विष्टकृतंएकयाहुतशेषाहुत्यायक्ष्यइत्यादि ॥ पात्रासादनकालेदर्व्यासहचरु

होमकर्तृदक्षिणहस्तानांआज्यहोमकर्तृसंख्यापरिमितस्रुवाणांचरूद्धरणपात्रस्यआज्यहोमकर्तृसंख्यापरिमिताज्यस्थालीनांचासादनप्रोक्षणेकार्ये ॥ हस्तानांस्रुवाणांचसंमार्गोपिआसादिताहस्ताआसंमार्गतत्रैवावस्थिताःस्युः॥संमार्गोत्तरंबर्हिषि अथवासादनरहिताएवधर्माः स्रुवस्थानेतावत्योदर्व्योवा वक्ष्यमाणस्थालीपाकधर्मेणचरून्चरुंवाश्रपयित्वायुगपदनेककर्तृकचर्वाज्यहोमनिर्वाहायसर्वेषांहस्तानांस्रुवाणांचसंमार्गःकार्यः ॥ दर्वीपक्षेतासामपि ॥ अथवाहोमसमयएवचरुसमिद्धोमकर्तारःस्वस्वदक्षिणहस्तस्यस्वस्ववामहस्तेनप्रोक्षणंकृत्वानिष्टप्यआसादितसंमार्गदर्भैकदेशेनवामहस्तेनसंमृज्यपुनर्निष्टप्यबर्हिषिनिधायदक्षिणहस्तेनैवस्वस्वहस्तसंमार्गदर्भप्रहरणंकुर्युरिति प्रतिदेवतचरुपक्षेतावत्यश्चरुस्थाल्यस्तावंतिमेक्षणानिच ॥ एकत्रश्रपणपक्षेप्रत्येकंव्युद्धृत्यतेनतेनतत्तद्देवतायैपर्यग्निकरणकालेसर्वैर्होमद्रव्यैःसहाज्यस्यपर्यग्निकरणं ॥ ततःशृतांश्चरूञ्छृतंचरुंवाभिघार्योत्तरतउद्वास्यबर्हिष्यासाद्यतत्रैवासादितेषुचरूद्धरणपात्रेषुएकचरुपक्षेएकस्मिन्नुद्धरणपात्रेउद्धरेत् ॥ एकचरुपक्षेप्रतिदेवतंपंक्त्याकारेणविभजेत् तत्क्रमेणैवहोमः ॥ ततःपरिषेकादिप्रसाधनीदेवीहोमांतंव्याहृतिहोमांतंवान्वाधानोत्कीर्तितपक्षानुसारेणकुर्यात् ॥ अस्मिन्नग्नौचरुश्रपणासंभवेनगृहसिद्धान्नेनदेवपवित्रसंस्कारसंस्कृतेनहोमंकुर्वंतिशिष्टाइदानीं ॥ ततःगणानांत्वेत्यस्यविश्वेदेवागणपतिर्जगतीहोमेवि० ॐ गणानांत्वागणपतिं॰ सादनं॰स्वाहाइतिएकांपलाशसमिधंजुहोति गणपतयइदंनममेतित्यागः एवमेकांचर्वाहुतिमेकामाज्याहुतिंचजुहोति त्यागःपूर्ववत् ॥ जुहुयात्समिदन्नाज्यैःपृथगष्टोत्तरंशतमितिवचनेसमिद्विषयेपिजुहुयादित्युक्त्वात्स्वाहाकारोत्रस्मार्तः॥ ततऋत्विजउदङ्मुखाःप्राङ्मुखावोपविश्यद्विराचम्याऽमुक्तकेशानिपातितजानुकाःसावधानमनसोवाग्यताहोमंकुर्युः ॥ होमारंभात्प्रागेवयजमानः इमान्युपकल्पितानिहवनीयद्रव्याणिअन्वाधानोत्कीर्तितसंख्याहुतिपर्याप्तानि

यायायक्ष्यमाणादेवतास्ताभ्यस्ताभ्योमयापरित्यक्तानिनममेतिद्रव्यत्यागंकुर्यादितिसांप्रदायिकाः ॥ प्रधानहोमान्वाधानात्पूर्वंस
र्वतोभद्रपीठदेवतान्वाधानंकृतंचेदत्रहोममाचार्यएवकुर्यात् ॥ ततऋत्विजःआवाहनोक्ततत्तन्मंत्रैर्ऋष्यादिस्मरणपूर्वकंअन्वाधा
नोत्कीर्तितद्रव्यैरन्वाधानोत्कीर्तितसंख्ययाहोमंकुर्युः ॥ अत्रविनियोगवाक्येहोमेविनियोगइतिविशेषोद्रष्टव्यः ॥ अर्कःपलाशः
खदिरःअपामार्गःपिप्पलःउदुंबरःशमीदूर्वाःकुशाइतिक्रमेणसमिधः॥ एतासामलाभेपलाशसमिधः॥ तत्रसर्पिर्मधुदध्यक्ताःप्रादे
शमात्र्योवांतरशाखारहिताःमूलतोद्व्यंगुलप्रदेशंविहायमध्यमानामिकांगुष्ठैर्गृहीत्वासमिधोहोतव्याः ॥ तत्रसमिदेकैका दूर्वाद
र्भाणांचत्रिकंत्रिकं॥ दूर्वाःसप्तपत्रयुताःपंचपत्रयुतावाअच्छिन्नाग्राह्याः॥दर्भाःसाग्राःअभावेऽग्ररहिताअपि॥ आज्यंस्रुवेणदर्व्या
वाहोतव्यं ॥ अंगुष्ठाग्रेणग्रासमात्रंचरुंगृहीत्वांगुष्ठेननिष्पीड्यसंहतांगुलिनोत्तानेनदक्षिणेनहस्तेनजुहुयादितिसंप्रदायः॥ समाप्ते
प्रधानहोमेआचार्योऽत्रचेदन्वाधानंपीठदेवताहोमस्यकृतंतदात्रतदीयंहोमंकृत्वास्थापितदेवतानामुत्तरपूजनंविधायप्रसीदंतुभवं
तइतितान्संप्रार्थ्यान्वाधानोत्कीर्तितपक्षानुसारेणवारुणीहोमादिस्विष्टकृदादिवासंस्रावहोमात्प्राक्कर्मकुर्यात् ॥ समिधांनस्विष्ट
कृत् ॥ ततःसपत्नीकोयजमानोयत्रयत्रबलिसमर्पणंकर्तव्यंभवतितास्मिंस्तस्मिन्देशेऽग्नेःपश्चादेवोपविश्यअग्न्यायतनस्यसमंतादिक्षु
माषभक्तबलीन्दद्यात् ॥ प्रतिबलिसमर्पणंसाक्षतंजलंपात्रेक्षिपेत् ॥ त्रातारमिंद्रमित्यस्यविश्वेदेवाइंद्रस्त्रिष्टुप् इंद्रप्रीत्यर्थबलिदा
नेवि० ॥ ॐ त्रातारमिंद्रमवि० इंद्रायसांगायसपरिवारायसायुधायसशक्तिकायअमुंसदीपंमाषभक्तबलिंसमर्पयामिइतिसाक्षतं
जलंपात्रेत्यक्त्वा भोइंद्रबलिंभक्षदिशंरक्षममसकुटुंबस्यायुःकर्ताक्षेमकर्ताशांतिकर्तापुष्टिकर्तातुष्टिकर्तानिर्विघ्नकर्तावरदोभवेति
प्रार्थयेत् ॥ अनेनबलिदानेनइंद्रःप्रीयतामितिततोवदेत् ॥ अग्नेनयसुपथाइत्यस्यविश्वेदेवाअग्निस्त्रिष्टुप् अग्निप्रीत्यर्थबलि०

ॐ अग्नेनयसुपथा० अग्नयेसांगाय० भोअग्नेबलिंभक्ष० भव अग्निःप्रीयतां॥ इमंयमेत्यस्यविश्वेदेवायमस्त्रिष्टुप् यमप्रीत्यर्थवलि० ॐ इमंयमप्रस्तर० यमायसांगाय० भोयमबलिंभक्ष० भव यमःप्रीयतां ॥ असुन्वंतमित्यस्याग्निर्निर्ऋतिस्त्रिष्टुप् निर्ऋतिप्रीत्यर्थ वलि० ॐ असुन्वंतमयंजमान० निर्ऋतयेसांगाय० भोनिर्ऋते० भव निर्ऋतिःप्रीयतां ॥ तत्त्वायामीत्यस्यविश्वेदेवावरुणस्त्रि ष्टुप् वरुणप्रीत्यर्थबलि० ॐ तत्त्वायामि० वरुणायसांगाय० भोवरुण० वरुणःप्रीयतां ॥ आनोनियुद्भिरित्यस्यविश्वेदेवावा युस्त्रिष्टुप् वायुप्रीत्यर्थवलि० ॐ आनोनियुद्भिः० वायवेसांगाय० भोवायो० वायुःप्रीयतां ॥ संतेपयाꣳसीत्यस्याग्निःसोमस्त्रि ष्टुप् सोमप्रीत्यर्थबलि० ॐ संतेपयाꣳसि० सोमायसांगाय० भोसोमबलिंभक्ष० सोमःप्रीयतां ॥ अभित्वेत्यस्यविश्वेदेवाईशा नोगायत्रीईशानप्रीत्यर्थबलि० ॐ अभित्वादेव० ईशानायसां० भोईशान० ईशानःप्रीयतां ॥ ततोग्रहादिवलयोग्रहपीठस मीपे ॥ आसत्येनेत्यस्यविश्वेदेवाःसूर्यस्त्रिष्टुप् सूर्यप्रीत्यर्थवलि० ॐ आसत्येनरजसा० सूर्यायसांगायसपरिवारायसायुधायस शक्तिकायेश्वराग्निरूपाधिदेवताप्रत्यधिदेवतासहितायेमंसदीपमाषभक्तवलिंसमर्पयामि भोसूर्यइमंवलिंगृहाणममसकुटुंबस्य० सूर्यःप्रीयतां ॥ आप्यायस्वेत्यस्यसोमःसोमोगायत्री सोमप्रीत्यर्थे० ॐ आप्यायस्वसमेतुते० सोमायसांगाय० सशक्तिकायउ मारूपाधिदेवताप्रत्यधिदेवतासहितायइमंसदीपं० भोसोमइमंबलिं० सोमःप्रीयतां ॥ अग्निर्मूर्धेत्यस्यप्रजापतिरंगारकोगायत्री अंगारकप्रीत्यर्थव० ॐ अग्निमूर्धा० अंगारकायसांगाय० स्कंदभूमिरूपाधि० भोअंगारकइमं० अंगारकःप्रीयतां॥उद्बुध्यस्वा ग्नइत्यस्याग्निर्बुधस्त्रिष्टुप् बुधप्रीत्यर्थव० ॐ उद्बुध्यस्वाग्ने० बुधायसांगाय० नारायणविष्णुरूपाधि० भोबुधइमं० बुधःप्रीयतां ॥ बृहस्पतेअतीत्यस्यविश्वेदेवाबृहस्पतिस्त्रिष्टुप् बृहस्पतिप्रीत्यर्थवलि० ॐ बृहस्पतेअतिय० बृहस्पतयेसांगाय० ब्रह्मेंद्ररूपाधि०

भोबृहस्पतइमं० बृहस्पतिःप्रीयतां ॥ शुक्रंतइत्यस्यविश्वेदेवाःशुक्रस्त्रिष्टुप् शुक्रप्रीत्यर्थंबलि० ॐ शुक्रंतेअन्यद्यजतं० शुक्राय सांगाय० इंद्रेंद्राणीरूपाधि० भोशुक्रइमंब०शुक्रःप्रीयतां॥शंनोदेवीरित्यस्यप्रजापतिःशनैश्चरोगायत्रीशनैश्चरप्रीत्यर्थंब० ॐ शंनो देवीरभिष्टय० शनैश्चरायसांगाय० यमप्रजापतिरूपाधि० भोशनैश्चरइमं० शनैश्चरःप्रीयतां ॥ कयानइत्यस्यविश्वेदेवाराहु र्गायत्री राहुप्रीत्यर्थंबलि० ॐ कयानश्चित्र० राहवेसांगाय० कालसर्परूपाधि० भोराहोइमंबलिं० राहुःप्रीयतां ॥ केतुंकृण्व न्नित्यस्यप्रजापतिःकेतुर्गायत्रीकेतुप्रीत्यर्थंबलि० ॐ केतुंकृण्वन्न० केतवेसांगाय० चित्रगुप्तब्रह्मरूपाधि० भोकेतोइमंबलिं० केतुःप्रीयतां ॥ केतुशब्दस्यबहुवचनांतत्वपक्षेकेतुभ्यःसांगेभ्यःसपरिवारेभ्यःसायुधेभ्यःसशक्तिकेभ्यःचित्रगुप्तब्रह्मरूपाधि देवताप्रत्यधिदेवतासहितेभ्यइमंसदीपंमाषभ० भोकेतवःइमंबलिंगृह्णीतममसकुटुंबस्यआयुःकर्तारःक्षेमकर्तारःशांतिकर्तारःपु ष्टिकर्तारस्तुष्टिकर्तारोनिर्विघ्नकर्तारोवरदाभवत केतवःप्रीयंतामित्यूहः॥गणानांत्वेत्यस्यविश्वेदेवागणपतिर्जगती गणपतिप्रीत्य र्थंबलि० ॐ गणानांत्वागणपतिꣳ० गणपतयेसांगाय० सिद्धिबुद्धिसहितायेमं० भोसिद्धिबुद्धिसहितगणपतेइमं० गणपतिः प्रीयतां ॥ जातवेदसइत्यस्ययाज्ञिक्योदेवताउपनिषदोदुर्गात्रिष्टुप् दुर्गाप्रीत्यर्थंबलि० ॐ जातवेदसेसुन० दुर्गायैसांगायैसपरि वारायैसायुधायैसशक्तिकायैइमंसदीपं० भोदुर्गेइमंबलिंगृहाणममसकुटुंबस्यायुःकर्त्रीक्षेमकर्त्रीशांतिकर्त्रीपुष्टिकर्त्रीतुष्टिकर्त्रीवर दाभव दुर्गाप्रीयतां ॥ वायोशतमित्यस्यविश्वेदेवावायुरनुष्टुप् वायुप्रीत्यर्थंबलि० ॐ वायोशतꣳह० वायवेसांगाय० भोवायो इमं० वायुःप्रीयतां ॥ घृतंघृतपावानइत्यस्यसोमआकाशोयजुः आकाशप्रीत्यर्थंब० ॐ घृतंघृतपावानः० आकाशायसांगाय० इमंसदीपं० भोआकाशइमंबलिं० आकाशःप्रीयतां ॥ यावांकशेत्यस्यसोमोश्विनौगायत्रीअश्विप्रीत्यर्थंबलि० ॐ यावांकशा

मधुं० अश्विभ्यांसांगाभ्यांसपरिवाराभ्यांसायुधाभ्यांसशक्तिकाभ्यांइमं० भोअश्विनौइमंवलिंगृह्णीतंममसकुटुंवस्यायुःकर्तारौ क्षेमकर्तारौशांतिकर्तारौपुष्टिकर्तारौतुष्टिकर्तारौनिर्विघ्नकर्तारौवरदौभवतं अश्विनौप्रीयेतां ॥ वास्तोष्पतइत्यस्यप्रजापतिर्वास्तोष्पतिस्त्रिष्टुप् वास्तोष्पतिप्रीत्यर्थंबलि० ॐ वास्तोष्पते॒प्रति॑० वास्तोष्पतयेसांगाय० इमं० भोवास्तोष्पतेइमंवलिं० वास्तोष्पतिः प्रीयतां ॥ बलेर्विप्रकृष्टत्वेत्विममित्यत्रामुमितिवदेत्सर्वत्र ॥ तत्तत्प्रदेशोपविष्टोवलिसमर्पणंकुर्यादित्यस्मिन्कल्पेतुसर्वत्रेममित्येवनत्वमुमिति॥ ततःक्षेत्रपालायकुंकुमारक्तपुष्पादियुतंसदीपंसतांवूलंसदक्षिणंमाषभक्तवलिंदद्यात् ॥ अत्रावाहनादिपूजनमपि केचित्कुर्वंति ॥ क्षेत्रस्यपतिनेत्यस्यविश्वेदेवाःक्षेत्रपालोनुष्टुप् क्षेत्रपालप्रीत्यर्थंवलिदाने० ॐ क्षेत्र॑स्य॒पति॑ना॒व॒य९० क्षेत्रपालायसांगायसशक्तिकायभूतप्रेतडाकिनीशाकिनीब्रह्मराक्षसवेतालादिपरिवारयुतायेमंकुंकुमारक्तपुष्पादियुतंसदीपंसतांवूलंसदक्षिणंमाषभक्तवलिंसमर्पयामि भोभोक्षेत्रपालसपरिवारेमंवलिं० क्षेत्रपालःप्रीयतामिति ॥ ततःशूद्रेणदुर्ब्राह्मणेनवातंवलिंदूरदेशंप्रापयेत् ॥ तत्पृष्ठतः शांतिपाठपूर्वकंस्वयंजलंसिंचन्साचार्यःसपत्नीकोगृहाद्वहिर्गत्वाक्षेत्रपालायनमइतिक्षेत्रपालंनमस्कृत्यहस्तौपादौप्रक्षाल्यप्रत्येत्याचामेत् ॥ आचार्यपत्न्योरपिहस्तपादप्रक्षालनमाचमनंच ॥ तत्रपत्न्याःसकृदमंत्रकं ॥ ततोयजमानपत्न्याचार्याअग्निसमीपमागत्याचम्यस्वायतनेषूपविशेयुः॥ ततआचार्योदर्व्यांस्रुवेणद्वादशगृहीतमष्टगृहीतंचतुर्गृहीतंवाज्यंगृहीत्वादर्व्या अपूर्णतायांआज्येनाभिपूर्यतदुपरिवस्त्रयुतंचंदनादिभूषितंफलंनिधाय इडनामायमग्निरित्यनुसंधाययजमानतत्पत्न्यमात्यान्वारब्धस्तिष्ठन् ॥ समुद्रादूर्मिरितिमंत्रत्रयस्ययाज्ञिक्योदेवताउपनिषदोग्निस्त्रिष्टुप् ॥ मूर्धानंदिवइत्यस्यसोमोग्निर्वैश्वानरस्त्रिष्टुप् ॥ पुनस्त्वेत्यस्याग्निर्वसुरुद्रादित्यास्त्रिष्टुप् ॥ पूर्णादर्वीत्यस्यविश्वेदेवाःशतक्रतुरनुष्टुप् ॥ सप्ततेअग्नइत्यस्यसप्तवानग्निर्जगती सर्वे

षांपूर्णाहुतिहोमेवि० समुद्रादूर्मि० ३ मूर्धानंदिवो० १ पुनस्त्वादित्या० १ पूर्णादर्विपरा० १ सप्ततेअग्ने० १ घृतेनस्वाहा एतैः पूर्णाहुतिंजुहुयात् ॥ यजमानःअग्नयेग्नयेवैश्वानरायवसुरुद्रादित्येभ्यःशतक्रतवेसप्तवतेग्नयेचेदंनममेतित्यजेत् ॥ ततआचार्यादयः ॐपूर्णाहुतिमुत्तमांजुहोति सर्वं० तिष्ठति पूर्णाहुतिमु० सयत्वायेत्याचारात्पठेयुः ॥ ततआचार्यःसंस्रावहोमादिसंस्थाजपांतंकर्मकुर्यात् ॥ ऋत्विजामपिसंस्थाजपेनोपस्थानं ॥ ततोयजमानआचार्यादिभ्योजपहोमफलंगृह्णीयात्नवा ॥ ततोब्रह्मसदस्यर्त्विक्सहितआचार्यःप्राङ्मुखउदङ्मुखोवातिष्ठन्ग्रहवेदेरीशान्यामग्नेःपश्चिमतोवासंमृष्टेगोमयोपलिप्तेरंगवल्ल्यलंकृतेचतुष्पदंदीर्घचतुरश्रंसोत्तरच्छदंपीठंनिधायतत्रोदगग्रानमूलांस्त्रीन्हरितान्दर्भानास्तीर्यानास्तीर्यवाततत्रोपविष्टंधृतनवकंचुकीवस्त्रयापत्न्यासहितंसामात्यंप्राङ्मुखंपरिहिताहतवस्त्रंयजमानंस्थापितकलशोदकेनपात्रांतरेगृहीतेनतत्रत्यपंचपल्लवैर्दूर्वाकुशसहितैरभिषिंचेत् ॥ तत्रमंत्राः आपोहिष्ठा०३ हिरण्यवर्णाःशुचयः०४ पवमानःसुवर्जनः १७एतेषामृष्यादिकंकलशसंबंधिजपनिरूपणेउक्तं अभिषेकेविनियोगइतिविनियोगवाक्येविशेषः ॥ सुरास्त्वामभिषिंचंतुब्रह्मविष्णुमहेश्वराः० सर्वकामार्थसिद्धयेइत्येतैः ॥ ग्रहाणामादिरादित्योलोकरक्षणकारकः ॥ विषमस्थानसंभूतांपीडांहरतुतेरविः ॥ १ ॥ रोहिणीशःसुधामूर्तिःसुधागात्रःसुधाशनः ॥ विषमस्थानसंभूतांपीडांहरतुतेविधुः ॥ २ ॥ भूमिपुत्रोमहातेजाजगतांभयकृत्सदा ॥ वृष्टिकृद्वृष्टिहर्ताचपीडांहरतुतेकुजः ॥ ३ ॥ उत्पातरूपोजगतांचंद्रपुत्रोमहाद्युतिः ॥ सूर्यप्रियकरोविद्वान्पीडांहरतुतेबुधः ॥ ४ ॥ देवमंत्रीविशालाक्षःसदालोकहितेरतः ॥ अनेकशिष्यसंपूर्णःपीडांहरतुतेगुरुः ॥ ५ ॥ दैत्यमंत्रीगुरुस्तेषांप्राणदश्चमहामतिः ॥ प्रभुस्ताराग्रहाणांचपीडांहरतुतेभृगुः ॥६॥ सूर्यपुत्रोदीर्घदेहोविशालाक्षःशिवप्रियः ॥ मंदचारःप्रसन्नात्मापीडांहरतुतेशनिः ॥७॥ महाशिरामहावक्त्रोदीर्घदंष्ट्रोमहाबलः ॥

अतनुश्चोर्ध्वकेशश्चपीडांहरतुतेतमः ॥ ८ ॥ अनेकरूपवर्णैश्चशतशोथसहस्रशः ॥ उत्पातरूपोजगतांपीडांहरतुतेशिखी ॥ ९ ॥
एतैर्मंत्रैः देवस्यत्वेत्यादिभिर्मंत्रैश्चाभिषिंचेत् ॥ ततःकलशोदकेनान्येनचजलेनतैलाभ्यंगसर्वौषध्यनुलेपनपूर्वकंसुस्नातौदंपती
अहतवासांसिपरिधायअभिषेकवासांसिआचार्यायदत्वाश्वेतचंदनपुष्पालंकारान्धृत्वाग्नेःपश्चादुपविशतोदक्षिणतःपत्नी ॥ तत
आचार्येणसहयजमानो मानस्तोकइतिभस्मधृत्वाचार्यादीन्पादप्रक्षालनार्घ्यगंधाक्षतपुष्पैःसंपूज्यतेभ्योदक्षिणांदद्यात् तत्राचा
र्यायगौः ब्रह्मणेनड्वान् सदस्यायाश्वः सूर्यायगौः सोमायशंखः अंगारकायरक्तोनड्वान् वुधायसुवर्णं गुरवेपीतवस्त्रं शुक्रायश्वे
तोश्वः शनयेकृष्णागौः राहवेकालायसः केतवेहस्तीछागोवेतितत्तद्धोमकर्त्रेव्यवस्थयादद्यात् ॥ यदिनवभ्योधिकाऋत्विजस्त
दातेभ्यःप्रत्येकमेकैकागौर्देया न्यूनत्वेतुगोशंखादिनवदक्षिणायथासंभवंतेभ्यएवदेयाः ॥ अथगवादीनांनवानांक्रमेणमंत्राः ॥
कपिलेसर्वदेवानांपूजनीयासिसर्वदा ॥ सर्वदेवमयीयस्मादतःशांतिंप्रयच्छमे १ त्वंपुरासागरोत्पन्नोविष्णुनाविधृतःकरे ॥ पांच
जन्यंप्रदास्यामिह्यतःशांतिंप्रयच्छमे २ धर्मस्त्वंवृषरूपेणजगदानंदकारक ॥ अष्टमूर्तेरधिष्ठानमतः॰ ३ हिरण्यगर्भ॰ ४ पीत
वस्त्रमिदंयस्माद्वासुदेवस्यवल्लभं ॥ प्रदानात्तस्यमेविष्णुःसदाशांतिंप्रयच्छतु ५ विष्णुस्त्वमश्वरूपेणयस्मादमृतसंभवः ॥ सूर्यस्य
वाहनंनित्यमतः॰ ६ यस्मात्त्वंपृथिवीसर्वाधेनोवैकृष्णसन्निभे ॥ सर्वपापहरानित्यमतः॰ ७ यस्मादायसकार्याणित्वदधीनानिस
र्वदा ॥ लांगलाद्यायुधादीनितस्माच्छांतिं॰ ८ सुप्रतीकगजेंद्रत्वंदेवेंद्रस्यचवाहनं ॥ दानेनानेनदत्तेनसदाशांतिंप्रयच्छमे ९
छागपक्षे ॥ यस्मात्त्वंछागयज्ञानामंगत्वेनव्यवस्थितः ॥ यानंविभावसोर्नित्यमतः॰ १० एतेषामर्थानांविषममूल्यकत्वेपिन्यू
नलाभवद्भ्यःसुवर्णदानेनलाभसाम्यंसंपादनीयं ॥ उक्तदक्षिणानामभावेसर्वेभ्यस्तुष्टिकरंहिरण्यमेववादद्यात् ॥ अतोनात्रमूल्या

ध्यायोक्तमूल्यदानं ॥ सर्वेष्वपिपक्षेषुआचार्यायद्विगुणंदद्यात् ॥ कर्मणःसाद्गुण्यार्थमन्येभ्योब्राह्मणेभ्योभूयसींदद्यात् ॥ ततो ग्रहपीठदेवतानांमंडपश्चेत्तद्देवतानांचयजमानःपंचोपचारैरुत्तरपूजनंविधायसप्रणवैस्तत्तन्नाममंत्रैःआदित्यादिदेवताभ्योनमइ तिसमुदितरूपेणवापुष्पांजलिंसमर्पयेत् ॥ ततआचार्योग्रहपीठदेवतानांमंडपश्चेत्तद्देवतानांचोद्वासनंउत्तिष्ठेतिमंत्रेणकुर्यात् ॥ ततोयजमानः इदंग्रहपीठंसप्रतिमंसकलशंसोपस्करमाचार्यतुभ्यमहंसंप्रददेइत्याचार्यायसमर्पयेत् ॥ मंडपश्चेत्सोपस्करमंडपस हितमिदंग्रहपीठमिति ॥ ततआचार्यःअग्निंसंपूज्य ॥ गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर ॥ यत्रब्रह्मादयोदेवास्तत्रगच्छहुता शन ॥ इतिविसृजेत् ॥ अथयजमानः कांस्यपात्रगताज्येसकुटुंबःस्वप्रतिरूपमवेक्ष्य ॥ आज्यंतेजःसमुद्दिष्टमाज्यंपापहरंस्मृतं ॥ आज्यंसुराणामाहारआज्येलोकाःप्रतिष्ठिताः ॥ अलक्ष्मीर्यायच्चदौस्थ्यंममगात्रेष्ववस्थितं ॥ तत्सर्वंक्षपयाज्यत्वंलक्ष्मींपुष्टिंचव र्धय ॥ इतिपठित्वातदाज्यंसदक्षिणंब्राह्मणायदद्यात् ॥ ततोयावत्यःप्रधानाहुतयस्तावतोब्राह्मणान्भोजयेत् यावंतितदाहुतिश तानितावतोवा यावंतितत्सहस्राणितावतोवा यथासंभवंवा ॥ ततोभुक्तवद्भ्योयथाविभवंदक्षिणांदत्वाक्षमाप्यतदाशिषोगृहीत्वा प्रणिपत्य ॥ अनेनग्रहयज्ञाख्येनकर्मणादित्यादयःप्रीयंतांनममेतीश्वरार्पणंकृत्वाहृष्टमनाःसुहृद्युतोभुंजीत ॥ इत्योकोपाह्वगणे शदीक्षिततनूजगोपीनाथदीक्षितविरचितःसंस्काररत्नमालास्थोग्रहमखप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २६८ ॥ पंचकुंडीमंडपप्रकारः ॥

श्रीगणेशायनमः ॥ देवप्रतिष्ठांअश्वत्थोद्यापनंवाकर्तुंतत्तत्स्थानादुत्तरतःपूर्वतोवाउत्तममंडपेषोडशहस्तं मध्यममंडपेचतुर्दशह स्तंदशहस्तमष्टहस्तंवाचतुर्द्वारंमंडपंकुर्यात् ॥ तत्रमध्यस्तंभचतुष्टयमध्येवेदींहस्तोच्छ्रितांकुर्यात् ॥ तस्याःसमंततश्चतुर्दिक्षुत्रयो

दशांगुलांतरंहस्तमात्रांतरंवात्यक्त्वाकुंडानिहस्तमात्राणिकुर्यात् ॥ तत्रप्राच्यांचतुरस्रंदक्षिणयोनि ॥ दक्षिणेर्धचंद्रंदक्षिण योनि ॥ पश्चिमेवर्तुलंपश्चिमयोनि ॥ उत्तरेपद्मकुंडंपश्चिमयोनि ॥ ईशान्यांचतुरस्रंवृत्तंवाआचार्यकुंडंदक्षिणयोनि पश्चिमेवा कुर्यात् ॥ मंडपस्येशान्यामुत्तरस्यांवादिशिचतुर्हस्तांतरेणमंडपार्धमानेनतृतीयभागेनवाचतुर्थभागेनवाप्रासादमानेनवाचतु ष्कोणंकोणध्वजस्तंभयुतंचतुर्द्वारंपूर्वमुखमुदङ्मुखंवास्नानमंडपंकुर्यात् ॥ तन्मध्यप्रदेशेवेदिकाद्वयंद्विहस्तंचतुर्थांशोच्छ्रायंद्वि मेखलंकुर्यात् ॥ अथवामहावेद्यर्धविस्तीर्णंतदुच्छ्रायोच्छ्रयंतदर्धोच्छ्रायंवाकुर्यात् ॥ महामंडपस्यपश्चिमतःचतुर्हस्तंपञ्चस्तंवाज लाधिवासमंडपंकुर्यात् ॥ एवंमंडपादिसंपाद्यपूर्वदिनेपूर्वतनचतुर्थदिनेवायथाविभवंसंभृतसंभारःसंकल्पादिकुर्यात् ॥ ॥ छ ॥

## ॥ २६९ ॥ संकल्पऋत्विग्वरणंच ॥

श्रीः ॥ तत्रादौयजमानःकूष्मांडहोमब्रह्मकूर्चादिभिरात्मतनुंपावयित्वामुहूर्तात्पूर्वदिनेकृतमंगलस्नानःशुक्लमाल्यानुलेपनःसभा र्यःस्वासनेउपविश्याचम्यपवित्रपाणिःप्राणानायम्यदेशकालौस्मृत्वाआत्मनःपापक्षयपूर्वकं दशपूर्वान्दशपरानात्मनासहैकविंश तिपुरुषान्पितृतोमातृतश्चोद्धर्तुकामोहंश्रीपरमेश्वरप्रीत्यर्थं यथाज्ञानेनयथामिलितोपचारद्रव्यैर्देशकालानुसारतःएकाहाद्यधि वासप्रकारेणआचार्यब्रह्मसदस्यादिद्वाराविष्णुप्रतिष्ठांशिवप्रतिष्ठांवाकरिष्ये ॥ तथाचपत्नीपुत्रादिसहितस्यममप्रतिमापिंडिकाकुं डतोरणस्तंभादिषुप्रधानांगकर्मसुचहीनाधिकांगतादिकर्मण्ययथाकरणादिसूचितसर्वानिष्टनिवर्हणार्थअस्यकर्मणःसाद्गुण्यार्थंच ग्रहमखंतिलैःशांतिहोमंचकरिष्ये ॥ आदौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंस्वस्तिवाचनंमातृकापूजनंनांदीश्राद्धंआचार्यवरणं चकरिष्ये ॥ तानिकृत्वाआचार्यादीन्वृणुयात् ॥ यथा ॥ अमुकप्रवरान्वितोऽमुकगोत्रोत्पन्नोऽमुकशाखाध्यायीअमुकशर्मा

अहं ॥ अमुकप्रवरोपेतममुकगोत्रोत्पन्नममुकशाखाध्यायिनममुकशर्माणंअमुकदेवप्रतिष्ठाख्येकर्मणिमुख्यकुंडेविहितहोमंकर्तुमा चार्यत्वामहंवृणे ॥ आचार्योवृतोस्मियथाज्ञानतःकर्मकरिष्यामीतिवदेत् ॥ एवंब्रह्माणंसदस्यंप्रतिकुंडमाचार्यं ब्रह्माणंच ॥ एको वाब्रह्मा ॥ प्रतिकुंडंऋत्विजोजापकादींश्चवृत्वासर्वान्मधुपर्कादिनार्हयित्वाप्रार्थयेत् ॥ आचार्यप्रार्थना ॥ यथाशक्रस्यवागीश आचार्यःसर्वकर्मसु ॥ तथामयात्वमाचार्योवृतोऽस्मिन्सवकर्मणि ॥ मंत्रमूर्तिर्भवान्नाथःसंसाराघौघनाशनः ॥ श्रीदेवस्यप्रतिष्ठा यांकुरुकर्मयथोदितं ॥ त्वत्प्रसादान्निजेष्टंचसमग्रंफलमाप्नुयां ॥ संसारभयभीतेनह्येषयज्ञःप्रकारितः ॥ प्रारब्धस्त्वत्प्रसादेननि र्विघ्नंमेभवत्विति ॥ ॥ ब्रह्माणं–यथाचतुर्मुखोब्रह्माशक्रादीनांमखेप्रभुः ॥ तथात्वंममयज्ञेस्मिन्ब्रह्मत्वेनवृतोह्यसि ॥ ॥ सदस्यं–त्वंनोगुरुःपितामातात्वंप्रभुस्त्वंपरायणं ॥ त्वत्प्रसादाच्चविप्रर्षेसर्वमेस्यान्मनोगतं ॥ आपद्विमोक्षणार्थायकुरुयज्ञमतं द्रितः ॥ ऋत्विग्भिःसहितःशुद्धैःसंयतैःसुसमाहितैः ॥ आचार्येणचसंयुक्तःकुरुकर्मयथोदितं ॥ ॥ गणपं–प्रारिप्सितस्यय ज्ञस्यजपस्यहवनस्यच ॥ निर्विघ्नेनसमाप्त्यर्थंत्वामहंगणपंवृणे ॥ ॥ उपद्रष्टारं–भगवन्सर्वधर्मज्ञसर्वधर्मभृतांवर ॥ वितते मयज्ञेस्मिन्नुपद्रष्टाभवद्द्विज ॥ सर्वेषांसमुच्चयेनप्रार्थना ॥ अस्ययागस्यनिष्पत्तौभवंतोभ्यर्थितामया ॥ सुप्रसन्नाःप्रकुर्वंतुकर्मेदं विधिपूर्वकं ॥ अस्मिन्कर्मणियेयेतुवृतागुरुमुखामया ॥ सावधानाःप्रकुर्वंतुस्वंस्वंकर्मयथोदितं ॥ इतिसर्वान्संपूज्यसंप्रार्थ्यसा ष्टांगंप्रणमेत् ॥ तेचसर्वेप्रत्येकं वृतोस्मियथाज्ञानतःकर्मकरिष्यामीतिवदेयुः ॥ इति ॥ ॥ छ ॥ ॥ छ ॥

---

१ ऋत्विग्वरणंप्रक्रम्य–संपूज्यमधुपर्केणऋत्विजःकर्मकारयेत् । अन्यथाविफलंकर्मभवतीहनसंशयः । मधुपर्कश्चाच्येशाखयाकार्यः।मंत्रवद्व रणएवमधुपर्कइतिकेचित् । मधुपर्कस्यवरणांगत्वाद्यत्रवरणंतत्रमधुपर्कइतिवृत्तिकृत् । वस्तुतस्तुऋत्विजोवृत्वामधुपर्कमाहरेदित्यत्रक्रममात्रविधाना

## ॥ २७० ॥ मंडपपूजाचंडेश्वरोक्ता ॥



श्रीः ॥ अथाचार्यःसयजमानःसर्त्विक्पूर्णकुंभदध्यक्षतफलपुष्पसुवासिनीभिःसहितोमंगलघोषैःभद्रंकर्णेभिःकनिक्रददित्यादि शाकुनसूक्तंपठन्मंडपंगच्छेत्॥ आचार्योमंडपप्रादक्षिण्येनपश्चिमद्वारिजानुभ्यामवनिंगत्वा स्योनापृथिवीतिभूमिंध्यायन्अर्घ्यं दद्यात् ॥ तत्रादौ ॥ उद्धृतासिवराहेणकृष्णेनशतबाहुना॥ दंष्ट्राग्रैर्लीलयादेवियज्ञार्थंप्रणमाम्यहं ॥ इतिनमस्कारः ॥ ब्रह्मणा निर्मितेदेविविष्णुनाशंकरेणहि ॥ पार्वत्याचैवगायत्र्यास्कंदवैश्रवणेनच ॥ यमेनपूजितेदेविधर्मेणविजिगीषुणा ॥ सौभाग्यंदेहिं पुत्रांश्चधनंरूपंचदेहिमे ॥ गृहाणार्घ्यंमयादत्तंसौभाग्यंचप्रयच्छमे ॥ इत्यर्घ्यंदत्वापश्चिमद्वारेणमंडपंप्रादक्षिण्येनप्रविश्यनैर्ऋती वारुण्योर्मध्येपूर्वोत्तराभिमुखाउपविशेयुः ॥ आचार्योवेद्याःपश्चिमतउपविश्यआचम्यप्राणानायम्यदेशकालौस्मृत्वाअमुककर्म णियजमानेनवृतोहंमंडपपूजादिविहितंकर्मकरिष्ये ॥ गणेशंपूजयित्वाशरीरशुद्ध्याकर्माधिकारार्थंआसनादिन्यासभूशुद्ध्यादि पवनपावनन्यासादिनात्मानंपावयित्वाप्रतिष्ठामंडपांतः यदत्रसंस्थितंभूतं० ॥ जितंतेपुंडरीकाक्षनमस्तेविश्वभावन ॥ सुब्रह्मण्य नमस्तेस्तुमहापुरुषपूर्वज ॥ भूतानिराक्षसावापियेत्रतिष्ठंतिकेचन ॥ तेसर्वेप्यपगच्छंतुयज्ञमत्रकरोम्यहं ॥ अपसर्पंतुतेभूता० ब्रह्मकर्मसमारभे ॥ इतिलाजगौरसर्षपान्सर्वतोविकिरेत् ॥ ततःशुचीवोहव्येतितृचेनकुशैःपंचगव्येनआपोहिष्ठेतितृचेनअद्भ्यः संभूतइत्युत्तरनारायणेनचाद्भिःप्रोक्षणंकार्यं ॥ ततःकृतांजलिःभद्रंकर्णेस्वस्तिनइतिमंत्रद्वयंपठेत् ॥ देवाआयांतु यातुधाना



---

न्मधुपर्कस्यनवरणांगत्वंकिंतूभयोर्ऋत्विगंगत्वं । तेनस्मार्तेमंत्रवद्वरणाभावेपिऋत्विक्सत्वान्मधुपर्कोभवति । तेनावरणोत्तरमाशौचादिपाते नऋ त्विक्परावृत्तिरित्युक्तं ॥ शां० र० ॥

अपयांतु विष्णोदेवयजनंरक्षस्व भूमौप्रादेशंकुर्यात् ॥ ततोवेदिकाग्नेयकोणेस्थूणांवसुदामावाह्यपूजयेत् ॥ नैर्ऋत्यकोणेभद्रां ॥
वायव्यकोणेअदितिं ॥ ईशानकोणेनंदांचपूजयेत् ॥ ततःपश्चिमद्वारेणवहिर्निर्गत्यमंडपप्रादक्षिण्येनमंडपद्वाराद्बहिर्हस्तांतेपूर्वे
श्वत्थतोरणंसुदृढनामकंशंखचिह्नितं(अग्निमीळेमधुच्छंदाअग्निर्गायत्री)॥ॐ अग्निमीडेपुरोहितंयज्ञस्यदेवमृत्विजं॥होतारंरत्न
धातमं॥ इतिमंत्रेणनिधाय ॥ सुदृढतोरणायनमइतिनाममंत्रेणगंधादिभिःसंपूज्यपुष्पमालादिशोभितंकुर्यात् ॥ राहुबृहस्पती
तत्रन्यसेत् ॥ तत्रैकःकलशःस्थाप्यः॥ यथा॥ महीद्यौरितिभूमिंस्पृष्ट्वा ओषधयःसमितिधान्यराशिंकृत्वा तदुपरिआंजिघ्रइति
कलशंसंस्थाप्य आपोवाइदंसं॰इतिजलेनापूर्य गंधद्वारामितिगंधंप्रक्षिप्य याओषधीरितिसर्वौषधीः ओषधयःसमितियवान्
कांडात्कांडादितिदूर्वाः अश्वत्थेवइतिपंचपल्लवान् स्योनापृथिवीतिसप्तमृदः याःफलिनीरितिफलं बृहस्पतेजुषस्वनइतिपंचरत्ना
निअग्नेरेतइतिहिरण्यंचप्रक्षिप्य युवासुवासाइतिवस्त्रेणरक्तसूत्रेणवावेष्ट्य पूर्णादर्वीतितदुपरिपूर्णपात्रंन्यसेत् ॥ तस्मिन्कलशे
ध्रुवावाहनंपूजनंच ॥ ततोदक्षिणेऔदुंबरंसुभद्रनामकंचक्रचिह्नितंतोरणं ॥ ॐ इषेत्वोर्जेत्वावायवस्थोपायवस्थदेवोवःसविता
प्रार्पयतुश्रेष्ठतमायकर्मणे ॥ इतिनिधायसुभद्रतोरणायनमःइतिपूर्ववत्संपूज्यपूर्ववच्चंदनादिचर्चितंकृत्वासूर्यमंगारकंचतत्रन्य
सेत् ॥ तत्रैकःकलशःपूर्ववत्स्थाप्यः॥ तत्रधरामावाहयेत्पूजयेच्च ॥ पश्चिमेप्लाक्षंसुकर्मनामकंगदाचिह्नितंतोरणं ॥ ॐ अग्नआ
याहिवीतयेगृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ इतिनिधायसुकर्मतोरणायनमइतिपूर्ववत्संपूज्यचंदनादिचर्चितंकृत्वा
शुक्रंबुधंचतत्रन्यसेत् ॥ तत्रपूर्ववत्कलशंसंस्थाप्यतत्रवाक्पतिमावाह्यपूजयेत् ॥ ॥ ततउत्तरे ॥ वटतोरणंसुहोत्रनामकंपद्म
चिह्नितं ॥ ॐ शंनोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः॥ इतिमंत्रेणनिधायसुहोत्रतोरणायनमः इतिपूर्ववत्सं

पूज्यचंदनादिचर्चितंकृत्वासोमकेतुशनीं‌स्तत्रन्यसेत् ॥ तत्रपूर्ववत्कलशस्थापनंतत्रविघ्नेशमावाह्यपूजयेच्च ॥ ॥ ततःपूर्वद्वारे कलशद्वयंप्रतिद्वारशाखंप्रतिष्ठाप्यचंदनोदकफलपंचपल्लवसप्तमृत्तिकासुवर्णपंचरत्नादियुतंदध्यक्षतविभूषितंवस्त्रपुष्पमालादिचं दनचर्चितं रक्तसूत्रवेष्टिताननंपूर्ववन्मंत्रैःस्थापयेत् ॥ प्रतिकलशंमंत्रावृत्तिः ॥ ऐरावतंकलशद्वयेन्यसेत्पूजयेच्च ॥ ऋग्वेदिना वृत्विजौपूर्वद्वारेशांतिसूक्तजपार्थत्वेनत्वांवृणे ॥ ऋग्वेदःपद्मपत्राक्षोगायत्रःसोमदैवतः ॥ अत्रिगोत्रस्तुविप्रेंद्रऋत्विक्त्वंमेमखे भवेतिप्रत्येकंवृत्वा ॥ ( अग्निमीळेमधुच्छंदाअग्निर्गायत्री ) ॥ ॐ अ॒ग्निमी॑ळे० ॥ इतिमंत्रेणगंधाद्युपचारैःपूजयेत् ॥ ततःसह स्त्राक्षंमत्तैरावतस्थितंपीतकिरीटकुंडलधरंदक्षिणवामकरस्थवज्रोत्पलमिंद्रंध्यात्वा ॥ एह्येहिसर्वामरसिद्धसाध्यैरभिष्टुतोवज्रधरा मरेश ॥ संवीज्यमानोप्सरसांगणेनरक्षाध्वरंनोभगवन्नमस्ते ॥ भोइंद्रइहागच्छेहतिष्ठ ॥ इंद्रंसांगंसप० सशक्तिकंद्वारकलशेआ०॥ (आशुःशिशानइतींद्रोप्रतिरथइंद्रस्त्रिष्टुप्)॥ ॐ आ॒शुःशिशा॑नोवृष॒भोनयु॒ध्मोघ॑नाघ॒नःक्षोभ॑णश्चर्षणी॒नां॥सं॒क्रंद॑नोनिमि॒षए॑क वी॒रःश॒तꣳसेना॑अजयत्सा॒कमिंद्रः॑ ॥ इतिपीतांपताकांपीतध्वजंचोच्छ्रयेत् ॥ ( त्रातारमिंद्रंगर्गइंद्रस्त्रिष्टुप् ॥ इंद्रपूजनेवि० )॥ ॐ त्रा॒तार॒मिंद्र॑मवि॒तार॒मिंद्र॒ꣳहवे॑हवेसु॒हव॒ꣳशूर॒मिंद्रं॑ ॥ हु॒वेनुश॒क्रंपु॑रुहू॒तमिंद्र॑ꣳस्व॒स्तिनो॑म॒घवा॑धा॒त्विंद्रः॑ ॥ इतिइंद्रंपूजयित्वा ॥ इंद्रःसुरपतिःश्रेष्ठोवज्रहस्तोमहाबलः ॥ शतयज्वाचयोदेवस्तस्मैनित्यंनमोनमः ॥ इतिनत्वाइंद्रायसांगायसायुधायसशक्तिका यअमुंसदीपमाषभक्तबलिंसमर्पयामीतिसमर्पयेत् ॥ हस्तौपादौप्रक्षाल्याचम्य ॥ ततआग्नेयेगत्वापूर्ववत्कलशंस्थापयित्वापुंडरी कंअमृतंचतत्रन्यसेत्पूजयेच्च ॥ छागस्थंरक्तंदक्षिणवामकरद्वयधृतशक्तिकमंडलुंयज्ञोपवीतिनमग्निंध्यात्वा ॥ एह्येहिसर्वामरह व्यवाहमुनिप्रवीरैरभितोभिजुष्ट ॥ तेजस्वतालोकगणेनसार्धममाध्वरंपाहिकवेनमस्ते ॥ भोअग्नेइत्यादिअग्निंसांगमावाह्यरक्तां

पताकांरक्तध्वजंच ॥ ( अग्निंदूतंमेधातिथिरग्निर्गायत्री ॥ पताकोच्छ्रयणेवि० )॥ ॐ अग्निंदूतंवृणीमहेहोतारंविश्ववेदसं ॥ अस्य यज्ञस्यसुक्रतुं ॥ इतिउच्छ्रयेत्॥(त्वंनोअग्नेनाभागःकाण्वोग्निर्महापंक्तिः) ॥ ॐ त्वंनोअग्नआयुषुत्वंदेवेषुपूर्व्यवस्वएकइरज्यसि ॥ त्वामापःपरिस्रुतःपरियंतिस्वसेतवोनभंतामन्यकेसमे ॥ इतिमंत्रेणाग्निंगंधादिभिःपूजयित्वा ॥ आग्नेयःपुरुषोरक्तःसर्वदेवमयो व्ययः ॥ धूम्रकेतुरजोध्यक्षस्तस्मैनित्यंनमोनमः ॥ इतिनत्वाअग्नयेसांगायेतिबलिंदद्यात् ॥ ततआचम्यदक्षिणेगत्वाप्रतिद्वार शाखंचंदनोदकादियुतंपूर्ववत्कलशद्वयंस्थापयित्वावामननामकंदिग्गजंतत्रन्यसेत्पूजयेच्च ॥ ततोयजुर्वेदिनावृत्विजौशांतिसूक्त जपार्थत्वेनत्वांवृणे ॥ कातराक्षोयजुर्वेदस्त्रैष्टुभोविष्णुदैवतः ॥ काश्यपेयस्तुविप्रेंद्रऋत्विक्त्वंमेमखेभव ॥ इतिप्रत्येकंवृत्वा ॥ ॐइषेत्वोर्जेत्वांवा० ॥ इतिमंत्रेणगंधाद्युपचारैःपूजयेत् ॥ ततोमहिषारूढंधृतदंडपाशदक्षिणवामकरद्वयंकृष्णांजनचयोपममग्नि समलोचनंयमंध्यात्वा ॥ एह्येहिवैवस्वतधर्मराजसर्वामरैरर्चितधर्ममूर्ते ॥ शुभाशुभानंदशुचामधीशशिवायनःपाहिमखंनमस्ते ॥ भोयमइत्यादियमंसांगमित्याद्यावाह्य ॥ कृष्णांपताकांकृष्णंध्वजंच ॥ ( आयंगौःसार्पराज्ञीसर्पागायत्री ) ॥ ॐ आयंगौःपृश्नि रक्रमीद० ॥ इतिमंत्रेणोच्छ्रयेत् ॥ ( ततःयमायसोमंयमोयमोनुष्टुप् )॥ ॐ यमायसोमꣳसुनुतयमायजुहुताहविः ॥ यमꣳहयज्ञो गच्छत्यग्निर्दूतोअरंकृतः ॥ इतियमंगंधादिभिःपूजयित्वा ॥ महामहिषमारूढंदंडहस्तंमहाबलं ॥ आवाहयामियज्ञेस्मिन्पूजेयं प्रतिगृह्यतां ॥ इतिनत्वा ॥ यमायसांगायेत्यादिबलिंदद्यात् ॥ ततआचम्यनैर्ऋत्यांगत्वापूर्ववत्कलशंस्थापयित्वा ॥ कुमुदंदुर्ज यंचतत्रपूजयित्वा ॥ ततोनरारूढंमहाकायंखड्गहस्तंमहाबलं ॥ राक्षसैर्वेष्टितंनीलंपीताभरणभूषितं निर्ऋतिंध्यात्वा ॥ एह्येहिरक्षो गणनायकस्त्वंविशालवेतालपिशाचसंघैः ॥ ममाध्वरंपाहिपिशाचनाथलोकेश्वरस्त्वंभगवन्नमस्ते ॥ भोनिर्ऋतइत्यादिनानिर्ऋ

तिंकलशेआवाह्य ॥ ( मोषुणःकण्वोनिर्ऋतिर्गायत्री ॥ पताकोच्छ्रयणेवि० ) ॥ ॐ मोषुणःपरांपरानिर्ऋतिर्दुर्हणांवधीत् ॥ पदीष्टतृष्णयासह ॥ इतिनीलपताकांनीलध्वजंचोच्छ्रयेत् ॥ असुन्वंतइतिमंत्रेणमोषुणइतिवानिर्ऋतिंगंधादिभिःपूजयित्वा ॥ निर्ऋतिंखड्गहस्तंचसर्वलोकैकपावनं ॥ आवाहयामियज्ञेस्मिन्पूजेयंप्रतिगृह्यतां ॥ इतिनत्वासांगायेत्यादिवलिंदद्यात् ॥ ॥ ततआचम्यपश्चिमेगत्वापूर्ववत्कलशद्वयंस्थापयित्वाअंजनाख्यंदिग्गजंतत्रन्यसेत् ॥ सामवेदिनावृत्विजौपश्चिमद्वारेशांतिसूक्त जपार्थंत्वामहंवृणे ॥ सामवेदस्तुपिंगाक्षोजागतःशक्तिदैवतः ॥ भारद्वाजस्तुविप्रेंद्रऋत्विक्त्वंमेमखेभवेतिप्रत्येकंवृत्वाअग्नआ याहीतिगंधाद्युपचारैःपूजयेत् ॥ ततःमकरस्थंपाशहस्तंशुक्लवर्णंकिरीटिनंवरुणंध्यात्वा॥ एह्येहियादोगणवारिधीनांगणेनपर्जन्य महाप्सरोभिः ॥ विद्याधरेंद्रामरगीयमानपाहित्वमस्मान्भगवन्नमस्ते ॥ भोवरुणेत्यादिद्वारकलशेआवाह्य ॥ श्वेतांपताकांश्वेत ध्वजंच ॥ ( इमंमेवरुणेतिशुनःशेपोवरुणोगायत्री ॥ वरु० ) ॐ इमंमेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥ इति उच्छ्रयेत् ॥ ( तत्त्वायामिशुनःशेपोवरुणस्त्रिष्टुप् ) ॥ ॐ तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोव रुणेहवोध्युरुशꣳसमानआयुःप्रमोषीः ॥ इतिवरुणंगंधादिभिःपूजयेत् ॥ पाशहस्तंचवरुणमर्णसांपतिमीश्वरं ॥ आवाहयामियज्ञे स्मिन्वरुणायनमोनमः ॥ इतिनत्वावरुणायेत्यादिमाषभक्तवलिंदत्वा ॥ ॥ ततआचम्यवायव्यांगत्वातत्रपूर्ववत्कलशंस्थाप यित्वा तत्रपुष्पदंतंसिद्धार्थंचसंपूज्यमृगाधिरूढंधूम्रवर्णंचित्रांवरधरंयुवानंध्वजवरददक्षिणवामकरद्वयंवायुंध्यात्वा ॥ एह्येहि यज्ञेममरक्षणायमृगाधिरूढःसहसिद्धसंघैः ॥प्राणाधिपःकालकवेःसहायगृहाणपूजांभगवन्नमस्ते ॥ भोवायोइहागच्छेत्यावाह्य ॥ धूम्रांपताकांधूम्रध्वजंच ॥ ( वायोशतंवामदेवोवायुरनुष्टुप् ) ॥ ॐ वायोशतꣳहरीणांयुवस्वपोष्याणां ॥ उतवातेसहस्रिणोरथआ

यातुपाजंसा ॥ इतिमंत्रेणोच्छ्रयेत् ॥ (तववायवांगिरसोव्यश्वोवायुर्गायत्री) ॥ ॐ तववायवृतस्पतेत्वष्टुर्जामातरद्भुत ॥ अवां
स्यावृणीमहे ॥ इतिवायुंगंधादिभिरभ्यर्च्य ॥ वायुमाकाशगंचैवपवनंवेगवद्गतिं ॥ आवाहयामियज्ञेस्मिन्पूजेयंप्रतिगृह्यतां ॥
अनाकारोमहौजाश्चयश्चादृष्टगतिर्दिवि ॥ तस्मैपूज्यायजगतोवायवेहंनमामिच ॥ इतिनत्वासांगायेत्यादिमाषभक्तबलिंदद्यात् ॥
ततआचम्यउत्तरेगत्वापूर्ववत्कलशद्वयंसंस्थाप्यसार्वभौमंदिग्गजंतत्रन्यसेत् ॥ अथर्ववेदिनावृत्विजौशांतिसूक्तजपार्थत्वेनत्वां
वृणे ॥ बृहन्नेत्रोथर्ववेदोनुष्टुभोरुद्रदैवतः ॥ वैशंपायनविप्रेंद्रऋत्विक्त्वंमेमखेभवेतिप्रत्येकंवृत्वा ॥ ततःशंनोदेवीरितिमंत्रेणगं
धाद्युपचारैःपूजयेत् ॥ ततोनरयुतविमानस्थंकुंडलमहाकेयूररुचिरंगदावरददक्षिणवामभुजद्वयंमुकुटिनंमहोदरंमहाकायंहरित
वर्णंकुबेरंध्यात्वा ॥ एह्येहियक्षेश्वरयज्ञरक्षांविधत्स्वनक्षत्रगणेनसार्धं ॥ सर्वौषधीभिःपितृभिःसहैवगृहाणपूजांभगवन्नमस्ते ॥
भोसोमेत्यादिद्वारकलशेआवाह्य ॥ हरितांपताकांहरितध्वजंच ॥ (आप्यायस्वराहूगणोगौतमःसोमोगायत्री) ॥ ॐ आप्यायस्व
समेतुतेविश्वतःसोमवृष्णियं॥भवावाजस्यसंगथे ॥ इत्युच्छ्रयेत् ॥ (सोमोधेनुंराहूगणोगौतमःसोमस्त्रिष्टुप्)॥ ॐ सोमोधेनुंसोमो
अर्वंतमाशुंसोमोवीरंकर्मण्यंददाति ॥ सादन्यंविदथ्यंसभेयंपितुःश्रवणंयोददाशदस्मै ॥ इतिमंत्रेणसोमंगंधादिभिःपूजयेत् ॥
सर्वनक्षत्रमध्येतुसोमोराजाव्यवस्थितः ॥ तस्मैसोमायदेवायनक्षत्रपतयेनमः ॥ इतिनत्वासांगायेत्यादिसोमायेमंमाषभक्तबलिं
समर्पयामीतिदद्यात् ॥ ततआचम्यईशान्यांगत्वापूर्ववत्कलशंसंस्थाप्य ॥ सुप्रतीकंदिग्गजंमंगलंचतत्रसंपूज्य वृषारूढंदक्षिण
वामहस्तयोर्वरत्रिशूलधरंत्रिनेत्रंशुक्लमीशानंध्यात्वा ॥ एह्येहिविश्वेश्वरनस्त्रिशूलकपालखट्वांगधरेणसार्धं ॥ लोकेनयज्ञेश्वरयज्ञ
सिद्ध्यैगृहाणपूजांभगवन्नमस्ते ॥ भोईशानेत्यादिईशानंकलशेआवाह्य॥ श्वेतांपताकांश्वेतध्वजंच॥ (अभित्वादेवसवितरित्या

जीगार्तिःशुनःशेपःसवितागायत्री )॥ ॐ अभित्वांदेवसवितरीशांनंवार्याणां ॥ सदांवन्भागमीमहे ॥ इत्युच्छ्रयेत् ॥ तमीशानमि
तिगंधादिभिरभ्यर्च्य ॥ वृषस्कंधसमारूढशूलहस्तत्रिलोचन ॥ आवाहयामियज्ञेस्मिन्पूजेयंप्रतिगृह्यतां ॥ सर्वाधिपोमहादेव
ईशानःशुक्लईश्वरः ॥ शूलपाणिर्विरूपाक्षस्तस्मैनित्यंनमोनमः ॥ इतिध्यात्वा ॥ ईशानायसांगायेत्यादिवलिंदद्यात् ॥ ॥ तत
आचम्यईशानपूर्वयोर्मध्येअधउद्दिश्यअनंतशयनासीनंफणासहस्रमंडितंपद्मशंखधरोर्ध्वाधोदक्षिणकरद्वयं चक्रगदाधरोर्ध्वाधो
वामकरद्वयमनंतंध्यात्वा ॥ एह्येहिपातालधरामरेंद्रनागांगनाकिन्नरगीयमान ॥ यक्षोरगेंद्रामरलोकसंघैरनंतरक्षाध्वरमस्मदीयं ॥
भोअनंतइहागच्छेत्यादिअनंतमावाह्यश्वेतांपताकांश्वेतध्वजंच ॥ ( आयंगौःसार्पराज्ञीसर्पागायत्री )॥ ॐ आयंगौःपृश्निरक्रमी
दसंनन्मातरंपुनः ॥ पितरंचप्रयन्त्सुवः ॥ इत्युच्छ्रयेत् ॥ तेनैवमंत्रेणशेषंगंधादिभिरभ्यर्च्य ॥ योसावनंतरूपेणब्रह्मांडंसचरा
चरं ॥ पुष्पवद्धारयेन्मूर्ध्नितस्मैनित्यंनमोनमइतिनत्वासांगायेत्यादिमाषभक्तवलिंदद्यात् ॥ ॥ ततआचम्यपश्चिमनिर्ऋतिम
ध्येऊर्ध्वमुद्दिश्यअक्षसूत्रकुशमुष्टिधरोर्ध्वाधोदक्षिणकरद्वयंसुवर्णकमंडलुधरोर्ध्वाधोवामकरद्वयंचतुर्मुखंश्मश्रुजटिलंलंवोदरंसुव
र्णवर्णंब्रह्माणंध्यात्वा ॥ एह्येहिसर्वाधिपतेसुरेंद्रलोकेनसार्धंपितृदेवताभिः ॥ सर्वस्यधातास्यमितप्रभावोविशाध्वरंनःसततंशिवा
य ॥ भोब्रह्मन्इहागच्छेत्यादिब्रह्माणंसांगमित्याद्यावाह्यरक्तांपताकांरक्तध्वजंच ॥ ( ब्रह्मजज्ञानंगौतमोवामदेवोब्रह्मात्रिष्टुप् )॥
ॐ ब्रह्मजज्ञानंप्रथमं० अनेनोच्छ्रयेत् ॥ तेनैवब्रह्माणंगंधादिभिरभ्यर्च्य ॥ पद्मयोनिश्चतुर्मूर्तिर्वेदावासःपितामहः ॥ यज्ञाध्यक्ष
श्चतुर्वक्त्रस्तस्मैनित्यंनमोनमइतिनत्वासांगायेत्यादिवलिंदद्यात् ॥ अन्येतुस्योनापृथिवीतिपृथ्वींसंपूज्यतेनैवध्वजपताकास्थापनं
कुर्वंति ॥ रूपनारायणमतेईशानपूर्वयोर्मध्येब्रह्मपूजनं ॥ ततआचम्यमंडपमध्येअत्युच्चदंडोदशहस्तदीर्घस्त्रिहस्तायतोमहाध्व

जोविचित्रवर्णः ॥ ( इंद्रस्यवृष्णइत्यस्यैंद्रोप्रतिरथइंद्रस्त्रिष्टुप् ) ॥ ॐ इंद्रस्यवृष्णोवरुणस्यराज्ञआदित्यानांमरुतांशर्धउग्रं ॥ महामनसांभुवनच्यवानांघोषोदेवानांजयतामुदस्थात् ॥ इतिसंस्थाप्य ॥ ब्रह्मजज्ञानमितिमंत्रेणतत्रैवब्रह्मपूजनंकार्यं ॥ ततोमंडपस्यषोडशस्तंभेषुसर्वेभ्योदेवेभ्योनमः । वंशेषुकिन्नरेभ्योनमः । पृष्ठेपन्नगेभ्योनमइतिपूजयेत् ॥ ॥ ततोमंडपाद्बहिःपूर्वस्यां दिशिकिंचिद्भूमिमुल्लिप्यतत्रोपविश्य ॥ त्रैलोक्येयानिभूतानिस्थावराणिचराणिच ॥ ब्रह्मविष्णुशिवैःसार्धंरक्षांकुर्वंतुतानिमे ॥ देवदानवगंधर्वायक्षराक्षसपन्नगाः ॥ ऋषयोमनवोगावोदेवमातरएवच ॥ सर्वेममाध्वरेरक्षांप्रकुर्वंतुमुदान्विताः ॥ ब्रह्माविष्णुश्चरुद्रश्चक्षेत्रपालगणैःसह ॥ रक्षंतुमंडपंसर्वेघ्नंतुरक्षांसिसर्वतः ॥ त्रैलोक्यस्थस्थावरेभ्योभूतेभ्योनमः ॥ त्रैलोक्यस्थचरेभ्योभूतेभ्योनमः ॥ ब्रह्मणेनमः ॥ विष्णवेनमः ॥ शिवायनमः ॥ देवेभ्योनमः ॥ दानवेभ्योनमः ॥ गंधर्वेभ्योनमः ॥ यक्षेभ्योनमः ॥ रक्षोभ्योनमः ॥ पन्नगेभ्योनमः ॥ ऋषिभ्योनमः ॥ मनुष्येभ्योनमः ॥ गोभ्योनमः ॥ देवमातृभ्योनमः ॥ इतिप्रत्येकंसंपूज्य पूर्वमंत्रैरेभ्योभूमौमाषभक्तबलिंदद्यात् ॥ इतिमंडपप्रतिष्ठा ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २७१ ॥ शांतिहोमः ॥

श्रीः ॥ ततोदेशकालौस्मृत्वाप्रतिमापिंडिकादिषुन्यूनाधिकपाषाणप्राणिवधादिदोषपरिहारार्थंशांतिहोमंकरिष्यइतिसंकल्प्याग्निस्थापनादिविधायान्वाधानंकुर्यात् ॥ व्याहृत्यंतमुक्त्वावैशेषिकहोमेमृत्युरोगान्अघोरंरुद्रंपापभक्षणमंत्रलिंगोक्तदेवताःस्थाप्यदेवंच ५ एताःपंचदेवताःप्रत्येकंअष्टाधिकशतसंख्याकाभिर्घृताक्ततिलाहुतिभिर्यक्ष्येअंगहोमेवरुणंद्विरित्यादि ॥ क्रमेणहोममंत्राः ॥ परंमृत्यो० ॥ अघोरेभ्योथघोरे० ॥ त्र्यंबकं० ॥ चरणंपवित्रं० ॥ स्थाप्यदेवमंत्रः ॥ इदंविष्णु० ॥ विष्णोर्नुकं० इति

नारायणस्य ॥ शिवपक्षे ॥ तत्पुरुषायविद्महे॰ इतिशिवस्य॰ ॥ ततःइमंमेवरुणेत्यादिहोमशेषंसमापयेत् ॥ इतिशांतिहोमः ॥

## ॥ २७२ ॥ देवहस्तेकंकणबंधनेजलाधिवासेचवासुदेव्यांविशेषः ॥

श्रीः ॥ आचार्यःकौतुकबंधनंकरिष्येइतिसंकल्प्यदर्भकूर्चेउदकुंभंनिधायदशतंतुमितंपंचांगुलमष्टांगुलंवाकार्पाससूत्रंहरिद्राक्तं साक्षतकांस्यपात्रेनिधायकुंभोदकेनसूत्रमभिषिंचेदेभिर्मंत्रैः ॥ ॐ अग्निमीळे॰ ॥ आपोहिष्ठा ३ ॥ एतोन्विंद्रं ३ ॥ स्वादिष्ठये तिदश ॥ रक्षोहणमिति २५ ॥ रात्रीव्यख्यदिति ८ ॥ कृणुष्वपाजइतिपंचदश ॥ तरत्समंदीति॰ ४ ॥ सहस्रशीर्षेति १८ ॥ विष्णोर्नुकमितिषट् ६ ॥ परोमात्रयेतिसप्त ७ ॥ हिरण्यवर्णामितिपंचदश १५ ॥ यज्जाग्रतइतिषट् ६ ॥ विहिहोत्रेतिपंच ५ ॥ मुंचामित्वा॰ ५ ॥ स्योनापृथिवि॰ १ ॥ द्रविणोदा॰ १ ॥ सवितापश्चातात् १ ॥ नवोनवइति॰ १ ॥ उलूकयातुमिति॰ १ ॥ पिशंगभृष्टिममिति॰ १ ॥ एभिर्मंत्रैःसूत्रमभिषिच्य ॥ जातवेदसे॰ ॥ इत्यनयासूत्रंगंधेनानुलिप्य ॥ विश्वेत्ताते॰ ॥ इति मंत्रेणभगवतोदक्षिणहस्तेबध्नीयात् ॥ ततोधान्यराशौजलद्रोणिंकटाहंवाजलभांडंनिधायएतेषामभावेजलधारार्थंशिक्यादिसं पाद्यद्रोण्यादिकंगंगोदकेनापूर्यतन्मध्येअष्टाविंशतिदर्भनिर्मितंकूर्चंनिधाय यदत्रसंस्थितमितिभूतशुद्धिंविधायतस्मिन्कूर्चेमूल मंत्रेणहरिंहरंवाभावयित्वाचक्रमुद्रांप्रदर्श्य जलद्रोणीतोदक्षिणदिशिधान्यपुंजोपरिवस्त्रद्वयवेष्टितंकलशंएकवस्त्रवेष्टितंकरकंच कलशस्थापनमंत्रैःस्थापयेत् ॥ तत्रकलशेब्रह्मजज्ञानं॰ ॥ ॐब्रह्मणेनमःब्रह्माणमावाहयामिइत्यावाह्यकरकेनाममंत्रेणसुदर्शनमा वाहयेत् ॥ ॐ सुदर्शनायनमःसुदर्शनमावाहयामि ॥ ततःजलद्रोण्यादेरुपरि यदत्रसंस्थितमितिमंत्रेणसर्षपान्विकीर्यअष्टौकल शान्कलशस्थापनमंत्रैःस्थापयेत् तेष्वष्टकलशेषुइंद्रादीनावाहयेत् ॥ अग्रतःसुवर्चसंदीपंदद्यात् ॥ जलांतःशमीपीठंस्थापयित्वात

दुपरिवस्त्रमास्तीर्यप्रतिमांवस्त्रेणाच्छाद्यकुशैरावेष्ट्यप्राङ्मुखीमुदङ्मुखींवाजलेधिवासयेत् ॥ अयंकमलावासइत्यागमप्रसिद्धिः ॥ अयमेवसरोजसंघातनामकाधिवासः ॥जलद्रोण्यभावेसंततधारांकुर्यात् ॥ जलाधिवासंएकरात्रंयामंवागोदोहनमात्रंवाकुर्यात् ॥ जलाधिवाससूक्तानितु ॥ अतोदेवाइतिषट् ६ ॥ विष्णोर्नुकमितिसप्तदश १७ ॥ अस्यवामस्येतिद्विपंचाशत् ५२ ॥ ममाग्नेवर्च इत्येकविंशतिः २१ ॥ आशुःशिशानइतित्रयोदश १३ ॥ शंनइंद्राग्नीइतिपंचदश १५ ॥ रक्षोहणमितिपंचविंशतिः २५ ॥ आनोभद्राइतिदश १० ॥ स्वस्त्ययनमिति २ ॥ इमारुद्रायेत्येकादश ११ ॥ मुंचामित्वेतिपंच० ५ ॥ रात्रीव्यख्यदिति ८ ॥ एतानिसूक्तानिजपेयुः ॥ ततःअथर्वशीर्षंयथाशक्त्यावर्तयेत् ॥ एवंजलाधिवासंसंपाद्यसाक्षतहस्तआचार्यादिसहितःसपत्नीकोयजमानः मंगलतूर्यनिनादेनसुवासिनीमंगलगीतसहितःभद्रंकर्णेभिरितिमंत्रघोषेणमहामंडपप्रादक्षिण्येनपश्चिमद्वारेणमंडपंप्रविश्यवेद्याःपश्चिमतउपविश्याचम्यप्राणानायम्यदेशकालौस्मृत्वामंडपप्रतिष्ठांकरिष्येइतिसंकल्प्य ॥ गणेशंसंपूज्यअथवास्तुयजननवग्रहमखार्थंवृतैराचार्यादिभिर्यथावकाशप्रदेशेकुंडांतरेस्थंडिलेवाएकतंत्रेणपृथग्वावास्तुयागंग्रहमखंचकारयेदितिविशेषः

## ॥ २७३ ॥ पंचकुंडीपक्षेन्वाधानादि ॥

श्रीः ॥ पूर्वईशानकुंडस्थमुख्याचार्यःउपरिमेखलायांइदंविष्णुरितिविष्णुं मध्यमेखलायांब्रह्मजज्ञानमितिब्रह्माणं अधोमेखलायांकद्रुद्रायेतिरुद्रंयोन्यांगौरीमिमायेतिगौरींचावाह्यपूजयेत् ॥ स्वगृह्यविधिनाकुंडसंस्कारपूर्वमग्निंप्रतिष्ठाप्यअग्नेर्गर्भाधानादिसंस्कारार्थंव्याहृत्याहुतीःप्रतिसंस्कारमष्टाष्टसंख्याकाहुत्वा ॥ ततःप्रागाद्याचार्याःप्रागादिकुंडहोमंकरिष्यइतिसंकल्प्य ॥ उपरिवत्स्वस्वकुंडसंस्कारंकृत्वामुख्याचार्यकुंडात्संस्कृतमग्निंअग्निनाग्निःसमिध्यतइतिमंत्रेणस्वेस्वेकुंडेप्रतिष्ठापयेयुरग्नेर्ध्यानादिचकुर्युः ॥

मुख्यकुंडाचार्यःस्वकुंडस्यैशान्यांशांतिकलशंविधिवत्स्थापयेत् ॥ प्रागाद्याचार्याःस्वस्वकुंडस्यैशान्यांसंपातोदकार्थंशांतिकलशं चस्थापयेयुः ॥ तत्रैकःकलशःसंपातोदकार्थं ॥ द्वितीयकलशेसाक्षतपात्रेमूर्तिंमूर्त्यधिपतिंलोकपालंचावाहयेत् ॥ तत्प्रकारः ॥ पूर्वकुंडस्येशानकलशे पृथिवीमूर्तिंआवाहयामि १ पृथिवीमूर्त्यधिपतिंशर्वं २ लोकपालमिंद्रं ३ अग्निमूर्तिं ४ अग्निमूर्त्यधिप तिंपशुपतिं ५ लोकपालंअग्निं ६ इतिपूर्वकुंडेषट् ॥ दक्षिणकुंडैककलशेयजमानमूर्तिं १ यजमानमूर्त्यधिपतिंउग्रं २ लोकपालं यमं ३ सूर्यमूर्तिं ४ सूर्यमूर्त्यधिपतिंरुद्रं ५ लोकपालंनिर्ऋतिं ६ इतिषट् ॥ पश्चिमकुंडैककलशे जलमूर्तिं १ जलमूर्त्यधिप तिंभवं २ लोकपालंवरुणं ३ वायुमूर्तिं ४ वायुमूर्त्यपतिंईशानं ५ लोकपालंवायुं ६ इतिषट् ॥ अथोत्तरकुंडैककलशे सोम मूर्तिं १ सोममूर्त्यधिपतिं २ लोकपालंकुवेरं ३ आकाशमूर्तिं ४ आकाशमूर्त्यधिपतिंभीमं ५ लोकपालंईशानं ६ इत्युत्तरकुं डेषट्आवाह्यपूजयित्वाअन्वाधानंकुर्यात् ॥ तत्रादौमुख्यकुंडेआचार्यःसमित्त्रयमादायश्रद्धएहीत्यादिप्राणायामांतमुक्त्वाएतत्प्र तिष्ठाकर्मणियायक्ष्यमाणादेवतास्ताःसर्वाःपरिग्रहीष्यामि जातवेदसमग्निमिध्मेनेतिव्याहृत्यंतमुक्त्वावैशेषिकप्रधानहोमे (मुख्य कुंडेमूर्तिपानसंति) ॥ स्थाप्यदेवंविष्णुंपलाशौदुंबराश्वत्थशम्यपामार्गसमित्तिलचर्वाज्यैःप्रतिद्रव्यं १०८ संख्यया २८ संख्य यावायक्ष्ये ॥ पिंडिकां २८ संख्ययातिलद्रव्येण लक्ष्मींगरुडंचप्रत्येकं २८ तिलद्रव्येण ब्रह्मादिमंडलदेवताःप्रत्येकं १० तिल द्रव्येण ॥ प्रणवादिन्यासांतर्गततत्त्वानामाप्यायनार्थंप्रतितत्त्वं १० संख्ययालिंगोक्तदेवतास्तिलद्रव्येणयक्ष्ये ॥ (अथवाप्रणवा दिन्यासमंत्राणामाप्यायनार्थंविष्णुं १०८ तिलैर्यवैश्चइतित्रिविक्रमः) ॥ प्रतिमायाःगर्भाधानादिषोडशसंस्कारसिद्ध्यर्थंप्रजा पतिंअष्टा ८ हुतिसंख्ययातिलद्रव्येणव्याहृतिमंत्रेणयक्ष्ये ॥ तथाचशांत्यर्थंप्रजापतिं १०८ तिलद्रव्येणयक्ष्ये ॥ अंगहोमेवरुणं

द्विरित्यादि ॥ ॥ अथपूर्वकुंडेव्याहृत्यंतमुक्त्वापृथिवीमूर्तिंपृथिवीमूर्त्यधिपतिंशर्वंलोकपालंइंद्रंअग्निमूर्तिं अग्निमूर्त्यधिपतिंपशुपतिंलोकपालंअग्निंचप्रत्येकंपलाशोदुंबराश्वत्थशम्यपामार्गसमित्तिलचर्वाज्यैःप्रतिद्रव्यं ८ यक्ष्ये ॥ स्थाप्यदेवंविष्णुंतैरेवद्रव्यैः प्रत्येकं १०८ पिंडिकां २८ तिलद्रव्येण ॥ लक्ष्मींगरुडंचप्रत्येकं २८ तिलद्रव्येण ॥ प्रजापतिं १०८ तिलद्रव्येण अंगहोमे वरुणंद्विरित्यादि० ॥ ॥ दक्षिणकुंडे ॥ यजमानमूर्तिं यजमानमूर्त्यधिपतिंउग्रं यमं सूर्यमूर्तिं सू र्यमूर्त्यधिपतिंरुद्रं लोकपालं निर्ऋतिंच प्रत्येकंपलाशोदुंबराश्वत्थशम्यपामार्गसमित्तिलचर्वाज्यैःप्रतिद्रव्यं ८ स्थाप्यदेवंविष्णुंतैरेवद्रव्यैःप्रत्येकं १०८ पिंडिकां २८ तिलद्रव्येण लक्ष्मींगरुडंचप्रत्येकं २८ तिलद्रव्येण प्रजापतिं १०८ तिलद्रव्येण ॥ अंगहोमेवरुणंद्विरित्यादि ॥ ॥ अथपश्चिमकुंडेप्रधानं ॥ जलमूर्तिं जलमूर्त्यधिपतिंभवं लोकपालंवरुणं वायुमूर्तिंवायुमूर्त्यधिपतिंईशानंलोकपालंवायुं तैरेवद्रव्यैःप्रतिद्रव्यं ८ स्थाप्यदेवंविष्णुंतैरेवद्रव्यैःप्रतिद्रव्यं १०८ पिंडिकां २८ तिलद्रव्येण लक्ष्मींगरुडंचप्रत्येकं २८ तिलद्रव्येणप्रजापतिं १०८ तिलद्रव्येण अंगहोमेवरुणंद्विरित्यादि ॥ ॥ अथोत्तरकुंडेप्रधानं सोममूर्तिं सोममूर्त्यधिपतिं महादेवं लोकपालंकुबेरं आकाशमूर्तिं आकाशमूर्त्यधिपतिंभीमं लोकपालंईशानं प्रत्येकंपूर्वोक्तद्रव्यैः प्रतिद्रव्यं ८ स्थाप्यदेवंविष्णुंतैरेवद्रव्यैःप्रतिद्रव्यं १०८ पिंडिकां २८ तिलद्रव्येण लक्ष्मींगरुडंचप्रत्येकं २८ तिलद्रव्येणप्रजापतिं १०८ तिलद्रव्येणअंगहोमे वरुणंद्विरित्यादि ॥ इतिपंचकुंडीपक्षेन्वाधानम् ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २७४ ॥ पंचकुंडीहोममंत्रद्वारपालजपक्रमः ॥

श्रीः ॥ होमेक्रियमाणेजापकाजाप्यानिपठेयुः ॥ तान्यग्रेपूर्वादिकुंडीयहोमांतेवक्ष्यंते ॥ ईशानकुंडेमुख्यआचार्यः ॥ सामान्य

प्रधानांतेसमिदादिहोमंकुर्यात् ॥ ईशान्याद्याचार्याःप्रतिद्रव्यंहोमांतेदेवस्यशिरस्युरसिपादयोःस्पृशेयुरितिकेचित् ॥ आज्यहोमेस्रुवेणाज्यशेषंप्रतिकुंडंस्थापितशांतिकलशेषुनयेयुः ॥ तत्रहोममंत्राः ॥ विष्णुःस्थाप्यश्चेत्इदंविष्णुरितिमूलमंत्रः तेनैवहोमः ॥ नारायणश्चेत्विष्णोर्नुकमितिमंत्रेणहोमः ॥ ॐह्रीश्चतेलक्ष्मीश्चपत्न्यौ अहोरात्रेपार्श्वे नक्षत्राणिरूपं अश्विनौव्यात्तं इष्टंमनिषाण अमुंमनिषाण सर्वंमनिषाणस्वाहाइतिपिंडिकामंत्रेणहोमः ॥ त्यागस्तुयजमानेनप्रतिकुंडंआदावेवकर्तव्यः ॥ हिरण्यवर्णामितिलक्ष्म्याः ॥ तत्पुरुषायविद्महेसुवर्णपक्षायधीमहि ॥ तन्नोगरुडःप्रचोदयात् ( त्यमूषुवाजिनमितिवा इंद्रंमित्रमितिवा ) गरुडस्य होममंत्रः ॥ ब्रह्मादिसर्वतोभद्रमंडलदेवतानांस्थापनोक्तमंत्रैर्नामभिर्वाहोमः ॥ अथन्यासहोमः सचन्याससमयएवान्येनऋत्विजा कर्तव्यः ॥ सचत्रिविक्रममतेयदिसमुदायेनक्रियतेतदापरायविष्णवेस्वाहेतितिलैरष्टोत्तरशतंकर्तव्यः विष्णवइदंनममेतित्यागः ॥ प्रतिष्ठामयूखेतुपरायशिवात्मनेइतिशैवे ॥ एवंसूर्यादिषुविशेषः ॥ विष्णुप्रतिमायाःगर्भाधानादिषोडशसंस्कारसिद्ध्यर्थंप्रतिसंस्कारंअष्टाहुतिसंख्ययासमस्तव्याहृतिभिर्होमः ॥ सचजीवन्यासानंतरंकर्तव्यः ॥ शांत्यर्थंव्याहृतिहोमः ॥ सोपिदेवस्थापनानंतरं कर्तव्यः ॥ ॥ अथप्राच्यादिकुंडेहोममंत्राः ॥ तत्रपूर्वकुंडेआचार्यःसामान्यप्रधानहोमांतेयजमानेनत्यागेकृतेप्रधानहोमंकुर्यात् ॥ प्रतिद्रव्यंहोमांतेदेवंपादनाभिशिरःसुस्पृशेत् ॥ आज्यहोमकृत्तुआज्यशेषंस्रुवेणकिंचिदुत्तरकलशेनिनयेत् ॥ प्रधानहोममंत्राः ॥ स्योनापृथिवीतिपृथिवीमूर्तेः ॥ ॐ स्योनापृथिवि० थाःस्वाहा ॥ पृथिव्याइदं० इत्यष्टाहुतयःप्रतिमंत्रंहोतव्याः ॥ अघोरेभ्यइति पृथिवीमूर्त्यधिपतेःशर्वस्य ॥ त्रातारमिंद्रमितिलोकपालस्य ॥ अग्निंदूतमित्यग्निमूर्तेः ॥ तेजःपशूनामित्यग्निमूर्त्यधिपतेःपशुपतेः ॥ अग्नआयाहीतिलोकपालस्याग्नेः ॥ प्रतिमंत्रंअष्टाहुतयःअष्टाविंशतिर्वा ॥ विष्णुःस्थाप्यश्चेत्तदाइदंविष्णुरितिहोमः १०८ नारा

यणश्चेत्तदाविष्णोर्नुकमितिहोमः ॥ ह्रीश्चतेलक्ष्मीश्चेतिपिंडिकामंत्रः २८ हिरण्यवर्णामितिलक्ष्म्याः २८ तत्पुरुषायविद्महेसुवर्ण पक्षायेतिगरुडस्य ॥ समस्तव्याहृतीः १०८ ततःएकादशप्रधानाहुतिमंत्राः ॥ पूर्वद्वारेजपः ॥ श्रीसूक्तं पवमानं सोमोधेनुं षट्ऋचः कनिक्रदद्तिसूक्तं शंनइंद्राग्नीसूक्तं रक्षोहणंसूक्तं रात्रीसूक्तं इमारुद्रायेतिसूक्तं पुरुषसूक्तंच ॥ ॥ दक्षिणकुंडेहो ममंत्राः ॥ यजमानेनद्रव्यत्यागेकृतेहोमंकुर्यात् ॥ प्रतिद्रव्यंदेवंस्पृशेत् ॥ आज्यशेषंकिंचिदुत्तरकलशेनिनयेत् ॥ ततोहोम मंत्राः ॥ असिहिवीइतियजमानमूर्तेः॥ त्वमिंद्रसजोषसइतियजमानमूर्त्यधिपतेरुद्रस्य॥ यमायसोममितिलोकपालस्ययमस्य ॥ उदुत्यमितिसूर्यमूर्तेः ॥ आवोराजानमितिसूर्यमूर्त्यधिपतेरुद्रस्य ॥ असुन्वंतमितिलोकपालस्यनिर्ऋतेः ॥ स्थाप्यदेवस्येदंविष्णु रिति १०८ ह्रीश्चतेइतिपिंडिकामंत्रः २८ ॥ हिरण्यवर्णामितिलक्ष्म्याः २८ ॥ तत्पुरुषायेतिगरुडस्य २८ ॥ व्याहृतिभिःप्र जापतेः १०८ इति ॥ दक्षिणद्वारेजपः ॥ पुरुषसूक्तं आशुःशिशानःसूक्तं इमारुद्रायस्थिरेति ४ ऋचः सोमोधेनुमिति ६ ऋचः कौष्मांड्यः ॥ ॥ अथपश्चिमकुंडेहोममंत्राः ॥ आपोहिष्ठेतिजलमूर्तेः ॥ नमोभ॒वाय॑चरु॒द्राय॑च॒स्वाहाइतिजलमूर्त्यधिपतेर्भ वस्य ॥ इमंमेवरुणइतिलोकपालस्य ॥ वातआवातुइतिवायुमूर्तेः ॥ तमीशानमितिवायुमूर्त्यधिपतेरीशानस्य ॥ आनोनियुद्भि रितिलोकपालस्यवायोः ॥ स्थाप्यदेवस्येदंविष्णुरिति १०८ ह्रीश्चतेइतिपिंडिकामंत्रः २८ ॥ हिरण्यवर्णामितिलक्ष्म्याः २८ ॥ तत्पुरुषायेतिगरुडस्य २८ ॥ व्याहृतिभिःप्रजापतेः १०८ ॥ इतिपश्चिमकुंडेहोमः ॥ पश्चिमद्वारेजपः ॥ रुद्रसामनतमंहोष्टौ पुरुषसूक्तं कद्रुद्रायेतिरुद्रसूक्तं रक्षोहणंसूक्तं ॥ ॥ अथोत्तरकुंडेहोममंत्राः ॥ वयंसोमव्रतेइतिसोममूर्तेः ॥ तत्पुरुषायविद्महे इतिरुद्रगायत्र्यासोममूर्त्यधिपतेर्महादेवस्य अभित्यंदेवमितिकुबेरस्य ॥ आदित्प्रत्नस्येत्याकाशमूर्तेः ॥ मृगोनभीमइत्याकाश

मूर्त्यधिपतेर्भीमस्य ॥ अभित्वादेवसवितरितिलोकपालस्य ॥ इदंविष्णुरितिविष्णोः १०८ ॥ ह्रीश्चतेइतिपिंडिकायाः २८ ॥ हिरण्यवर्णामितिलक्ष्म्याः २८ ॥ तत्पुरुषायेतिगरुडस्य २८ ॥ व्याहृतिभिःप्रजापतेः १०८ ॥ उत्तरद्वारस्थौ नारायणाथर्व शीर्ष शिवाथर्वशीर्ष नीलरुद्रं मधुवाता ३ ऋचः शंनइंद्राग्नीइतिसूक्तंच ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २७५ ॥ सप्रासाददेवस्थिरप्रतिष्ठाप्रयोगः ॥

श्रीः ॥ अथप्रतिष्ठेंदौबौधायनत्रिविक्रमानुसारेणनिर्णयसिंधूक्तःसप्रासादसर्वदेवस्थिरप्रतिष्ठाप्रयोगोलिख्यते ॥ कर्ताशुभेह्निषोडशहस्तंद्वादशहस्तंवामंडपंकृत्वामध्येवेदिंमंडपनवांशविस्तृतांहस्तोच्चांतत्पूर्वतोहस्तमात्रांत्रिवप्रांग्रहवेदिंनैर्ऋत्येवास्तुवेदिंहस्तमात्रांआग्नेयेहस्तमात्रंकुंडंस्थंडिलंवाविरच्यमध्यवेद्यांसर्वतोभद्रंचकृत्वा तदुपरिवितानकदलीस्तंभादिनाभूषयित्वाप्रतिष्ठादिनात्पूर्वदिनेसद्योवासंकल्पंकुर्यात् ॥ तत्रयजमानःकूष्मांडहोमादिनाऽऽत्मतनुंपावयित्वासभार्यःस्वासनेउपविश्याचम्यप्राणानायम्यदेशकालौस्मृत्वा अस्मिन्लिंगेमूर्तौवादेवकलासान्निध्यार्थंदीर्घायुर्लक्ष्मीसर्वकामसमृद्ध्यक्षय्यसुखकामोऽहंवास्तुग्रहसहितांप्रासादपिंडिकापरिवारयुतांशिवप्रतिष्ठांविष्णुप्रतिष्ठांवाकरिष्ये॥तदंगतयाविहितंस्वस्तिवाचनंमातृकापूजनंनांदीश्राद्धंआचार्यादिवरणंचकरिष्ये आदौनिर्विघ्नतासिद्ध्यर्थंमहागणपतिपूजनंचकरिष्येइतिसंकल्प्यआचार्यवरणांतंकृत्वावृतानृत्विजोमधुपर्केणार्हयित्वावस्त्रालंकारादिभिःसंपूज्य यजमानःसर्त्विक्पूर्णकुंभदध्यक्षतफलपुष्पसुवासिनीभिःसहितोमंगलघोषेणशाकुनसूक्तंपठन् मंडपप्रादक्षिण्येनगत्वापश्चिमद्वारेणमंडपंप्रविश्यवेद्यानैर्ऋतेउपविशेत् ॥ अथाचार्योवेद्याःपश्चिमतउपविश्यदेशकालौस्मृत्वाअमुकदेवप्रतिष्ठाकर्मणियजमानेनवृतोहंविहितकर्मकरिष्ये ॥ शरीरशुद्ध्यादिकर्माधिकारार्थंआसनादिन्यासान्पवनपावनंचकरि

## ॥ ३३४ ॥ सर्वप्रायश्चित्तप्रयोगः ॥



शुभदिवसेपर्षदंपरिकल्प्यकृतस्नानःक्लिन्नवासाआचम्यपवित्रपाणिःप्राणानायम्यहस्तेकुशान्गोवृषनिष्क्रयंचगृहीत्वात्रिवारंपर्षदं प्रदक्षिणीकृत्य समस्तसंपदितिश्लोकचतुष्टयंपठन्साष्टांगंप्रणमेत् ॥ पर्षल्लक्षणमाहयाज्ञवल्क्यः ॥ चत्वारोवेदधर्मज्ञाःपर्षत्त्रैविद्यमेववा ॥ साब्रूतेयंसधर्मःस्यादेकोवाध्यात्मवित्तमः ॥ इति ॥ ततःसभ्यैःकिंतेकार्यमितिपृष्टेउत्थाय ॥ आचम्यप्राणानायम्य तिथ्यादिसंकीर्त्यकरिष्यमाणसर्वप्रायश्चित्तांगत्वेन इदंयथाशक्तिगोवृषनिष्क्रयद्रव्यंसभ्येभ्योदातुमहमुत्सृजेइत्युत्सृज्यगोवृषनिष्क्रयद्रव्यंपर्षदग्रेनिधाय करद्वयंसंपुटीकृत्यतिष्ठन्वदेत् ॥ अमुकगोत्रोत्पन्नस्यामुकशर्मणःममजन्मप्रभृत्यद्ययावत्ज्ञानाज्ञानकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकलघुपातकसंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरप्रकीर्णपातकानांमध्येसंभावितपातकानांमहापातकव्यतिरिक्तानांनिरासार्थंअस्मिन्कालेशरीरशुद्ध्यर्थंचानुग्रहंकृत्वाप्रायश्चित्तमुपदिशंतुभवंतःइति ॥ ततस्तान्प्रार्थयेत् ॥ सर्वेधर्मविवेक्तारोगोप्तारः सकलाद्विजाः ॥ ममदेहस्यसंशुद्धिंकुर्वंतुद्विजसत्तमाः ॥ मयाकृतंमहाघोरंज्ञातमज्ञातकिल्विषं ॥ प्रसादःक्रियतांमह्यंशुभानुज्ञांप्रयच्छथ ॥ पूज्यैःकृतःपवित्रोहंभवेयंद्विजसत्तमैः ॥ इतिश्लोकान्पठित्वामामनुगृह्णंतुभवंतःइतिपर्षदंसाष्टांगंप्रणमेत् ॥ तत

१ किंतेकार्यंवदास्माकंकिंवामृगयसेद्विज ॥ तत्त्वतोब्रूहिसकलंसत्यंहिगतिरात्मनः ॥ अस्माकंब्राह्मणानांतुसत्यमेवपरंबलं ॥ यदिचेद्वक्ष्यसेसत्यंनियतंप्राप्स्यसेशुभं ॥ यद्यागतोस्यसत्वेनतत्त्वंशुद्ध्यसिर्काहिचित् ॥ एवंतैःसमनुज्ञातःसर्वंब्रूयादशेषतः ॥ पापीविख्यापयेत्पापंदत्वाधेनुंतथावृषं ॥ २ तथाअग्न्याधानाधिकारदिवसप्रभृतिनिश्चिताधानदिनपर्यंतंअनाहिताग्नितजनितदोषनिवर्हणार्थं (मरणकालेशुद्ध्यर्थं) इत्यादियथानिमित्तमूहःकार्यः

स्तेतमुत्सार्यतस्यशरीरद्रव्यादिशक्तिं उत्तममध्यमादिपक्षांश्चविचार्य अस्मिन्पक्षेअयंशक्तइतिनिश्चित्यतैःतथेत्युक्ते उत्थाय ( म
माद्यकरिष्यमाणसर्वप्रायश्चित्तांगत्वेनसरस्वतीपूजनंसभ्यानुवादकपूजनंचकरिष्यइतिसंकल्प्य प्रणोदेवीसरस्वतीति चंदनपुष्पा
दिभिः पुस्तकपूजांविधायनिबंधपूजांगत्वेनकिंचिद्द्रव्यंनिबंधाग्रेस्थापयित्वा ॥ सभ्यपूजनंकृत्वा अनुवादकपूजनं ॥ महाविष्णुस्व
रूपिणेअनुवादकायब्राह्मणायेदमासनंपाद्यमर्घ्यंगंधाद्युपचारैःपूजांकृत्वापापानुसारेणभृतिरूपांदक्षिणांतस्मैदत्वाकृतांजलिपुट
स्तिष्ठेत् ॥ ततःसभ्यास्तस्यपापानुरोधेनयथाशास्त्रंप्रायश्चित्तंसर्वसभ्यसंमतंअमुकप्राजापत्यात्मकंनिश्चित्यानुवादकंश्रावयेयुः ॥
ततोनुवादकः प्रायश्चित्तिनःसभ्योपदिष्टंप्रायश्चित्तमुपदिशति ॥ अमुकगोत्रोत्पन्नस्यामुकशर्मणःतवजन्मप्रभृतिअद्ययाव
त्ज्ञानाज्ञानकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिकसांसर्गिकज्ञाताज्ञातस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपात
कातिपातकोपपातकलघुपातकसंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरप्रकीर्णकपातकानांमध्येसंभावितानांमहापा
तकव्यतिरिक्तानांपातकानांक्षयोनेनसभ्यैरुपदिष्टेनसर्वप्रायश्चित्तेनअमुकप्राजापत्यप्रत्याम्नायात्मकेनप्राच्योदीच्यांगसहितेना
चीर्णेनतवशुद्धिर्भविष्यति तेनत्वंकृतार्थोभविष्यसि इत्युपदिशेत् ॥ ततः कर्तानिवेदितंप्रायश्चित्तं ॐ भवदनुग्रहःइत्यंगी
कुर्यात् ॥ स्त्रियाश्चेत्तथेत्यंगीकारः ॥ एवंत्रिरुपदिशेत् ॥ त्रिरंगीकुर्यात् ॥ ततःपर्षदंप्रणिपत्यविसर्जयेत् ॥ तस्मिन्दिनेउपवा
सःकार्यः ॥ ततःकस्यांचिद्रिक्तायांतिथौकृतमाध्याह्निकःदंतधावनकाष्ठंमृद्दूर्वाभस्मपंचगव्यद्रव्यंकुशान्गांआज्यंसमिधःवाससी
पलाशपर्णानिपालाशादिपात्रंविष्णुश्राद्धोपस्करद्रव्याणिहिरण्यंगंधाक्षतपुष्पादिपूजासामग्रींशालिग्रामंतुलसींचेत्येतान्प्राच्यांग
संभारान्संभृत्यसायाह्नेग्रामाद्बहिःगंगादितीर्थसमीपंगत्वाशुचिर्भूत्वा ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यअमुकगोत्रोत्प

न्नस्यामुकशर्मणःममजन्मप्रभृत्यद्ययावत्ज्ञाताज्ञातकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभु
क्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकलघुपातकसंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरप्रकीर्णकपातका
नांनिरासेनअस्मिन्कालेशरीरशुद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थं अमुकप्राजापत्यात्मकप्रायश्चित्तंअमुकप्रत्याम्नायेनप्राच्योदीच्यांग
सहितंयथाशक्तिआचरिष्ये ॥ इतिसंकल्प्य ॥ यानिकानिचपापानिब्रह्महत्यासमानिच ॥ केशानाश्रित्यतिष्ठंतितस्मात्केशान्वपा
म्यहं ॥ इतिशिखाकक्षोपस्थवर्जंनखरोमाणिवापयित्वाशुद्ध्यर्थंस्नात्वाद्वादशांगुलकाष्ठेनदंतान्शोधयेत् ॥ वनस्पतिग्रहणमंत्रः ॥
आयुर्बलंयशोवर्चःप्रजाःपशुवसूनिच ॥ ब्रह्मप्रज्ञांचमेधांचत्वंनोदेहिवनस्पते ॥ इतिकाष्ठमादाय ॥ मुखदुर्गंधिनाशायदंतानां
चविशुद्धये ॥ ष्ठीवनायचगात्राणांकुर्वेहंदंतधावनं ॥ इतिदंतान्संशोध्यद्वादशगंडूषान्कृत्वाशुद्ध्यर्थंस्नानंकृत्वादशविधस्नाना
निकुर्यात् ॥ देशकालावुत्कीर्त्यशरीरशुद्ध्यर्थंदशविधस्नानानिकरिष्ये ॥ तत्रादौभस्मस्नानं ॥ भस्मआदाय ईशानायनमइतिशि
रसि ॥ तत्पुरुषायनमइतिमुखे ॥ अघोरायनमइतिहृदये ॥ वामदेवायनमइतिगुह्ये ॥ सद्योजातायनमइतिपादयोः ॥ प्रणवे
नसर्वांगे ॥ अग्निरितिभस्म ॥ वायुरितिभस्म ॥ जलमितिभस्म ॥ स्थलमितिभस्म ॥ व्योमेतिभस्म ॥ सर्वꣳहवाइदंभस्म ॥
ॐ मानस्तोकेतनयेमानआयुषिमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतोनमसाविधेमते ॥ सर्वांगेभ
स्मविलिप्य ॥ आपोहिष्ठामयोभुवः० चनः ॥ इतिजलस्नानं ॥ आचम्य ॥ अथगोमयस्नानं ॥ ॐ तत्सवितुर्वरेण्यंभर्गो० यात् ॥
गंधद्वारांइतिगोमयमादाय ॥ अग्रमग्रंचरंतीनामोषधीनांवनेवने ॥ तासामृषभपत्नीनांपवित्रंकायशोधनं ॥ तन्मेरोगांश्चशो
कांश्चनुदगोमयसर्वदा ॥ इतिशिरःप्रभृत्यंगानिविलिप्यस्नात्वाआचम्य ॥ अथमृत्तिकास्नानं ॥ ॐ अश्वक्रांतेरथक्रांतेविष्णु

क्रांतेवसुंधरा ॥ शिरसांधारयिष्यामिरक्षस्वमांपदेपदे ॥ भूमिमभिमंत्र्य ॥ भूमिर्धेनुर्धरणीलोकधारिणी ॥ उद्धृतासिवराहेण
कृष्णेनशतवाहुना ॥ लोष्ठमादाय ॥ सहस्रपरमादेवीशतमूलाशतांकुरा ॥ सर्वंहरतुमेपापंदूर्वादुःस्वप्ननाशिनी ॥ इतिदूर्वा
मभिमंत्र्य ॥ कांडात्कांडात्प्ररोहंतीपरुषःपरुषःपरि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ दूर्वामादाय ॥ याशतेनप्रतनोषिस
हस्रेणविरोहसि ॥ तस्यास्तेदेवीष्टकेविधेमहविषावयं ॥ दूर्वांमृदिप्रतिष्ठाप्य ॥ मृत्तिकेहनमेपापंयन्मयादुष्कृतंकृतं ॥ मृत्तिके
ब्रह्मदत्तासिकाश्यपेनाभिमंत्रिता ॥ मृत्तिकेदेहिमेपुष्टिंत्वयिसर्वंप्रतिष्ठितं ॥ मृत्तिकेप्रतिष्ठितेसर्वंतन्मेनिर्णुदमृत्तिके ॥ तयाह
तेनपापेनगच्छामिपरमांगतिं॥ मृदमभिमंत्र्य ॥ यतइंद्रभयामहेततोनोअभयंकृधि ॥ मघवन्छग्धितवतन्नऊतयेविद्विषोविमृधो
जहि ॥ पूर्वेकिंचिल्लोष्ठमुत्सृजति ॥ स्वस्तिदाविशस्पतिर्वृत्रहाविमृधोवशी ॥ वृषेंद्रःपुरएतुनःस्वस्तिदाअभयंकरः ॥ दक्षिणे ॥
स्वस्तिनइंद्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ पश्चिमे॥ आपांतमन्यु
स्तृपलप्रभर्माधुनिःशिमीवाँछरुमाँऋजीषी ॥ सोमोविश्वान्यतसावनानिनार्वागिंद्रंप्रतिमानानिदेभुः ॥ उत्तरे ॥ ब्रह्मजज्ञानं
प्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः ॥ सबुध्नियाउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ ऊर्ध्वे ॥ स्योनापृथिविभवा
नृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ भूमौ ॥ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपह्वये
श्रियं ॥ आदित्यायदर्शयित्वा ॥ श्रीर्मेभजतु ॥ ललाटमालिप्य ॥ अलक्ष्मीर्मेनश्यतु ॥ प्रदक्षिणंशिरोविलिप्य ॥ विष्णुमुखा
वैदेवाश्छंदोभिरिमाल्लोकाननपजय्यमभ्यजयन् ॥ मुखे ॥ ओजोग्रीवाभिर्निर्ऋतिमस्थभिः ॥ ग्रीवायां ॥ महाँइंद्रोवज्रवा
हुःषोडशीशर्मयच्छतु ॥ स्वस्तिनोमघवाकरोतुहंतुपाप्मानंयोस्मान्द्वेष्टि ॥ वाह्वोः ॥ सोमानंस्वरणंकृणुहिब्रह्मणस्पते ॥ कुक्षी

वंतंयऔशिजं ॥ कक्ष्योः ॥ शरीरंयज्ञशमलंकुसीदंतस्मिन्त्सीदतुयोस्मान्द्वेष्टि ॥ शरीरे ॥ नाभिर्मेचित्तंविज्ञानं ॥ पायुर्मेपचिति र्भसत् ॥ नाभौ ॥ आनंदनंदावांडौमे ॥ भगःसौभाग्यंपसः ॥ आंडयोः ॥ ऊरुवोरोजः ॥ अरिष्टाविश्वान्यंगानितनूः ॥ ऊर्वोः ॥ जंघाभ्यांपद्भ्यांधर्मोस्मि ॥ विशिराजाप्रतिष्ठितः ॥ जंघयोः ॥ चरणंपवित्रंविततंपुराणं ॥ येनपूतस्तरतिदुष्कृतानि ॥ तेनपवित्रेण शुद्धेनपूताः ॥ अतिपाप्मानमरातिंतरेम ॥ चरणौविलिप्य ॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूढमस्यपांसुरे ॥ त्रीणि पदाविचक्रमेविष्णुर्गोपाअदाभ्यः ॥ अतोधर्माणिधारयन् ॥ द्वाभ्यामधस्तलपादौ ॥ सजोषाइंद्रसगणोमरुद्भिःसोमंपिववृत्र हन्छूरविद्वान् ॥ जहिशत्रूँरपमृधोनुदस्वाथाभयंकृणुहिविश्वतोनः ॥ दूर्वासहितंमृच्छेषंशिरसिनिधाय ॥ सुमित्र्यानआपओ षधयःसंतु ॥ इत्यद्भिरात्मानमासिच्य ॥ उदकमादायतांदिशंक्षिपंति ॥ दुर्मित्रास्तस्मैभूयासुः ॥ प्रथमं ॥ योस्मान्द्वेष्टि ॥ द्वितीयं ॥ यंचवयंद्विष्मः ॥ तृतीयंनिक्षिप्य ॥ ततःस्नात्वाचम्य ॥ इतिमृत्तिकास्नानं ॥ ॥ अथगोमूत्रस्नानं ॥ ॐ तत्सवितुर्व रेण्यं० दयात् ॥ शिरःप्रभृतिगोमूत्रमालिंपति ॥ स्नात्वा ॥ ततोगोमयस्नानं ॥ गंधद्वारांदुराधर्षां० श्रियं ॥ सर्वांगेगोमय मालिप्य ॥ स्नात्वा ॥ ॥ अथपयःस्नानं ॥ आप्यायस्वसमेतुतेविश्वतःसोमवृष्णियं ॥ भवावाजस्यसंगथे ॥ सर्वांगेदुग्धमालिप्य ॥ स्नात्वा ॥ ॥ अथदधिस्नानं ॥ दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणआयूंषितारिषत् ॥ सर्वांगे दध्यालिप्य ॥ स्नात्वा ॥ ॥ अथघृतस्नानं ॥ शुक्रमसिज्योतिरसितेजोसि ॥ सर्वांगेघृतमालिप्य ॥ स्नात्वा ॥ ॥ अथकुशोदकस्नानं ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यां ॥ कुशमिश्रोदकेनसर्वांगमालिप्य ॥ स्नात्वाचम्य ॥ ॥ अथवारुणस्नानं ॥ जलसमीपंगत्वा ॥ ॐ हिरण्यशृंगंवरुणंप्रपद्येतीर्थंमेदेहियाचितः ॥ यन्मयाभुक्तमसाधूनांपापेभ्यश्चप्रतिग्रहः ॥ यन्मेमनसा

वाचाकर्मणावादुष्कृतंकृतं ॥ तन्नइंद्रोवरुणोबृहस्पतिःसवितांचपुनंतुपुनःपुनः ॥ नमोग्नयेप्सुमतेनमइंद्रायनमोवरुणायनमोवा
रुण्यैनमोद्भ्यः ॥ यदपांक्रूरंयदमेध्यंयदशांतंतदपगच्छतात् ॥ अत्याशनादतीपानाद्यच्चउग्रात्प्रतिग्रहात् ॥ तन्नोवरुणोराजापा
णिनाह्यवमर्शतु ॥ सोहमपापोविरजोनिर्मुक्तोमुक्तकिल्विषः ॥ नाकस्यपृष्ठमारुह्यगच्छेद्ब्रह्मसलोकतां ॥ यश्चाप्सुवरुणःसपुनात्वघ
मर्षणः ॥ तीक्ष्णदंष्ट्रमहाकायकल्पांतदहनोपम ॥ भैरवायनमस्तुभ्यमनुज्ञांदातुमर्हसि ॥ सागरस्यतुनिःश्वासोदंडहस्तोसुरां
तकः ॥ जगत्स्रष्टाजगन्मर्दीनमामित्वांसुरेश्वर ॥ इमंमंत्रंसमुच्चार्यतीर्थेस्नानंसमाचरेत् ॥ अन्यथातत्फलस्यार्धंतीर्थेशोहरति
ध्रुवं ॥ ततःनाभिमात्रजलेगत्वा ॥ इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्णिया ॥ असिक्न्यामरुद्वृधेवितस्तयार्जी
कीयेशृणुह्यासुषोमया ॥ इतिपाणिनोदकमावर्त्य ॥ ऋतंचसत्यंचाभीद्धात्तपसोध्यजायत ॥ ततोरात्रिरजायततत्तःसमुद्रोअ
र्णवः ॥ समुद्रादर्णवादधिसंवत्सरोअजायत ॥ अहोरात्राणिविदधद्विश्वस्यमिषतोवशी ॥ सूर्याचंद्रमसौधातायथापूर्वमकल्प
यत् ॥ दिवंचपृथिवींचांतरिक्षमथोसुवः ॥ इतित्र्यावृतातृचेनाघमर्षणेनत्रीन्प्राणायामान्कृत्वा ॥ सपवित्रेणपाणिनाआपोहि
ष्ठामयोभुवइतितिसृभिर्हिरण्यवर्णाःशुचयःपावकाइतिचतसृभिःपवमानःसुवर्जनइतिचैतेनानुवाकेनप्रत्यृचंमार्जयित्वा ॥ स्ना
त्वा ( स्त्रीशूद्राणाममंत्रकस्नानानि ) स्नानांगतर्पणंकुर्यात् ॥ ब्रह्मादयोयेदेवाः ॥ तान्देवांस्तर्पयामि ॥ भूर्देवांस्तर्पयामि ॥
भुवोदेवांस्तर्पयामि ॥ सुवर्देवांस्तर्पयामि ॥ भूर्भुवःसुवर्देवांस्तर्पयामि ॥ ततोनिवीती ॥ विश्वामित्रादयोयऋषयः ॥
तानृषींस्तर्पयामि ॥ भूर्ऋषींस्तर्पयामि ॥ भुवर्ऋषींस्तर्पयामि ॥ सुवर्ऋषींस्तर्पयामि ॥ भूर्भुवःसुवर्ऋषींस्तर्पयामि ॥ प्राची
नावीती ॥ वैशंपायनादयोयेपितरः ॥ तान्पितॄंस्तर्पयामि ॥ भूःपितॄंस्तर्पयामि ॥ भुवःपितॄंस्तर्पयामि ॥ सुवःपितॄंस्तर्प

यामि ॥ भूर्भुवःसुवःपितॄꣳस्तर्पयामि ॥ यज्ञोपवीती ॥ यन्मयादूषितंतोयंशारीरमलसंभवात् ॥ तद्दोषपरिहारार्थंयक्ष्माणंतर्पयाम्यहं ॥ इतिजलाद्बहिर्भूमावुदकंनिनयति ॥ उत्तीर्याहतेवाससीपरिधाय ॥ शुचीवोहव्यामरुतःशुचीनां ॥ शुचिꣳहिनोम्यध्वरꣳशुचिभ्यः ॥ ऋतेनसत्यमृतसापआयन् ॥ शुचिजन्मानःशुचयःपावकाः ॥ अग्निःशुचिव्रततमःशुचिर्विप्रःशुचिःकविः ॥ शुचीरोचतआहुतः ॥ उदग्नेशुचयस्तवशुक्राभ्राजंतईरते ॥ तवज्योतीꣳष्यर्चयः ॥ इतिवाससीअद्भिःप्रोक्ष्य ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामाददे ॥ इतिवाससीआदाय ॥ तच्चक्षुर्देवहितंपुरस्ताच्छुक्रमुच्चरत् ॥ पश्येमशरदःशतंजीवेमशरदःशतंनंदामशरदःशतंमोदामशरदःशतंभवामशरदःशतꣳशृणवामशरदःशतंप्रब्रवामशरदःशतमजीताःस्यामशरदःशतंज्योक्चसूर्यंदृशे ॥ इत्यादित्यायदर्शयित्वा ॥ आवहंतीवितन्वाना ॥ कुर्वाणाचीरमात्मनः ॥ वासाꣳसिममगावश्च ॥ अन्नपानेचसर्वदा ॥ ततोमेश्रियमावह ॥ इतिवासःपरिवासः ॥ द्विराचम्यभस्मधारणंकृत्वा शुचिःपूतोभवतीतिविज्ञायते ॥ इतिदशविधस्नानानि ॥ ॥ अथविष्णुश्राद्धं ॥ गोमयेनोपलिप्तायांभूमौप्राङ्मुखउपविश्यदर्भासनोदर्भपाणिः आचम्यप्राणानायम्यकरिष्यमाणसर्वप्रायश्चित्तप्राच्यांगविहितंविष्णुश्राद्धंकरिष्ये इतिसंकल्प्य ॥ तत्रपंचोपचारैःषोडशोपचारैर्वामहाविष्णुंसंपूज्य ॥ चतुरोब्राह्मणानाहूयप्राङ्मुखानुपवेश्य ॥ भवद्भिः अस्मिन्विष्णुश्राद्धेक्षणक्रियतां ॥ ॐ तथेतिप्रतिवचनं ॥ एवंप्रतिब्राह्मणंक्षणंदत्वा ॥ विष्णुश्राद्धेब्राह्मणायेदमासनं इतिसर्वेषां ॥ विष्णुश्राद्धेब्राह्मणायेदंपाद्यं विष्णुश्राद्धेब्राह्मणायेदमर्घ्यं स्वाहानमः विष्णुश्राद्धेब्राह्मणायएषगंधः पूजार्थेतुलसीपत्रं एषधूपः एषदीपः पवित्रार्थेइमौकुशौ फलार्थेपूगफलं अलंकारा

१ अत्रतदंगंश्रीमहाविष्णुपूजनंकरिष्यइतिविष्णोर्नुकमित्यनेनश्रीमहाविष्णवेनमइतिवापूजनाचारः ।

र्थेकिंचिद्धिरण्यंआच्छादनार्थेतुलसीपत्रमाच्छादनं ॥ युवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः ॥ तंधीरासःकवय
उन्नयंतिस्वाधियोमनसादेवयंतः ॥ विष्णुरूपद्विजेभ्यःएतेआसनादिगंधपुष्पधूपदीपाच्छादनांताउपचाराःसर्वेपरिपूर्णाभ
वंतुइतिसंप्रार्थ्य ॥ ततोब्राह्मणाग्रेआमान्नानिप्रतिष्ठाप्य प्रोक्ष्यतूष्णींपरिषिच्यब्राह्मणहस्तमादाय इदंआमंयथासोपस्करं
निष्क्रयद्रव्यंवा परिविष्टंश्रीमहाविष्णुप्रीत्यर्थंअस्यब्राह्मणस्यआतृप्तेःस्वाहानमः ॥ एवंप्रतिब्राह्मणंआमंनिवेद्य ॥ ततःअंजलिनो
दकमादायतिष्ठन् ॥ एकोविष्णुर्महद्भूतंपृथग्भूतान्यनेकशः ॥ त्रीन्लोकान्व्याप्यभूतात्माभुंक्तेविश्वभुगव्ययः ॥ अनेन
विष्णुश्राद्धेआमसमर्पणेनभगवान्सकलपापापहमहाविष्णुःप्रीयतांइतिजलमुत्सिंचति ॥ ततःअस्यश्राद्धस्यप्रतिष्ठाफलसिद्ध्यर्थं
ब्राह्मणेभ्योदक्षिणाप्रदानंकरिष्येइतिसंकल्प्य दक्षिणांदत्वाकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ अनेनविष्णुश्राद्धेनपापापहमहाविष्णुः
प्रीयतांनमम ॥ इतिविष्णुश्राद्धं ॥ अथगोदानं ॥ ब्राह्मणंगांचउक्तविधिनासंपूज्य ॥ गोपुच्छंब्राह्मणहस्तेदत्वा ॥ गवामंगेषु
तिष्ठंतिभुवनानिचतुर्दश ॥ यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच ॥ इतिमंत्रमुच्चार्य ॥ अमुकगोत्रोत्पन्नायअमुकशर्मणेब्रा
ह्मणायइमांगांरुद्रदैवत्यांपापापहमहाविष्णुप्रीत्यर्थंसर्वप्रायश्चित्तपूर्वांगत्वेनतुभ्यमहंसंप्रददेनममेतिवदेत् ॥ ततोब्राह्मणः ॥ देव
स्यत्वास० प्रतिगृह्णामीतिप्रतिगृह्णीयात् ॥ कृतगोदानसांगतासिद्ध्यर्थंकिंचिद्द्रव्यंदक्षिणात्वेनदद्यात् ॥ अथवागोनिष्क्रयद्रव्यंवा
तेनैवमंत्रेणदद्यात् ॥ इतिआद्यगोदानं ॥ ( स्त्रीशूद्राणांहोमोनास्ति ॥ पुत्रेणब्राह्मणद्वारावाहोमःकार्यइतिकेचित् ) अथाद्यहोमः ॥
सर्वप्रायश्चित्तपूर्वांगविहितहोमंकरिष्ये ॥ इतिसंकल्प्य ॥ तदंगंउद्धननादिविद्नामानमग्निंप्रतिष्ठापयामीतिप्रतिष्ठाप्य प्रोक्षितें
धनाग्निनिक्षिप्यवेणुधमन्याप्रबोध्यध्यायेत् ॥ ॐ चत्वारिशृंगात्र० वरदोभव ॥ समित्त्रयमादाय ॐ श्रद्धएहीत्यादिप्राणायामांतं

कृत्वा ॥ सर्वप्रायश्चित्तप्राच्यांगहोमकर्मणियायक्ष्यमाणादेवतास्ताःसर्वाःपरिग्रहीष्यामि ॥ तूष्णीमिध्मेनयक्ष्ये ॥ प्रधानहोमेमहा
विष्णुंसमस्तव्याहृतिमंत्रेणअष्टाविंशत्याज्याहुतिभिर्यक्ष्ये ॥ प्रायश्चित्तहोमे अग्निंवायुंसूर्यंप्रजापतिंचप्रत्येकमाज्येनैतादेवताःस
द्योयक्ष्ये ॥ ॐभूर्भुवःसुवःस्वाहा ॥ इत्यन्वाधानसमिधोग्नावाधाय ॥ प्रजापतयइदं ॥ एषहिदेवःप्र० मुखः ॥ यथाहुतद्वंस० आयुः ॥
परिस्तीर्य ॥ मयिगृह्णाम्यग्रे० परागात् ॥ उत्तरेणाग्निंदर्भानास्तीर्यपात्राण्यासादयति ॥ दर्वींआज्यस्थालींप्रोक्षणींअष्टाविंशतिस
मित्कमिध्मंबर्हिःउपवेषंसंमार्गदर्भान्अवज्वलनदर्भान्आज्यंचासादयामि ॥ पवित्रकरणादि प्रोक्षणीःसंस्कृत्य ॥ पात्राणि
प्रोक्ष्य ॥ दर्वींनिष्टपनादि पवित्रेअग्नावाधाय ॥ अदितेनुमन्यस्व अनुमतेनु० देवसवितःप्रसुव ॥ आज्येनेध्ममभिघार्य हस्ते
नेध्मंजुहोति ॥ प्रजापतयेस्वाहा ॥ प्रजापतयइदं० ॥ अथदर्व्याजुहोति ॥ ॐ भूर्भुवःसुवःस्वाहा ॥ विष्णवइदं० ॥ इत्यष्ट
विंशतिवारंहुत्वा ॥ यथाहुत०युः ॥ अथप्रायश्चित्तहोमः ॥ ॐ भूःस्वाहा ॥ अग्नयइदं० ॥ भुवःस्वाहा ॥ वायवइदं० ॥ सुवः
स्वाहा ॥ सूर्यायेदं० ॥ भूर्भुवःसुवःस्वाहा ॥ प्रजापतयइदं० ॥ परिस्तरणान्युत्तरेविसृजेत् ॥ अदितेन्वमंस्थाः ॥ अनुमतेन्व
मं० ॥ सरस्वतेन्व० ॥ देवसवितःप्रासावीः ॥ यज्ञनमस्ते० उपतेनमः ॥ सर्वमंत्रेषुतिष्ठति ॥ मेधावीतेजस्वीवर्चस्वीब्रह्मवर्चसी
आयुष्मान्भूयासं ॥ स्वस्ति ॥ श्रद्धांमेधांयशःप्रज्ञांविद्यांबुद्धिंश्रियंबलं ॥ आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहन ॥ प्रमादा
त्कुर्वतांकर्म० श्रुतिः ॥ इतिसंप्रार्थ्यअग्निंसंपूज्य ॥ अनेनसर्वप्रायश्चित्तप्राच्यांगविहितहोमाख्येनकर्मणाभगवान्सकलपापाप
हमहाविष्णुःप्रीयतांनमम ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ वषट्तेविष्णवास० सदानः ॥ विष्णवेनमः ३ ॥ गच्छगच्छसुरश्रेष्ठस्व
स्थानेपरमेश्वर ॥ यत्रब्रह्मादयोदेवास्तत्रगच्छहुताशन ॥ इत्यग्निविसर्गंकुर्यात् ॥ इतिप्राच्यांगविधिः ॥ ॥ छ ॥

## ॥ ३३५ ॥ ब्रह्मकूर्चविधिः ॥

तत्रप्रयोगः ॥ आघारवत्तंत्रंआपूर्विकंवा ॥ आचम्यदेशकालौसंकीर्त्यममशरीरगतसकलकल्मषनाशार्थंब्रह्मकूर्चविधिनापंच गव्याशनंकरिष्ये ॥ तदंगंविहितहोमंकर्तुंस्थंडिलादिसकलंकर्मकरिष्ये ॥ विट्नामानमग्निंप्रतिष्ठाप्य ॥ प्रज्वाल्य ॥ चत्वा रिशृंगेतिध्यात्वासमित्त्रयमादाय ॥ श्रद्धएहीत्यादिप्राणायामांतंकृत्वा ब्रह्मकूर्चहोमकर्मणियायक्ष्यमाणादेवतास्ताःसर्वाःपरिग्र हीष्यामि ॥ तूष्णीमिध्मेन ॥ वैशेषिकप्रधानहोमे ॥ अग्निंपंचगव्येन सोमंपंच० ॥ विष्णुंत्रिःपंच० रुद्रंपंच० सवितारंपं० ब्रह्माणंपंच० परमात्मानंपंचगव्येनयक्ष्ये ॥ प्रायश्चित्तहोमे ॥ अग्निंवायुंसूर्यंप्रजापतिंचप्रत्येकमाज्येन एतादेवताःसद्योयक्ष्ये ॥ ॐ भूर्भुवःसुवःस्वाहा इत्यन्वाधानसमिधोग्नावाधाय ॥ प्रजापतयइदं ॥ एषहिदेवःप्र०मुखः ॥ यथाहुतद्व० आयुः ॥ परि स्तीर्य ॥ मयिगृह्णा० परागात् ॥ उत्तरेणाग्निंदर्भानास्तीर्यपात्राण्यासादयेत् ॥ दर्वींआज्यस्थालींप्रोक्षणींपालाशादिपंचगव्यक रणपात्रं ॥ इध्मं वर्हिः नीलायागोर्मूत्रं कृष्णायाःगोमयं ताम्रायाःपयः श्वेतायाःदधि कपिलायाःघृतं कुशमिश्रंउदकं सप्तद र्भमयंकूर्चं यज्ञियकाष्ठनिर्मितमंथां उपवेषं संमार्गदर्भान् अवज्वलनदर्भान् आज्यंचासादयामि ॥ पवित्रकरणादिपात्रप्रोक्ष णांतेपालाशादिपात्रेपवित्रेनिधाय तस्मिन्पवित्रांतर्हितेपंचगव्यपात्रेपंचगव्यानिवक्ष्यमाणमंत्रैर्निर्वपति ॥ ॐ तत्सवितुर्वरे० यात् ॥ इतिपलमात्रंगोमूत्रंनिर्वपति ॥ गंधद्वारां० श्रियं ॥ अंगुष्ठार्धमात्रंगोमयंनि० ॥ आप्यायस्वसमें० गथे ॥ सप्तपलमि तंक्षीरंनिर्व० ॥ दधिक्राव्णो० रिषत् ॥ पलत्रयमितंदधिनि० ॥ शुक्रमसिज्योतिरसितेजोसि ॥ पलमात्रंघृतंनि० ॥ देवस्य त्वासवितुःप्रसवे० हस्ताभ्यां ॥ पलमात्रंकुशोदकंनिर्वपति ॥ मंथामादत्तेसव्यकृता ॥ पंचगव्यपात्रस्थंपवित्रमादायआज्यस्था

ल्यांनिधाय॥ आपोहिष्ठार्म०चनः३ ॥इतिपंचगव्यंमश्नाति॥ दर्वींनिष्टपनादि आज्येनसहपंचगव्यस्योल्मुकेनत्रिःपर्यग्निकरणं॥
उल्मुकनिरसनादि पवित्रेअग्नावाधाय ॥ पंचगव्यपात्रंबर्हिषिआज्यस्थाल्याउत्तरतोनिधाय॥ अदितेनुमन्यस्व ॥ अनुमते०॥
सरस्वते० ॥ देवसवितःप्रसुव ॥ आज्येनेध्ममभिघार्यनवसमित्कमिध्ममादायजुहोति ॥ प्रजापतयेस्वाहा प्रजापतयइदं० ॥
आसादितकूर्चमादायतेनैवोद्धृत्यपंचगव्यहोमंकरोति ॥ ॐ अग्नयेस्वाहा अग्नयइदं० ॥ सोमायस्वाहा सोमायेदं० ॥ इरावती
धेनुमतीहिभूतꣳसू० ॥मयूखैःस्वाहा॥ विष्णवइदं०॥ इदंविष्णुर्विचक्रमे० सुरेस्वाहा॥ विष्णवइदं०॥ विष्णोर्नुकंवीर्याणि० ॥
गायःस्वाहा ॥ विष्णवइदं० ॥ मानस्तोकेतनये० विधेमतेस्वाहा ॥ रुद्रायेदं० ॥ तत्सवितुर्व० यात्स्वाहा ॥ सवित्रइदं० ॥
ब्रह्मजज्ञानंप्र० विवःस्वाहा ॥ ब्रह्मणइदं० ॥ ॐ स्वाहा ॥ परमात्मनइदं० ॥ एतैर्मंत्रैःप्रणवावृत्त्याचपंचगव्यस्यचतुर्थभागं
हुत्वा॥ आघारपक्षेतुवारुण्यादिकर्मशेषंसमाप्य॥ स्वीकृतपक्षे यथाहुतद्वं० आयुः इतिपरिसमुह्य ॥ अथदर्व्याआज्यहोमः ॥
कृतस्यपंचगव्यहोमकर्मणःसाद्गुण्यार्थंप्रायश्चित्तहोमंकरिष्ये ॥ ॐभूःस्वाहा अग्नयइदं०॥ॐभुवःस्वाहा वायवइदं० ॥ ॐसुवः
स्वाहा सूर्यायेदं० ॥ ॐभूर्भुवःसुवःस्वाहा प्रजापतयइदं० ॥ परिस्तरणान्युत्तरेविसृजेत् ॥ अदितेन्वमꣳस्थाः० प्रासावीः ॥
अग्निंसंपूज्य॥ संस्थाजपेनोपतिष्ठते ॥ यज्ञनमस्ते० देहिमेहव्यवाहन ॥ प्रमादात्कुर्वतांकर्म० संपूर्णस्यादितिश्रुतिः ॥ अनेन
पंचगव्यहोमाख्येनकर्मणाभगवान्यज्ञरूपीपापापहमहाविष्णुःप्रीयतांनमम ॥ पंचगव्यहुतशेषंदर्भशकलेनप्रणवेनालोड्य ॥
प्रणवेनाभिमंत्र्यपात्रांतरेकृत्वाब्राह्मणैरनुज्ञातःप्रणवेनसर्वंपिबेत् ॥ स्त्रीचेत् ॥ यत्त्वगस्थिगतंपापंदेहेतिष्ठतिमामके ॥
प्राशनात्पंचगव्यस्यदहत्वग्निरिवेंधनं ॥ इतिपंचगव्यंप्राश्य ॥ तस्मिन्दिवसेपंचगव्याशनम् ॥ अशक्तौहविष्यान्नंवाकुर्यात् ॥

इदंसर्वंनक्षत्रदर्शनेकर्तव्यं ॥ गृहमागत्यविष्णुंस्मरन्मौनीनिशामतिवाह्य ॥ अनेनविधिनापूर्वांगंकृत्वासंकल्पानुसारेणकृच्छ्रा चरणंकुर्यात् ॥ तन्मूलं ॥ त्र्यहंप्रातस्त्र्यहंसायंत्र्यहमद्यादयाचितं ॥ त्र्यहंपरंचनाश्नीयात्प्राजापत्यःसउच्यते ॥ एवंकृच्छ्राच रणंकृत्वा ॥ अथवाकृच्छ्रप्रत्याम्नायेनकृच्छ्रमाचरेत् ॥ प्रत्याम्नायसंक्षेपःप्रायश्चित्तारंभेद्रष्टव्यः ॥ छ ॥ ॥ छ ॥

## ॥ ३३६ ॥ प्रायश्चित्तोत्तरांगम् ॥

श्रीः ॥ ततःप्रायश्चित्तांतेउत्तरांगानिकुर्यात् ॥ तिथ्यादिसंकीर्त्यमयाकृतस्यसर्वप्रायश्चित्तस्यउत्तरांगानिकरिष्ये इतिसंकल्प्य ॥ व्याहृतिभिराज्यहोमः विष्णुश्राद्धंगोदानंचपूर्वोक्तविधिनाकुर्यात् ॥ एवंप्रायश्चित्तंकृत्वा ॥ अनेनमयाकृतेनसर्वप्रायश्चित्ताख्येन कर्मणाभगवान्सकलपापापहमहाविष्णुःप्रीयतां ॥ इतिसर्वप्रायश्चित्तप्रयोगः ॥ शक्तौसत्यांदशदानानिकुर्यात् ॥ तत्रक्रमः ॥ गोभूतिलहिरण्याज्यवासोधान्यगुडानिच ॥ रौप्यंलवणमित्याहुर्दशदानान्यनुक्रमात् ॥ दशदानादिमंत्राअग्रेएकादशाहप्रसंगे द्रष्टव्याः ॥ अत्रपापधेनुदानमप्यावश्यकं ॥ एतानिदशदानानिसभ्येभ्यएवदद्यात्तदसंभवेन्येभ्योऽपि ॥ ततोयन्मयाकृतम मुकप्रायश्चित्तंतदच्छिद्रमस्त्वितिभवंतोब्रुवंतुइतिकर्त्राउक्तेअच्छिद्रमस्त्वितिब्राह्मणाःप्रतिब्रूयुः ॥ एतत्प्रायश्चित्तमकृत्वैवयदि पित्रादिर्मृतस्तदापातकनिश्चयेपुत्रादिनेदमवश्यंकार्यं अनिश्चयेनावश्यकं ॥ पुत्रादिनाकरणेपंचगव्यप्राशनाभावः ॥ इति ॥

## ॥ ३३७ ॥ मुमूर्षौमृतेचकृत्यं ॥

श्रीः ॥ गोमयेनोपलिप्तायांतिलकृष्णाजिनतुलसीसहितायांदक्षिणाग्रकुशास्तृतायांभूमावुपविष्टस्यमुमूर्षोःपुत्रउत्संगेधारितशिरा

स्तिष्ठेत् ॥ अमुकशर्मणोऽमुकगोत्रस्यपितुःअमृतत्वप्राप्तयेउपनिषदादीनिश्रावयिष्ये इतिसंकल्प्य ॥ ब्रह्मविदाप्नोतिपरं ॥ भृगुर्वैवारुणिः ॥ अंभस्यपारे ॥ इत्यादीनिनारायणनामानिअन्यानिपुण्यसूक्तानिगीतासहस्रनामादीनिचश्रावयेत् ॥ स्त्रीचेत् ॥ आयुंषःप्राणꣳसंतंनु ॥ इत्यनुवाकंश्रावयेयुः नारायणनामानिच ॥ ततोव्यसुंज्ञात्वापुत्रादिःकर्तासचैलंस्नात्वाआचम्यतूष्णींप्राणानायम्य ॥ सर्वंप्रेतकृत्यंप्राचीनावीतिनाकार्यंदक्षिणापवर्गंच ॥ अकृतप्रायश्चित्तेमृतेदेशकालौसंकीर्त्यपित्रादेर्जन्मप्रभृत्यद्ययावत्सकृदसकृत्कृतकायिकवाचिकमानसिकज्ञाताज्ञातस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरप्रकीर्णकपातकानांमध्येसंभावितपापानांनिरासार्थंयथाशक्तिषडब्दत्र्यब्दसार्धाब्दान्यतमसंख्यप्राजापत्यप्रायश्चित्तंअमुकप्रत्याम्नायेनसूतकांतेआचरिष्ये ॥ तथापित्रादेर्मरणकालेसंभावितानांऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टास्पृश्यस्पृष्टअंतरालमरणअस्नातमरणकर्ममंत्ररहितमरणखट्वोपरिमरणवंधनमरणादिनिमित्तानांप्रत्यवायपरिहारार्थंकृच्छ्रत्रय ( षड्द्वादशपंचदशवानिमित्तानुसारेण)प्रायश्चित्तंअमुकप्रत्याम्नायेनसद्यःसूतकांतेवाकरिष्येइतिसंकल्प्य ॥ ततःकर्तापि देशकालौसंकीर्त्यअमुकगोत्रस्यामुकशर्मणःपित्रादेःऔर्ध्वदेहिककर्माधिकारार्थंकृच्छ्रत्रयप्रायश्चित्तंतत्प्रत्याम्नायगोनिष्क्रयद्रव्यदानेनसूतकांतेअहमाचरिष्ये ॥ शक्तौतदैवद्रव्यादिनाअशक्तौसूतकांतेवाकुर्यात् ॥ ( तथापित्रादेरंत्यकर्माधिकारार्थं[१]वपनंकरिष्ये ॥ कर्तृभिन्नैस्तुपित्रादिमरणनिमित्तंवपनंकरिष्यइतिसंकल्प्य ॥ यानिकानिचपापानिब्रह्महत्यासमानिच ॥ केशानाश्रित्यतिष्ठंतितस्मात्केशान्वपाम्यहं ॥ इतिकक्षोपस्थशिखावर्जंकेशश्मश्रुलोमनखानिदक्षिणसंस्थानिवापयित्वास्नायात् ॥ ) एवंविप्रानुज्ञयाशुद्धिंसंपाद्यप्रेतं

१ हिरण्यकेशीयौर्ध्वदेहिकप्रयोगेवपनमग्रेदहनोत्तरंलिखितमस्तिपरंतुप्रचुराचारादत्रसंगृहीतं ।

संस्थाप्यचंदनादिनालंकृत्यनलदमालामाबध्यदीपैरुद्दीप्यनयनार्थंकटंनिबध्यात् ॥ अहतेनवाससात्रिभिर्भागैःप्रेतमाच्छाद्यत स्यचतुर्थभागंछित्वातेनोत्तरीयंकुर्यात् ॥ द्वादशाहांतप्रेतकृत्येषुतदेवधार्यं ॥ ॥ ॥ ॥ ॥ छ ॥

## ॥ ३३८ ॥ प्रेतोत्थापननिमित्तंहिरण्यश्राद्धं ॥

देशकालौसंकीर्त्य ॥ अमुकगोत्रस्यामुकप्रेतस्यप्रेतोत्थापननिमित्तंहिरण्यश्राद्धंकरिष्ये इतिसंकल्प्य ॥ एकोद्दिष्टविधिना पिष्टेनपिंडदानविसर्जनांतं ॥ ( तूष्णींतिलोदकं ) प्रेतोत्थापननिमित्तश्राद्धेक्षणउपतिष्ठतु ॥ प्रत्युपचारंनामगोत्रोच्चारणं कार्यं॥आसनंपाद्यमर्घ्यमाचमनीयंस्नानंवस्त्रार्थेतिलाःगंधंतुलसीपत्रंधूपदीपार्थेतिलाः ॥ इदमामान्नंतन्निष्क्रयद्रव्यंवातांबूल दक्षिणासहितंसूतकांतेदास्यमानमुपतिष्ठतु ॥ गायत्र्यामनसोपस्थानं ॥ ततःपिंडार्थंदर्भासनंतदुपरितिलोदकं नामगोत्राद्युच्चार्यप्रे तोत्थापननिमित्तश्राद्धेएषसक्तुपिंडस्तवोपतिष्ठतु ऊष्मानुमंत्रणं० आंजनंअभ्यंजनं पाद्यार्घ्यादिपूर्ववत् नैवेद्यार्थेसक्तवउपतिष्ठं तुहस्तप्रक्षालनादि तांवूलदक्षिणादि उत्तरीयवासोलेपोदकमु० सर्वोपचरार्थेतिलाःउप० प्रेतपुष्टिद्वाराप्यायनमस्त्विवतिभवं तोब्रुवंतु ॥ गायत्र्योपस्थानंचालनंप्रवाहणंच ॥ अनादिनिधनोदेवःशंखचक्रगदाधरः ॥ अक्षय्यःपुंडरीकाक्षःप्रेतमुक्तिप्रदो भव ॥ इहलोकंपरित्यज्यगतोसिपरमांगतिं ॥ मनसावायुरूपेणपिंडेत्वांयोजयाम्यहं ॥ अभिरम्यतां ॥ अभिरतोस्मि ॥ हिरण्य श्राद्धांगंपिंडंवामकुक्षौक्षिपति ॥ पिंडमात्रंवादत्वास्वज्ञातयःप्रेतंनयेयुः ॥ त्रिपाद्यांस्मार्ताग्न्यभावेलौकिकाग्निः ॥ प्रेताग्न्योर्म ध्येऽन्येननगंतव्यं ॥ दहनभूमिंगत्वातस्याःपश्चिमतःप्रेतमुत्तीर्योदीचींदिशंनिष्क्रामंति ॥ ॥ ॥ ॥ ॥

१ दिवामृतौरात्रिदाहेरात्रिमरणेदिवादाहप्राप्तौचप्रेतस्यपर्युषितत्वंप्राप्नोतीतितदापंचगव्यादिनास्नापनमुक्तमन्यत्र ।

## ॥ ३३९ ॥ दहनविधिः ॥

यजमानःसमारोपिताग्निश्चेन्नष्टाग्निर्वाम्रियेततदातत्रोक्तविधिनाऔपासनसिद्धिंविधायदहेत् ॥ आत्मसमारोपिताग्निर्मृतश्चेत्क र्ताविधिवल्लौकिकाग्निंप्रतिष्ठाप्यप्रेतस्यदक्षिणपाणिंलौकिकाग्निसमीपेनिधायसमिद्धस्तःप्रेतपाणिमन्वारभ्यजुहोति ॥ उपावरो हजातवेदःमंतꣳस्वर्गायलोकायप्रजानन् ॥ आयुःप्रजाꣳरयिमस्मासुधेहिप्रेताहुतिंचास्यजुषस्वस्वाहेतिलौकिकाग्नौसमिधमा धायतेनाग्निनादहनंकुर्यात् ॥ यदिनष्टाग्निर्म्रियेतकर्तापूर्ववदुपावरोह्यकालव्यवधानोचितंकृच्छ्रादिकुर्यात् ॥ अद्येत्यादि० गोत्रस्यपितुःमुमूर्षुकालपर्यंतंप्रमादादिनागृह्याग्नित्यागजन्यदोषपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंप्रत्यब्दंएकैकप्राजापत्यंगोमूल्य प्रत्याम्नायेनअहमाचरिष्ये ॥ तथाचाग्निलोपेनलुप्तानांसायंप्रातर्होमानांदर्शपूर्णमासस्थालीपाकानांचव्रीह्याज्यादिनिष्क्रयद्रव्यं ब्राह्मणायदातुमहमुत्सृजे ॥ अद्येत्यादि० प्राचीनावीतीपितुःगोत्रस्यशर्मणःप्रेतस्यविच्छिन्नाग्निंसंधास्येइतिसंकल्प्य ॥ पि तृमेधवदर्ग्नींधनादिस्थंडिलेलौकिकाग्निंप्रतिष्ठाप्यतूष्णींपरिसमुह्यपरिस्तीर्यपात्रचतुष्टयासादनादिस्रुचंस्रुवमाज्यस्थालींप्रोक्षणीं च प्रोक्षणाद्याज्यसंस्कारांतेग्निंपरिषिच्यद्वादशगृहीतेनस्रुचंपूरयित्वाअन्वारब्धेप्रेतेप्रजापतिंमनसाध्यायन्॥ प्रजापतयेस्वाहा॥ प्रजापतयइदं० ॥ पुनःसकृद्गृहीत्वा ॥ भूर्भुवःसुवःस्वाहा ॥ प्रजापतयइदं० ॥ ततोनित्यहोमंकृत्वा ॥ कृष्णपक्षेप्रातर्हो माकृताहर्मरणेप्रातराहुतिमारभ्यसायंहोमाकृतरात्रिमरणेसायमाहुतिमारभ्यपक्षहोमवन्मरणदिनादिदर्शांतंदिनसंख्ययाचतस्र श्चतस्रआहुतीर्जुहुयात्॥ दर्शस्थालीपाकंचकुर्यात् ॥ तद्यथा ॥ अमुकगोत्रस्यामुकप्रेतस्यद्वितीयाप्रातःकालादारभ्यसायंकाला दारभ्यवायथास्यात्तथोहेनआगामिप्रतिपत्प्रातःकालपर्यंतान्शेषहोमान्अनेनप्रातरौपासनेनसहसायमौपासनेनसहवाव्रीहिभि

र्होष्यामि ॥ प्रातर्होमोऽकृतश्चेत्प्रातर्होमाहुतिद्वयंहुत्वा पश्चाद्दिनाहुतिसंख्ययापात्रचतुष्टयेआहुतिद्वयंसंपाद्यचतस्रआहुतीर्जुहुयात् ॥ अमुकशर्मणःदर्शस्थालीपाकस्थानेपूर्णाहुतिंहोष्यामि ॥ द्वादशाष्टचतुर्गृहीतेनवाअशक्तौपूर्णस्रुवेणवाआज्यंगृहीत्वा ॥ अग्नयेस्वाहा ॥ अग्नयइदं० ॥ पुनराज्यमादायसर्वप्रायश्चित्ताहुतिंजुहुयात् ॥ पत्नीमरणेप्येवं ॥ निरग्निकस्यब्रह्मचार्यादेःनिरग्निकायावाकपालाग्निः ॥ अग्निवर्णंकपालंतुकृत्वातत्रविनिक्षिपेत् ॥ करीषादिततोयस्तुजातःसतुकपालजः ॥ अनुपनीताऽविवाहितयोरप्येवं ॥ विधवाविधुरयोरुत्तपनीयकः कपालाग्निरेववा ॥ दर्भैरग्निंतुप्रज्वाल्यपुनर्दर्भैस्तुसंयुतः ॥ पुनर्दर्भैस्तृतीयोग्निरेषउत्तपनीयकः ॥ कपालाग्निरेववा ॥ लौकिकाग्निनावासर्वेषांदाहः ॥ आहिताग्नेर्वैतानाग्निभिः ॥ ततःअग्निमुदकुंभंतिलानाज्यंकुशान्हिरण्यशकलानिशमीशाखादिचगृहीत्वा ॥ देशकालौसंकीर्त्य ॥ अमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमुक्त्यर्थंपितृत्वप्राप्त्यर्थंहौत्रविधानेनदहनक्रियांकरिष्ये ॥ इतिसंकल्प्य ॥ सहिरण्यपलाशशाखयाशमीशाखयावाअपेतवीतविचसर्पतातइतिभूमिंसंमृज्यात् ॥ अपेतवीतविचसर्पतातोयेत्रस्थपुराणायेचनूतनाः ॥ अहोभिरद्भिरक्तुभिर्व्यक्तंयमोददात्ववसानमस्मै ॥ दक्षिणतःशाखांनिरस्यापउपस्पृश्याद्भिरवोक्ष्य दहनदेशेहिरण्यंनिधायदक्षिणाप्राचींदारुचितिंरचयित्वा ॥ त्रिःप्रसव्यंपरिषिच्यदर्भैरग्निंदारुचितिंचपरिस्तीर्य सर्वौषधीमिश्राभिरद्भिःकुंभंपूरयित्वा तेनउदकेन ॥ चित्तिःस्रुक् ॥ चित्तमाज्यं ॥ वाग्वेदिः ॥ आधीतंबर्हिः ॥ केतोअग्निः ॥ विज्ञातमग्निः ॥ वाक्पतिर्होता ॥ मनउपवक्ता ॥ प्राणोहविः ॥ सामाध्वर्युः ॥ वाचस्पतेविधेनामन् ॥ विधेमतेनाम ॥ विधेस्त्वमस्माकंनाम ॥ वाचस्पतिःसोमंपिबतु ॥ आस्मासुनृम्णंधात्स्वाहा ॥ इतिप्रेतंस्नापयेत् ॥ ततःप्रेतंचितिमारोप्य ॥ अथास्यप्राणायतनेषुहिरण्यशकलान्याज्यविंदून्वानिदध्यात् ॥ तत्रमंत्राः ॥ चित्तिःस्रुगासीत् ॥ चित्तमाज्यमासीत् ॥

वाग्वेद्रिरासीत् ॥ आधीतंवर्हिरासीत् ॥ केतोअग्निरासीत् ॥ विज्ञातमग्निरासीत् ॥ वाक्पतिर्होतासीत् ॥ मनंउपवक्तासीत् ॥ प्राणोहविरासीत् ॥ सामांध्वर्युरासीत् ॥ इतिद्विरावृत्त्यानासिकाच्छिद्रयोर्हिरण्यशकलेनिदध्यात् ॥ आज्यविंदून्वा ॥ एवंसर्वत्रमंत्रावृत्तिः ॥ पृथिवीहोतासीत् ॥ द्यौरंध्वर्युरासीत् ॥ रुद्रोग्निरासीत् ॥ बृहस्पतिरुपवक्तासीत् ॥ इतिमुखे ॥ अग्निर्होतासीत् ॥ अश्विनांध्वर्युरासीत ॥ त्वष्टाग्निरासीत् ॥ मित्रउपवक्तासीत् ॥ इतिद्विरक्ष्णोः ॥ सूर्यंतेचक्षुः ॥ वातंप्राणः ॥ द्यांपृष्ठं ॥ अंतरिक्षमात्मा ॥ अंगैर्यज्ञं ॥ पृथिवीᳪशरीरैः ॥ इतिद्विःकर्णयोः ॥ महाहविर्होतासीत् ॥ सत्यहविरध्वर्युरासीत् ॥ अच्युतपाजाअग्नीदासीत्॥अच्युतमनाउपवक्तासीत्॥अनाधृष्यश्चाप्रतिधृष्यश्चयज्ञस्याभिगरावास्ताँ ॥ अयास्यउद्गातासीत् ॥ इतिद्विःकुक्ष्योः॥हिरण्यगर्भःसमवर्ततांग्रेभूतस्यजातःपतिरेकआसीत्॥सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम ॥इतिनाभ्यां—

## (॥ ३४० ॥ पंचकपुत्तलविधिः ॥

पंचके ॥ अमुकगोत्रस्यामुकप्रेतस्यधनिष्ठापंचकमरणसूचितवंशारिष्टपरिहारार्थंपंचकविधिंकरिष्यइतिसंकल्प्यदर्भमय्यःपंचप्रतिमाःकृत्वाऊर्णासूत्रेणसंवेष्ट्ययवपिष्टेनानुलिप्यगंधादिनालंकृत्यदाहसमयेप्रेतोपरिन्यसेत् ॥ प्रथमांप्रेतवाहायेतिशिरसि ॥ द्वितीयांप्रेतसखायेतिनेत्रयोः॥ तृतीयांप्रेतपायेतिकुक्षौ ॥ चतुर्थींप्रेतभूमिपायेतिनाभौ॥पंचमींप्रेतहर्त्रेइतिपादयोः॥इतिनिधायोदकधारांदत्वा ॥ ततस्तदुपरि यमायसोमं० त्र्यंबकं० इतिमंत्राभ्यांप्रतिमासुप्रत्येकंघृताहुतीर्जुहोति ॥ शिरसिप्रेतवाहायस्वाहा ॥ नेत्रयोःप्रेतसखायस्वाहा ॥ कुक्षौप्रेतपायस्वाहा ॥ नाभौप्रेतभूमिपायस्वाहा ॥ पादयोःप्रेतहर्त्रेस्वाहाइति ॥ ततोविधिनाप्रेतंदहेत् ॥

## ॥ ३४१ ॥ त्रिपादपुत्तलविधिः ॥

त्रिपादर्क्षेअमुकगोत्रस्यामुकप्रेतस्यत्रिपादमरणसूचितवंशारिष्टनिरसनार्थंत्रिपादविधिंकरिष्ये ॥ दर्भप्रतिमात्रयंकृत्वाऊर्णासूत्रेणसंवेष्ट्ययवपिष्टेनानुलिप्यगंधादिनालंकृत्यप्रेतोपरिविन्यसेत् ॥ प्रथमांप्रेतवाहायेतिशिरसि ॥ द्वितीयांप्रेतसखायेतिहृदये॥ तृतीयांप्रेतपायेतिनाभौइतिविन्यस्यक्रमेणउदकधारांदत्वातदुपरिघृताहुतीर्जुहुयात् ॥ शिरसि प्रेतवाहायस्वाहा ॥ हृदये प्रेतसखायस्वाहा ॥ नाभौ प्रेतपायस्वाहा ॥ इतिहुत्वाताभिःसहशवंदहेत्॥ प्रेतोत्थापनश्राद्धपिंडंदर्वीचवामकुक्षौनिक्षिपति ॥)

## ॥ ३४२ ॥ अग्निप्रज्वालनादि ॥

—ततःअग्निंप्रज्वालयेत् ॥ पुंसःशिरोदेशेस्त्रियाःपाददेशे ॥ अग्निर्यजुर्भिः ॥ सवितास्तोमैः ॥ इंद्रउक्थामदैः ॥ मित्रावरुणावाशिषा ॥ अंगिरसोधिष्णियैरग्निभिः ॥ मरुतःसदोहविर्धानाभ्यां ॥ आपःप्रोक्षणीभिः ॥ ओषधयोवर्हिषा ॥ अदितिर्वेद्या ॥ सोमोदीक्षया ॥ त्वष्टेध्मेन ॥ विष्णुर्यज्ञेन ॥ वसवआज्येन ॥ आदित्यादक्षिणाभिः ॥ विश्वेदेवाऊर्जा ॥ पूषास्वगाकारेण ॥ बृहस्पतिःपुरोधया ॥ प्रजापतिरुद्गीथेन ॥ अंतरिक्षंपवित्रेण ॥ वायुःपात्रैः ॥ अहंश्रद्धया ॥ १ ॥ सेनेंद्रस्य ॥ धेनाबृहस्पतेः ॥ पथ्यापूष्णः ॥ वाग्वायोः ॥ दीक्षासोमस्य ॥ पृथिव्यग्नेः ॥ वसूनांगायत्री ॥ रुद्राणांत्रिष्टुक् ॥ आदित्यानांजगती॥ विष्णोरनुष्टुक् ॥ वरुणस्यविराट् ॥ यज्ञस्यपंक्तिः ॥ प्रजापतेरनुमतिः ॥ मित्रस्यश्रद्धा ॥ सवितुःप्रसूतिः ॥ सूर्यस्यमरीचिः ॥ चंद्रमसोरोहिणी ॥ ऋषीणामरुन्धती ॥ पर्जन्यस्यविद्युत् ॥ चतस्रोदिशः ॥ चतस्रोवांतरदिशाः ॥ अहश्चरात्रिश्च ॥

कृषिश्चवृष्टिश्च ॥ त्विषिश्चापचितिश्च ॥ आपश्चौषधयश्च ॥ ऊर्क्सूनृताचदेवानांपत्नयः ॥ इतिद्वाभ्यामग्निंप्रज्वालयेत् ॥ ततः उपतिष्ठेत ॥ वाचस्पतेविधेनामन् ॥ विधेमतेनाम ॥ विधेस्त्वमस्माकंनाम ॥ वाचस्पतिःसोमंपिबतु ॥ आस्मासुनृम्णंधात्स्वाहा ॥ वाचस्पतेवाचोवीर्येण ॥ संभृततमेनायक्ष्यसे ॥ यजमानायवार्यं ॥ आसुवस्करस्मै ॥ वाचस्पतिःसोमंपिबति ॥ जजनदिंद्रमिंद्रियायस्वाहा ॥ सोमःसोमस्यपुरोगाः ॥ शुक्रःशुक्रस्यपुरोगाः ॥ श्रातास्तइंद्रसोमाः ॥ वातापेर्हवनश्रुतःस्वाहा ॥ वाचस्पतेच्छिद्रयावाचा ॥ अच्छिद्रयाजुह्वा ॥ दिविदेवावृधंहोत्रामेरयस्वस्वाहा ॥ वाचस्पतेहृद्विधेनामन् ॥ विधेमतेनाम ॥ विधेस्त्वमस्माकंनाम ॥ वाचस्पतिःसोममपात् ॥ मादैव्यस्तंतुश्छेदिमार्मनुष्यः ॥ नमोदिवे ॥ नमःपृथिव्यैस्वाहा ॥ वाग्घोता ॥ दीक्षापत्नी ॥ वातोध्वर्युः ॥ आपोभिगरः ॥ मनोहविः ॥ तपसिजुहोमि ॥ भूर्भुवःसुवः ॥ ब्रह्मस्वयंभु ॥ ब्रह्मणेस्वयंभुवेस्वाहा ॥ ब्राह्मणएकहोता ॥ सयज्ञः ॥ समेददातुप्रजांपशून्पुष्टिंयशः ॥ यज्ञश्चमेभूयात् ॥ अग्निर्द्विहोता ॥ सभर्ता ॥ समेददातुप्रजां० यशः ॥ भर्ताचमेभूयात् ॥ पृथिवीत्रिहोता ॥ सप्रतिष्ठा ॥ समेददातुप्रजां० यशः ॥ प्रतिष्ठाचमेभूयात् ॥ अंतरिक्षंचतुर्होता ॥ सविष्ठाः ॥ समेददातुप्रजां० यशः ॥ विष्ठाश्चमेभूयात् ॥ वायुःपंचहोता ॥ सप्राणः ॥ समेददातुप्रजां०यशः ॥ प्राणश्चमेभूयात् ॥ चंद्रमाःषड्ढोता ॥ सऋतून्कल्पयाति ॥ समेददातुप्रजां०यशः ॥ ऋतवश्चमेकल्पन्तां ॥ अन्नंसप्तहोता ॥ सप्राणस्यप्राणः ॥ समेददातुप्रजां०यशः ॥ प्राणस्यचमेप्राणोभूयात् ॥ द्यौरष्टहोता ॥ सोनाधृष्यः ॥ समेददातुप्रजां०यशः ॥ अनाधृष्यश्चभूयासं ॥ आदित्योनवहोता ॥ सतेजस्वी ॥ समेददातुप्रजां०यशः ॥ तेजस्वीचभूयासं ॥ प्रजापतिर्दशहोता ॥ सइदंसर्वं ॥ समेददा० यशः ॥ सर्वंचमेभूयात् ॥ एतैर्मंत्रैरग्निमुपतिष्ठते ॥ वातास्तेवांतुपथिपुण्यगंधामनःसुखागात्रसुखानुलोमाः ॥ त्वचःसुखामां

ससुखाअस्थिसौख्यावहंतुत्वांमरुतःसुकृतांयत्रलोकाः ॥ इतिसर्वेबांधवाःस्ववस्त्राणांआर्द्रैःप्रांतैस्त्रिरप्रदक्षिणंवीजयेयुः ॥ (कदाचिद्दहनकालेऽग्निनाशेदग्धकाष्ठैरग्निंमथित्वातेनदहेत् ॥ अथवाभूर्भुवःसुवःस्वाहेत्याज्याहुतिंहुत्वालौकिकेनवादहेत् ॥ अत्यापदिगंगादिमहाजलेवाक्षिपेत्) ॥ वामस्कंधारोपितस्योदकुंभस्यपरशुनाच्छिद्रंकृत्वापाददेशतएवतेनोदकधारांनिषिंचन्चितिमप्रदक्षिणंकरोति ॥ इमाआपोमधुमत्योऽस्मिंल्लोकउपदुह्यंतामिमां ॥ इतिप्रथमं ॥ इमाआपोमधुमत्योंतरिक्षेलोकउपदुह्यंतामिमां ॥ इतिद्वितीयं॥ इमाआपोमधुमत्योमुष्मिंल्लोकउपदुह्यंतामिमां ॥ इतितृतीयं ॥ ततोमामवतारिषन्नपुनरवतारिषावहैइतिकुंभंप्रेतशिरोदेशेभिनत्तियथाआपोनतिष्ठंतितथाविधेयं ॥ ततः किंचिदुदंचोनिष्क्रामंति ॥ उद्वयंतमसस्परिपश्यंतोज्योतिरुत्तरं॥ देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमं॥ उदुत्यंजातवेदसंदेवं० ॥ इतिद्वाभ्यामादित्यमुपतिष्ठते ॥ ततश्चितिमप्रेक्षमाणाबालपुरःसराःपुत्रादयोयत्रआपस्तत्रगच्छंति ॥ ततोवपनंकुर्यात् ॥ अद्येत्यादि० गोत्रस्य शर्मणःप्रेतस्यमरणनिमित्तंवपनंकरिष्ये ॥ पत्नीअलंकारान्त्यक्त्वावपनंकुर्यात् ॥ रात्रौदग्ध्वातुपिंडांतंकृत्वावपनवर्जितं ॥ वपनंस्मृतिचोदितं॥ तत्रमंत्रः ॥ यानिकानिचपापानिब्रह्महत्यासमानिच ॥ केशानाश्रित्यतिष्ठंतितस्मात्केशान्वपाम्यहं ॥ इतिमंत्रेणकर्ताअन्येचपुत्राःशिखाकक्षोपस्थवर्जंकेशश्मश्रुलोमनखानिवापयंति ॥ ततःस्नात्वा ॥ धातापुनातुसवितापुनातु ॥ अग्नेस्तेजसासूर्यस्यवर्चसा ॥ इतिदक्षिणामुखाबांधवाउदकमुत्सृजंति ॥ ततःपर्वतमालोक्यग्रामंप्रविश्यगृहद्वारेनिंबपत्राणिभक्षयित्वाश्मनिपदंदत्वाबालपुरःसरंगृहंप्रविशेयुः ॥ ततोगोमयोपलिप्तायांभूमावुष्णोदकयुक्तांस्तंडुलान्प्रकीर्यगृहस्थानांमनुष्यगवादीनांशुभंभवत्वित्युक्त्वा ॥ ज्योतिष्मदगारंकुर्वंति ॥ प्रथमदिनादारभ्यदशमदिनपर्यंतंआकाशेशिक्यादौउदकंक्षीरंचपृथक्प्रतिष्ठाप्यामुकगोत्रामुकप्रेतात्रस्नाहिइदंक्षीरंपिबेतिब्रूयात् ॥

## ॥ ३४३ ॥ अस्थिसंचयनं ॥



तत्रादावस्थिसंचयनदिनविचारः ॥ अपरेद्युस्तृतीयस्यांपंचम्यांसप्तम्यांवाअस्थीनिसंचिन्वंति ॥ स्मृत्यंतरेपि ॥ चतुर्थेनवमेचैवषष्ठेवाचाष्टमेतथा ॥ अस्थिसंचयनंकुर्यादेषामन्यतमेदिने ॥ त्रिपादंवैधृतिंचैवमृत्युयोगंतथैवच ॥ दिनक्षयंचवृद्धिंचनंदाद्यास्तिथयस्तथा ॥ रवौभौमेतथाशुक्रेनकर्तव्यंकदाचन ॥ कृष्णपक्षेदशम्याऊर्ध्वमयुग्मतिथिषुएकादश्यांत्रयोदश्यांपंचदश्यांवा ॥ कृष्णपक्षोर्ध्वेसपिंडीकरणात्पूर्वंस्मृत्युक्तेकालेफल्गुनीद्वयाषाढाद्वयप्रोष्ठपदाद्वयत्रिजन्मपुष्यनक्षत्रेषुनंदातिथौचनकर्तव्यं ॥ अस्थ्नांचश्वसूकरशूद्रादिस्पर्शेशालग्रामतुलस्युदकेनप्रोक्षणंकुर्यात् ॥ ततःस्नात्वाअन्नंफलानिघृतंक्षीरंगोमूत्रंगोमयंबृहतीफलंकुशतिलान्औदुंबरशाखाऊर्णासूत्रंकलशांश्चादायदहनभूमिंगत्वा ॥ शवाग्निर्नष्टश्चेत्प्रायश्चित्तंकुर्यात् ॥ तद्यथा ॥ कर्ताप्राणानायम्यदेशकालौसंकीर्त्यप्राचीनावीतीअमुकगोत्रस्यामुकशर्मणःप्रेतस्यशवाग्निनाशप्रायश्चित्तंकरिष्येइतिसंकल्प्य ॥ शंनोदेवीरितिभस्मावोक्ष्यसमिधमादाय अयंतेयोनिरित्यनेनभस्मनासमिधंस्पृष्ट्वाविधिवल्लौकिकाग्निंप्रतिष्ठाप्य॥ आजुह्वानःसुप्रतीकःपुरस्तादग्नेस्वांयोनिमासीदसाध्या ॥ अस्मिन्त्सधस्थेअध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत ॥ उद्बुध्यस्वाग्नेप्रतिजागृह्येनमिष्टापूर्तेसꣳसृजेथामयंच ॥ पुनःकृण्वꣳस्त्वापितरंयुवानमन्वाताꣳसीत्त्वयितंतुमेतं॥ इतिद्वाभ्यांसमिधमग्नौप्रहृत्यकांचनंब्राह्मणायदद्यात्॥ ततोदक्षिणाग्रैर्दर्भैरग्निंपरिस्तीर्यपात्रप्रोक्षणकालेप्रोक्षणीपात्रमाज्यस्थालींस्रुवंचप्रत्युक्ष्यस्रुवसंमार्जनांतंकृत्वाग्निंपरिषिच्यस्रुवेणाज्याहुतीर्जुहुयात् ॥ अयाश्चाग्नेस्यनभिशस्तीश्चसत्यमित्त्वमयाअसि ॥ अयसामनसाधृतोयसाहव्यमूहिषेयानोधेहिभेषजꣳस्वाहा ॥ अयसेग्नयइदं० ॥ अग्निर्होता ॥ अश्विनाध्वर्यू ॥ त्वष्टाग्नीत् ॥ मित्रउपवक्ता ॥ सोमःसोमस्यपुरोगाः ॥ शुक्रःशुक्र

स्यंपुरोगाः ॥ आतास्तइंद्रसोमाः ॥ वातापेर्हवनश्रुतःस्वाहा ॥ अग्नयेपंचहोत्रइदं० ॥ ब्राह्मणएकंहोता ॥ सयज्ञः ॥ समेंददातु
प्रजांपशून्पुष्टिंयशः ॥ यज्ञश्चमेभूयात्स्वाहा ॥ ब्राह्मणायैकहोत्रइदं० ॥ अग्निर्द्विहोता ॥ सभर्ता ॥ समें० ॥ भर्ताचमेभूयात्स्वाहा ॥
अग्नयेद्विहोत्रइदं० ॥ पृथिवीत्रिहोता ॥ सप्रतिष्ठा ॥ समें० ॥ प्रतिष्ठाचमेभूयात्स्वाहा ॥ पृथिव्यैत्रिहोत्रइदं० ॥ अंतरिक्षंच
तुर्होता ॥ सविष्ठाः ॥ समें० ॥ विष्ठाश्चमेभूयात्स्वाहा ॥ अंतरिक्षायचतुर्होत्रइदं० ॥ वायुःपंचहोता ॥ सप्राणः ॥ समें० ॥
प्राणश्चमेभूयात्स्वाहा ॥ वायवेपंचहोत्रइदं० ॥ चंद्रमाःषड्ढोता ॥ सऋतून्कल्पयाति ॥ समें० ॥ ऋतवश्चमेकल्पन्ताꣳस्वाहा ॥
चंद्रमसेषड्ढोत्रइदं० ॥ अन्नꣳसप्तहोता ॥ सप्राणस्यप्राणः ॥ समें० ॥ प्राणस्यचमेप्राणोभूयात्स्वाहा ॥ अन्नायसप्तहोत्रइदं० ॥
द्यौरष्टहोता ॥ सौंनाधृष्यः ॥ समें० ॥ अनाधृष्यश्चभूयासꣳस्वाहा ॥ दिवेऽष्टहोत्रइदं० ॥ आदित्योनवहोता ॥ सतेजस्वी ॥
समें० ॥ तेजस्वीचभूयासꣳस्वाहा ॥ आदित्यायनवहोत्रइदं० ॥ प्रजापतिर्दशहोता ॥ सइदꣳसर्वं ॥ समें० ॥ सर्वंचमेभूयात्स्वाहा ॥
प्रजापतयेदशहोत्रइदं० ॥ मनोज्योतिर्जु० घृतेनस्वाहा ॥ मनसेज्योतिषइदं० ॥ यन्मआत्मनोमिंदा० स्वाहा ॥ मिंदवतेग्नय
इदं० ॥ पुनरग्निश्चक्षु० क्ष्योःस्वाहा ॥ मिंदवतेग्नयइदं० ॥ भूरग्नयेचपृथिव्यैचमहतेचस्वाहा ॥ अग्नयेपृथिव्यैमहतइदं० ॥ भुवो
वायवेचांतरिक्षायचमहतेचस्वाहा ॥ वायवेऽतरिक्षायमहतइदं० ॥ सुवरादित्यायचदिवेचमहतेचस्वाहा ॥ आदित्यायदि
वेमहतइदं० ॥ भूर्भुवःसुवश्चंद्रमसेचनक्षत्रेभ्यश्चदिग्भ्यश्चमहतेचस्वाहा ॥ चंद्रमसेनक्षत्रेभ्योदिग्भ्योमहतइदं० ॥ अनाज्ञातं
यदा० तथꣳस्वाहा ॥ अग्नयइदं० ॥ पुरुषसंमितो० तथꣳस्वाहा ॥ अग्नयइदं० ॥ यत्पाकत्रा० तिस्वाहा ॥ अग्नयइदं० ॥
भूःस्वाहा ॥ अग्नयइदं० ॥ भुवःस्वाहा ॥ वायवइदं० ॥ सुवःस्वाहा ॥ सूर्यायेदं० ॥ भूर्भुवःसुवःस्वाहा ॥ प्रजापतइदं० ॥

इमंमेवरुण० केस्वाहा ॥ वरुणायेदं० ॥ तत्त्वायामि० षीःस्वाहा ॥ वरुणायेदं० ॥ त्वंनोअग्नेवरु० स्मत्स्वाहा ॥ अग्नीवरुणाभ्यामिदं ॥ सत्वंनोअग्ने० धिस्वाहा ॥ अग्नीवरुणाभ्यामिदं० ॥ त्वमग्नेअया० जꣳस्वाहा ॥ अयसेग्नयइदं० ॥ तंतुंतन्वन्त्रजंसो० नुꣳस्वाहा ॥ तंतुमतेऽग्नयइदं० ॥ इत्येताद्वात्रिंशदाहुतीर्हुत्वा ॥ स्रुवमग्नौप्रहृत्यनोत्तरपरिषेचनं ॥ एवमग्निसिद्धिः ॥ ततःआचम्यप्राणानायम्यदेशकालौसंकीर्त्यामुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमुक्त्यर्थंपितृत्वप्राप्त्योत्तमलोकप्राप्त्यर्थंसंचयनाख्यंकर्मकरिष्ये ॥ ततः ॥ यंतेअग्निममंथामवृषभायेवपक्तवे ॥ इमंतꣳशमयामसिक्षीरेणचोदकेनच ॥ यंत्वमग्नेसमदहस्त्वमुनिर्वापयापुनः ॥ क्यांवूरत्रजायतांपाकदूर्वाव्यल्कशा ॥ शीतिकेशीतिकावतिह्लादुकेह्लादुकावति ॥ मंडूक्यासुसंगमयेमꣳस्वग्निꣳशमयं ॥ शंतेधन्वन्याआपःशमुतेसंत्वनूक्याः ॥ शंतेसमुद्रियाआपःशमुतेसंतुवर्ष्याः ॥ शंतेस्रवंतीस्तनुवेशमुतेसंतुकूप्याः ॥ शंतेनीहारोवर्षतुशमुपृष्वावशीयतां ॥ एतैःपंचभिर्मंत्रैरुदुंबरशाखाभिःक्षीरमिश्रेणोदकेनदग्धान्यस्थीन्यवोक्षति ॥ ततोदहनदेशात्दक्षिणतोंगारान्निरुह्यतस्मिंस्तिस्रआहुतीर्जुहोतिएतैर्मंत्रैः ॥ अवसृजपुनरग्नेपितृभ्योयस्तआहुतश्चरतिस्वधाभिः ॥ आयुर्वसानउपयातुशेषꣳसंगच्छतांतनुवाजातवेदःस्वाहा ॥ अग्नयेजातवेदसइदं० ॥ संगच्छस्वपितृभिःसꣳस्वधाभिःसमिष्टापूर्तेनपरमेव्योमन् ॥ यत्रभूम्यैवृणसेतत्रगच्छतत्रत्वादेवःसवितादधातुस्वाहा ॥ देवायसवित्रइदं० ॥ यत्तेकृष्णःशकुनआतुतोदपिपीलःसर्पउतवाश्वापदः ॥ अग्निष्टद्विश्वादनृणंकृणोतुसोमश्चयोब्राह्मणमाविवेशस्वाहा ॥ अग्नीषोमाभ्यामिदं० ॥ इतिहुत्वा ॥ ततोविषमैरुदकुंभैःसम्यगवोक्ष्य ॥ वामहस्तेनीललोहितेसूत्रेबृहतीफलमाबध्याश्मनिवामपदंनिधायावलोकयेत् ॥ वक्ष्यमाणेभ्यःस्थानेभ्योवक्ष्यमाणैर्मंत्रैरस्थीन्यादत्ते ॥ उत्तिष्ठातस्तनुवꣳसंभरस्वमेहगात्रमवहामाशरीरं ॥ यत्रभूम्यैवृणसेतत्रगच्छतत्रत्वादेवः

संचितादधातु ॥ इतिदंतेभ्यःशिरसोवाउद्धृतान्यस्थीनिवाससिकुंभेवानिदधाति ॥ इदंतएकमित्यनेनवाहुभ्यांस्कंधाभ्यां ॥ परऊतएकं इतिपार्श्वाभ्यांश्रोणिभ्यां॥ तृतीयेनज्योतिषासंविशस्वेतिचतुर्थमंत्रेणऊरुभ्यांजंघाभ्यां॥ संवेशनस्तनुवैचारुरेधिप्रियो देवानांपरमेसधस्थे ॥ इतिपंचमेनपद्भ्यांसुसंचितमुपसंचित्यभस्मापघ्नंतिशिष्टाचारात् ॥ ततस्तदुपरिशीतलांछायांविधायगो मयेनोपलिप्य संचयनांगभूतंवेदिकाश्राद्धंकुर्यात् ॥ पिंडचतुष्टयंकृत्वा पूर्वेएकंश्मशानवासिनेरुद्रायायंपिंडउपतिष्ठतां ॥ उत्तरे श्मशानवासिभ्यःप्रेतेभ्यःअयंपिंडउपतिष्ठतां ॥ मध्येएकंअमुकगोत्रायामुकप्रेतायअयंपिंडउपतिष्ठतां ॥ पश्चिमेवायसेभ्यः अयंपिंडउपतिष्ठतां॥ प्रत्येकंपादुकाद्वयंएवंषट् ॥ छत्रत्रयं ॥ ध्वजत्रयं ॥ पादुकाध्वजपोलिकायुतःसोदकुंभोभोजनार्थंअयंपिंड उपतिष्ठतां ॥ इतिसर्वत्र ॥ गोमूत्रेणहस्तौप्रक्षाल्यवायसपिंडंवायसोयावद्भक्षयेत्तावत्तिष्ठेत् ॥ वलीनामुपरितिलकल्काद्यवकीर्य प्रार्थयेत् ॥ येत्रश्मशानदेवाःस्युर्भगवंतःसनातनाः ॥ तेस्मत्सकाशाद्गृह्णंतुवलिमष्टांगमक्षयं ॥ प्रेतस्यास्यशुभाँल्लोकान्प्रयच्छं तुचशाश्वतान् ॥ अस्माकमायुरारोग्यंसुखंददतुवैचिरात् ॥ इतिसंप्रार्थ्य ॥ उत्तिष्ठप्रेहिप्रद्रवौकःकृणुष्वपरमेव्योमन् ॥ यमेन त्वंयम्यासंविदानोत्तमंनाकमधिरोहेमं ॥ इत्युपतिष्ठेत् ॥ ततःपृथिव्यांतंप्रक्षिप्य ॥ अपामोषधीनांरसैनस्वर्गेलोकेभिवपा मिअमुकप्रेतेतिअरण्येशम्याःपलाशस्यवाप्रत्यगधोदेशेस्थिकुंभंपिहितमुखंनिदधाति ॥ संचयनदिनेप्रेतशरीराच्छादनार्थंवस्त्रं दद्यात् ॥ संचयनश्राद्धंकुर्यात् ॥ नामगोत्राद्युच्चार्यअस्थिसंचयनश्राद्धंकरिष्ये ॥ प्रेतस्थानेकुशासनमुपतिष्ठतु ॥ पिष्टपिंडं कृत्वाअमुकस्यास्थिसंचयनश्राद्धेसक्तुपिंडउपतिष्ठतु ॥ पाद्यादिअर्चनं ॥ पिंडंगंगादौप्रक्षिप्यस्नायात् ॥ अंतर्दशाहेयस्यास्थि गंगायांयदिमज्जति ॥ गंगायांमरणंयद्वत्तद्वत्पुण्यंलभेद्ध्रुवं ॥ इतिअस्थिसंचयनविधिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३४४ ॥ उदकक्रियापिंडक्रिया ॥



श्रीः ॥ नदीतडागादौगत्वातूष्णींस्नात्वाअंगादिघर्षणंनकुर्यात् ॥ देशकालौसंकीर्त्यामुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमुक्त्यर्थंपितृत्वप्राप्त्योत्तमलोकप्राप्त्यर्थंमरणदिनात्प्रथमेहनिउदकक्रियांकरिष्ये इतिसंकल्प्य ॥ अव्रणमेकंपाषाणमादाय तस्योपरिएकंकुशपत्रंस्थापयित्वाततःस्नात्वा ॥ देशकालौसंकीर्त्यनामगोत्राद्युच्चार्यदाहजनितपीडोपशमनार्थंमृत्तिकास्नानमहंकरिष्ये ॥ मृदमादायसूर्यायदर्शयित्वाशिरःप्रभृत्यंगानिविलिप्य ॥ धातापुनातुसवितापुनातु ॥ अग्नेस्तेजसासूर्यस्यवर्चसा ॥ इतिस्नात्वाचम्य ॥ एवंप्रतिदिनंदशाहांतं ॥ ततःकुशोपर्यश्मानंप्रतिष्ठाप्यामुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्तिपितृत्वप्राप्त्योत्तमलोकप्राप्त्यर्थंदाहजनिततापोपशमनार्थंअश्मोपरितिलतोयांजलिरुपतिष्ठतु ॥ एवंप्रतिदिनंपितृतीर्थेनांजलिंदद्यात् ॥ एवंप्रतिदिनंदशदशएवंशतंभवंति ॥ अथवाप्रतिदिनंत्रींस्त्रीन्दद्यात् ॥ तत्पक्षेत्रिंशद्भवंति ॥ प्रतिदिनमेकैकंवाएवंदशभवंति ॥ अथवाप्रथमेएकंद्वितीयेद्वौएवमेकोत्तरवृद्ध्यादशदिनंदद्यात् ॥ एवंपंचपंचाशद्भवंति ॥ एषुपक्षेषुअन्यतमंकुर्यात् ॥ प्रत्यंजलिस्नानंकुर्यात् ॥ एतदंजलिदानंप्रथमदिनाद्दशमदिनपर्यंतंएकस्मिन्नेवस्थानेविधेयं ॥ पाषाणकूर्चौप्रज्ञातौस्थाप्यौ ॥ एतच्चज्ञातयोबांधवाश्चयथाचारंकुर्युः ॥ ततःस्नात्वोत्तरीयोदकंपाषाणोपरिनिष्पीडयेत् ॥ ततःस्वगृहेगोष्ठेनदीतीरेवाताम्रपात्रेचरुंश्रपयित्वापिंडक्रियांकुर्यात् ॥ देशकालौसंकीर्त्यामुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमुक्त्यर्थंपितृत्वप्राप्त्योत्तमलोकप्राप्त्यर्थंपिंडक्रियांकरिष्ये ॥ चरुंश्रपयित्वाभिघार्योद्वास्यपिंडपितृयज्ञकल्पेनतूष्णींभूमिमुल्लिख्यावोक्ष्यबर्हिरास्तीर्यामुकगोत्रामुकप्रेतप्रथमेहनिमूर्धावयवनित्पत्त्यर्थंअयंतेपिंडउपतिष्ठतामितिचरोःसुदृढंपिंडंकृत्वाबर्हिषिदद्यात् ॥ ऊष्मानुमंत्रणांजनाभ्यंजनदशादानतिलोदकलेपोदकोपस्था

नभृंगराजतुलसीदलचालनप्रवाहणानिप्रेतमुद्दिश्यपिंडोपरिपितृतीर्थेनोपतिष्ठतांइतितूष्णींदद्यात् ॥ अनादिनिधनोदेवःशंख चक्रगदाधरः ॥ अक्षय्यःपुंडरीकाक्षःप्रेतमुक्तिप्रदोभवेतिवदेत् ॥ इदंपिंडदानंसतिलोदकंप्रेताप्यायनमस्त्वितिभवंतोब्रुवंतुप्रे ताप्यायनमस्त्वितिब्राह्मणाब्रूयुः ॥ अभिरम्यतामितिविसर्जयेत् ॥ अभिरताःस्मः ॥ इतिप्रतिवचनं ॥अप्सुपिंडंनिक्षिपेत् ॥ ततःस्नात्वागृहमागच्छेत् ॥ उत्तरीयशिलाकूर्चपात्रकर्तृवक्तृचरुद्रव्यस्थानविपर्ययंनकुर्यात् ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३४५ ॥ नग्नप्रच्छादनश्राद्धं ॥

तंडुलवस्त्रोदकुंभसदीपलोहपात्रकांचनलवणघृततिलमुद्गकार्पासदक्षिणाभूषणानिउपानहौचाग्रेनिधायमनुष्यलोकात्प्रेतलोकं गच्छतःपथिपरिव्ययार्थंतंडुलादिद्रव्याणिसर्वाण्युपतिष्ठंतु ॥ ततःपिंडंदत्वास्नानंकुर्यात् ॥ पिंडसमीपेअमुकगोत्रस्यामुकप्रे तस्याच्छादनार्थंवस्त्रमुपतिष्ठतां ॥ इतिवस्त्रंदत्वातद्ब्राह्मणायदद्यात् ॥ इतिनग्नप्रच्छादनश्राद्धं ॥ ॥ छ ॥

## ॥ ३४६ ॥ नवश्राद्धानि ॥

तानिप्रथमतृतीयपंचमसप्तमनवमैकादशसुदिनेषुभवंतितानिद्विजाभावेपाकेनामेनवाकार्याणि ॥ देशकालौसंकीर्त्यामुकगोत्रस्या मुकप्रेतस्यप्रेतत्वनिवृत्त्यर्थंविषमश्राद्धंकरिष्ये ॥ पाकपक्षेचरुंश्रपयित्वाभिघार्योद्वास्यपिंडार्थंपृथक्कृत्वाशेषंपात्रेपरिविष्या मुकगोत्रस्यामुकप्रेतस्यनवश्राद्धेएतदासनमुपतिष्ठतु ॥ वाराहे ॥ गतोसिदिव्यलोकंत्वंकृतांतविहितार्थतः ॥ मनसावायु भूतेनप्रेतत्वाहंनियोजये ॥ पूजयिष्यामिभोगैस्त्वामेवंविप्रंनिमंत्रयेत् ॥ आवाहनमपितत्रैव ॥ इहलोकंपरित्यज्यगतोसिपरमां गतिं ॥ मनसावायुरूपेणपिंडेत्वांयोजयाम्यहं ॥ इत्येकत्रासनंविधायतूष्णींतिलैरभ्यर्च्यएकपवित्रेणार्घ्यंदद्यात् ॥ अमुकगोत्र

प्रेतेदमर्घ्यमुपतिष्ठतां ॥ गंधादिनातिलैश्चाभ्यर्च्यामुकगोत्रायप्रेतायेदमन्नंसोपस्करमुपतिष्ठतु ॥ आचमनीयतांबूलेदद्यात् ॥ ततस्तूष्णींशुद्धभूमाववयवपिंडवदुल्लेखनादिविधायामुकगोत्रामुकप्रेतविषमश्राद्धेऽयंतेपिंडउपतिष्ठतु॥ ऊष्मानुमंत्रणादितूष्णीं दद्यात् ॥ चालनप्रवाहणादिपिंडदानविध्यनुसारेणतूष्णींकुर्यात् ॥ किंचिद्दक्षिणांदद्यात् ॥ आमपक्षेपिष्टेनपिंडः ॥ ततःस्ना यात् ॥ एतानिनवश्राद्धानिएकद्रव्येणैवकर्तव्यानि ॥ यदापूर्वदिनेमरणंतदाद्वितीयदिनेप्रथमदिनस्थांउदकक्रियांपिंडक्रियां चकृत्वातद्दिनस्थांकुर्यात् ॥ एकेनैवपाकेनपिंडद्वयंभवति ॥ दशसुदिनेषुभुज्यमानमन्नतांबूलादिप्रेतमुद्दिश्यसमर्पयेत् ॥ कर्ता भोजनकालेपात्रस्थंसघृतंकिंचिदन्नमादायामुकप्रेतायेदमन्नमुपतिष्ठतां ॥ भोजनपात्रसमीपेदशाहंदद्यात् ॥ दशसुदिनेषुभोज नस्थानविपर्ययोनकार्यः हविष्यान्नमेवभुंजीरन्॥ दशदिनपर्यंतंपुनर्भोजनगंधतांबूलकज्जलैकशय्याःज्ञातयःपुरुषाःस्त्रियश्चवर्ज येयुः ॥ भूमावेवपृथक्पृथक्शयीरन् ॥ कर्त्रातुपतितादिसंभाषणंनकर्तव्यं ॥ इतिप्रथमदिनकृत्यं ॥ ॥

## ॥ ३४७ ॥ द्वितीयदिनादिविधिः ॥

पूर्वदिनस्वीकृतदेशंगत्वादेशकालौस्मृत्वामुकगोत्रस्यामुकप्रेतस्येत्यंतमुक्त्वाप्रेतत्वनिवृत्त्यर्थं० हनिद्वितीयदिनविधिंकरिष्ये ॥ पूर्ववदश्मोपरितिलतोयांजलिंदद्यात् ॥ ततश्चरुंश्रपयित्वा ॥ अद्येत्यादिअमुकगोत्रस्य० चक्षुःश्रोत्रनासावयवनिष्पत्त्यर्थअव यवपिंडउपतिष्ठतामितिदर्भोपरिपिंडंदत्वाऊष्मानुमंत्रणादितिलोदकभृंगराजतुलसीदलदानांतंपूर्ववत् ॥ अनादिनिधनोदेवः० भव॥ पिंडंप्रवाह्यस्नायात् ॥ अथतृतीयदिनकृत्यं ॥ आचम्य तृतीयदिनविधिंकरिष्येसंकल्प्य ॥ तिलांजलिदानांतंपूर्ववत् कृत्वा ॥ स्नात्वा ॥ अद्येत्यादि० तृतीयेहनिप्रेतस्यभुजवक्षोग्रीवामुखावयवनिष्पत्त्यर्थअयंपिंडउपतिष्ठतामितिपिंडंदत्वाऊष्मा

नुमंत्रणादिपिंडप्रवाहणस्नानांतंपूर्ववत् ॥ ततःस्नात्वा ॥ विषमश्राद्धंप्रथमदिनवत्कुर्यात् ॥ अथचतुर्थदिनकृत्यं ॥ संकल्पांजलिदानस्नानांतंपूर्ववत् ॥ अद्येत्यादि० अमुकगोत्रस्यामुकप्रेतस्यपार्ष्णिकुक्षिकटिनाभिगुदलिंगावयवनिष्पत्त्यर्थअयंपिंड उपतिष्ठतां इतिपिंडंदत्वाऊष्मानुमंत्रणादिपिंडप्रवाहणस्नानांतंपूर्ववत् ॥ अथपंचमदिनकृत्यं ॥ संकल्पांजलिदानस्नानांतं पूर्ववत् ॥ अद्येत्या० अमुकगोत्रस्यअमुकप्रेतस्यऊरुजानुजंघावयवनिष्पत्त्यर्थअयंपिंड० मितिदत्वा ॥ ऊष्मानुमंत्रणादिपिंड प्रवाहणस्नानांतंपूर्ववत् ॥ पंचमदिनेविषमश्राद्धंपूर्ववत् ॥ अथषष्ठदिनकृत्यं ॥ संकल्पांजलिदानस्नानांतंपूर्ववत् ॥ अद्येत्यादिअमुकगोत्रस्यामुकप्रेतस्यगुल्फपादांगुलिमर्माद्यवयवनिष्पत्त्यर्थं अयंपिंड० मितिपिंडंदत्वा ॥ ऊष्मानुमंत्रणादिपिंडप्रवाहणस्नानांतंपूर्ववत् ॥ अथसप्तमदिनकृत्यं ॥ संकल्पादिअंजलिदानस्नानांतंपूर्ववत् ॥ अद्येत्यादिअमुकगोत्रस्यामुकप्रेतस्य अस्थिमज्जाशिरावयवनिष्पत्त्यर्थअयंपिंड० मितिपिंडंदत्वाऊष्मानुमंत्रणादिपिंडप्रवाहणस्नानांतंपूर्ववत् ॥ पूर्ववद्विषमश्राद्धं कुर्यात् ॥ अथाष्टमदिनकृत्यं ॥ संकल्पादिअंजलिदानस्नानांतंपूर्ववत् ॥ अद्येत्याद्यमुकगोत्रस्यामुकप्रेतस्यनखरोमाद्यवयव निष्पत्त्यर्थअयंपिंड० मितिपिंडंदत्वाऊष्मानुमंत्रणपिंडप्रवाहणस्नानांतंपूर्ववत् ॥ अथनवमदिनकृत्यं ॥ संकल्पांजलिदानांतं पूर्ववत्॥अद्येत्यादि०सर्वावयवसंपत्त्यैअयंपिंडउपतिष्ठतामितिपिंडदानोष्मानुमंत्रणपिंडप्रवाहणस्नानांतंविषमश्राद्धंचपूर्ववत् ॥

## ॥ ३४८ ॥ दशमदिनविधिः ॥

पूर्वदिनस्थानेगत्वानित्यवत्संकल्पादिअंजलिदानस्नानांतंकृत्वाचरुंश्रपयित्वा ॥ अद्येत्यादिसंकल्प्यअमुकगोत्रस्यप्रेतस्यक्षुत्पिपासानिवृत्त्यर्थअयंपिंडउपतिष्ठतामितिपिंडदानोष्मानुमंत्रणादिपिंडप्रवाहणादिकुर्यात् ॥ ततःकर्त्रासर्वेबांधवाःप्रार्थिताःसं

वंधिनश्चत्रींस्त्रीन्धर्मोदकांजलीनेकैकंवाजलतीरेप्रेतोद्देशेनदद्युः॥ ततःपुत्रादयोयथाचारंकेशश्मश्रुवपननखच्छेदादिकृत्वास्नानं कुर्युः॥अथेदंकेषांचिन्मतेनदशमदिनकृत्यं ॥ ततोदशमदिनेमृदात्रिकोणांदक्षिणाप्रवणांवेदिंकृत्वागोमयेनसंमृज्यहरिद्रादिनालं कृत्यतत्रकुंभपंचकंजलपूर्णंस्थापयेत् ॥ तदुपर्योदनपिंडान्पंचदद्यात् ॥ अमुकगोत्रायामुकप्रेतायक्षुत्पिपासानिवृत्त्यर्थंअयंपिंडः सोदकुंभउपतिष्ठतामितिमध्येप्रेताय ॥ पूर्वेप्रेतसखिभ्यः ॥ दक्षिणेवैवस्वताययमाय ॥ पश्चिमेवायसेभ्यः ॥ उत्तरेप्रेताधिप तयेरुद्रायइतिपिंडंदत्वापिंडोपरितिलोदकंदत्वापादुकाछत्रपोलिकापताकादिप्रत्येकंतेभ्यस्तेभ्यःपृथगुपतिष्ठतामितिदद्यात् ॥ ततःपश्चिमस्थंपिंडंवायसोयावद्भक्षयतितावत्तिष्ठेत् ॥ अश्मानंतैलेनाभ्यज्यजलेक्षिपेत् ॥ ततःसर्वेसगोत्रायथादेशाचारंति लामलकादिनास्नात्वाशुक्लवाससोगृहंगत्वातत्रैवभुंजीरन्निितिदेशाचारः ॥ इतिदशमदिनकृत्यं ॥ ॥ छ ॥

## ॥ ३४९ ॥ एकादशाहेवृषोत्सर्गः ॥

प्रातःस्पृष्टानांमृद्भांडानांत्यागः स्पृष्टसर्ववस्त्रप्रक्षालनंगृहानुलेपनंचकृत्वास्नात्वाविधिवत्पंचगव्यंकृत्वाप्राश्नीयात् ॥ ततोवि षमश्राद्धंपूर्ववत्कृत्वास्नात्वावृषोत्सर्गंकुर्यात् ॥ (कार्तिक्यांमाघ्यांवैशाख्यांपौर्णिमास्यांस्मृत्युक्तपुण्यकालेषुवा पूर्वेद्युरुपोष्यतद्दि नेनांदीश्राद्धंविधायवृषोत्सर्गंकुर्यात् )॥ एकादशेह्निप्रेतस्ययस्यनोत्सृज्यतेवृषः ॥ प्रेतत्वंसुस्थिरंतस्यदत्तैःश्राद्धशतैरपि ॥ प्रेतार्थे वृषोत्सर्गेतुएकोद्दिष्टविधिनाष्टौब्राह्मणान्भोजयेत् ॥ अत्रनाचार्यवरणंकिंतुस्वयमेवकुर्यात् ॥ अथप्रयोगः ॥ कर्तायज्ञोपवीती प्राङ्मुखउपविश्यप्राणानायम्यदेशकालौसंकीर्त्यपितुर्गोत्रस्यशर्मणःप्रेतस्यैकादशेहनिप्रेतत्वनिवृत्तिपितृत्वप्राप्त्योत्तमलोकप्राप्त्य

१ अत्रत्यधनुश्चिह्नान्तःपतित वाक्यस्थंकार्तिक्यादिकथनंनांदीश्राद्धोहादिकंचकाम्यवृषोत्सर्गपरंज्ञेयं ।

थंवृषोत्सर्गंकरिष्येइतिसंकल्प्य ॥ स्थंडिलेऽध्वरनामानमग्निंप्रतिष्ठाप्यचरुंश्रपयित्वाग्निंप्रज्वाल्यसमित्त्रयमादायश्रद्धएहीत्या
दिवृषोत्सर्गहोमकर्मणियायक्ष्यमाणादेवतास्ताःसर्वाःपरिग्रहीष्यामिजातवेदसमग्निमिध्मेनयक्ष्येआघारहोमेइत्यादि प्रधानांतमु
क्त्वावैशेषिकप्रधानहोमेरुद्रमृडंचरुणापर्जन्यंचरुणाइंद्रंचरुणाप्रजापतिंचरुणाइहधृतिंचरुणाइहविधृतिंचरुणाइहरंतिंचरुणाइ
हरमतिंचरुणाअदितिंद्विश्चरुणाअग्निंस्विष्टकृतंचरुणायक्ष्ये ॥ वरुणंद्विरित्यादिजयादीन्कृत्वादर्व्याज्यस्थाल्यौषट्पात्राणिप्रयु
ज्याग्निमुखांतेस्रुच्युपस्तीर्यचरुंद्विरवदायाभिघार्यैवंचतुरवदाय॥मयोभूर्वातोअभिवातूस्राऊर्जस्वतीरोषधीरारिशंतां॥पीवस्वती
र्जीवधन्याःपिबंत्ववसायपद्वतेरुद्रमृडस्वाहा ॥ रुद्रमृडायेदं० ॥ याःसरूपाविरूपाएकरूपायासामग्निरिष्ट्यानामानिवेद ॥ याअं
गिरसस्तपसेहचक्रुस्ताभ्यःपर्जन्यमहिशर्मयच्छस्वाहा ॥ पर्जन्यायेदं० ॥ यादेवेषुतनुवमैरयंतयासांसोमोविश्वारूपाणिवेद ॥
ताअस्मभ्यंपयसापिन्वमानाःप्रजावतीरिंद्रगोष्ठेरिरीहिस्वाहा ॥ इंद्रायेदं० ॥ प्रजापतिर्मह्यमेताररराणोविश्वैर्देवैःपितृभिःसंवि
दानः ॥ शिवाःसतीरुपनोगोष्ठमाकुस्तासांवयंप्रजयासंसदेमस्वाहा ॥ प्रजापतयइदं० ॥ इहधृतिःस्वाहा ॥ धृत्याइदं० ॥ इह
विधृतिःस्वाहा ॥ विधृत्याइदं० ॥ इहरंतिःस्वाहा॥ रंत्याइदं० ॥ इहरमतिःस्वाहा ॥ रमत्याइदं० ॥ महीमूषुमातरंसुव्रतानां
मृतस्यपत्नीमवसेहुवेम॥ तुविक्षत्रामजरंतीमुरूचींसुशर्माणमदितिंसुप्रणीतिंस्वाहा॥ अदित्याइदं० ॥सुत्रामाणंपृथिवींद्याम
नेहसंसुशर्माणमदितिंसुप्रणीतिं ॥ दैवींनावंस्वरित्रामनागसमस्रवंतीमारुहेमास्वस्तयेस्वाहा ॥ अदित्याइदं० ॥ अग्नयेस्वि
ष्टकृतेस्वाहा ॥ अग्नयेस्विष्टकृतइदं० ॥ जयादीन्हुत्वा ॥ परिधिप्रहरणांतंकृत्वापरिषिच्य ॥ वृषवत्सतरीर्वस्त्रादिभिरलंकृत्य ॥
अथवायोरेकादशपुरुषस्यैकादशस्त्रीकुर्य॥प्रभ्राजमानानांरुद्राणांस्थानेस्वतेजसाभानि ॥ व्यवदातानांरुद्राणांस्थानेस्वते

जंसाभानि ॥ वासुकिवैद्युतानाᳪंरुद्राणाᳪंस्थाने० ॥ रजतानाᳪंरुद्राणाᳪंस्थाने० ॥ परुषाणाᳪंरुद्राणाᳪंस्थाने० ॥ श्यामाना ᳪंरुद्राणाᳪंस्था० ॥ कपिलानाᳪंरुद्राणाᳪंस्था० ॥ अतिलोहितानाᳪंरुद्राणाᳪंस्था० ॥ ऊर्ध्वाणाᳪंरुद्राणाᳪंस्था० ॥ अवपतं तानाᳪंरुद्राणाᳪंस्था० ॥ वैद्युतानाᳪंरुद्राणाᳪंस्था० ॥ प्रभ्राजमानीनाᳪंरुद्राणीनाᳪंस्था० ॥ व्यवदातीनाᳪंरुद्राणीनाᳪंस्था०॥ वासुकिवैद्युतीनाᳪंरुद्राणीनाᳪंस्था० ॥ रजतानाᳪंरुद्राणीनाᳪंस्था० ॥ परुषाणाᳪंरुद्राणीनाᳪंस्था० ॥ श्यामानाᳪंरुद्राणीनाᳪं स्था० ॥ कपिलानाᳪंरुद्राणीनाᳪंस्था० ॥ अतिलोहितीनाᳪंरुद्राणीनाᳪंस्था० ॥ ऊर्ध्वानाᳪंरुद्राणीनाᳪंस्था०॥ अवपतंतीनाᳪं रुद्राणीनाᳪंस्था० ॥ वैद्युतीनाᳪंरुद्राणीनाᳪंस्था० ॥ ॐभूर्भुवःस्वः॥ रूपाणिवोमिथुनंमानोमिथुनᳪंरीढ्वं ॥ इत्येकमनुवाकंप ठित्वा ॥ एतंयुवानंपरिवोददामितेनक्रीडंतीश्चरतप्रियेणं ॥ मानःशाप्तजनुषांसुभागारायस्पोषेणसमिषामंदेम ॥ नमोमहिम्न उतचक्षुषेतेमरुतांपितस्तदहंगृणामि ॥ अनुमन्यस्वसुयजायजामजुष्टंदेवानामिदमस्तुहव्यं॥ देवानामेषउपनाहआसीदपांगर्भओ षधीषुन्यक्तः॥ सोमस्यद्रप्समवृणीतपूषा बृहन्नद्रिरभवत्तदेषां ॥ पितावत्सानांपतिरघ्नियानामथोपितामहतांगर्गराणां ॥ वत्सो जरायुप्रतिधुक्पीयूषआमिक्षामस्तुघृतमस्यरेतः ॥ त्वांगावोवृणतराज्यायत्वाᳪंहवंतमरुतःस्वर्काः ॥ वर्ष्मन्क्षत्रस्यककुभिशिश्रि याणस्ततोनउग्रोविभजावसूनि ॥ व्यृद्धेनवाएषपशुनायजतेयस्यैतानिनक्रियंतएष हत्वैसमृद्धेनयजतेयस्यैतानिक्रियन्ते ॥ इत्यंतंपंचमंत्रान्पठेत् ॥ पितुःगोत्रस्यप्रेतस्यप्रेतत्वनिवृत्तिपितृत्वप्राप्त्योत्तमलोकप्राप्त्यर्थंयथेष्टंविहर्तुंमयाएषवृषउत्सृष्टइत्युक्त्वा त्रिशूलचक्रादिलांछनंकृत्वा॥दक्षिणपार्श्वेत्रिशूलं ॥ वामेजघनेचक्राकारं ॥ सव्यस्फिचिलिखेच्चक्रंशूलंवाहौतुदक्षिणे॥ प्रत्यङ्मुखं वृषंउत्सृजेत्॥ कल्पकारिकायां॥ शूलंचक्रंतथान्यद्वालांछनंकारयेत्तथा॥यस्यदेवस्ययोभक्तस्तत्तच्चिह्नंसमालिखेत्॥ ततोद्विहाय

नमेकहायनंवाजीववत्सायाःपयस्विन्याःपुत्रंनीलादिवर्णं॥लोहितोयस्तुवर्णेनमुखेपुच्छेचपांडुरः ॥ श्वेतःखुरविषाणाभ्यांसनीलो वृषउच्यते ॥ अत्यंताशक्तविषयेग्रंथांतरं॥ वृषोत्सर्जनवेलायांवृषाभावेकथंचन ॥ मृद्भिःपिष्टैश्चदर्भैर्वावृषंकृत्वाविमोचयेत् ॥ न शक्यतेवृषोत्सर्गोहोमंवातत्रकारयेत् ॥ ईप्सितंयथालाभंवाआनीयचतस्रोद्वावेकांवाएकवर्षाधिकांवत्सतरीमानीयवत्सतरीसहि तस्यवृषस्यमंत्रैरभिषेकःकार्यः ॥ आपोहिष्ठेतितिसृभिः॥ कयानश्चित्रआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता॥ कस्त्वा सत्योमदानांमꣳहिष्ठोमत्सदंधसः ॥ दृढाचिदारुजेवसु ॥ अभीषुणःसखीनामविताजरितॄणां ॥ शतंभवास्यूतिभिः ॥ वृषंवत्स तरींचगंधपुष्पवस्त्रभूषणादिभिर्यथाशक्त्यलंकृत्य ॥ ऋषभंमासमानानांसपत्नानांविषासहिं ॥ हंतारंशत्रूणांकृधिविराजंगोपतिं गवां ॥ इतिकृतांजलिपुटोजपेत् ॥ ततःप्रांचमुत्सृजेत् ॥ व्रजंतमनुमंत्रयीत॥ ततोग्निमलंकृत्याथाग्नेरष्टपुरुषस्यपुरस्तात्प्रभृतिः॥ अथाग्नेरष्टपुरुषस्य॥अग्नेःपूर्वदिश्यस्यस्थानेस्वतेजसाभानि॥जातवेदसउपदिश्यस्यस्थाने० ॥ सहोजसोदक्षिणदिश्यस्यस्थाने० ॥ अजिराप्रभवउपदिश्यस्यस्थाने०॥ वैश्वानरस्यापरदिश्यस्यस्था०॥ नर्यापसउपदिश्यस्यस्था० ॥ पंक्तिराधसउदग्दिश्यस्यस्था०॥ विसर्पिणउपदिश्यस्यस्था० ॥ ॐभूर्भुवःस्वः ॥ दिशोवोमिथुनंमानोमिथुनꣳरीढ्वं ॥ इत्यग्निमुपस्थाय ॥ भोभोवृषसुखंगच्छ जलंपिवतृणंभक्षगवांपृष्ठतःसन्विचरअस्मत्कुलंपुनीहिइत्यादिपठित्वा ॥ ब्राह्मणेभ्योदक्षिणांदद्यात् ॥ सभर्तृकस्त्रीविषयेतुनवृ षोत्सर्गः ॥ पतिपुत्रवतीनारीभर्तुरग्रेमृतायदि ॥ वृषंनैवोत्सृजेत्पुत्रोयावत्पितरिजीवति ॥ ततोवृषपुच्छेप्रेतनामगोत्राद्युच्चार्यत र्पणंकुर्यात् ॥ इतिकेचित् ॥ वृषोत्सर्गसांगतासिद्ध्यर्थंतिलानुदकुंभंगांवासोहिरण्यंचब्राह्मणेभ्योदद्यात् ॥ दक्षिणांचदद्यात् ॥

## ॥ ३५० ॥ आद्यश्राद्धं ॥

श्रीः ॥ आद्यश्राद्धमशुद्धोपिकुर्यादेकादशेहनि ॥ कर्तुस्तात्कालिकीशुद्धिरशुद्धःपुनरेवसइति ॥ तत्रब्राह्मणाभावेनूतनभांडेन्ना दिकंपाचयित्वाविधिवद्धोमः॥कुंडंकृत्वाकर्ताप्राणानायम्य ॥ प्राचीनावीतीअमुकगोत्रस्यामुकशर्मणःपित्रादेःप्रेतस्यमृताहादेका दशेहनिप्रेतत्वविमुक्त्यर्थंपितृत्वप्राप्त्योत्तमलोकप्राप्त्यर्थंअग्नावेकोद्दिष्टविधिनाद्यश्राद्धंकरिष्येइतिसंकल्प्य ॥ कुंडमध्ये ॥ अपेत वीतविचसर्पतातोयेत्रस्थपुराणायेचनूतनाः ॥ अदादिदंयमोवसानंपृथिव्याअक्रन्निमंपितरोलोकमस्मै ॥ इतिमंत्रेणसम्यक्प्रमृ ज्याभ्युक्ष्यपात्रेणवह्निमादायकुंडसमीपेनिधायाद्यैकोद्दिष्टश्राद्धेभवद्भिःक्षणःप्रसादनीयः॥ इत्यग्निंप्रतिष्ठाप्यपाद्याद्यर्चनांतमग्नेरे वकृत्वान्नमादायपित्रेगोत्रायशर्मणेप्रेतायस्वाहेतिप्रेताहुतिंहुत्वाकुंडस्योत्तरएकस्मिन्पात्रेन्नादिकंपरिविष्यकुंडंपात्रंचपरिस्तीर्य परिषिच्यपृथिवीतेपात्रंद्यौरपिधानंअग्नेस्त्वामुखेप्राणापानयोर्जुहोम्यक्षितमसिमामेक्षेष्ठाअमुत्रामुष्मिन्लोकेइदंविष्णुरित्यन्ननिवे दनंकृत्वापोशनंदत्वाप्राणाहुतीर्जुहुयात् ॥ यत्तेकृष्णःशकुनआतुतोदपिपीलःसर्पउतवाश्वापदः ॥ अग्निष्टद्विश्वादनृणंकृणोतुसो मश्चयोब्राह्मणमाविवेशस्वाहा ॥ अग्नीषोमाभ्यामिदं० ॥ केचित्सोमायेतिवदंति ॥ ततस्तृप्तिरित्युक्त्वापोशनंदद्यात् ॥ ततः पित्रेगोत्रायशर्मणेप्रेतायायंपिंडउपतिष्ठताम् ॥ इतिपिंडंदत्वा ॥ ब्राह्मणायदक्षिणांदद्यात् ॥ ततःशेषमन्नंपिंडंचाग्नौदहेत् ॥ अप्सुवानिक्षिपेत् ॥ ततःस्नात्वानेनैवविधिनामहैकोद्दिष्टंकुर्यात् ॥ ततःस्नात्वा ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३५१ ॥ रुद्रगणश्राद्धं ॥

देशकालौसंकीर्त्यप्राचीनावीतीअमुकगोत्रस्यप्रेतस्यएकादशेहनिरुद्रगणश्राद्धंकरिष्ये ॥ तिलोदकादिकृत्वा अजैकपदेअहिर्बु

ऽयायकपालिनेहरायवहुरूपायत्र्यंवकायअपराजितायवृषाकपयेशंभवेकपर्दिनेरैवतायएभिर्नामपदैरेकादशसुब्राह्मणेषुदैवेनविधिनान्नसमर्पणंकुर्यात् ॥ प्रेतोद्देशपक्षेअजैकपाद्रूपिणेप्रेतायेदमासनमित्यादिज्ञेयं ॥ पिंडदानार्घ्याग्नौकरणविकिरादिनास्ति ॥ भोजनांतेदक्षिणांदत्वाविसर्जयेत् ॥ इतिरुद्रगणश्राद्धं ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३५२ ॥ वसुगणश्राद्धं ॥

वसुगणनामानि ॥ ध्रुवोध्वरश्चसोमश्चआपश्चैवानिलोनलः ॥ प्रत्यूषश्चप्रभासश्चवसवोष्टौप्रकीर्तिताः ॥ अष्टसुब्राह्मणेषुवसूनावाह्यभोजनंआमान्नंवादद्यात् ॥ पिंडाद्यभावः ॥ इतिवसुगणश्राद्धं ॥ इदंतुकृताकृतं ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३५३ ॥ पंचदशश्राद्धानि ॥

इमानिसपिंडीकरणाधिकारार्थंएकादशेद्वादशेहनिवा ॥ ऊनमासिकाद्यूनाब्दिकांतानिपंचदशश्राद्धान्यपकृष्यैकतंत्रेणकरिष्ये ॥ अमुकगोत्रस्यामुकप्रेतस्यऊनमासिकश्राद्धेआसनमुपतिष्ठतु ॥ इत्यादिसर्वत्रयोज्यं ॥ द्वितीयमासिके० ॥ त्रैपक्षिके० ॥ तृतीयमासिके० ॥ चतुर्थमासिके० ॥ पंचममासिके० ॥ षष्ठमासिके० ॥ ऊनषष्ठमासिके० ॥ सप्तममासिके० ॥ अष्टममासिके० ॥ नवममासिके० ॥ दशममासिके० ॥ एकादशमासिके० ॥ द्वादशमासिके० ॥ ऊनाब्दिके० ॥ एतदासनमुपतिष्ठतु ॥ उपचारेषुगायत्रींमनसास्मरेत् ॥ पंचदशार्घ्यपात्राणिएकदर्भपवित्रसहितान्यासनानांसमीपेआसाद्य ॥ अमुकगोत्रायामुकप्रेतायतेजुष्टंगृह्णामिइतिपंचदशपात्रेषूदकंनिधायगंधादिक्षिप्त्वागायत्र्यानुमंत्र्यअमुकगोत्रामुकप्रेतऊनमासिकश्राद्धेइदंतेअर्घ्यमुपतिष्ठतां ॥ द्वितीयादावेवमूह्यं ॥ इदमन्नंसोपस्करमामान्नंवा पात्रविवर्जितंसोपस्करंसदक्षिणमुपतिष्ठतां ॥ तांबूलादिदत्वापिंडपि

तृयङ्गकल्पेनपिंडदानंकुर्यात् ॥ एकोद्दिष्टविधिनासर्वंसमापयेत् ॥ यदिवर्षांतर्मलमासआपतेत्तदातस्मिन्कृतमपिशुद्धेपुनःकार्यं ॥

## ॥ ३५४ ॥ दशदानानि ॥

श्रीः॥आचम्यप्राणानायम्यदेशकालौनिर्दिश्यअमुकगोत्रस्यपित्रादेःपरलोकोपकारकाणिपूर्वंसंकल्पितानिदशदानानिकरिष्ये ॥ गोभूतिलहिरण्याज्यवासोधान्यगुडानिच ॥ रौप्यंलवणमित्याहुर्दशदानान्यनुक्रमात् ॥ विप्रंसंपूज्य ॥ ॥ गोप्रदानं ॥ यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी ॥ विश्वरूपधरोदेवःप्रीयतामनयागवा ॥ भूमिदानं ॥ सर्वेषामाश्रयाभूमिर्वराहेण समुद्धृता ॥ अनंतसस्यफलदाअतःशांतिंप्रयच्छमे ॥ तिलदानं ॥ महर्षेर्गोत्रसंभूताःकश्यपस्यतिलाःस्मृताः ॥ तस्मादेषांप्रदानेनपितृपापंव्यपोहतु ॥ हिरण्यदानं ॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ अनंतपुण्यफलदमतःशांतिंप्रयच्छमे ॥ आज्यदानं ॥ कामधेनोःसमुद्भूतंसर्वक्रतुषुसंस्थितं ॥ देवानामाज्यमाहारअतःशांतिंप्रयच्छमे ॥ वस्त्रदानं ॥ शरण्यंसर्वलोकानांलज्जायारक्षणंपरं ॥ देहालंकरणंवस्त्रमतःशांतिंप्रयच्छमे ॥ धान्यदानं ॥ सर्वदेवमयंधान्यंसर्वोत्पत्तिकरंमहत् ॥ प्राणिनांजीवनोपायस्ततःशांतिंप्रयच्छमे ॥ गुडदानं ॥ गुडमिक्षुरसोद्भूतंमंत्राणांप्रणवोयथा ॥ दानेनानेनचैतस्यपरालक्ष्मीःस्थिरागृहे ॥ रौप्यदानं ॥ प्रीतिर्यतःपितॄणांचविष्णुशंकरयोःसदा ॥ शिवनेत्रोद्भवंरूप्यमतःशांतिंप्रयच्छमे ॥ लवणदानं ॥ यस्मादन्नरसाःसर्वेनोत्कृष्टालवणंविना ॥ शंभोःप्रीतिकरंयस्मादतःशांतिंप्रयच्छमे ॥ अनेनदशदानाख्येनकर्मणाप्रेतोद्धर्ता महाविष्णुःप्रीयतां ॥ इतिदशदानानि ॥ ततोष्टदानान्युपदानानिचयथाशक्तिकार्याणि ॥ ॥ छ ॥ ॥ छ ॥

१ पुत्रकर्तृके 'शांतिंप्रयच्छमे' 'ममयच्छतु' इतिदानवाक्यस्थलेतत्रतत्र 'पितुःशांतिंप्रयच्छतु' 'पितुःपापंव्यपोहतु' इत्याद्यूहःकार्यः ॥

## ॥ ३५५ ॥ अष्टदानानि ॥

श्रीः ॥ तानिचआमान्नोदकुंभगोवस्त्रभूम्यास्तरणछत्रासनानि ॥ अमुकशर्मणःपित्रादेःपरलोकेतत्तद्दानकल्पोक्तफलावाप्तयेऽष्ट दानानिकरिष्ये ॥ विप्रंसंपूज्य आमान्नदानं ॥ अन्नमेवयतोलक्ष्मीरन्नमेवजनार्दनः ॥ अन्नंब्रह्माखिलत्राणमस्तुजन्मनिजन्म नि ॥ उदकुंभदानं ॥ वारिपूर्णोघटश्चायंदेवत्रयमयोयतः ॥ प्रीयतांधर्मराजस्तुदानेनानेनपुण्यदः ॥ गोप्रदानं ॥ यज्ञसाध नभूताया० ॥ वस्त्रदानं ॥ शरण्यंसर्वलोकानांलज्जायारक्षणंपरं ॥ देहालंकरणंवस्त्रमतःशांतिं० ॥ भूमिदानं ॥ सर्वेषामा श्रयाभूमिर्वराहेणसमुद्धृता॥ अनंतसस्यफलदा० ॥ शय्या ( डाळी ) ॥ यथानकृष्णशयनंशून्यंसागरजातया ॥ शय्यैतस्या प्यशून्यास्तुतथाजन्मनिजन्मनि ॥ छत्रदानं ॥ इहामुत्रातपत्राणंकुरुमेकेशवप्रभो ॥ छत्रंत्वत्प्रीतयेदत्तंतस्यास्तुचसदाशुभं ॥ आसनं (पाट) ॥ त्रिलोकीनाथदेवेशसर्वभूतकृपानिधे ॥ आसनेनचतुष्यस्वप्रयच्छतस्यवांछितं ॥ इत्यष्टदानानि ॥ वृषोत्स र्गांगाष्टदानानितु आमान्नत्रयंतिलानुदकुंभंगांवासोहिरण्यंचेति ८ तत्रतिलदानं ॥ महर्षेर्गोत्रसंभूताःकश्यपस्यतिलाः स्मृताः ॥ तस्मादेषांप्रदानेनतस्यपापंव्यपोहतु ॥ हिरण्यगर्भेतिहिरण्यदानं ॥ अन्येआमान्नोदकुंभगोवस्त्रदानादिमंत्रादशाष्ट दानांतर्गतास्तत्तदुक्ताज्ञेयाःविस्तरभियानपुनःसंगृहीताः ॥ एवमग्रेपिउपदानादौज्ञेयं ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३५६ ॥ उपदानानि ॥

श्रीः ॥ अन्नंचैवोदकुंभंचोपानहौचकमंडलुः ॥ छत्रंवस्त्रंतथायष्टिंलोहदंडंचदापयेत् ॥ अग्निष्टिकांप्रदीपंचतिलांस्तांबूलमेवच ॥ चंदनंपुष्पमालांचोपदानानिचतुर्दश ॥ पित्रादेःप्रेतस्योत्तमलोकप्राप्त्यर्थंपरलोकेतत्तद्दानकल्पोक्तफलावाप्तयेचतुर्दशोपदानानि

क० ॥ आमान्नं ॥ अन्नमेवयतो० ॥ उदकुंभः ॥ वारिपूर्णोघटः० ॥ उपानद्दानं ॥ उपानहौप्रदास्यामिकंटकादिनिवारणे ॥ सर्वमार्गेषुसुखदेतस्यस्तःशांतिदेसदा ॥ कमंडलुः ॥ त्रिलोकीनाथ० उदपात्रेणसंतुष्टःप्रयच्छ० ॥ छत्रं ॥ इहामुत्रातप० ॥ वस्त्रं ॥ शीतवातोष्णसं० ॥ यष्टिदानं ॥ त्रिलोकीनाथ० अनेनयष्टिदानेनप्र० ॥ लोहदंडः ॥ ज्ञानाज्ञानकृतंपापंतथालोभात्कृतंचिरात् ॥ लोहदंडप्रदानेनसर्वपापंव्यपोहतु ॥ अग्निष्टिका ॥ त्रिलोकीनाथ० अग्निष्टिकाप्रदानेनप्र० ॥दीपदानं॥ दीपोज्ञानप्रदोनित्यंदेवतानांप्रियःसदा ॥ दानेनास्यभवेत्सौख्यंशांतिस्तद्वांछितंफलं ॥ तिलदानं ॥ महर्षेर्गोत्र० ॥ तांबूलदानं ॥ सोपस्करंचतांबूलंसर्वदामंगलप्रियं ॥ प्रियंचैवतुदेवानांसौगंध्यंवदनेस्तुवै ॥ चंदनं ॥ त्रिलोकीनाथ० चंदनस्यप्रदानेनप्रयच्छ० ॥ पुष्पमाला ॥ त्रिलोकीनाथ० पुष्पमालाप्रदानेनप्र० ॥ इतिचतुर्दशोपदानानि ॥ ॥ केचित्तिललोहहेमकार्पासलवणभूमिधेनुसप्तधान्येत्यष्टदानान्याहुः ॥ त्रिलोकीनाथ० कार्पासेनचसंतुष्टः—सप्तधान्येनसंतुष्टःइत्याद्यूहः ॥ सप्तधान्यानितुयवव्रीहिगोधूमतिलमाषमुद्गप्रियंगुसंज्ञानि ॥ अन्येमंत्राउपरिवज्ज्ञेयाः ॥ ॥ सिद्धस्थालीदानं ॥ इमांपायसपूर्णांयःस्थालींघृतजलादिभिः ॥ दद्यात्संपत्तिपात्रंस्यादतःपाहिमहेश्वर ॥ ॥ ऊर्णादानं ॥ ऊर्णावस्त्रंचारुचित्रंदेवानांप्रीतिवर्धनं ॥ सुखस्पर्शकरंयस्मादतःशांतिं० ॥ ॥ व्यजनदानं ॥ व्यजनंवायुदैवत्यंग्रीष्मकालेसुखप्रदं ॥ अस्यप्रदानात्सकलाःसंतुतस्यमनोरथाः ॥ इति ॥ ॥ तिलपात्रदानं ॥ पित्रादेःजन्मप्रभृतिमरणांतंकृतनानाविधपापप्रणाशार्थं० ॥ तिलाःपुण्याःपवित्राश्चतिलाःसर्वकराःस्मृताः ॥ शुक्लावायदिवाकृष्णाऋषिगोत्रसमुद्भवाः ॥ यानिकानिचपापानिब्रह्महत्यासमानिच ॥ तिलपात्रप्रदानेनतानिनश्यंतुमेपितुः ॥ नग्नप्रच्छादनीयवस्त्रदानं ॥ मंत्रउपरिवत् ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३५७ ॥ प्रायश्चित्तगोदानप्रयोगः ॥

श्रीः ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यअमुकगोत्रस्यामुकप्रेतस्यजन्मप्रभृत्यद्ययावदाचरितसमस्तपातकस्याकृतप्रायश्चि त्तस्यामरणांतंपापापनोदनार्थंप्रायश्चित्तधेनुदानं गोःपूजनंचकरिष्ये ॥ पंचगावःसमुत्पन्नामथ्यमानेमहोदधौ ॥ तासांमध्ये तुयानंदातस्यैधेन्वैनमोनमः ॥ इतिमंत्रेणपूजयेत् ॥ शक्तौस्वर्णश्रृंगीमित्यादिदानवाक्येवक्ष्यमाणानलंकारांस्तत्रतत्रसंयोज्या न्यानप्यर्पयेत् ॥ कण्ठेपुष्पमालांघंटांचावध्यगोग्रासंसमर्प्यततआगावोअग्मन्निति सूक्तेनगांत्रिःप्रदक्षिणीकृत्यप्रार्थयेत् ॥ याल क्ष्मीःसर्वभूतानांयाचदेवेष्ववस्थिता ॥ धेनुरूपेणसादेवीपितुःपापंव्यपोहतु ॥ देहस्थायाचरुद्राणीशंकरस्यप्रियासदा ॥ धेनुरू पेणसादेवीतस्यपापंव्यपोहतु ॥ विष्णोर्वक्षसियालक्ष्मीःस्वाहायाचविभावसोः ॥ चंद्रार्कशक्रशक्तिर्याधेनुरूपास्तुसाप्रिया ॥ चतु र्मुखस्ययालक्ष्मीर्यालक्ष्मीर्धनदस्यच ॥ लक्ष्मीर्यालोकपालानांसाधेनुर्वरदास्तुमे ॥ स्वधात्वंपितृमुख्यानांस्वाहायज्ञभुजांतथा ॥ सर्वपापहराधेनुस्तस्माच्छांतिंप्रयच्छमे ॥ इतिगांप्रार्थ्यप्रतिग्रहीतारंब्राह्मणंयथाविभवंसंपूज्यगोपुच्छदेशेतमुदङ्मुखमवस्थाप्य स्वयंप्राङ्मुखःस्वर्णयुताज्यपूरितकांस्यपात्रेगोपुच्छंनिक्षिप्य ॥ प्रायश्चित्तेसमुत्पन्नेनिष्कृतिर्नकृताक्वचित् ॥ तस्यपापस्यशुद्ध्यर्थं धेनुमेतांददामिते ॥ मयामत्पित्रावाजन्मप्रभृतिअद्ययावदाचरितसमस्तपातकस्याकृतप्रायश्चित्तस्यामरणांतंपातकापनोदकामः प्रायश्चित्तत्वेनकल्पितांइमांकपिलांधेनुंरुद्रदैवत्यांसुवर्णश्रृंगींरौप्यखुरांताम्रपृष्ठांघंटाग्रैवेयकांमुक्तालांगूलांकांस्यदोहनिकांवस्त्र द्वयाभरणाद्युपस्करयुतां अमुकगोत्रस्यामुकप्रेतस्यपरलोकेसुखसिद्ध्येअमुकगोत्रायामुकशर्मणेतुभ्यमहंसंप्रददेनममेत्युक्त्वावि प्रकरेसकुशतिलोदकंगोपुच्छंदत्वा ॥ यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी ॥ विश्वरूपधरोदेवःप्रीयतामनयागवा ॥ इति

पठेत् ॥ प्रतिग्रहीतातुदेवस्यत्वेतिमंत्रेणप्रतिगृह्य ॐ स्वस्तीत्युक्त्वाकइदंकस्माअदादितिकामस्तुतिंयथाशाखंपठेत् ॥ कर्तादान स्यप्रतिष्ठासिद्ध्यर्थंदक्षिणांदत्वायमोक्तांगोमतींविद्यांपठेत् ॥ गावःसुरभयोनित्यंगावोगुग्गुलुगंधिकाः ॥ गावःप्रतिष्ठाभूतानां गावःस्वस्त्ययनंमहत् ॥ अन्नमेवपरंगावोदेवानांहविरुत्तमं ॥ पावनंसर्वभूतानांरक्षंतिचवहंतिच ॥ हविषामंत्रपूतेनतर्पयंत्यम रान्दिवि ॥ ऋषीणामपिहोतॄणांगावोहोमेप्रतिष्ठिताः ॥ सर्वेषामेवभूतानांगावःशरणमुत्तमं ॥ गावःपवित्रंपरमंगावोमंगलमु त्तमं ॥ गावःसर्वस्यभूतस्यगावोधन्याःसनातनाः ॥ नमोगोभ्यःश्रीमतीभ्यःसौरभेयीभ्यएवच ॥ नमोब्रह्मसुताभ्यश्चपवित्रा भ्योनमोनमः ॥ ब्राह्मणाश्चैवगावश्चकुलमेकंद्विधाकृतं ॥ एकत्रमंत्रास्तिष्ठंतिहविरेकत्रतिष्ठति ॥ इति ॥ ततोब्राह्मणेनसहगां प्रदक्षिणीकृत्यविष्णुंस्मृत्वाकर्मेश्वरार्पणंकृत्वाचामेत् ॥ इतिगोदानविधिः ॥ अयमेवविधिरग्रेप्रत्यक्षधेनुदानेतत्तदूहेनसर्व त्रोह्यः ॥ अत्रांगन्यासादिविशेषःपूर्वोक्तगोदानप्रयोगेआलोचनीयः ॥ ॥ ॥ ॥

## ॥ ३५८ ॥ पंचगोदानानि ॥

पापधेनुदानं ॥ पूर्ववत्पूजनांते आजंन्मोपार्जितंपापंमनोवाक्कायकर्मभिः ॥ तत्सर्वंनाशमायातुपापधेनुप्रदानतः ॥ ममपितुःमनो वाक्कायकर्मभिराजन्मोपार्जितपापापनोदनकामोहंइमांकृष्णांपापापनोदधेनुंयथाशक्तिसोपस्करांरुद्रदैवत्यांगोत्रायशर्मणेतुभ्यं संप्रददे ॥ ॥ उत्क्रांतिधेनुदानं ॥ असूत्क्रांतौप्रवृत्तस्यसुखोत्क्रमणसिद्धये ॥ तुभ्यमेतांप्रदास्यामिधेनुमुत्क्रांतिसंज्ञिकाम् ॥ ममपितुःसुखेनप्राणोत्क्रमणप्रतिबंधकोक्तनिष्कृत्यनुक्तनिष्कृतिजनितसकलपापक्षयद्वारासुखेनप्राणोत्क्रमणसिद्ध्यर्थमिमामुत्क्रां तिसंज्ञिकांधेनुंयथाशक्तिसोपस्करांरुद्रदैवत्यांगोत्रायशर्मणेतुभ्यमहंसंप्रददेनमम ॥ ॥ वैतरणीधेनुदानं ॥ तत्रोपक

ल्पनं ॥ पाटलांकृष्णांवाहेमशृंगाद्युपेतांकृष्णवस्त्रयुगच्छन्नांसप्तधान्यसंयुक्तांछत्रोपानद्युगुलसंयुक्तांगांसंनिधाप्यद्रोणमितका
र्पासशिखरेताम्रपात्रंतत्रमहिषारूढंदक्षिणवामकरधृतलोहदंडपाशंहैमंयमंस्थापयित्वातदग्रेरक्तपट्टवंधेक्षुदंडनिर्मितनौकोपरितां
धेनुंस्थापयित्वातिथ्यादिसंकीर्त्यअमुकगोत्रस्यामुकप्रेतस्ययमद्वारस्थितवैतरणींतर्तुंगोदानंकरिष्येतदंगंब्राह्मणवरणंपूजनंइक्षुनौ
कापूजनंयमपूजनंविष्णुपूजनंगोःपूजनंचकरिष्यइतिसंकल्प्य द्विजंवृत्वासंपूज्यप्रार्थयेत् ॥ विष्णुरूपद्विजश्रेष्ठभूदेवपंक्तिपा
वन ॥ यज्ञरूपनमस्तेस्तुपात्ररूपनमोस्तुते ॥ तर्तुंवैतरणीमस्यकृष्णांगांप्रददाम्यहम्॥गवामंगेष्वितिगोःपूजनंजातवेदसेसुनवामे
तिनौकापूजनंनौकायांधान्यराश्युपरिसुवर्णप्रतिमायांइमंयमप्रस्तर० इतियमपूजनं तत्समीपएवसुवर्णप्रतिमायांइदंविष्णुरिति
विष्णुंसंपूज्य ॥ धेनुकेत्वंप्रतीक्षस्वयमद्वारेमहापथे ॥ उत्तितीर्षुरयंदेविवैतरण्यैनमोस्तुते॥ यमद्वारपथेघोरेघोरावैतरणीनदी ॥
तांततुमस्ययच्छामिकृष्णांवैतरणींतुगाम् ॥ ममपितुःयमद्वारस्थितवैतरण्याख्यनद्युत्तरणार्थंइमांकृष्णांगांसवत्सांयमप्रतिमायु
क्तांकृष्णवस्त्रयुगच्छन्नांसप्तधान्ययुतांरक्तमाल्याद्यलंकृतांयथाशक्तिस्वर्णशृंगाद्युपस्करोपेतांसकार्पासद्रोणशिखरांरुद्रदैवत्यांगो
त्रायशर्मणेतुभ्यमहंसंप्रददेइतितिलजलकुशयुतंगोपुच्छंविप्रहस्तेदद्यात् ॥ ॥ ऋणधेनुदानं ॥ ममपितुःऐहिकामुष्मिकसप्त
जन्मार्जितऋणपातकापाकरणार्थंगोदानंक० ॥ ऐहिकामुष्मिकंयच्चसप्तजन्मार्जितंऋणं ॥ तत्सर्वंशुद्धिमायातुगामेकांददतो
मम ॥ संकल्पवाक्यमुक्त्वाइमांगांइत्यादिपूर्ववत् ॥ मोक्षधेनुदानंसपिंडीप्रयोगमध्येऽस्ति ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३५९ ॥ अश्वदानम् ॥

श्रीः ॥ अद्येत्यादि० ममपितुर्वासमस्तपापक्षयपूर्वकंअश्वरोमसंख्याकाब्दसूर्यलोकनिवासाप्तिकामःयथाशक्तिसोपस्करंअश्वदा

नंकरिष्ये ॥ अश्वकर्णंधृत्वोदद्यात् ॥ उच्चैःश्रवास्त्वमश्वानांराज्ञांविजयकारक ॥ सूर्यवाहनमस्तुभ्यमतःशांतिंप्रयच्छमे ॥ महार्णवसमुत्पन्नउच्चैःश्रवसपुत्रक ॥ मयात्वंविप्रमुख्यायदत्तोहयसुखीभव ॥ इमंविप्रनमस्तुभ्यमश्वंतेप्रतिपादितम् ॥ प्रतिगृह्णीष्वविप्रेंद्रमयादत्तंसुशोभनं ॥ इतिदानमंत्रमुच्चार्यइममश्वंसुवर्णतिलकालंकारयुतंललाटग्रैवेयकादियुतंचगंधपुष्पाद्यर्चितं सूर्ययमदैवतंममपितुःब्रह्महत्यादिसमस्तपापनाशकामोहयरोमसमसंख्याकाब्दसूर्यलोकनिवासकामश्चगोत्रायशर्मणेतुभ्यमहंसंप्रददेनमम ॥ सांगतासिद्ध्येदक्षिणांदद्यात् ॥ अनेनाश्वदानाख्येनकर्मणाप्रेतोद्धर्तामहाविष्णुःप्रीयतां ॥ ॥ छ ॥

## ॥ ३६० ॥ शय्यादानम् ॥

श्रीः ॥ अष्टदलेतिलप्रस्थंनिक्षिप्यतस्मिन्दारुमयींस्वास्तीर्णाद्युपस्करयुतांशय्यामास्तीर्यतस्याःसमंतादीशानादिकोणचतुष्टयेशिरोभागेचपंचकुंभान्क्रमात् घृतकुंकुमगोधूमजलपूर्णकुंभमुच्छीर्षेघृतपूर्णकलशंसप्तधान्यानिचसंस्थाप्य अद्येत्यादि० पित्रादेः समस्तपापक्षयपूर्वकाप्सरोगणसेवायुतविमानकरणकेंद्रपुरगमनोत्तरषष्टिसहस्रवर्षाधिकरणकक्रीडनस्त्रीसंघसमावृतसर्वलोकमहिमत्वतदुत्तरषष्टियोजनमंडलराज्यभोगानंतरशिवसायुज्यावाप्तिकामःशय्यादानमहंकरिष्ये इतिसंकल्प्य द्विजंसपत्नीकंवृत्वा यथाविभववस्त्रालंकारादिभिःसंपूज्य शय्यायांलक्ष्मीनारायणप्रतिमांस्वर्णमयींसंस्थाप्यसंपूज्यसपत्नीकविप्रेणसहशय्यांप्रदक्षिणीकृत्यनमःप्रमाण्यैदेव्यैइतिचतुर्दिक्षुक्रमेणप्रणम्य ॥ दानमंत्रस्तु ॥ यथानकृष्णशयनंशून्यंसागरजातया ॥ तथैतस्याप्यशून्यास्तुशय्याजन्मनिजन्मनि ॥ इति ॥ तिथ्यादिसंकीर्त्यपितुःसर्वपापक्षयेत्यादिशिवसायुज्यावाप्तिकामोगोत्रायशर्मणेसुपूजिताय इमांशय्यांईशानादिकोणचतुष्टयस्थापनक्रमेण घृतकुंकुमगोधूमजलपूर्णकुंभसमेतांहंसतूलीप्रच्छन्नांशुभ्रगंडोपधानिकांप्रच्छाद

नपटास्तृतांसप्तधान्ययुतांसतांबूलायतनादर्शैलालवंगकर्पूरयुतां सुगंधपरिमलभोग्यवस्तुचंदनागरुदीपिकोपानच्छत्रचामरास नयुतांभोजनभाजनजलपात्रपंचवर्णवितानकेशप्रसाधिन्यंजनशलाकापुष्पमालायुतां लक्ष्मीयुतनारायणप्रतिमासहितांयुक्तोप स्करामंगिरोदैवत्यांगोत्रायशर्मणेसुपूजितायसालंकृतायसपत्नीकायतुभ्यमहंसंप्रददेनममेतिशय्योपवेशितविप्रहस्तेसाक्षतंकुशो दकंक्षिपेत् ॥ तस्मैसुवर्णमेवदक्षिणांदद्यात् ॥ ततोब्राह्मणेभ्योभूयसींदद्यात् ॥ इतिशय्यादानम् ॥ ॥ ॥

## ॥ ३६१ ॥ भूमिदानम् ॥

श्रीः ॥ सागोचर्ममिताधिकावादेया ॥ दशहस्तेनदंडेनत्रिंशद्दंडानुवर्तनं ॥ त्रिभागहीनंगोचर्ममानमाहप्रजापतिः ॥ अद्येत्या दिपितुःसर्वपापक्षयपूर्वकंषष्टिसहस्रवर्षस्वर्गनिवासोत्तरंशिवपुरनिवासार्थंभूदानंक० ॥ विप्रंवृत्वा ॥ सर्वेषामाश्रयाभूमिर्वराहेण समुद्धृता ॥ अनंतसस्यफलदाअतःशांतिं० ॥ यस्यांरोहंतिबीजानिवर्षाकालेमहीतले ॥ भूमेःप्रदानात्सकलास्तस्यसंतुमनोरथाः ॥ इमांभूमिंवृक्षाद्युपेतांसस्योद्भवांविष्णुदैवत्यांसंकल्पहेतवेसंप्रददे ॥ ॥ पददानम् ॥ आसनोपानहौछत्रंमुद्रिकाचकमंडलुः ॥ यज्ञोपवीताज्येवस्त्रंभोजनंचान्नभाजनं ॥ दशकंपदमेतत्स्यात्पदान्येवंत्रयोदश ॥ देयानिवायथाशक्तितेनासौप्रीणितोभवेत् ॥ पित्रादेःमार्गकष्टपरिहारपूर्वकमुत्तमलोकावाप्तयेतृप्त्यर्थंचपददानंक० ॥ त्रिलोकीनाथदेवेशसर्वभूतकृपानिधे ॥ पददानेनतुष्य स्वप्रयच्छतस्यवांछितं ॥ संकल्पवाक्यांतेइदंयथाशक्तिआसनादिदशोपकरणसमूहात्मकंपदंतृतीयांशदक्षिणायुतंतुभ्यंसंप्रददे ॥ शालग्रामदानम् ॥ सशैलवनभूचक्रदानसमफलावाप्तयेशाल० ॥ महाकोशनिवासेनशक्राद्यैरुपशोभितः ॥ शालग्रामप्रदाने नतस्यपापंव्यपोहतु ॥ ॥ रुद्राक्षमालादानम् ॥ अष्टाविंशतिसंख्याकैरुद्राक्षैर्योजितामया ॥ अर्पितातवहस्तेचगृहाणद्वि

जसत्तम ॥ ॥ पुस्तकदानं ॥ गोदानसमफलावाप्तिस्वर्गलोकनिवासविद्यादानादिकल्पोक्तफलावाप्तये० ॥ सर्वविद्याश्रया यज्ञाःकारणंलिखिताक्षरं ॥ पुस्तकस्यप्रदानेनतस्यप्रीणातुभारती ॥ संकल्पवाक्येनदद्यात् ॥ इतिभूम्यादिदानानि ॥ ॥



## ॥ ३६२ ॥ अथसपिंडीकरणम् ॥



पूर्वेद्युः षड्ब्राह्मणान्निमंत्र्यततःस्नात्वामध्याह्नेआगतान्विप्रान्स्वागतेनार्चयित्वातदनुज्ञातआसनानिकल्पयित्वा ॥ भूशुद्ध्यादि विधायदेशकालौसंकीर्त्यामुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमुक्त्यर्थंपितृत्वप्राप्त्योत्तमलोकप्राप्त्यर्थअमुकगोत्रैरमुकशर्मभिस्तत्पितृ पितामहप्रपितामहैर्वसुरुद्रादित्यस्वरूपैःसहमृताहाद्द्वादशेहनिसपिंडीकरणश्राद्धंपार्वणैकोद्दिष्टेनविधिनाकरिष्ये ॥ मातुःसपिंडी करणेऽमुकगोत्रायाअमुकप्रेतायाअस्मन्मातुःअस्मत्पितामहीप्रपितामहीवृद्धप्रपितामहीभिरितिविशेषः ॥ पाद्यार्थविश्वेषांदेवा नांचतुरस्रंमंडलंकृत्वा ॥ तद्दक्षिणेप्रेतार्थंगोःपदंतद्दक्षिणतःपितामहादिमंडलंवर्तुलंकुर्यात् ॥ अत्रकामकालसंज्ञकाविश्वेदेवाःवि श्वेभ्योदेवेभ्योभूर्भुवःसुवरिदंवःपाद्यं ॥ प्रेतायेदंवःपाद्यमुपतिष्ठतां॥ पितामहादीनांप्रकृतिवत्॥ प्रेतोपचारान्गायत्रींमनसोच्चार्य कुर्यात्॥ एवंसर्वत्र॥ एकमतिथिंचविदध्यात्॥ विश्वेषांदेवानांआसनाद्यर्चनांतंविधायप्रेतायेदमासनमुपतिष्ठत्वितिसर्वोपचारेषु प्रेतस्थानेब्रूयात्॥ ततःपितामहादिभ्यःप्रकृतिवत् ॥ आसनानिदत्वार्घ्यपात्रचतुष्टयंसपवित्रमासाद्यामुकगोत्रंप्रेतमावाहयिष्ये॥ इत्युक्त्वागायत्रींमनसोच्चार्यामुकगोत्रंप्रेतमावाहयामीतिप्रेतब्राह्मणमस्तकेतिलान्प्रक्षिप्यतत्पात्रेक्षिपेत् ॥ गंधपुष्पादिक्षिप्त्वा ॥

१ अथपिंडप्रमाणं ॥ एकोद्दिष्टेसपिंड्यांचकपित्थंचविधीयते ॥ नारिकेलंप्रमाणंतुप्रत्यब्देमासिकेतथा ॥ तीर्थेदर्शेचसंप्राप्तेकुक्कुटांडप्रमाणतः ॥ महालयेगयाश्राद्धेकुर्यादामलकोपमं ॥

ततः पितामहादीन्प्रकृतिवदावाह्य  तत्पात्रेषुतिलान्प्रक्षिप्यप्रेतब्राह्मणहस्तेगंधादिक्षिप्त्वाप्रेतपात्रंहस्तेगृहीत्वागायत्रींमनसोच्चार्य अमुकगोत्रप्रेतेदंतेर्घ्यमुपतिष्ठतामितिचतुर्थांशमुदकंदत्वापात्रंभूमावासाद्यपात्रत्रयेपूर्वमेवोदकप्रक्षेपादिकृत्वामुकगोत्राणांप्रेतपितृपितामहप्रपितामहानांअमुकामुकशर्मणांवसुरुद्रादित्यस्वरूपाणांअर्घ्यपात्रोदकंप्रेतार्घ्यपात्रोदकेनसंयोजयिष्यइतिब्राह्मणाननुज्ञाप्य ॥ येसमानाःसमनसःपितरोयमराज्ये ॥ तेषांलोकःस्वधानमोयज्ञोदेवेषुकल्पतां ॥ इतिमंत्रमुच्चार्यप्रेतपात्रंहस्तेगृहीत्वा ॥ येसजाताःसमनसोजीवाजीवेषुमामकाः ॥ तेषांश्रीर्मयिकल्पतामस्मिन्लोकेशतंसमाः ॥ गायत्रींस्मृत्वाअमुकगोत्रप्रेतअमुकगोत्रेणस्वपित्रामुकशर्मणावसुरूपेणोदकद्वारेणसहसायुज्यंगच्छेत्युक्त्वातृतीयांशमुदकंतत्पितृपात्रेनिक्षिप्यपवित्रमपितृतीयांशंक्षिपेत् ॥ एवमेवपितामहप्रपितामहाभ्यांसहोदकंसंयोजयेत् ॥ ततःपवित्रमपिसंयोजयेत् ॥ ततःपात्रेषुगंधपुष्पादिक्षिप्त्वाब्राह्मणहस्तानभ्यर्च्यप्रकृतिवदर्घ्याणिदत्वाप्रेतब्राह्मणायगंधाद्यर्चनंविधायपितामहादीनामपिपूजांविधाय ॥ ततःपात्राण्यासाद्यप्रेतब्राह्मणहस्तेप्रेतायययमायस्वाहेत्यन्नाहुतिंहुत्वातदन्नमग्नौक्षिपेत् ॥ शेषंपिंडार्थमवशेष्य ॥ पितामहादिस्थानेअग्नौकरणंप्रकृतिवत्कृत्वा ॥ विश्वेभ्योदेवेभ्योन्नंनिवेदयेत् ॥ प्रेतेदमन्नंसोपस्करंसोदकुंभंसदीपंपरिविष्टंपरिवेक्ष्यमाणंचातृप्तेरमृतरूपेणोपतिष्ठतां ॥ पितामहादिष्वन्ननिवेदनंपार्वणवत् ॥ तृप्तिप्रश्नादिकृत्वाभोजनांतेउच्छिष्टपिंडः ॥ आचांतेषुविकिरंदत्वातेभ्योनुज्ञांलब्ध्वापिंडस्थानेदक्षिणतोवेदीकरणंबर्हिरास्तरणंउदकनिनयनंचविदध्यात् ॥ पितामहादिपिंडस्थानेबर्हिरास्तरणादिप्रकृतिवत्कृत्वा ॥ ततःप्रेतस्थानस्थितायब्राह्मणायदक्षिणांदत्वाप्रेतपिंडंहस्तेगृहीत्वा ॥ प्रेतनामगोत्राद्युच्चार्यपिंडंदत्वासंपूज्य ॥ ततःपितामहादिभ्यःपार्वणवत् पिंडत्रयंदत्वासंपूजयेत् ॥ ब्राह्मणाननुज्ञाप्यततोमुकगोत्रस्यामुकप्रेतस्यपिंडंपित्रादिपिंडैःसहसंयो

जयिष्यइतिपृष्टेतैःसंयोजयेत्यनुज्ञाते ॥ मोक्षधेनुंदद्यात् ॥ मोक्षधेनोर्मंत्रः ॥ मोक्षंदेहिहृषीकेशमोक्षंदेहिजनार्दन ॥ मोक्षधे
नुप्रदानेनमुकुंदःप्रीयतांमम ॥ ततोदर्भमयींरज्जुंद्विगुणांगृहीत्वाप्रेतपिंडंत्रिधाविभजेत् ॥ येसमानाःसमनसइतिमंत्रमुच्चार्यप्रेत
पिंडंकुशेनत्रेधाविभज्यावयवत्रयंत्रिषुपिंडेषुसंयोजयेत् ॥ पिंडतृतीयांशंहस्तेगृहीत्वायेसजाताइत्युच्चार्यामुकगोत्रप्रेतामुकगोत्रे
णस्वपित्रामुकशर्मणावसुरूपेणसहपिंडद्वारेणसायुज्यंगच्छेत्युक्त्वातृतीयांशंतेनपितृपिंडेनदधिमधुभ्यांसम्यगेकीकुर्यात् ॥ द्विती
यांशंस्वपितामहपिंडेनतृतीयांशमेवमेवप्रपितामहपिंडेनसंयोजयेत् ॥एवंमात्रादिसपिंडनेपिपितामह्यादिपिंडत्रयेणसंयोजयेत् ॥
प्रतिपिंडसंयोजनेमंत्रावृत्तिः ॥ अत्रांजनाभ्यंजनेवासश्चेत्यादिसर्वंपार्वणवत् ॥ प्रेतस्थानेतूष्णींजलंदत्वाअमुकप्रेतस्यय
द्दत्तंसपिंडीकरणश्राद्धीयमन्नमुदकादितदक्षय्यमुपतिष्ठतामित्युक्त्वाविशिष्टदक्षिणांदत्वाप्रेतब्राह्मणंपिंडसंयोजनात्प्रागेवविसर्ज
येत् सहैवांतेदक्षिणाविसर्जनेवा ॥ केचित्तुप्रेतपिंडसंयोजितपिंडत्रयमिदानींतनमृतमारभ्यपुरुषत्रयायपार्वणवत्पुनरपिदद्यादि
त्याहुः ॥ एषवोनुगतःप्रेतःपितृसाम्यत्वमाप्तवान् ॥ शिवंभवतुशेषाणांजायंतांचिरजीविनः ॥ इतिबर्हिषियोजयेत् ॥ द्वादशा
हांतंधारितमुत्तरीयवस्त्रंपिंडोपरिदद्यात् ॥ तच्चाचार्योगृह्णीयात् ॥ अवयवपिंडान्नंपाकस्थालींचाचार्यायप्रदद्यात् ॥ ततःआपो
देवीरित्यादिसर्वानुपचारान्पार्वणवत्पिंडेषुदद्यात् ॥ आशिषःप्रार्थनंब्राह्मणैराशीर्दानंचनकर्तव्यं ॥ अभिरम्यतामितिप्रेतब्रा
ह्मणंविसर्जयेत् ॥ इतरत्पार्वणवत् ॥ अनुव्रजननंनकार्यं ॥ तत्पाकंसर्वंविसृज्यपाकांतरंविधायवैश्वदेवंकृत्वागृहस्थैर्मनुष्यैःस
हभुंजीत ॥ इतिसपिंडीकरणं ॥ मातुःसपिंडीकरणंतुपितामह्यादिभिःसहकार्यं ॥ पत्न्यामृतमातृकेणमात्रादिभिःसहअमृतमातृ
केणतुपितामह्यादिभिरित्यादिज्ञेयं ॥ पितुस्तुरीयस्यसुतःप्रदद्याद्विमुक्तपिंडस्यसपिंडनात्तु ॥ पाथेयसंज्ञंदधिमिश्रमन्नंत्रयोदशे

ह्निद्विजपुंगवेभ्यः ॥ अथश्राद्धभोक्तृणांमिथःस्पृष्टौतदन्नमत्यजन्भुक्त्वागायत्र्यष्टशतंजपेत् ॥ उच्छिष्टसंस्पर्शेतत्प्रक्षाल्यतदन्नं भुत्वास्नात्वाद्विशतंजपेत् ॥ उच्छिष्टभोजनेद्विसहस्रंजपेत् ॥ ॥ ॥ ॥

## ॥ ३६३ ॥ पाथेयश्राद्धम् ॥

अथद्वादशेत्रयोदशेह्निप्रातःस्नात्वाप्राणानायम्यतिथ्यादिकमुच्चार्यामुकगोत्रस्यामुकशर्मणःप्रेतलोकात्पितृलोकगमनेसुखसिद्ध्यर्थममुकशर्मणाममुकगोत्राणामस्मत्पितृपितामहप्रपितामहानांवसुरुद्रादित्यस्वरूपाणांपाथेयश्राद्धंसदैवंसपिंडंआमेनहेम्नावाकरिष्ये ॥ इतिसंकल्प्यक्षणपाद्यादिसर्वश्राद्धंपार्वणवत्पक्वान्नेनआमेनवाकुर्यात् ॥ ( अत्रोदकुंभवस्त्रदीपछत्रोपानदादिदेयं ) ॥

## ॥ ३६४ ॥ त्रयोदशाहकृत्यम् ॥

ततःकर्ताभ्यंगस्नानंकुर्यात् ॥ देशकालौसंकीर्त्यममसपरिवारस्यपित्रादिनिधननिमित्तसकलारिष्टोपशांतयेक्षेमायुःसिद्ध्यर्थंचनिधनशांतिं॰ गणेशपूजनपूर्वकंस्वस्तिवाचनंचकरिष्येइतिसंकल्प्ययथाशाखंस्वस्त्ययनंवाचयित्वाशांतिजपंकारयित्वाशिषोगृहीत्वास्वजनैःसहभुंजीत ॥ अतऊर्ध्वंचंदनधारणंतांबूलभक्षणंकुर्यात् ॥ ॥ इतित्रयोदशाहकृत्यम् ॥ ॥

## ॥ ३६५ ॥ अथोदकुंभश्राद्धम् ॥

तत्रयाज्ञवल्क्यः ॥ अर्वाक्सपिंडीकरणंयस्यसंवत्सराद्भवेत् ॥ तस्याप्यन्नंसोदकुंभंदद्यात्संवत्सरंद्विजे ॥ गौतमः ॥ अदैवंपार्व

णश्राद्धंसोदकुंभमधर्मकं ॥ कुर्यात्प्रत्याब्दिकंश्राद्धंसंकल्प्यविधिनान्वहं ॥ अधर्मकंपुनर्भोजनादिनियमरहितं ॥ एवंशक्तेनव र्षपर्यंतंकार्यं ॥ अशक्तेनमासिमासिवा ॥ इत्युदकुंभश्राद्धं ॥ ॥ ॥ ॥



## ॥ ३६६ ॥ सहगमनविधिः ॥

अथान्वारोहणंस्त्रीणामात्मनोभर्तुरेवच ॥ सर्वपापक्षयकरंनिरयोत्तारणायच ॥ अनेकस्वर्गफलदंमुक्तिदंचतथैवच ॥ जन्मांतरे चसौभाग्यधनपुत्रादिवृद्धिदं ॥ देशकालौसंकीर्त्यात्मनोभर्तुश्चजन्मजन्मांतरोपार्जितसर्वपापक्षयद्वारालक्ष्मीनारायणप्रीतयेश्रु तिस्मृतिपुराणोक्तानेकफलप्राप्तयेपत्युरन्वारोहणंकरिष्ये॥ दैवसंपादितोमह्यंपतित्वेसर्वदैवत ॥ त्वयासहगमिष्यामिभर्तात्वंचा न्यजन्मनि ॥ इत्युक्त्वास्नात्वाकुंकुमकुसुमादिनास्वशरीरमलंकृत्यपुत्रादिभ्योबंधुभ्यश्चाशिषोदत्वा ॥ चितिस्थोभगवानग्निर्वि ष्णुरूपीसनातनः ॥ पतिलोकसमावाप्त्यैगृहाणार्घ्यंनमोस्तुते ॥ इतिविष्णुरूपिणेऽग्नयेऽर्घ्यंदत्वा ॥ एषतेर्घ्योमयादत्तःसूर्यसाक्षी त्वमग्रतः ॥ प्रसादंकुरुमेदेवगृहाणार्घ्यं० ॥ इतिसूर्यायचदत्वा ॥ त्वंब्रह्मात्वंचवैरुद्रस्त्वंरविस्त्वंप्रजापतिः ॥ त्वमिंद्रोवसव श्चाष्टौपरमात्मात्वमेवहि ॥ त्वमेवशरणंविष्णोशरणंत्वंपतिर्मम ॥ स्वर्गेवानरकेवापियत्रयत्रगमिष्यसि ॥ तत्रतत्राप्यहंपृष्ठेगमि ष्यामितवाशुवै ॥ ब्रह्महत्यादिभिःपापैस्त्वांमोक्ष्यामियमालयात् ॥ अहंब्रह्माप्यहंविष्णुरहंसूर्यश्चदिक्पतिः ॥ आदित्यचंद्राव निलोऽनलश्चद्यौर्भूमिरापश्चअहर्निशाच ॥ एतेचसर्वेममसाहसेनतुष्यंतुतेदेवनराश्चसर्वे ॥ इतिपठित्वा ॥ तदंगतयाविहितंहरिद्रा कुंकुमांजनादिसौभाग्ययुतवंशपात्रदानंकरिष्येइतिसंकल्प्यसोपस्कराणिशूर्पाणिदद्यात् ॥ तत्रमंत्रः ॥ लक्ष्मीनारायणोदेवोवल सत्वगुणाश्रयः ॥ गाढंसत्वंचमेदद्याद्वायनैःपरितोषितः ॥ सोपस्कराणिशूर्पाणिवायनैःसंयुतानिच ॥ लक्ष्मीनारायणप्रीत्यै

सत्वकामाददाम्यहं ॥ अनेनसोपस्करशूर्पदानेनलक्ष्मीनारायणौप्रीयेतां ॥ अग्नेःसमीपमागत्यपंचरत्नानिपल्लवे ॥ नीलांजनंत
थावध्वामुखेमुक्ताफलंन्यसेत् ॥ ततोग्निप्रार्थनंकृत्वामंत्रेणानेननिश्चितं ॥ स्वाहासंश्लेषनिर्विण्णसर्वगात्रहुताशन ॥ सत्वमार्गप्र
दानेननयमांपत्युरंतिकं ॥ इतिअग्निंसंप्रार्थ्यअग्नावाज्याहुतीर्जुहुयात् ॥ अग्नयेतेजोधिपतयेस्वाहा ॥ विष्णवेसत्वाधिपतये
स्वाहा ॥ कालायधर्माधिपतयेस्वाहा ॥ पृथिव्यैलोकाधिष्ठात्र्यैस्वाहा ॥ अद्भ्योरसाधिष्ठात्रीभ्यःस्वाहा ॥ वायवेबलाधिपतये० ॥
आकाशायसर्वाधिपतये० ॥ कालायधर्माधिष्ठात्रे० ॥ अद्भ्यःसर्वसाक्षिणीभ्यः० ॥ ब्रह्मणेवेदाधिष्ठात्रे० ॥ रुद्रायश्मशाना
धिष्ठात्रेस्वाहेत्येकादशाहुतीर्हुत्वा ॥ कुर्यादग्नेःप्रदक्षिणां ॥ ततःशिलांसोपस्करांसंपूज्यतामारुह्यपुष्पांजलिंगृहीत्वाग्निंप्रा
र्थयेत् ॥ त्वमग्नेसर्वभूतानामंतश्चरसिसाक्षिवत् ॥ त्वमेवदेवजानीषेनविदुर्यानिमानुषाः ॥ अनुगच्छामिभर्तारंवैधव्यभयपी
डिता ॥ सत्वमार्गप्रदानेननयमांभर्तुरंतिकं ॥ इदंशरीरंसकलंमदीयंदग्ध्वाकृशानोकुरुदिव्यमाशु ॥ तथाचभर्तुःकुरुदिव्यदेहं
भर्तुःसमीपंभगवन्व्रजामि ॥ किंमयानकृतंसाधुभवेद्यदिचतेनघ ॥ इदंशरीरमालिंग्यप्रविशामिहुताशनं ॥ इमंमंत्रंसमुच्चार्यप्र
विशेच्चहुताशनं॥तांप्रेतस्योत्तरतःसुप्तांदेवरःशिष्योवानमस्कृत्यकरेधृत्वोदीर्ष्वेतिद्वाभ्यांमंत्राभ्यांसत्वरहितामुत्थापयेत् ॥ सत्वा
धिकातुसुहृदःसमाश्वास्यभर्तारंविष्णुरूपंस्मरंतीअग्निंप्रविशेत् ॥ अग्नौप्रविशंतींपतिव्रतांदृष्ट्वाविप्रामंत्रौपठेयुः ॥ इमाःपतिव्रताः
पुण्याःस्त्रियोऽपापाःसुशोभनाः ॥ सहभर्तृशरीरेणप्रविशंतुहुताशनं ॥ इमानारीरविधवाःसुपत्नी० मृशंतां ॥ अनश्रयो० योनि
मग्ने ॥ अनुव्रजंतीभर्तारंगृहात्पितृवनंमुदा ॥ पदेपदेश्वमेधस्यफलंप्राप्नोत्यनुत्तममिति ॥ मृतेभर्तरियानारीधर्मशीलादृढव्रता ॥
अनुगच्छतिभर्तारंशृणुतस्यास्तुयत्फलं ॥ तिस्रःकोट्योर्धकोटीचयावंत्यंगरुहाणिवै ॥ तावंत्यब्दसहस्राणिस्वर्गलोकेमहीयते ॥

मातृकंपितृकंचैवयत्रकन्याप्रदीयते ॥ कुलत्रयंपुनात्येषाभर्तारंयानुगच्छति ॥ इत्यादिवाक्यपर्यालोचनयासंकल्पेतत्तत्फलमुल्लेख्यं ॥ अन्वारोहणेअवयवपिंडाद्यर्थंपाकस्तंत्रेण पिंडंपृथगितिधौंडिपद्धतौ ॥ अन्यत्रतु ॥ अन्वारोहेतुनारीणांपत्युश्चैकोदकक्रिया ॥ पिंडदानक्रियांतद्वच्छ्राद्धंप्रत्याब्दिकंतथा ॥ नवश्राद्धानिसर्वाणिसपिंडीकरणंपृथक् ॥ एकएववृषोत्सर्गोगौरेकातत्रदीयते ॥ अन्वारोहणेएकचित्यारोहणेवास्त्रियाःपृथक्सपिंडनंनास्ति ॥ भर्तुःकृतेस्त्रियाःकृतंभवतीतिस्मृत्यर्थसारे ॥ भर्त्रैवैकेनेतिवहवः॥ भर्त्रादित्रयेणेत्यन्ये ॥ अन्वारोहणंचगर्भिणीनांवालापत्यानांरजस्वलानांसूतिकानांचनिषिद्धं ॥ गर्भिणीनांतत्तज्जातिवधसमं ॥ ब्राह्मण्याएकचित्यारोहणं ॥ क्षत्रियस्त्रियाःपृथक्सहवाचितिः ॥ असवर्णायाःपृथक्चितिरेव ॥ मदनपारिजातेअन्वारोहणेनवश्राद्धमात्रंपृथक् ॥ तत्रापिपितृमातामहपार्वणद्वयवत्सहैवावस्थानं ॥ आपस्तंवः ॥ चितिभ्रष्टातुयानारीमोहाद्विचलिताभवेत् ॥ प्राजापत्येनशुद्ध्येततस्माद्वैपापकर्मणः ॥ भर्तुरनुगमनेचितिभ्रष्टाइत्यर्थः ॥ पत्न्यांरजस्वलायांतुयदाभर्तामृतःसाच देशकालवशात्तदैवानुगंतुमिच्छतिनपंचमादिदिनंप्रतीक्षते ॥ तत्रविधिः ॥ यदास्त्रियामुदक्यांतुपतिःप्राणान्समुत्सृजेत् ॥ द्रोणमेकंतंडुलानामवहन्याद्विशुद्धये ॥ मुसलाघातैस्तदसृक्स्रवतेयोनिमंडलात् ॥ विरजस्कामन्यमानास्वेचित्तेतदसृक्क्षयं ॥ दृष्ट्वाशौचंप्रकुर्वीतपंचमृत्तिकयापृथक् ॥ त्रिंशद्विंशद्दशपंचगवांदत्वात्वहःक्रमात् ॥ विप्राणांवचनाच्छुद्धासमारोहेद्धुताशनं ॥ नारीणांसरजस्काणामियंशुद्धिरुदाहृता ॥ इतिसहगमनविधिः ॥ ॥ छ ॥ ॥ छ ॥



## ॥ ३६७ ॥ रजस्वलामरणविधिः ॥

श्रीः ॥ अंतरिक्षमृतायेचवह्नावप्सुप्रमादतः ॥ उदकीसूतिकानारीचरेच्चांद्रायणत्रयं ॥ संग्रहे ॥ पंचभिःस्नापयित्वातुगव्यैःप्रेतां

रजस्वलां ॥ वस्त्रांतरावृतांकृत्वादाहयेद्विधिपूर्वकं ॥ शातातपः ॥ रजस्वलायाःप्रेतायाःसंस्कारादीनिनाचरेत् ॥ ऊर्ध्वंत्रिरात्रा त्स्नातायाःशवधर्मेणदाहयेत् ॥ त्र्यहोत्तरंसंस्कारमाह ॥ देशकालौसंकीर्त्यामुकगोत्रायाअमुकप्रेतायारजस्वलायामरणनिमि त्तप्रत्यवायपरिहारार्थंऔर्ध्वदेहिकयोग्यतार्थंचचांद्रायणत्रयप्रायश्चित्तपूर्वकंशूर्पेणाष्टोत्तरशतस्नानानिकारयिष्यइतिसंकल्प्य ॥ ब्राह्मणवचनेनचांद्रायणत्रयंकृत्वायवपिष्टेनप्रेतमुपलिप्यस्वयंस्नात्वाशूर्पोदकेनाष्टोत्तरशतवारंस्नापयेत् ॥ प्रेतंप्रक्षाल्यभस्म गोमयमृत्तिकाकुशोदकपंचगव्यशुद्धोदकैःस्नापयेत् ॥ पावमानीःस्वस्त्ययनीर्यदंतियच्चदूरके ॥ आपोहिष्ठेतितिसृभिःकयान इतितिसृभिःसंस्नाप्यपूर्ववस्त्रंपरित्यज्यविधिनादहेत् ॥ यद्वारजस्वलांसूतिकांचमलंप्रक्षाल्यस्नापयित्वाकाष्ठवदादौदग्ध्वास्थी निविधिनादहेत् ॥ इतिरजस्वलामरणविधिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३६८ ॥ सूतिकामरणविधिः ॥

सूतिकामरणेप्राप्तेसर्वौषध्यनुलेपनं ॥ असूतिकाचसंस्पृष्टाशूर्पाणांतुशतंक्षिपेत् ॥ पूर्ववत्संकल्प्यब्राह्मणवचनाच्चांद्रायणत्रयंकृ त्वापूर्ववच्छतस्नानानिकारयित्वाकुंभेजलमादायपंचगव्यंतत्रक्षिप्त्वा ॥ आपोहिष्ठीयवामदेव्यवारुणादिपुण्याभिर्ऋग्भिरभिमं त्र्यपूर्वोक्तमंत्रैःसंस्नाप्यविधिनादहेत् ॥ अथसूतिकामरणेदिनभेदेनविशेषप्रायश्चित्तं ॥ सूतिकातुयदासाध्वीविस्नातामरणंगता ॥ त्रिवर्षपूर्णपर्यंतंशुद्ध्येत्कृच्छ्रेणसर्वदा ॥ एतत्प्रथमत्र्यहविषयं ॥ सूतिकातुयदानारीरजसाचपरिप्लुता ॥ म्रियतेचेत्तुसानारीद्विवर्ष कृच्छ्रमाचरेत् ॥ एतद्द्वितीयत्र्यहविषयं ॥ सूतिकातुयदासाध्वीविस्नातामरणंगता ॥ त्रिषण्नवदिनादर्वागेकाब्देनविशुद्ध्यति ॥ दशाहेतु ॥ सूतिकातुयदानारीप्राणांश्चैवपरित्यजेत् ॥ मासमेकावधिर्यावत्त्रिभिःकृच्छ्रैर्विशुद्ध्यति ॥ तथा ॥ सूतिकायांमृतायां

तुकर्थंकुर्वन्तियाज्ञिकाः ॥ कुंभेसलिलमादायपंचगव्यंक्षिपेत्ततः ॥ पुण्याभिर्ऋग्भिःसंमंत्र्यवाचाशुद्धिंलभेत्ततः ॥ तेनैवस्नाप यित्वातुदाहंकुर्याद्यथाविधि ॥ अब्लिंगाभिर्मंत्रिताभिर्वामदेव्याभिरेवच ॥ अन्यैश्चवारुणैर्मंत्रैःसुस्नाप्यविधिनादहेत् ॥

## ॥ ३६९ ॥ गर्भिणीमरणविधिः ॥

यदागर्भवतीनारीसशल्यासंस्थिताभवेत् ॥ कुक्षिंभित्वाततःशल्यंनिर्हरेद्यदिजीवति ॥ प्रमीतंनिक्षिपेत्तंतुप्रायश्चित्तंततःपरं ॥ सात्रयस्त्रिंशताकृच्छ्रैःशुध्यतेशल्यदोषतः ॥ सगर्भदहनेतस्यावर्णजंवधपातकं ॥ प्रायश्चित्तंचरित्वातुशुद्ध्यंतेपापकारिणः ॥ दग्ध्वातुगर्भसंयुक्तांत्रिरब्दंकृच्छ्रमाचरेत् ॥ इतिगर्भिणीमरणविधिः ॥ ॥ ॥ ॥

## ॥ ३७० ॥ ब्रह्मचारिमरणविधिः ॥



विधानमालायांविशेषः ॥ येषांकुलेब्रह्मचारीनिधनंप्राप्नुयाद्यदि ॥ तत्कुलंक्षयमाप्नोतिसोपिदुर्गतिमाप्नुयात् ॥ ग्रहत्वंप्राप्नुयाद्धो धिद्गुमेचसततंवसेत् ॥ तस्यापितस्यवंशस्यगतिमिच्छन्महीयसीं ॥ विधानंचविधायाशुऔर्ध्वदेहिकमाचरेत् ॥ मृतस्यम्रियमाण स्यषडब्दंव्रतमादिशेत् ॥ त्रिंशद्भ्योब्रह्मचारिभ्योदद्यात्कौपीनकाञ्चवान् ॥ हस्तमात्राःकर्णमात्राददद्यात्कृष्णाजिनानिच ॥ पादु काछत्रमाल्यानिगोपीचंदनमेवच ॥ मणिप्रवालमालाश्चब्रह्मसूत्राणिचार्पयेत् ॥ मंत्रैस्तत्तल्लिंगकैश्चैवब्रह्मसायुज्यसिद्धये ॥ अभा वेव्रतिनांपूज्यागृहस्थाःसाधवःशुभाः ॥ एवंकृतेविधानेचविघ्नस्तस्यनजायते ॥ ॥ ॥

## ॥ ३७१ ॥ ब्रह्मचारिमरणेअर्कविवाहः ॥

शौनकः ॥ ब्रह्मचारिमृतौरीतिंकथयामिसमासतः ॥ तत्रावकीर्णदोषस्यप्रायश्चित्तंप्रशांतये ॥ द्वादशाब्दंषडब्दंवात्र्यब्दंशक्त्या थवाचरेत् ॥ ततोव्रतविसर्गाख्यंविधिंसम्यक्समाचरेत् ॥ स्नातकोब्रह्मचारीचनिधनंप्राप्नुयाद्यदि ॥ संयोज्यचार्कंविधिनासंयो ज्यौतौपरस्परं ॥ अथाग्निमुपसमाधाय ॥ एवंगुणेत्यादिअमुकगोत्रस्यामुकशर्मणोमृतस्यब्रह्मचारिणोव्रतविसर्गंकरिष्ये ॥ तदंगं हिरण्येननांदीश्राद्धंकरिष्ये ॥ इतिसंकल्प्य ॥ तत्कृत्वान्वाधानाद्याघारांतंकृत्वाज्यंजुहुयात् ॥ व्याहृतयश्चतस्रः ॥ अग्नयेव्र तपतये० ॥ अग्नयेव्रतानुष्ठानसंपादकाय० ॥ विश्वेभ्योदेवेभ्यः० ॥ ततःस्विष्टकृदादिसंपाद्यपश्चादर्कसमीपेगत्वाथवार्कशाखा मानीयार्कविवाहःकार्यः ॥ अर्कंब्रह्मचारिणौहरिद्रयानुलिप्यपीतसूत्रेणवस्त्रयुग्मेनचावेष्ठ्याग्निमुपसमाधाय ॥ एवंगुणेत्यादि अमुकगोत्रस्येत्यादिऔर्ध्वदेहिकाधिकारार्थमर्कविवाहंकरिष्येइतिसंकल्प्यतदंगंहिरण्येननांदीश्राद्धंकृत्वास्थंडिलेग्निंप्रतिष्ठाप्या ज्यभागांतंकृत्वाज्यहोमः ॥ अग्नयेस्वाहा ॥ बृहस्पतयेस्वाहा ॥ विवाहविधियोजकायस्वाहा ॥ ॐ यस्मैत्वाकामकामायवयंसम्रा ड्यजामहे ॥ तमस्मभ्यंकामंदत्वाथेदंत्वंघृतंपिबस्वाहा ॥ कामायेदं० ॥ चतस्रोव्याहृतयः ॥ ततःस्विष्टकृदादिअर्कशाखां ब्रह्मचारिशवंचतुषाग्निनाविधिवद्दहेत् ॥ शाखांप्रवाहयेदित्यन्ये ॥ इतिब्रह्मचारिमरणविधिः ॥ ॥ ॥

## ॥ ३७२ ॥ कुष्ठिमरणविधिः ॥

यमः ॥ मृतस्यकुष्ठिनोदेहंनिखनेद्गोष्ठभूमिषु ॥ वासरत्रितयंपश्चादुद्धृत्यान्यत्रतंदहेत् ॥ नगंगाप्लवनंकार्यंनिक्षेपविधिरुच्यते ॥ षडब्दव्रतपूर्णेनविधिनांत्यक्रतुंचरेत्॥ततोस्थिसंचयंतस्यगंगायांप्रक्षिपेत्सुधीः ॥ मासिमासिततःकुर्यान्मासिश्राद्धानिपार्वणात्॥

संकल्पविधिनाकेचित्प्रवदंतिमनीषिणः॥इत्येतत्कुष्ठिनोह्यूर्ध्वंकथितंशास्त्रकोविदैः ॥ स्मृतिविद्भिरनूचानैर्यमाद्यैःपूतविग्रहैः ॥

## ॥ ३७३ ॥ पालाशप्रतिकृतिदाहविधिः ॥

तत्रदेशांतरमरणेपराकद्वयमष्टौकृच्छ्रान्वाकृत्वास्थीनिदहेत् ॥ यद्यस्थीनिचांडालश्वादिभिःस्पृष्टानिस्युस्तदापंचगव्यगंगोदकाभ्यांप्रक्षाल्यविधिनादहेत् ॥ यस्यास्थीनिनलभ्यंतेतस्यपर्णशरदाहः ॥ सचेत्थं ॥ शुचिभूमौकृष्णमृगचर्मास्तीर्यैकंशतंदक्षिणोत्तरायतंनिवेश्यतदुपरिपलाशत्रिवृतानिन्यसेत् ॥ शिरसिचत्वारिंशत् ४० ग्रीवायांदश १० वाह्वोःप्रत्येकंपंचाशत्एवं १०० करांगुलीषुसर्वासुदश १० उरसिविंशतिः २० जठरेत्रिंशत् ३० शिश्नेचत्वारि ४ अंडयोस्त्रयंत्रयं ६ ऊर्वोःप्रत्येकंपंचाशत् १०० जंघादिपादतलांतंयावत्पादयोःप्रत्येकंपंचदश३०सर्वपादांगुलीषुदश १० एवंषष्ठ्यधिकशतत्रयमितैःपर्णशरैःशरीरंनिर्मायोर्णासूत्रेणसहवध्वाजलालोडितयवपिष्टेनानुलिंपेत् ॥ ततःशक्तौसत्यांवक्ष्यमाणान्यपिकार्याणि ॥ मूर्धस्थानेकदलीफलं ॥ शिरसिनारिकेलं ॥ वर्तुलंतुंबंवा ॥ ललाटेकदलीपत्रं॥ दंतेषुदाडिमीबीजानि कर्णयोःकंकणं नेत्रयोःकपर्दिकौ नासिकायांनीलपुष्पं नाभावाम्रं स्तनयोर्जंबीरफलद्वयं वातेमनःशिलां पित्तेहरितालं कफेसमुद्रफेनं रुधिरेमधु पुरीषेगोमयं मूत्रेगोमूत्रं रेतसिपारदं वृषणयोर्वृंताकद्वयं शिश्नेगृंजरं केशेषुवनसूकरसटाः लोमसूर्णा मांसस्थानेयवपिष्टेनानुलिंपेत् ॥ ततःपंचगव्यमंत्रैःपंचगव्येनप्रोक्षयेत् ॥ पंचामृतमंत्रैःपंचामृतेनच ॥ पुनर्मआत्माइतिमंत्रेणप्राणप्रवेशनंभावयेत् ॥ यद्वायत्तेयममितिसूक्तेनप्राणानानीयशुक्रमसिज्योतिरसीतिमंत्रेणपारदंक्षिप्त्वाशिरोमेश्रीरित्यादिवाक्यादीनिपठेत् ॥ शिरोमेश्रीः ॥ यशोमुखं ॥ त्विषिःकेशाश्चश्मश्रूणि ॥ राजामेप्राणोमृतं ॥ सम्राट्चक्षुः ॥ विराट्श्रोत्रं ॥ जिह्वामेभद्रं ॥ वाङ्महः ॥ मनोमन्युः ॥ स्वराड्भामः ॥ मोदाःप्रमोदाअंगुली

रंगानि ॥ चित्तंमेसहः ॥ वाहूमेवलमिंद्रियं ॥ हस्तौमेकर्मवीर्यं ॥ आत्माक्षत्रमुरोमम ॥ पृष्ठीमेराष्ट्रमुदरमंसौ ॥ ग्रीवाश्चश्रोण्यौ ॥ ऊरूअरत्नीजानुनी ॥ विशोमेंगानिसर्वतः ॥ नाभिर्मेचित्तंविज्ञानं ॥ पायुर्मेपचितिर्भसत् ॥ आनंदनंदावांडौमे ॥ भगः सौभाग्यंपसः ॥ जंघाभ्यांपद्भ्यांधर्मोस्मि ॥ विशिराजाप्रतिष्ठितः ॥ इतिशरीरंस्पृशेत् ॥ ततःशरीरंस्नापयित्वाचंदनेनानुलिप्य वस्त्रोपवीतेपरिधाप्यालंकृत्यअयंसदेवदत्तइतितमभिमृश्यइदमस्योपासनमित्यग्निंध्यात्वावैतरण्यादिदानपूर्वकमूर्णासूत्रेणवेष्टयित्वाकृष्णाजिनेनाच्छाद्यपूर्वोक्तविधिनाशववद्दहेत् ॥ पलाशत्रिवृताभावेकुशैःप्रतिकृतिंकुर्यात् ॥ आहिताग्नेःप्रतिकृतिदाहेस्थिदाहेवादशाहमेवाशौचं ॥ अनाहिताग्नेस्तुत्र्यहं ॥ पर्णशरदाहेपुत्रपत्न्योरगृहीताशौचयोर्दशाहादिपूर्णमेव ॥ गृहीताशौचयोस्तुतयोरपित्र्यहाशौचं ॥ पत्नीपुनःसंस्कारेपत्युश्चैवमेवाशौचं ॥ आहिताग्नौविदेशस्थेमृतेयावद्विधिनानसंस्कारस्तावत्पुत्रादीनांनाशौचं ॥ नचसंध्यादिकर्मलोपः ॥ इतिपालाशप्रतिकृतिदाहविधिः ॥ ॥ ॥

## ॥ ३७४ ॥ पुनःसंस्कारेकालशुद्धिः ॥

आशौचमध्येपुनःसंस्कारेयथासंभवंदिनंशोध्यं ॥ दशाहोत्तरंतुशोध्यमेव ॥ संवत्सरोर्ध्वंप्रेतकार्येउत्तरायणंश्रेयः ॥ तत्रापिकृष्णपक्षः ॥ तिथिषुनंदांत्रयोदशींदिनक्षयंचवर्जयेत् ॥ शुक्रशनिवारौवर्ज्यौ ॥ नक्षत्रेषुभरणीकृत्तिकाश्लेषार्द्रामघाधनिष्ठादिपंचकंत्रिपुष्कराणिंचातिदुष्टानिसर्वथात्याज्यानि॥व्यतीपातेवैधृतौपरिघेचयोगेविष्टिकरणेचतुर्थाष्टमद्वादशस्थेचंद्रेचातिदोषः ॥ रोहिणीमृगपुनर्वसुपूर्वोत्तराचित्राविशाखानुराधापूर्वाषाढोत्तराषाढाद्विपुष्कराणिचेषद्दुष्टानिसंभवेवर्ज्यानिशिष्टान्यदुष्टानि ॥ सर्वथादिनशुद्ध्यसंभवेनातिदुष्टंवाह्यनक्षत्रंग्राह्यं ॥ पुनःसंस्कारेआंतरंग्राह्यं॥नंदायांशुक्रेचतुर्दश्यांत्रिजन्मनक्षत्रेषुएकोद्दिष्टमतिनिषि

द्धं॥ एकादशाहादौननिषेधः॥तत्रतिथ्यादिनैवशोध्यं॥युगादिमन्वादिसंक्रांत्यमासुप्रेतकार्येपुनःसंस्कारेचकिंचिदपिनैवशोध्यं ॥

## ॥ ३७५ ॥ अधिकारिणः ॥

सर्वत्रदाहपिंडाद्यपतितादिर्ज्येष्ठपुत्रऔरसएवकुर्यात् ॥ तदसंनिधौकनिष्ठः ॥ सर्वेषांपुत्राणामसंनिधौपौत्रोज्येष्ठपुत्रादिक्रमेण ॥ तदभावेतत्पुत्रादयःपूर्ववत् ॥ उक्ताभावेपत्नी ॥ एवंपुत्राद्यभावेकनिष्ठभ्राता ॥ तदभावेभ्रातृपुत्रःस्नुषादुहितादौहित्रःअन्यःसगोत्रःसपिंडःब्रह्मचारीमित्रंशिष्योगुरुर्बांधवोधनसंबंधीवादद्यात् ॥ नपुत्रस्यपितादद्यान्नानुजस्याग्रजस्तथा ॥ यदिस्नेहेनकुर्वीतसपिंडीकरणंविना ॥ इदंसतिसंभवे ॥ अदत्तकन्यायैपितरावेवदत्तः ॥ अन्याभावेदत्तानामपिपितरावेव ॥ दौहित्रमातामहौपरस्परं ॥ मातामह्याश्चदौहित्रोजामातृश्वशुरौमिथः ॥ श्वश्र्वादेःस्नुषा ॥ भ्रातरौचमिथोदत्तःगुरुशिष्यौपरस्परं ॥ सर्वाभावेयःकश्चित्कुर्यात्तस्यसर्वसंपत्प्राप्तिः ॥ वर्षत्रयानंतरंचूडाभावेपिपित्रोरौर्ध्वदेहिकंमंत्रवत्कुर्यात् ॥ वर्षत्रयादर्वाक्कृतचूडोपिशक्तौसत्यांसर्वंमंत्रवत्कुर्यात् ॥ अशक्तोऽकृतचूडोवातदाग्निदानमेवमंत्रवत्कुर्यात् ॥ शिष्टमन्येनकारयेत् ॥ एवंपत्न्याप्यग्निदानमात्रंसमंत्रकंकार्यंशिष्टमन्येनकारयेत्॥ असंस्कृतेनपत्न्याचअग्निदानंसमंत्रकं ॥ कर्तव्यमितरत्सर्वंकारयेदन्यतःपरं ॥ अनुपेतोपिकुर्वीतमंत्रवत्पैतृमेधिकं ॥ यद्यसौकृतचूडःस्याद्यदिस्याच्चत्रिवत्सरः ॥ असगोत्रःसगोत्रोवायदिस्त्रीयदिवापुमान् ॥ प्रथमेहनियोदद्यात्सदशाहंसमापयेत् ॥ ज्येष्ठेनवाकनिष्ठेनसपिंडीकरणेकृते ॥ देशांतरगतानांचपुत्राणांतुकथंभवेत् ॥ श्रुत्वातुवपनंकार्यंदशाहांतंतिलोदकं॥ततःसपिंडीकरणंकुर्यादेकादशेऽहनि॥द्वादशाहेनकर्तव्यमितिशातातपोऽब्रवीत् ॥ स्मृत्यर्थसारेब्रह्मचारिणामनपत्यानांचसपिंडनंनास्तितेषांसदैकोद्दिष्टमेव ॥ व्युत्क्रममृतानांव्यवहितैःसपिंडनंकार्यंनवा ॥ केचित्सर्व

त्रसपिंडनमाहुरिति ॥ यतीनांप्रेतत्वंनास्त्यतस्तेषांनैकोद्दिष्टंनचसपिंडीकरणं किंत्वेकादशेहनिपार्वणंकार्यं ॥ दंडग्रहणात्पूर्वंमृ
तेतुदाहादिसपिंडनांतंसर्वंविधिनाकार्यमेव ॥ रात्रावेवसमुत्पन्नेमृतेरजसिसूतके ॥ पूर्वमेवदिनंग्राह्यंयावन्नाभ्युदितोरविरितिदे
शाचारात् ॥ रात्रौवारात्रिशेषेवास्त्रियंतेवाद्विजातयः ॥ दाहंकृत्वायथान्यायंद्वौपिंडौनिर्वपेत्सुतः ॥ संध्यायांवातथारात्रौदाहः
पाथेयकर्मच ॥ नवश्राद्धंचनोकुर्यात्कृतंनिःफलतांव्रजेत् ॥ रात्रिमृतस्यतुरात्रावेवदाहः ॥ वपनंतुप्रातः ॥ शवंरात्र्युषितंचेत्री
न्कृच्छ्रान्कृत्वादहेत्सुतइति ॥ प्रवृत्ताशौचतंत्रस्तुयदिदर्शःप्रपद्यते ॥ समाप्यचोदकंपिंडान्स्नानमात्रंसमाचरेत् ॥ मातापितृविष
येतु ॥ अंतर्दशाहेदर्शश्चेत्तत्रसर्वंसमापयेत् ॥ पित्रोस्तुयावदाशौचंदद्यात्पिंडंतिलांजलिं ॥ पित्रोरित्येकशेषः ॥ गालवः ॥ पित्रो
राशौचमध्येतुयदिदर्शःसमापतेत् ॥ तावदेवोत्तरंतंत्रंपर्यवस्येत्र्यहात्परमिति आपदादिविषयं ॥ त्र्यहानंतरंदर्शेमातापितृतंत्र
स्यापिसमाप्तिर्नतुत्र्यहमध्येदर्शपातेमातापितृतंत्रसमाप्तिरिति ॥ सपिंडीकरणेव्युत्क्रममृतेतु ॥ मृतेपितरियस्याथविद्यतेचपिता
महः ॥ तेनदेयास्त्रयःपिंडाःप्रपितामहपूर्वकाः ॥ तेभ्यश्चपैतृकःपिंडोनियोक्तव्यश्चपूर्ववत् ॥ मातर्यग्रेमृतायांतुविद्यतेचपिता
मही ॥ प्रपितामहीपूर्वंतुकार्यस्तत्राप्ययंविधिः ॥ व्युत्क्रमाच्चप्रमीतानांनैवकार्यासपिंडनेति ॥ मातापितृभर्तृव्यतिरिक्तविषय
एषविधिःसपिंडननिषेधरूपः ॥ यस्तुवृद्धादिरचिकित्स्योरुव्याधियुतःप्रत्याख्यातभिषक्क्रियोबुद्धिपूर्वकमप्यात्मानंघातयतिप्र
यागादौवातस्यनदोषः ॥ शास्त्रानुज्ञातमरणत्वात् ॥ तस्यप्रायश्चित्तनारायणवलीनस्तः ॥ ततस्त्रिरात्रमेवाशौचंचतुर्थदिनेए
कादशाहकृत्यंपंचमेसपिंडनं ॥ त्र्यहाशौचेपिपिंडास्त्रयःदशवा ॥ आद्येंत्येचाह्निपिंडत्रयं ॥ दशांजलिपक्षेत्रयोंजलयः ॥ शतां
जलिपक्षेत्रिंशत् ॥ मध्येह्निपिंडचतुष्टयं ॥ चत्वारश्चत्वारिंशद्वांजलयः ॥ द्वितीयदिनेस्थिसंचयनं ॥ एवमन्यत्रापित्र्यहाशौचे ॥

एकाहाशौचेतुदशाहकृत्यंतस्मिन्नेवाहनि॥ द्वितीयेचैकादशाहं॥ इतिढौंढिपद्धतौ॥ केचित्तुतत्रापिसद्यःशौचवदेकादशाहमाहुः ॥



## ॥ ३७६ ॥ अथातुरसंन्यासविधिः ॥

श्रीः ॥ उक्तंजाबालोपनिषदि ॥ यद्यातुरःस्यान्मनसावाचावासंन्यसेदेषपंथाब्राह्मणायानुवित्तस्तेनेतिसंन्यासीब्रह्मविदित्येवमे वतद्भवेदिति ॥ आतुरोपिद्विविधःरोगादिनामुमूर्षुःजलादिव्याघ्रादिभयाक्रांतश्च ॥ तत्रद्वितीयस्यत्वाहदत्तात्रेयः ॥ उत्पन्नेसं कटेघोरेचोरव्याघ्रादिगोचरे ॥ भयभीतस्यसंन्यासमंगिरामुनिरब्रवीत् ॥ भारते ॥ आतुराणांचसंन्यासेनविधिर्नैवचक्रिया ॥ प्रेषमात्रस्तुसंन्यासःसंन्यासंतत्रकारयेत् ॥ तथाच ॥ संन्यस्तमितियोब्रूयादित्यादिवाक्यैश्चप्रेषमात्रोच्चारणमेवतस्यसंन्यासः ॥ सचेज्जीवतियथाधिकारंयथाविधिदंडादिकंगृहीत्वायतिधर्मयुक्तोभवेत् ॥ रोगाद्यातुरस्यपुरुषसूक्तहोमविरजाहोमोपवासजागर णाद्यंगकलापस्यलोपः ॥ अन्यत्सर्वंभवत्येव ॥ तस्यायंप्रयोगः ॥ कात्यायनः ॥ कृच्छ्रांस्तुचतुरःकृत्वावापनार्थमनाश्रमी ॥ आश्रमीचेत्तप्तकृच्छ्रंतेनासौयोग्यतांव्रजेत्॥ मिताक्षरायांचतुर्विंशतिमतेप्राजापत्यंएकंसांतपनेद्वयंअतिकृच्छ्रेत्रयंगोदानमिति ॥ षट्त्रिंशन्मतेपिपराककृच्छ्रातिकृच्छ्रेचतिस्रोगाः ॥ पराककृच्छ्रतप्तकृच्छ्रातिकृच्छ्रस्थानेकृच्छ्रत्रयंचरेत् ॥ सांतपनस्यगोद्वयंअ शक्तौव्रतमाचरेत् ॥ तप्तकृच्छ्रेसार्धकायद्वयंस्मृतमितिस्मृत्यर्थसारे ॥ कायंनामप्राजापत्यमेव ॥ आतुरस्ततोद्रव्यवस्त्रगृहदेवपु स्तकादियथायथंविभज्यआचार्यार्थंसंन्यासविधिपर्याप्तंसंस्थापयित्वानिर्ममोभवेत् ॥ शोकाहंकारादिद्वंद्ववासनांत्यजेत् ॥ ततः नित्यक्रियादिसंपाद्यनदीतीरंगत्वोपविश्यपुत्रमुखंदृष्ट्वाजपेत् ॥ अशक्तश्चेच्छुचौदेशेसर्वंकुर्यात् ॥ त्वंब्रह्मत्वंयज्ञस्त्वंलोकइति ॥ सपुत्रस्तंप्रत्याह ॥ अहंब्रह्माहंयज्ञोहंलोकइति ॥ ततोबंधून्प्रत्याह ॥ नमेकश्चिन्नाहंकस्यचित् ॥ ततःस्नात्वादेशकालौसंकीर्त्य

विष्णुंध्यात्वाअमुकगोत्रोत्पन्नस्यामुकशर्मणोममाशेषदुःखनिवृत्त्यतिशयानंदावाप्तिद्वारापरमपुरुषार्थप्राप्तयेपरमहंससंन्यासग्रह
णंआतुरोक्तविधिनाकरिष्येइतिसंकल्प्यगृहस्थश्चेत्संकल्पात्पूर्वमेवप्रातरौपासनहोमंविधायात्मसमारोपणंकुर्यात् ॥ विच्छिन्ना
ग्निश्चेत्तद्विच्छिन्नकालातिक्रमप्रायश्चित्तंसद्यःपुनःसंधानंचकृत्वा ॥ यातेंअग्नेयज्ञियातनूस्तयेह्यारोहात्मात्मानं ॥ अच्छावसूनिकृ
ण्वन्नस्मेनर्यापुरूणि ॥ यज्ञोभूत्वायज्ञमासीदस्वांयोनिं ॥ जातवेदोभुवआजायमानःसक्षयएहिं ॥ इतिमंत्रेणआत्मसमारोपणं
कृत्वासंन्याससंकल्पंकुर्यात् ॥ ततःशक्तौसत्यांकक्षोपस्थवर्जंकांश्चिच्छिखार्थंपंचसप्तकेशान्स्थापयित्वासशिखंवपनंकुर्यात् ॥
ततःस्वशक्त्यनुसारेणभस्मगोमयमृत्तिकास्नानानिकृत्वा वाससीपरिधायद्विराचम्यदर्भान्धारयमाणःपात्रेजलमुद्धृत्यतदेकदेशं
हस्तेगृहीत्वाप्सुजुहुयात्॥एषवाअग्नेर्योनिःप्राणःप्राणंगच्छस्वाहा प्राणायेदं० ॥ स्वांयोनिंगच्छस्वाहा प्राणायेदं० ॥ आपोवैसर्वा
देवताःसर्वाभ्योदेवताभ्योजुहोमिस्वाहा सर्वाभ्योदेवताभ्यइदं० ॥ इत्युद्धृतंजलंकिंचित्किंचित्गृहीत्वाआहुतित्रयमप्सुहुत्वापा
त्रहुतशेषंतोयंआशुःशिशानइत्यनुवाकेनाभिमंत्र्यकिंचिदुदकंगृहीत्वा पुत्रेषणावित्तेषणालोकेषणामयात्यक्ताःस्वाहा इतिमंत्रेण
पीत्वापुनःकिंचिद्गृहीत्वाअभयंसर्वभूतेभ्योमत्तःस्वाहा इतिद्वितीयंपिबेत् ॥ ततोनिःशेषंगृहीत्वासंन्यस्तंमयास्वाहा इतितृतीयं
पिबेत् ॥ ततःशक्तौसत्यांनाभिदघ्नेजलेस्थित्वाअशक्तश्चेज्जलसमीपेस्थित्वासावित्रीप्रवेशंकुर्यात् ॥ ॐ भूःसावित्रींप्रविशामि ॥
तत्सवितुर्वरेण्यं ॥ ॐ भुवःसावित्रींप्रविशामि ॥ भर्गोदेवस्यधीमहि ॥ ॐ सुवःसावित्रींप्रविशामि ॥ धियोयोनःप्रचोदयात् ॥
इतिपच्छः ॥ ॐ भूर्भुवःसावित्रींप्रविशामि ॥ ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ ॐ सुवःसावित्रींप्रविशामि ॥ धियोयोनः
प्रचोदयात् ॥ इत्यर्धर्चशः ॥ ॐ भूर्भुवःसुवःसावित्रींप्रविशामि ॥ ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि॥धियोयोनःप्रचोदयात् ॥

इतिसर्वां ॥ ॐ भूः प्रणवंप्र० ॥ ॐ भुवः प्रणवंप्र० ॥ ॐ सुवः प्रणवंप्र० ॥ ॐ भूर्भुवः सुवः प्रणवंप्र० इतिप्रणवप्रवेशः ॥ ॐतरत्समंदीधा
वति० ॥ इतिसूक्तंजपित्वा ॥ नमः सवित्रेजगदेकचक्षुषेजगत्प्रसूतिस्थितिनाशहेतवे ॥ त्रयीमयायत्रिगुणात्मधारिणेविरिंचिनारायण
शंकरात्मने ॥ इतिआदित्यमुपस्थायपूर्वस्थापितशिखाकेशान्निकृत्ययज्ञोपवीतमंजलौगृहीत्वा भूःस्वाहेत्यप्सुहुत्वाप्राच्यांदिशिप्र
तिदिशंऊर्ध्वंअधस्ताच्चजलांजलीनुत्सिच्यपुत्रेषणायाश्चवित्तेषणायाश्चलोकेषणायाश्चव्युत्थितोहमित्युक्त्वाऊर्ध्वबाहुःसूर्याभिमु
खस्तिष्ठेत् ॥ देवान्साक्षिणःकृत्वाहरिंस्मरन्जलाद्बहिःस्थित्वा ॐ भूःसंन्यस्तंमया ॐ भुवःसंन्यस्तंमया ॐ सुवःसंन्यस्तंमया
ॐ भूर्भुवःसुवःसंन्यस्तंमया इतित्रिरुपांशुत्रिर्मध्यमस्वरेणत्रिरुच्चैर्वदेत् ॥ यद्वा ॐ भूर्भुवःसुवःसंन्यस्तंमयेतित्रिरुपांशुत्रिर्म
ध्यमस्वरेणत्रिरुच्चैर्ब्रूयात् ॥ अर्थभावनैकचित्ताग्रःप्रैषोच्चारणंकुर्यात् ॥ ततोजलंप्रविश्यस्नात्वाचम्य ॥ अभयंसर्वभूतेभ्योम
त्तःस्वाहेतित्रीनंजलीन्जलेक्षिप्त्वाइदंपठेत् ॥ यत्किंचिद्बंधनंकर्मकृतमज्ञानतोमया ॥ प्रमादालस्यदोषाद्वातत्सर्वंसंत्यजाम्यहं ॥
एवंसंपूज्यभूतेभ्योदद्यादभयदक्षिणां ॥ पद्भ्यांकराभ्यांविहरन्नाहंवाक्कायमानसैः ॥ करिष्येप्राणिनांहिंसांप्राणिनःसंतुनिर्भयाः ॥
यमः ॥ दत्त्वातोयांजलिंविप्रोभक्त्यासंप्रार्थयेद्धरिं ॥ सर्वदेवात्मकेतोयेतोयाहुतिमहंहरे ॥ दत्वासर्वेषणांत्यक्त्वायुष्मच्छरण
मागतः ॥ त्राहिमांसर्वलोकेशगतिरन्यानविद्यते ॥ संन्यस्तंमेजगन्नाथपाहिमांमधुसूदन ॥ त्राहिमांसर्वदेवेशवासुदेवसनातन ॥
संन्यस्तंमेजगद्योनेपुंडरीकाक्षमोक्षद ॥ अहंसर्वाभयंदत्त्वाभूतानांपरमेश्वर ॥ युष्मच्छरणमापन्नस्त्राहिमांपुरुषोत्तम ॥ इतिपूर्वधृ
तवस्त्रंविसृज्यनग्नोभूत्वासप्तपदानिगच्छेत् ॥ ततोन्येनप्रार्थितःकाषायवस्त्रंकौपीनंप्रणवेनस्वीकृत्य ॥ ॐयुवासुवासाःपरिवीतआ
गात्सउश्रेयान्भवतिजायमानः ॥ तंधीरासःकवयउन्नयंतिस्वाधियोमनसादेवयंतः ॥ इतिमंत्रेणपरिदध्यात् ॥ इंद्रस्यवज्रोसिवार्त्र

घ्नः शर्ममेभव॥यत्पापंतन्निवारय॥इंद्रस्यवज्रोसिसखेमांगोपायेतिदंडं॥प्रणवेनसावित्र्यावाकमंडलुं ॥ एवमासनशिंक्यादिकमपिमं त्रैर्गृहीत्वा ॥ महावाक्यब्रह्मोपदेशार्थमुपहारसहितंयथाविधिब्रह्मिष्ठंगुरुमुपसृज्यतस्मैसर्वस्वंदत्त्वोपतिष्ठेत ॥ योब्रह्माणंविदधा तिपूर्वंयोवैवेदांश्चप्रहिणोतितस्मै ॥ तंहदेवमात्मवुद्धिप्रकाशंमुमुक्षुर्वैशरणमहंप्रपद्ये ॥ ततोदक्षिणंजान्वाच्यपादावुपसंगृह्याधी हिभगवोब्रह्मेतिवदेत् ॥ ततोगुरुःस्वात्मानंब्रह्मरूपंध्यात्वासजलंशंखंद्वादशप्रणवैरभिमंत्र्यतेनशिष्यमभिषिच्यशंनोमित्रइतिशां तिंपठेत् ॥ ततस्तच्छिरसिहस्तंदत्वापुरुषसूक्तंजप्त्वा ॥ ममव्रतेहृदयंतेदधामिममचित्तमनुचित्तंतेअस्तु ॥ ममवाचमेकव्रतोजुष स्वबृहस्पतिष्ट्वानियुनक्तुमह्यं ॥ इतिजप्त्वोदङ्मुखःप्रणवार्थमनुसंदधानोदक्षिणकर्णेप्रणवमुपदिश्यतदर्थंपंचीकरणात्प्रवोध्यप्रज्ञानं ब्रह्म अयमात्माब्रह्म तत्त्वमसि अहंब्रह्मास्मि इत्याद्युपदिशेत् ॥ तदर्थंचवदेत् ॥ ततोनामापिदद्यात् ॥ ततोजीवतिचेद्योग पट्टंगृहीत्वावेदांतवर्णनंयोगाभ्यासंचकुर्यात् ॥ यावज्जीवंयतिधर्मेणतिष्ठेत् ॥ आहिताग्निश्चेत्प्राजापत्यानिकृत्वाउत्सर्गेष्ट्याग्नी नुत्सृज्यात्मसमारोपंकृत्वासंन्यसेत् ॥ इत्यातुरसंन्यासविधिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३७७ ॥ संन्यासग्रहणविधिः ॥

श्रीः ॥ तत्रोत्तरायणंप्रशस्तं ॥ आतुरस्यतुदक्षिणायनमपि ॥ तत्रादौगृह्याग्निमंतंताद्दशविधुरंप्रतिचप्रयोगः ॥ तत्रशांत्यादिल क्षणंगुरुंसंशोध्यतन्निकटेत्रिमासंयतिधर्मान्संवीक्ष्यगायत्रीजपरुद्रजपकूष्मांडहोमादिभिःशुद्धिंलब्ध्वारिक्तातिथौ देशकालौस्मृ त्वामुकस्यममकरिष्यमाणसंन्यासेधिकारार्थंचतुःकृच्छ्रात्मकंप्रायश्चित्तं प्रतिकृच्छ्रंतत्प्रत्याम्नायैकैकगोनिष्क्रयद्वाराहमाचरिष्ये॥ कृच्छ्रप्रत्याम्नायगोनिष्क्रयद्रव्यंविप्रेभ्योदातुमुत्सृजेइतिसंकल्पपूर्वकंरजतनिष्कतदर्धंतदर्धान्यतमंप्रतिधेनुदद्यात् ॥ एकादश्यां

द्वादश्यांवायथाब्रह्मरात्रिःस्यात्तथाश्राद्धान्यारभेत् ॥ अत्रानाश्रमिणश्चतुःकृच्छ्रमन्यस्यतप्तकृच्छ्रमितिसिंधुः ॥ स्वस्यनवश्रा द्धषोडशश्राद्धसपिंडीकरणानिसाग्निःपार्वणविधिनानिरग्निरेकोद्दिष्टविधिनाकुर्यादितिकेचित् ॥ नेत्यन्ये ॥ ॥ अथाष्टौ श्राद्धानि ॥ तत्रापस्तंबहिरण्यकेशीयादीनामग्नौकरणपिंडादिरहितःसांकल्पिकप्रयोगः ॥ आश्वलायनादीनांसपिंडकःपार्वणप्र योगः ॥ तत्रादौसव्येनसयवजलेनश्राद्धांगतर्पणं ॥ ब्रह्माणंतर्पयामि विष्णुंत० महेश्वरंत० देवर्षीन्० ब्रह्मर्षीन्० क्षत्रर्षीन्० वसून्० रुद्रान्० आदित्यान्० सनकं० सनंदनं० सनातनं० पंचमहाभूतानि० चक्षुरादिकरणानि० भूतग्रामं० पितरं० पितामहं० प्रपितामहं० मातरं० पितामहीं० प्रपितामहीं० आत्मानं० पितरं० पितामहं० इतिनद्यादौकृत्वागृहमागत्यदेश कालौस्मृत्वा करिष्यमाणसंन्यासांगत्वेनाष्टौश्राद्धानिपार्वणविधिनान्नेनामेनवाकरिष्येइतिसंकल्प्यक्षणंदद्यात् ॥ अत्रसर्वंनांदी श्राद्धवत् तेननापसव्यं तिलस्थानेयवाःयुग्माविप्राःतथाचदेवस्थानेविप्रौद्वौश्राद्धाष्टकेषोडशेत्यष्टादशविप्राः ॥ तत्रसत्यवसुसंज्ञ काविश्वेदेवानांदीमुखाःस्थानेक्षणःकर्तव्यःइत्येकंवृत्वाद्वितीयंवृणुयात् ॥ एवमग्रेपिप्रथमेदेवश्राद्धेब्रह्मविष्णुमहेश्वरानांदीमु खाःस्थानेक्षणः १ द्वितीयेऋषिश्राद्धेदेवर्षिब्रह्मर्षिक्षत्रर्षयःनांदी० २ दिव्यश्राद्धेवसुरुद्रादित्या नांदी० ३ मनुष्यश्राद्धेसनक सनंदनसनातनाः नांदी० ४ पंचमेभूतश्राद्धेपृथिव्यादिपंचमहाभूतान्येकादशचतुरादिकरणादिचतुर्विधभूतग्रामाः नांदी० ५ षष्ठेपितृश्राद्धेपितृपितामहप्रपितामहा नांदी० ६ मातृश्राद्धेमातृपितामहीप्रपितामह्यो नांदी० ७ अष्टमेआत्मश्राद्धेआत्मपि तृपितामहा नांदी० ८ आत्मांतरात्मापरमात्मेतिकेचित् इतिद्वौद्वौविप्रौवृणुयात् ॥ सर्वत्रनांदीमुखत्वंविशेषणं युग्माविप्राः सत्यवसूदक्षक्रतूवादेवौ ततःसर्वेषांपाद्यंदत्वाप्राङ्मुखानुदक्संस्थानुपवेश्यप्रार्थयेत् ॥ संन्यासार्थमहंश्राद्धंकुर्वेब्रूतद्विजोत्तमाः ॥

अनुज्ञांप्राप्ययुष्माकंसिद्धिंप्राप्स्यामिशाश्वतीं ॥ कुरुइतिप्रत्युक्तःसयवऋजुदूर्वादियुग्मेनाब्दानपूर्वकंसंबुद्ध्यंतेइदमासनमित्य
ष्टादशस्वासनंदद्यात्॥ततआश्वलायनानामर्घ्यपात्रासादनंआपस्तंवादीनांसांकल्पिकत्वान्नार्घ्यं ॥ देवार्थमेकंपार्वणाष्टकार्थमष्टा
वित्येवंनवपात्राणि॥ सर्वत्रपवित्रद्वयांतर्हितेषुशन्नोदेवीरित्यप आसिच्य विश्वेदेवपात्रेयवोसीतियवाःअष्टपात्रेषुतिलोसीतिमंत्रस्यो
हेनयवानोप्यगंधादिपूजनं॥ ऊहस्तु यवोसिसोमदेवत्योगोसवेदेवनिर्मितः ॥ प्रत्नवद्भिःप्रत्तःपुष्ट्यानांदीमुखान्देवान्प्रीणयाहिनः
स्वाहानमःइतिप्रथमपात्रे॥ द्वितीयेनांदीमुखानृषीन्० तृतीयेनांदीमुखान्‌दिव्यान्प्रीण० चतुर्थेनांदीमुखान्मनुष्यान्प्रीण० पंच
मेनांदीमुखानिभूतानिप्रीण० षष्ठसप्तमाष्टमेषुनांदीमुखान्पितॄन्प्रीणयेत्यादि० एकैकंपात्रंद्विधाविभज्यसर्वत्रयादिव्याइतिमंत्रांते
विश्वेदेवानांदीमुखाइदंवोर्घ्यमितिदत्वा ब्रह्मविष्णुमहेश्वरानांदीमुखाइदंवोर्घ्यंस्वाहानमइत्यादिनायथायथंषोडशविप्रहस्तेषुद
द्यात् ॥ यादिव्याइतिस्रवदनुमंत्रणं पात्रंन्युब्जीकृत्यगंधाद्याच्छादनांतपूजा तत्रसर्वत्रसंबुद्ध्यंतोनांदीमुखविशेषणयुक्तउच्चारः ॥
भोजनपात्राण्यासाद्यब्रह्मादिषोडशविप्रकरेष्वग्नयेकव्यवाहनायस्वाहासोमायपितृमतेस्वाहेतिमंत्राभ्यामाहुतिद्वयंदद्यात् ॥ नेद
मापस्तंवादीनां॥ उपस्तीर्यान्नंपरिविष्यान्नाभावेआमंतन्निष्क्रयंवाप्रोक्ष्यपृथ्वीतेपात्रमित्यादिनायथादैवतमन्नस्यामादेर्वात्यागः॥
येदेवासो० प्रजापतेन० ब्रह्मार्पणंब्रह्म० ॥ अनेनाष्टश्राद्धेननांदीमुखादेवादयःप्रीयंतां॥आपोशनदानांतेवलिदानवर्ज्यंभुंजीयुः ॥
तृप्तेषूपास्मै० अक्षन्नमी० संपन्नमितिपृष्टेरुचिरमितिसर्वेब्रूयुःनेदमामान्ने॥आचांतेषुयवलाजदधिबदरीयुतान्नेनाष्टचत्वारिंशत्पिं
डान्कृत्वा प्रागायताउदक्संस्थाअष्टौरेखाःकृत्वाभ्युक्ष्यकुशान्दूर्वावास्तीर्यपिंडस्थानेषुचतुर्विंशतौजलंसिंचेत् ॥ तद्यथा शुंधंतांब्र
ह्माणोनांदीमुखाःशुंधंतांविष्णवोनांदी० शुंधंतांमहेश्वरानां० इतिप्रथमरेखायां ॥ तदुत्तररेखासुशुंधंतांदेवर्षयोनां० शुंधंतांब्रह्म

र्पयोनां० इत्याद्यूहोज्ञेयः॥ततोब्रह्मणेनांदीमुखायस्वाहेत्येकंपिंडंदत्वाद्वितीयएवमेवदेयस्तूष्णींवेतिप्रतिदैवतंपिंडद्वयं ॥ एवमग्रे पिविष्णवेनांदीमुखायस्वाहेत्यादयःस्वाहांताःपिंडदानमंत्राऊह्याः ॥ अत्रपितरोमादयध्वमित्यादिपुनःशुंधनांतंतंत्रमंजनमभ्यं जनंचकृताकृतं ॥ पिंडान्गंधादिनासंपूज्यनत्वोपसंपन्नमितिविसृज्यविप्रेभ्योदक्षिणादितंत्रं ॥ नेदंपिंडदानाद्यापस्तंबादीनां ॥ अष्टश्राद्धोत्तरंतद्दिनेद्वितीयेवाषट्शिखाकेशान्स्थापयित्वाकक्षोपस्थवर्जं केशश्मश्रुनखादिवापयित्वास्नात्वाकौपीनाच्छादनादि होमद्रव्यंचविनान्यद्धनादिविप्रादिभ्यःपुत्रादिभ्यश्चत्यजेत् ॥ कौपीनादिकंगैरिकरंजितंकृत्वावैणवंदंडंसत्वचंशिरोभ्रूललाटान्य तमप्रमाणंसमूलमंगुलिस्थूलंविप्रानीतमेकादशनवचतुःसप्तान्यतमपर्वकंपर्वग्रंथियुतंमुद्रायुतंसंपाद्यशंखोदकेनप्रणवपुरुषसूक्तके शवादिनाममभिरभिषिच्यस्थापयेत् ॥ ततःकमंडलुकौपीनाच्छादनकंथापादुकाःस्थापयेत् शिक्यपात्रादिकमपीतिकेचित् ॥ देशकालौसंकीर्त्याशेषदुःखनिवृत्तिनिरतिशयानंदप्राप्तिपरमपुरुषार्थप्राप्तयेपरमहंसाख्यसंन्यासग्रहणंकरिष्येतदंगतयागणपति पूजनपुण्याहवाचननांदीश्राद्धानिकरिष्ये ॥ तानिकृत्वाजपेत् ब्रह्मणेनमः विष्णवे० रुद्राय० सूर्याय० सोमाय० आत्मने० अंतरात्मने० परमात्मने० अग्निमीळेऋक् इषेत्वोर्जेत्वा० अग्नआयाहिऋक् शन्नोदेवीऋक्इतिजपित्वा सक्तुपिष्टंमुष्टित्रयंप्रणवेन त्रिःप्राश्यनाभिमालभेत ॥ आत्मनेस्वाहा० अंतरात्मने० परमात्मने० प्रजापतयेस्वाहेतिमंत्रैः ॥ ततःपयोदधिमिश्रमाज्यं जलमेववात्रिवृदसीतिप्रथमंप्राश्यप्रवृदसीतिद्वितीयंविवृदसीतितृतीयंप्राश्यापःपुनंत्वितिजलंप्राश्याचम्योपवासंकुर्यात् ॥ ॥



## ॥ ३७८ ॥ सावित्रीप्रवेशः ॥

श्रीः ॥ ॐ भूःसावित्रींप्रविशामि ॐ तत्सवितुर्वरेण्यं ॐ भुवःसावित्रींप्र० भर्गोदेवस्य० ॐ सुवःसावित्रीं० धियोयो० ॥

